सत्त्वाना महासत्त्वानामर्थाय, यथापि नाम त्व बहुजनहिताय प्रतिपन्नो बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च, एतर्ह्यनागतानां च बोधिसत्त्वाना महासत्त्वानामालोक कर्तुकाम इति ॥

अथ खलु भगवान् जानन्नेव सुविक्रान्तविक्रामिणं बोधिसत्त्वं महासत्त्वं परिपृच्छति स्म–किं त्व सुविक्रान्तविक्रामिन् अर्थवश सपश्यंस्तथागतमेतमर्थं परिपृच्छसि ? एवमुक्ते सुविक्रान्तविक्रामी बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–सर्वसत्त्वाना वय भगवन्नर्थाय तथागतमेतमर्थं परिपृच्छामः सर्वसत्त्वहिताय सर्वसत्त्वानुकम्पायै । तत्कस्माद्धेतोः ? प्रज्ञापारमिता भगवन् सर्वधर्माणा ग्राहिका यदुत श्रावकप्रत्येकबुद्धबोधिसत्त्वसम्यक्सबुद्धधर्माणाम् । अतो भगवस्तथागतविषय तथागतज्ञान च निर्दिशतु । तत्र ये सत्त्वा नियताः श्रावकयाने भविष्यन्ति, ते क्षिप्रमनास्रवां भूमिं साक्षात्करिष्यन्ति । ये प्रत्येकबुद्धयाने नियता भविष्यन्ति, ते क्षिप्र प्रत्येकबुद्धयानेन निर्यास्यन्ति । ये अनुत्तरा सम्यक्सबोधिं सप्रस्थिताः, ते क्षिप्रमनुत्तरा सम्यक्संबोधिमभिसभोत्स्यन्ते । ये च अनवक्रान्तसम्यक्त्वनियामा अनियतास्तिसृषु
H 5 भूमिषु, ते श्रुत्वा अनुत्तराया सम्यक्सबोधौ चित्तमुत्पादयिष्यन्ति । सर्वसत्त्वाना च भगवन् कुशलमूलसजनन कृत भविष्यति तथागतेन इम प्रज्ञापारमिताप्रश्न विसर्जयता । न च वय भगवन् हीनाधिमुक्तिकाना सत्त्वाना कृतशस्तथागत परिपृच्छामः, न दरिद्रचित्तानाम्, न दरिद्रमानससमन्वागतानाम्, न कुसीदानाम्, न कौसीद्याभिभूतानाम्, न दृष्टिपङ्कावसन्नानाम्, न मारपाशबद्धानाम्, नानपत्रपाणाम्, नासलेखसमन्वागतानाम्, न मुषितस्मृतीनाम्, न भ्रान्तचित्तानाम्, न कामपङ्कमग्नानाम्, न शठानाम्, न मायाविनाम्, नाकृतज्ञानाम्, न पापेच्छानाम्, न पापसमाचाराणाम्, न शीलविपन्नानाम्, नापरिशुद्धशीलानाम्, न दृष्टिविपन्नानाम्, न मारगोचरचारिणाम्, नात्मोत्कर्षकाणाम्, न परपसकानाम्, न लाभसत्कारगुरुकाणाम्, न पात्रचीवराध्यवसितानाम्, न कुहकानाम्, न लपकानाम्, न नैमित्तिकानाम्, न नैष्पेषिकाणाम्, न लाभेन लाभचिकीर्षुकाणाम् । न वय भगवन् एवंरूपाणा सत्त्वाना कृतशस्तथागत परिपृच्छामः । ये पुनर्भगवन् सत्त्वाः सर्वज्ञज्ञान प्रार्थयन्ति, असङ्गज्ञान स्वयंभूज्ञानमसमज्ञानमनुत्तरज्ञान प्रार्थयन्ते, ये नात्मानमुपलभन्ते न परम्, कुतः पुनरात्मानमुत्कर्षयिष्यन्ति पर वा पसयिष्यन्ति, तेषा निहतमानाना वय भगवश्छिन्नविषाणवृषभोपमाना बोधिसत्त्वानां महासत्त्वानामाव्रीढशल्यानां नीचमानसानां चण्डालकुमारकोपमचित्ताना पृथिव्यप्तेजोवाय्वाकाशसमचित्ताना भगवन् सत्त्वानामर्थाय तथागत परिपृच्छामो बोधिसत्त्वाना महासत्त्वानाम् । ये धर्ममपि नोपलभन्ते नाभिनिविशन्ते कुतः पुनरधर्मम्, तेषा वय भगवन्नर्थाय तथागत परिपृच्छामो बोधिसत्त्वाना महासत्त्वानामाशयशुद्धानामशठानाममायाविनामृजुकानां समचित्ताना सर्वसत्त्वहितानुकम्प-
H 6 काना समादापकाना समुत्तेजकानां संप्रहर्षकाणा महाभारवाहिकाना महायानसमारूढाना महाकृत्येन प्रत्युपस्थिताना महाकारुणिकानां सर्वसत्त्वहितसुखावहानां नायकाना विनायकाना परिणायकानां सर्वधर्मानिश्रितविहारिकाणां सर्वोपपत्त्यायतनानार्थिकाना सर्वमारपाश-

विनिर्मुक्तानां छन्दिकाना वीर्यवतामप्रमत्तानां सर्वधर्मपरमपारमिप्राप्तानां सर्वसशयच्छेदन-कुशलानाम् । [ तेषां ] वय भगवन् सत्त्वाना कृतशस्तथागत परिपृच्छामो बोधिसत्त्वानां महासत्त्वानाम् । ये ते भगवन् सत्त्वा बोधिज्ञानमपि न मन्यन्ते नाभिनिविशन्ते नाध्यवसाय तिष्ठन्ति, सर्वमन्यनासमतिक्रान्ता मार्गस्थिता मार्गप्रतिपन्ना मार्गदैशिकाः, तेषां वय भगवन् सत्त्वाना कृतशस्तथागतं परिपृच्छामो बोधिसत्त्वाना महासत्त्वानां च । सर्वसत्त्वाना वय भगवन्नर्थाय हिताय सुखाय योगक्षेमाय तथागत परिपृच्छामः, सर्वसत्त्वानां वयं भगवन् सुखमुपसंहर्तुकामा अनुत्तरसुख निरुत्तरसुखं निर्वाणसुख बुद्धसुखमसस्कृतसुखम् । तेन वय भगवन् सर्वसत्त्वाना सशयच्छित्त्यर्थं तथागत परिपृच्छामः । नि.सशया वय भगवन् भवितुकामा., निःसशयाश्च भगवन् सर्वसत्त्वेभ्यः सशयप्रहाणाय धर्मं देशयितुकामाः । तत्कस्माद्धेतोः ? सर्वसत्त्वा हि भगवन् सुखकामा दुःखप्रतिकूला', सर्वसत्त्वा. सुखेनार्थिकाः । न च वय भगवन् सर्वसत्त्वाना किंचिदन्यत्सुखं समनुपश्यामोऽन्यत्र प्रज्ञात. । न चान्यत्किंचिद्भगवन् सर्वसत्त्वाना सुखमस्ति अन्यत्र बोधिसत्त्वयानान्महायानात् । तेन वय भगवन् इममर्थवश सपश्यन्तः सत्त्वाना सुखमुपसहर्तुकामाः प्रज्ञापारमितां परिपृच्छामः । बोधिसत्त्वाना चैतमर्थं भगवन् समनुपश्यद्भिरस्माभिस्तथागत एतमर्थं परिपृष्टः ॥

एवमुक्ते भगवान् सुविक्रान्तविक्रामिण बोधिसत्त्व महासत्त्वमेतदवोचत्—साधु साधु सुविक्रान्तविक्रामिन् । गुणाना ते न सुकरः पर्यन्तोऽधिगन्तुम्, यस्त्व तथागत महतो जनकायस्यानुकम्पया इमा प्रज्ञापारमिता परिपृच्छसि । तेन हि त्व सुविक्रान्तविक्रामिन् शृणु, साधु च सुष्ठु च मनसिकुरु, भाषिष्येऽहं ते । साधु भगवन्निति सुविक्रान्तविक्रामी H 7 बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् ॥

भगवानेतदवोचत्—यत्त्व सुविक्रान्तविक्रामिन् एव वदसि—प्रज्ञापारमिता प्रज्ञापारमितेति भगवन्नुच्यते, कियता भगवन् बोधिसत्त्वाना महासत्त्वाना प्रज्ञापारमितेत्युच्यत इति, न हि सुविक्रान्तविक्रामिन् केनचिद्धर्मेण प्रज्ञापारमिता वचनीया । सर्ववचनातिक्रान्ता हि प्रज्ञापारमिता । न हि सुविक्रान्तविक्रामिन् प्रज्ञापारमिता शक्यते वक्तुम्—इयं सा प्रज्ञापारमिता, अस्य वा प्रज्ञापारमिता, अनेन वा प्रज्ञापारमिता, अस्माद्वा प्रज्ञापारमिता । अपारमितैषा सुविक्रान्तविक्रामिन् सर्वधर्माणाम्, तेनोच्यते प्रज्ञापारमितेति । प्रज्ञैव सुविक्रान्तविक्रामिंस्तथागतेन न लब्धा, नोपलब्धा,. कुतः पुनः प्रज्ञापारमितामुपलप्स्यते ? प्रज्ञेति सुविक्रान्तविक्रामिन् अज्ञैषा सर्वधर्माणाम्, अजाननैषा सर्वधर्माणाम्, तेनोच्यते प्रज्ञेति । कतमा च सुविक्रान्तविक्रामिन् अजानना सर्वधर्माणाम् ? अन्यथैते सर्वधर्मा अन्यथाभिलप्यन्ते, न चाभिलापविनिर्मुक्ताः सर्वधर्माः । या च अज्ञा सर्वधर्माणाम्, या च अजानना सर्वधर्माणाम्, न सा शक्या वाचा वक्तुम् । अपि तु यथा सत्त्वा अजाननाः, तेनोच्यते प्रज्ञेति । प्रज्ञातिरित्येवोच्यते, तेनोच्यते प्रज्ञेति । सर्वधर्माश्च सुविक्रान्तविक्रामिन् अप्रज्ञपनीयाः, अप्रवर्त्याः, अनिर्देश्याः अदृश्याश्च । यैवमजानना, इयमुच्यते अजाननेति । प्रज्ञेति सुविक्रान्तविक्रामिन् नैषा अज्ञा नाप्यनज्ञा, नाप्यज्ञानज्ञा, ततस्तेनोच्यते प्रज्ञेति ।

H 8 [ न ] ज्ञानगोचर एष सुविक्रान्तविक्रामिन्, नाज्ञानगोचरः । नाज्ञानविषयो नापि ज्ञानविषय· । अविषयो हि ज्ञानम् । सचेदज्ञानविषयः स्यात्, अज्ञान स्यात् । न ज्ञानमज्ञानत·, नापि ज्ञानतोऽज्ञानम्, नापि ज्ञानमज्ञानम्, नाप्यज्ञान ज्ञानम् । नाज्ञानेन ज्ञानमित्युच्यते, नापि ज्ञानेन ज्ञानमित्युच्यते । अज्ञानेन हि ज्ञानमित्युच्यते, न तु तत्र किंचिदज्ञान यच्छक्यमादर्शयितुम्–इद तज्ज्ञानम्, अस्य वा तज्ज्ञानम्, अनेन वा तज्ज्ञानम् । तेन तज्ज्ञानं ज्ञानत्वेन न संविद्यते, नापि तज्ज्ञान तत्त्वेनावस्थितम्, नाप्यज्ञानं ज्ञानमित्युच्यते । सचेदज्ञानेन ज्ञानमित्युच्येत, ततः सर्वे बालपृथग्जना ज्ञानिनो भवेयुः । अपि तु ज्ञानाज्ञानानुपलब्धितो ज्ञानाज्ञान यथाभूतपरिज्ञा । तदेव ज्ञानमित्युच्यते, न पुनर्यथोच्यते तथा तज्ज्ञानम् । तत्कस्मात् ? न हि ज्ञानं वचनीयम्, नापि ज्ञान कस्यचिद्विषय । सर्वविषयव्यतिक्रान्त हि ज्ञानम्, न च ज्ञानं विषयम् ( यः ? ) । अय सुविक्रान्तविक्रामिन् ज्ञाननिर्देश., अदेशोऽप्रदेशः, येन ज्ञानेनासौ ज्ञानिना ज्ञानीति सख्या गच्छति । यैव सुविक्रान्तविक्रामिन् प्रजानना अनुबोधना अजानना, इयमुच्यते प्रज्ञेति । य एवं सुविक्रान्तविक्रामिन् अभिसमय· साक्षात्क्रिया, इयमुच्यते लोकोत्तरा प्रज्ञेति, न पुनर्यथोच्यते लोकोत्तरा प्रज्ञेति । तत्कस्माद्धेतोः ? लोक एव नोपलभ्यते, कुतः पुनर्लोकोत्तरा प्रज्ञा ? क· पुनर्वादो यो लोकान् समनुत्तरिष्यति लोकोत्तरया प्रज्ञया ? तत्कस्य हेतोः ? न हि सा लोकमुपलभते, तेन न किंचिदुत्तारयति, तेनोच्यते लोकोत्तरा प्रज्ञेति । लोक इति सुविक्रान्तविक्रामिन् प्रज्ञप्तिरेषोच्यते । न च प्रज्ञप्तिर्लोकसमतिक्रमः । सर्वप्रज्ञप्तिसमतिक्रान्तं लोकोत्तरमित्युच्यते । न च पुनर्लोकोत्तरमुत्तरणम्, अनुत्तरण लोकोत्तरम् । तत्कस्य हेतोः ? H 9 अणुरपि तत्र धर्मो न संविद्यते य उत्तर्तव्यो येन चोत्तर्तव्यः । तेनोच्यते लोकोत्तरमिति । लोकोत्तरे हि न लोको विद्यते न लोकोत्तरम्, अनुत्तरस्यानुत्तर[ ण ]मिति, तेनोच्यते लोकोत्तरमिति । अयमुच्यते सुविक्रान्तविक्रामिन् लोकोत्तरायाः प्रज्ञाया निर्देशः, न पुनर्यथोच्यते लोकोत्तरा प्रज्ञेति । तत्कस्माद्धेतो· ? न हि या लोकोत्तरा सा वचनीया, उत्तीर्णा सा । न तत्र भूयः किंचिदुत्तर्तव्यम्, तेनोच्यते लोकोत्तरा प्रज्ञेति ॥

तत्र सुविक्रान्तविक्रामिन् या निर्वेधिका प्रज्ञा, किं सा प्रज्ञा निर्विध्यति ? नात्र किंचिन्निर्वेद्धव्यम् । सचेत्किंचिन्निर्वेद्धव्यमभविष्यत्, प्रज्ञप्येत–इय सा प्रज्ञा या निर्विध्यतीति । न केनचिद्विध्यते नाविध्यते, न कस्यचिदुत्तरमुपलभ्यते यद्विध्येत । निर्विध्यतीति नात्र किंचिद्विध्यति नाविध्यति, नात्र किंचिद्विध्यते नाविध्यते, तेनोच्यते निर्विध्यतीति । नात्र कश्चिदन्त प्रयाति नापि मध्यम्, तेनोच्यते निर्विध्यतीति । निर्विध्यति निर्वेधिका प्रज्ञेत्युच्यते, निर्विध्यति न क्वचिद्धावति, न विधावति, न संधावति, तेनोच्यते निर्वेधिकेति । अपि तु सुविक्रान्तविक्रामिन् निर्वेधिका प्रज्ञेति किं निर्विध्यति ? यत्किंचिद्दर्शनम्, तत्सर्वं निर्विध्यति । केन निर्विध्यति ? प्रज्ञया निर्विध्यति । किमिति प्रज्ञया निर्विध्यति ? प्रज्ञप्तिलक्षणमिति निर्विध्यति । यत्किंचित्प्रज्ञप्तिलक्षणम्, तत्सर्वमलक्षणमिति, अलक्षण प्रज्ञप्तिलक्षणमिति । यः सुविक्रान्तविक्रामिन् एवरूपया प्रज्ञया समन्वागतो विध्यति, स त्रैधातुकं

विध्यति । कथं विध्यति ? अधातुकं त्रैधातुकमिति निर्विध्यति । न ह्यत्र कश्चिद्धातुं विध्यति, स त्रैधातुकमधातुकमिति निर्विध्यति । येनैव त्रैधातुकं निर्विद्धम्, अयमुच्यते नैर्वेधिक्या प्रज्ञया समन्वागत इति । कथं च नैर्वेधिक्या प्रज्ञया समन्वागतः ? न हि किंचिन्निर्वेद्धव्यमकुशलम्, स सर्वं कुशलमिति निर्विध्यति, नैर्वेधिक्या प्रज्ञया अतिक्रामति । स एवं नैर्वेधिक्या प्रज्ञया समन्वागतो यत्किंचित्पश्यति शृणोति जिघ्रति आस्वादयति स्पृशति H 10 विजानीते वा, तत्सर्वं निर्विध्यति । कथं निर्विध्यति ? अनित्यतो दुःखतो गण्डतो रोगतः शल्यतः शून्यतो अघत आघाततः परतः [प्रलोपतः] प्रलोपधर्मतश्चलतः प्रभङ्गुरतोऽनात्मतोऽनुत्पादतोऽनिरोधतोऽलक्षणत इति । अयमुच्यते सुविक्रान्तविक्रामिन् शीतीभूतो विशल्य इति । तद्यथापि नाम सुविक्रान्तविक्रामिन् विशल्या नाम भैषज्यजातिः । सा यस्मिन् स्थाप्यते ततः सर्वशल्यान्यपनयति निर्विध्यति, एवमेव एवंरूपैर्धर्मैः समन्वागतो भिक्षुर्विशल्यः शीतीभूतो नैर्वेधिक्या प्रज्ञया समन्वागतः संसारात्यन्तविहारी[1] नैर्वेधिकप्रज्ञो विरक्तः सर्वत्रैधातुकात्, अतिक्रान्तः सर्वमारपाशेभ्यः । तद्यथापि नाम सुविक्रान्तविक्रामिन् वज्रं यस्मिन्नेव निक्षिप्यते निर्वेधनार्थम्, तत्तदेव निर्विध्यति, एवमेव भिक्षुर्वज्रोपमसमाधिनैर्वेधिक्या प्रज्ञया परिगृहीत [चित्तं ?] यत्र स्थापयति येषु च प्रचारयति, तान् सर्वान्निर्विध्यति । स नैर्वेधिक्या प्रज्ञया समन्वागतो लोकोत्तरया सम्यग्दुःखक्षयगामिन्यानुलिप्तस्वविद्य इत्युच्यते । विद्येति सुविक्रान्तविक्रामिन् अविद्योपशमस्यैतदधिवचनम्, अविद्यापरिज्ञेति दुःखस्कन्धव्युपशमस्यैतदधिवचनम् । तद्यथापि नाम सुविक्रान्तविक्रामिन् वैद्यः पण्डितो व्यक्तो मेधावी तन्त्रौपयिकया मीमांसया समन्वागतः स्यात् सर्वभैषज्यकुशलः सर्वव्याध्युत्पत्तिकुशलः सर्वदुःखप्रमोचनकः । स यं यमेव ग्लानं चिकित्सति तं तमेव मोचयत् । तत्कस्माद्धेतोः ? तथा हि स सर्वभैषज्यकुशलः सर्वव्याध्युत्पत्तिकुशलः सर्वरोगविमोचनकः । एवमेव सुविक्रान्तविक्रामिन् तृतीया विद्या सर्वाविद्योपशमाय संवर्तते, सर्वदुःखनिर्यातनाय संवर्तते, सर्वजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासानामुपशमाय संवर्तते । इयमुच्यते सुविक्रान्तविक्रामिन् लोकोत्तरा प्रज्ञा निर्वेधगामिनीति ॥

इदं च मे सुविक्रान्तविक्रामिन् संधाय भाषितम्— H 11

प्रज्ञा श्रेष्ठा हि लोकस्य येयं निर्वेधगामिनी ।
यया सम्यक् प्रजानाति भवजातिपरिक्षयम् ॥ इति ।

भवजातिपरिक्षय इति सुविक्रान्तविक्रामिन् कस्यैतदधिवचनम् ? उदयास्तगमप्रतिवेधस्यैतदधिवचनम् । कतमश्च उदयास्तगमप्रतिवेधः ? यत्किंचित्समुदयधर्मि, तत्सर्वं निरोधधर्मि इत्येवं समुदयास्तगमं प्रतिविध्यति । समुदय इति सुविक्रामिन् उत्पादस्यैतदधिवचनम्, अस्तंगम इति निरोधस्यैतदधिवचनम्, न पुनर्यथोच्यते तथोदयास्तगमः । यः कश्चित्सुविक्रान्तविक्रामिन् समुदयः, न स उदयधर्मः । न हि सुविक्रान्तविक्रामिन् समस्य कश्चिदुदयः, नापि तत्समुदागच्छति । समतानुयातमेव तत् । तेनोच्यते समुदय इति । समतानुयातमिति

[1] C and T seem to read षड्शाश्वतविहारी

सुविक्रान्तविक्रामिन् नात्र कश्चिदुदयति न समुदागच्छति । न तस्य यः स्वभावः स स्वयं सम्भवः, स निरोधः । तत्र च न कस्यचिन्निरोधः, समुद[1]यानन्तरनिरोधः । यत्रोत्पादो नास्ति, न तत्र निरोधः, स निरोधः । एवं सुविक्रान्तविक्रामिन् यः समुदयास्तंगमप्रतिवेधः अनुत्पादाय अनिरोधाय, सोऽस्तंगमप्रतिवेधः । तेनोच्यते उदयास्तंगमप्रतिवेध इति ॥

प्रतिवेध इति सुविक्रान्तविक्रामिन् प्रतीत्यसमुत्पादस्यैषा परिज्ञा । य प्रतीत्य यो धर्म उत्पद्यते, तमेव प्रतीत्य स धर्मो न संविद्यते । अयमुच्यते प्रतीत्यसमुत्पादप्रतिवेधः । सैषा सुविक्रान्तविक्रामिन् प्रतीत्यसमुत्पादस्य परिज्ञा यथाभूतता अनुत्पादेन सूच्यते । अनुत्पादो हि प्रतीत्यसमुत्पादः । समोऽनुत्पादः । तेनोच्यते प्रतीत्यसमुत्पाद इति । यत्र नास्त्यु- H 12 त्पादः, तत्र कुतो निरोधः? अनिरोधो निरोधः प्रतीत्यसमुत्पादस्यावबोधः । असमुत्पादः प्रतीत्यसमुत्पाद इत्युच्यते । योऽसमुत्पादः सोऽनुत्पादः । योऽनुत्पादः, स नातीतो न अनागतो न प्रत्युत्पन्नः । तस्य निरोधो न संविद्यते । यस्य निरोधो न संविद्यते, तदुच्यतेऽनुत्पादज्ञानमिति । येन च अनुत्पादो ज्ञातः, स न भूय उत्पादयति, न च निरोधं साक्षात्करोति । यो नोत्पादयति, स न निरोधयति । उत्पादस्य हि सतो निरोधः प्रज्ञायते । येनोत्पादयति, तेन निरुद्धा एव सर्वधर्मा ज्ञाता दृष्टाः प्रतिविद्धाः साक्षात्कृताः । तेनोच्यते निरोधः साक्षात्कृत इति ॥

क्षयज्ञानमिति सुविक्रान्तविक्रामिन् क्षीणमज्ञानम् । तेनोच्यते क्षयज्ञानमिति । केन क्षीणम्? अक्षयतया क्षीणम् । क्षयमस्य न समनुपश्यति । अज्ञानविगम एष सुविक्रान्तविक्रामिन् । तेनोच्यते क्षयज्ञानमिति । अज्ञानपरिज्ञैषा सुविक्रान्तविक्रामिन् । तेनोच्यते अज्ञानक्षयः क्षयज्ञानमिति । न हि अज्ञानं क्षयो वा अक्षयो वा । विगम एष सुविक्रान्तविक्रामिन् ज्ञास्यते । तेनोच्यते क्षयज्ञानमिति । यथाभूतपरिज्ञैषा सुविक्रान्तविक्रामिन् । तेनोच्यते विगम इति । न किंचिदन्यदुपलभ्यते इद तज्ज्ञानविगम इति । ज्ञानमेव नोपलभ्यते, कुतः पुनरज्ञानम् । यस्य कस्यचिद्विमुक्तिः, तेनोच्यते क्षयज्ञानमिति, न पुनर्यथोच्यते । यस्य पुनः क्षयज्ञानम्, तस्य न कश्चिद्व्यवहारः । अपि तु निर्देश एषः अज्ञानक्षय इति वा क्षय[ज्ञान]मिति । इय सुविक्रान्तविक्रामिन् अक्षयक्षयज्ञानपरीक्षा सर्वधर्माणा येनावबुद्धा स[2] क्षयज्ञानविगतः, अक्षयकोटिमनुप्राप्तः । अकोटिर्निर्वाणकोटिः, न पुनर्यथोच्यते । अवचनीयं निर्वाण सर्वव्यवहारसमुच्छिन्नम् । अयं सुविक्रान्तविक्रामिन् निर्वाणधातुनिर्देशः, न पुनर्यथा निर्दिष्टः । H 13 अनिर्देश्यो हि निर्वाणधातुः सर्वनिर्देशसमतिक्रान्तः सर्वनिर्देशसमुच्छिन्नो निर्वाणधातुः । अयमुच्यते लोकोत्तराया निर्वेधिकायाः प्रज्ञाया निर्देशः, योऽयं निर्वाणधातुरिति । न च सुविक्रान्तविक्रामिन् निर्वाणधातुर्देशस्थो न प्रदेशस्थः । एषोऽस्य निर्देश इति ॥

---

१ Ms not legible, but the word looks like °यानुत्तर° which reading is supported by T, Chinese supports °यानन्तर° The phrase is still not clear.

२ Ms. and Matsumoto read सोऽक्षय°, H reads सो क्षय° which is obviously wrong, both C and T suggest क्षयज्ञान° and hence my reading स क्षय°.

तत्र कतमा सुविक्रान्तविक्रामिन् प्रज्ञापारमिता ? न हि सुविक्रान्तविक्रामिन् प्रज्ञापारमितायाः किंचिदार वा पार वा । सचेत्सुविक्रान्तविक्रामिन् प्रज्ञापारमिताया आर वा पार वा उपलभ्येत, निर्दिश्येत्तथागतः प्रज्ञाया आर वा पार वा । न च सुविक्रान्तविक्रामिन् प्रज्ञापारमिताया आरमुपलभ्यते, तेनास्याः पारं न निर्दिश्यते । अपि तु सुविक्रान्तविक्रामिन् प्रज्ञापारमितेति पारमेतत्सर्वधर्माणा ज्ञानकर्मणाम्[१], तेनोच्यते प्रज्ञापारमितेति, न पुनर्यथोच्यते । न हि वाचा न कर्मणा प्रज्ञापारमिता प्रत्युपस्थिता । अनिर्देश्या हि सुविक्रान्तविक्रामिन् प्रज्ञापारमिता । सर्वधर्माणामेषोऽनुबोधः । यश्चानुबोधः, सोऽविरोधः[२] । तत्कस्माद्धेतोः ? न हि तत्र किंचिदनुबुद्धम्, न प्रतिविद्धम् । अनुबोधप्रतिवेधसमता हि बोधिः सर्वधर्मानुबोधाद्बोधिरित्युच्यते । कथ च सर्वधर्मानुबोधः ? नात्र काचिद्बोधिर्नाप्यत्र कश्चि[दनु]बोधः[३] । तत्कस्माद्धेतोः ? सचेत् सुविक्रान्तविक्रामिन् बोधिरुपलभ्येत, लब्धा स्याद्बोधौ बोधिः । न च सुविक्रान्तविक्रामिन् बोधौ बोधि. सविद्यते । एवमेषा बोधिरभिसबोद्धव्या । अननुबोधादप्रतिवेधादनुबुध्येत्युच्यते, न पुनर्यथोच्यते सर्वधर्मा ह्यननुबुद्धा अप्रतिविद्धाः । न च पुनर्धर्मो[४] धर्मस्वभावेन सविद्यते अनेनानुबोधेन । इयमुच्यते बोधिरिति । न हि सुविक्रान्तविक्रामिंस्तथागतेन बोधिरुपलब्धा, नापि तथागतेन बोधिर्विज्ञप्ता । अविज्ञपनीया अप्रज्ञपनीया बोधिः । न च तथागतेन बोधिर्ज्ञाता न जनिता । अजाता अनभिनिर्वृत्ता हि बोधिः । न च बोधिः कस्यचिद्विषयः, न च बोधौ कश्चित्सत्त्वो वा सत्त्वप्रज्ञप्तिर्वा । यत्र नास्ति सत्त्वो वा सत्त्वप्रज्ञप्तिर्वा, कथ वक्तव्योऽय बोधिसत्त्वः, इय बोधिसत्त्वस्य प्रज्ञापारमितेति ? न हि सुविक्रान्तविक्रामिन् बोधौ बोधिः, न च बोधौ कश्चित्सत्त्व. । अतिक्रान्ता ह्येषा बोधिः, अनुत्पन्नैषा बोधिः, अनभिसंवृत्तैषा बोधिः, अलक्षणैषा बोधिः । न चास्या सत्त्वः सविद्यते, नोपलभ्यते । न बोधिः सत्त्वतया प्रज्ञप्ता । निःसत्त्वानुबोधो हि बोधिरित्युच्यते । बोधि[र]सत्त्वेति येन ज्ञाता, स उच्यते बोधिसत्त्व इति । तत्कस्माद्धेतोः ? न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वः सत्त्वसज्ञाप्रभावित· । सत्त्वसज्ञाविभावनाद्बोधिसत्त्व इत्युच्यते, न पुनर्यथोच्यते[५] । तत्कस्माद्धेतोः ? अवचनीयो हि बोधिसत्त्व., सत्त्वस्वभावविगतो हि बोधिसत्त्व., सत्त्वसज्ञाविगता हि बोधिः । येनैव बोधिर्ज्ञाता, स बोधिसत्त्व इत्युच्यते । किमिति बोधिर्ज्ञाता ? अतिक्रान्तैषा बोधिः, अकरणीयैषा बोधिः, अनुत्पादानिरोधो ह्येषा बोधि. । न बोधिर्बोधिं विज्ञापयति, नापि बोधिर्विज्ञापनीया । अविज्ञापनीया अप्रज्ञपनीया अनभिनिर्वर्तनीया बोधिरित्युच्यते । येन च अनुबुद्धा प्रतिबुद्धा अविकल्पा कल्पसमुच्छेदाय, तेनोच्यते बोधिसत्त्व इति, न पुनर्यथोच्यते । तत्कस्मात् ? निःसत्त्वत्वात् । यदि बोधिसत्त्व. समुपलभ्येत, लब्धा स्याद्बोधि·—इय सा बोधिः, अस्यामयं सत्त्व इति । असत्त्वनिःसत्त्वसत्त्वावगमानुबोधाद्बोधिसत्त्व इत्युच्यते । निःसत्त्वतया सत्त्वसंज्ञाविभावनतया असत्त्वसज्ञाविभावनतया बोधिसत्त्व इत्युच्यते । तत् H 14

१ Ms and printed texts read °कर्माणाम् २ C विरोधः for अविरोध ३ Ms. and Matsumoto read बोध for अनुबोध C and T support the reading adopted by H ४ Ms and C धर्माधर्म° which H adopts. ४ Ms न पुनरन्यथोच्यते.

कस्मात् ? सत्त्वधातुरित्यसत्त्वताया एतदधिवचनम् । न हि सत्त्वः सत्त्वे संविद्यते, असंविद्यमानत्वात्सत्त्वधातोः । यदि सत्त्वे सत्त्वः स्यात्, नोच्येत[1] सत्त्वधातुरिति । अधातुनिदर्शनमेतत् सत्त्वधातुरिति । अधातुको हि सत्त्वधातुः । यदि सत्त्वधातौ सत्त्वधातुर्भवेत्, सजीवस्तच्छरीरं भवेत् । अथ सत्त्वधातुनिर्मुक्तो धातुर्भवेत्, अधातुको हि सत्त्वधातुः । धातुः संकेतेन
H 15 व्यवहारपदं गच्छति । न हि सत्त्वधातौ धातुः संविद्यते, नाप्यन्यत्र सत्त्वधातोः सत्त्वधातुः संविद्यते । अधातुका हि सर्वधर्माः । इदं च मे संधाय भाषितम्—न सत्त्वधातोरूनत्वं वा पूर्णत्वं वा प्रज्ञायते । तत्कस्माद्धेतोः ? असत्त्वात् सत्त्वधातोः, विविक्तत्वात्सत्त्वधातोः । यथा च सत्त्वधातोर्नोनत्वं न पूर्णत्वं प्रज्ञायते, एवं सर्वधर्माणामपि नोनत्वं न पूर्णत्वं प्रज्ञायते । सर्वधर्माणां हि न काचित्परिनिष्पत्तिः, येनैषामूनत्वं वा पूर्णत्वं वा भवेत् । य एवं सर्वधर्माणामनुबोधः, स उच्यते सर्वधर्मानुबोध इति । इयं च मया संधाय वाग्भाषिता—यथा सत्त्वधातोर्नोनत्वं न पूर्णत्वं प्रज्ञायते, एवं सर्वधर्माणामपि नोनत्वं न पूर्णत्वं प्रज्ञायत इति । यच्च सर्वधर्माणामनूनत्वमपूर्णत्वम्, तदपरिनिष्पत्तियोगेन, तदेव बुद्धधर्माणामपि अनूनत्वमपूर्णत्वम् । एवं सर्वधर्माणामनुबोधाद्बुद्धधर्माणामनूनत्वमपूर्णत्वम् । सर्वधर्माणामनूनत्वादपूर्णत्वाद्बुद्धधर्मा इति । तेन तद्बुद्धधर्माणामधिवचनम् । न हि बुद्धधर्माः केनचिच्छक्या ऊना वा पूर्णा वा कर्तुम् । तत्कस्माद्धेतोः ? सर्वधर्मानुबोध एषः । यश्च सर्वधर्मानुबोधः, तत्र न कस्यचिद्धर्मस्य ऊनत्वं वा पूर्णत्वं वा । सर्वधर्मा इति धर्मधातोरेतदधिवचनम् । न च धर्मधातोरूनत्वं वा पूर्णत्वं वा । तत्कस्य हेतोः ? अनन्तो हि धर्मधातुः । न हि सत्त्वधातोश्च धर्मधातोश्च नानात्वमुपलभ्यते, नापि सत्त्वधातोर्वा धर्मधातोर्वा ऊनत्वं वा
H 16 पूर्णत्वं वोपलभ्यते वा संविद्यते वा । य एवमनुबोधः, इयमुच्यते बोधिरिति । तेनोच्यते—न बुद्धधर्माणामूनत्वं वा पूर्णत्वं वा प्रज्ञायत इति । अनूनत्वमपूर्णत्वमिति सुविक्रान्तविक्रामिन् यथावदविकल्पस्य यथाभूतदर्शनस्यैतदधिवचनम् । न तत्र शक्यं केनचिदुत्क्षेप्तुं वा प्रक्षेप्तुं वा । य एवमनुबोधः, इयमुच्यते बोधिरिति । [बोधिरिति[2]] सुविक्रान्तविक्रामिन् बुद्धलक्षणमेतत् । कथं बुद्धलक्षणम् ? सर्वधर्मलक्षणान्यलक्षणम्, एतद्बुद्धलक्षणम् । अलक्षणा हि बोधिर्लक्षणस्वभावविनिर्वृत्ता[3] । य एवमनुबोधः, इयमुच्यते बोधिरिति, न पुनर्यथोच्यते । एषा हि सुविक्रान्तविक्रामिन् धर्माणामनुबोधत्वाद्बोधिसत्त्व इत्युच्यते । यो हि कश्चित् सुविक्रान्तविक्रामिन् इमान् धर्मानप्रजानन्ननवबुध्यमानो बोधिसत्त्व इत्यात्मानं प्रतिजानीते, दूरे तस्य बोधिसत्त्वस्य बोधिसत्त्वभूमिः, दूरे बोधिसत्त्वधर्माः, विसंवादयति सदेवमानुषासुरं लोकं बोधिसत्त्वनाम्ना । सचेत्पुनः सुविक्रान्तविक्रामिन् वाङ्मात्रेण बोधिसत्त्वो भवेत्, तेन सर्वसत्त्वा अपि बोधिसत्त्वा भवेयुः । नैतत्सुविक्रान्तविक्रामिन् वाङ्मात्रं यदुत बोधिसत्त्वभूमिरिति । न च वाचा शक्यमनुत्तरा सम्यक्संबोधिमभिसंबोद्धुम् । न हि वाक्कर्मणा बोधिः प्राप्यते, नापि बोधिसत्त्वधर्माः । सर्वसत्त्वाः सुविक्रान्तविक्रामिन् बोधाय चरन्ति,

१ Ms. नोच्यते २ Ms om बोधिरिति which is supplied from C and T.
३ H °विनिर्वृत्ता.

न च जानन्ति न बुध्यन्ते । ते न बोधिसत्त्वा इत्युच्यन्ते । तत्कस्माद्धेतोः? न हि सत्त्वाँ[1] असत्त्वमिति प्रजानन्ति । सचेदेव ते जानीयु, आत्मचरितैर्बोधिसत्त्वा भवेयुः । विपर्यस्ता[2] पुनः सत्त्वाः स्वचर्यां स्वविषय स्वगोचर न प्रजानन्ति । सचेदात्मचर्यां प्रजानीयुः, न ते भूयः कस्मिंश्चिद्विकल्पे चरेयुः । ताभिर्विकल्पचर्याभिः सर्वबालपृथग्जना अभूतारम्बणे चरन्ति । ते बोधिमपि आरम्बणीकृत्य मन्यन्ते । तेषामारम्बणचरितानां विकल्पचरिताना कुतो बोधिः, कुतो बोधिसत्त्वधर्मा? य एव धर्मं प्रजानन्ति, न ते भूयोऽभूतारम्बणे चरन्ति । न ते भूयः कचिद्धर्मं मन्यन्ते । तेनोच्यते—अचर्या बोधिसत्त्वचर्येति । न बोधिसत्त्वाः कल्पे न विकल्पे चरन्ति । यत्र च न कल्पो न विकल्प, न H 17
तत्र काचिच्चर्या । यत्र चाविकल्पः, न तत्र कस्यचिच्चर्या । बुद्धबोधिसत्त्वाना सर्वचर्या अविकल्पचर्येति । सर्वा मन्यना असारम्बणा[3] । स एव सर्वधर्मान् प्रजानन् न भूय आरम्बणे वा विकल्पे वा चरति विचरति वा । इय बोधिसत्त्वाना चर्या अचर्यायोगेन । एव हि सुविक्रान्तविक्रामिन् धर्मानवबुध्यन्ते प्रतिबुध्यन्ते, तेनोच्यन्ते बोधिसत्त्वा इति ॥

असत्त्वेति बोधिसत्त्वस्यैतदधिवचनम् । विभाविता हि तेन सत्त्वाः सर्वसंज्ञाः[4] । तत्कस्माद्धेतोः? ज्ञाता हि तेन भूताः सर्वसत्त्वाः, असत्त्वाः सर्वसत्त्वाः, विपर्याससत्त्वाः सर्वसत्त्वाः, परिकल्पितसत्त्वाः सर्वसत्त्वाः, अभूतारम्बणसत्त्वा सर्वसत्त्वाः, स्वचर्याविप्रनष्टसत्त्वाः सर्वसत्त्वाः, अविद्यासंस्कारसत्त्वाः सर्वसत्त्वा इति । तत्कस्य हेतोः? ये धर्माः सर्वसत्त्वाना न सविद्यन्ते, तान् धर्मानभिसंस्कुर्वन्ति । तेनोच्यते सर्वसत्त्वा अविद्यासंस्कारसत्त्वा इति । कतमो धर्मो न संविद्यते? अहमिति वा ममेति वा अहमस्मीति वा न कश्चिद्धर्मो विद्यते । सचेत्कश्चिद्धर्म स्यात्—अहमिति वा ममेति वा अहमस्मीति वा, तेन भूताः सत्त्वा अभविष्यन् । यस्मात्तर्हि सुविक्रान्तविक्रामिन् न स कश्चिद्धर्मः, य अहमिति वा ममेति वा अहमस्मीति वा, तेनोच्यते—अभूताः सर्वसत्त्वा इति, अविद्यासंस्कारसत्त्वाः सर्वसत्त्वा इति । न हि कश्चित् सुविक्रान्तविक्रामिन् सत्त्वो नाम धर्म संविद्यते यस्य स्यादहमिति वा ममेति वा अहमस्मीति वा । यस्माच्च न संविद्यते, तस्मादभूताः सत्त्वा इत्युच्यन्ते । अभूता इति असत्त्वानामेतदधिवचनम् । यथा वा पुनरभूताया सत्त्वसंज्ञायामभिनिविष्टाः, तस्मादुच्यन्ते अभूताः सत्त्वा इति । अभूतमिति सुविक्रान्तविक्रामिन् नात्र किंचिद्भूत न संभूतम् । सर्वधर्मा हि अभूता·असंभूताः । तत्र सत्त्वा अभूता अध्यवसिता विनिबध्यन्ते, तेनोच्यन्ते अभूतारम्बणाः सत्त्वा इति । ता ते स्वचर्यामप्रजानन्तः अभूतसत्त्वा इत्युच्यन्ते । अपरिबोधना पुनर्यस्याश्चर्यावबोधाद्बोधिसत्त्वा इत्युच्यते ॥ H 18

य एव सुविक्रान्तविक्रामिन् धर्मानवबुध्यते, स उच्यते बोधिसत्त्व इति । बोधिसत्त्व इत्यनुबुद्धसत्त्वस्यैतदधिवचनम्, येन सर्वधर्मा बुद्धा ज्ञाताः । कथ ज्ञाताः? अभूता

१ Ms and Matsumoto read सत्त्वा सत्त्वमिति Our reading is based on C and T २ H विपर्यन्ता ३ Matsumoto सारम्बणा Both C and T support असारम्बणा ४ Ms and Matsumoto सर्वज्ञा C and T support our reading.

असंभूता अवितथाः, नैते तथा यथा बालपृथग्जनैः कल्पिताः[1]। नैते तथा यथा बालपृथग्जनैर्लब्धाः। तेनोच्यन्ते बोधिसत्त्वा इति। तत्कस्य हेतोः? अकल्पिता अविकल्पिता हि बोधिः, अविठपिता हि बोधिः, अनुपलम्भा हि बोधिः। न हि सुविक्रान्तविक्रामिंस्तथागतेन बोधिर्लब्धा। अलम्भात्सर्वधर्माणामनुपलम्भात्सर्वधर्माणां बोधिरित्युच्यते। एवं बुद्धबोधिरित्युच्यते, न पुनर्यथोच्यते। येन सुविक्रान्तविक्रामिन् बोधाय चित्तमुत्पादयन्ति—इदं चित्तं बोधायोत्पादयिष्याम इति बोधिं मन्यन्ते, अस्त्यसौ बोधिर्यस्यां वयं चित्तमुत्पादयिष्याम इति, न ते बोधिसत्त्वा इत्युच्यन्ते, उत्पन्नसत्त्वास्त उच्यन्ते। तत्कस्माद्धेतोः? तथा हि उत्पादाभिनिविष्टाश्चित्ताभिनिविष्टा बोधिमभिनिविशन्ते। ये बोधाय चित्तमुत्पादयन्ति, ते बोधिचित्ताभिनिविष्टा बोधिसत्त्वा इत्युच्यन्ते। यस्मादभिसंस्कुर्वन्ति, तस्मात्ते बोधाय चित्तमुत्पादयन्ति। तेनोच्यन्ते अभिसंस्कारसत्त्वा इति। न ते बोधिसत्त्वाः। तत्कस्य हेतोः? उत्पन्नसत्त्वास्त उच्यन्ते। न हि सुविक्रान्तविक्रामिन् शक्यं बोधाय चित्तमुत्पादयितुम्। अनुत्पन्ना हि बोधिः, अचित्ता हि बोधिः। उत्पादमेव ते सुविक्रान्तविक्रामिन् अभिनिविशन्ते। न तेऽनुत्पादं प्रजानन्ति। या पुनः सुविक्रान्तविक्रामिन्

H 19 उत्पादसमता, सा भूतता। या च चित्तसमता या च भूतसमता, या च भूतसमता या च समता[2] सा बोधिः। यत्र च यथाभूतता, न तत्र कश्चिद्विकल्पः। ते पुनर्विकल्प्य चित्तं बोधिं चाभिनिविश्य द्वयतो बोधाय चित्तमुत्पादयन्ति। न हि सुविक्रान्तविक्रामिन् अन्य[3]चित्तमन्या बोधिः, न च चित्ते बोधिः, नापि बोधौ चित्तम्। या च बोधिर्यच्च चित्तम्, सा यथाभूतता यथावत्ता। नात्र बोधिर्न च चित्तम्, न च बोधिरुपलब्धा, नोत्पादो नानुत्पादः। तेन स बोधिसत्त्व इत्युच्यते, यथाभूतसत्त्व इत्युच्यते, महासत्त्व इत्युच्यते। तत्कस्माद्धेतोः? या ह्यभूतता, सा तेन ज्ञाता। कतमा च सा अभूतता? स सर्वलोको ह्यभूतः, अभूतपर्यापन्नोऽभूतोऽसंभूतो बतायं लोकसंनिवेशः। किमित्यभूतस्य संभवः? नाभूतस्य कश्चित्संभवः। असंभूतं ह्यभूतम्। तेनोच्यते अस्वभावा अभूताः सर्वधर्मा इति। येनैवं ज्ञातं, स उच्यते यथाभूतसत्त्व इति। न भूते भूतमभिनिविशते, तेनोच्यते यथाभूतसत्त्व इति, न पुनर्यथोच्यते। तत्कस्य हेतोः? न हि यथाभूते कश्चित्सत्त्वो वा महासत्त्वो वा। यो हि महायानमवगाहते, स उच्यते महासत्त्व इति॥

कतमच्च महायानम्? सर्वं ज्ञानं महायानम्। कतमच्च सर्वं ज्ञानम्? यत्किंचित्संस्कृतं ज्ञानम्, लौकिकं ज्ञानम्, लोकोत्तरं ज्ञानम्, तेन महासत्त्व इत्युच्यते। तत्कस्माद्धेतोः? महती हि तस्य सत्त्वसंज्ञा विगता, तेनोच्यते महासत्त्व इति। महानस्य अविद्यास्कन्धो विगतः, तेनोच्यते महासत्त्वः। महानस्य संस्कारस्कन्धो विगतः, तेनोच्यते महासत्त्वः। महानस्य अज्ञानस्कन्धो विगतः, तेनोच्यते महासत्त्वः। महानस्य दुःखस्कन्धो विगतः,

---

१ C seems to suggest उन्मत्तसत्त्वा. २ After समता, H reads भूतसमता which is not supported by Ms ३ H अन्यं चित्त.

तेनोच्यते महासत्त्व इति । यैर्हि सुविक्रान्तविक्रामिन् महासत्त्वसंज्ञा विगर्हिता,[1] न च H 20 चित्तमुपलभन्ते न च चैतसिकान् धर्मान्, चित्तप्रकृतिं च प्रजानन्ति, न च बोधिमुपलभन्ते, न च बोधिपक्षिकान् धर्मान्, बोधिप्रकृतिं च प्रजानन्ति, ते नाज्ञातचित्तेन बोधिं च पश्यन्ति, न चान्यत्र बोधेश्चित्त पश्यन्ति, न बोधौ चित्त पश्यन्ति, न चित्ते बोधिं पश्यन्ति । य एव विभावयन्ति, न ते च भावयन्ति न विभावीकुर्वन्ति, ते भावानपि नोपलभन्ते न मन्यन्ते नाभिनिविशन्ते, ते हि बोधाय चित्तमुत्पादयन्ति । ये च सुविक्रान्तविक्रामिन् एव बोधाय चित्तमुत्पादयन्ति, ते बोधिसत्त्वा इत्युच्यन्ते, न च ते बोधेर्विवर्तन्ते । तत्कस्माद्धेतो·? बोधावेव ते स्थिता, य एव न बोधेः, न चित्तस्य, न नोत्पादस्य, न निरोधस्य नानाकरण समनुपश्यन्ति । न ह्यत्र कश्चित्समनुपश्यति, न कश्चिदभिनिविशते, न कश्चिद्विकल्पमापद्यते । य एव सुविक्रान्तविक्रामिन् अविमुक्तिविमुक्तिचित्तमुत्पादयन्ति, ते भूता बोधिसत्त्वा इत्युच्यन्ते । ये पुन· सुविक्रान्तविक्रामिन् [चित्तसंज्ञिनो][2] बोधिसंज्ञिनश्च बोधाय चित्तमुत्पादयन्ति, दूरे ते बोधेः, न तेऽभ्यासन्ना बोधे· । ये पुन सुविक्रान्तविक्रामिन् बोधेर्नापि दूरे नाभ्यासन्ने[3] समनुपश्यन्ति, ते बोधेरासन्ना, तैश्च बोधाय चित्तमुत्पादितम् । एतच्च मे संधाय भाषितम्—यो हि अद्वयमात्मान प्रजानाति, स बुद्धधर्म च प्रजानाति । तत्कस्य हेतो.? आत्मभाव स भावयति सर्वधर्माणाम्, येन अद्वयपरिज्ञया सर्वधर्मा. परिज्ञाता. । आत्मस्वभावनियता हि सर्वधर्मा । यो हि अद्वयधर्म प्रजानीते, स बुद्धधर्मान् प्रजानीते । अद्वयधर्मपरिज्ञया बुद्धधर्मपरिज्ञा, आत्मपरिज्ञया सर्वत्रैधातुकपरिज्ञा । आत्मपरिज्ञेति सुविक्रान्तविक्रामिन् पारमेतत्सर्वधर्माणाम् । कतमच्च पार सर्वधर्माणाम्? यो हि नैव आरमुपलभते न पार मन्यते न पारमभिनिविशते, तस्य परिज्ञया पारगत इत्युच्यते, न पुनर्यथोच्यते । एवमेषा सुविक्रान्तविक्रामिन् बोधिसत्त्वभूमिरनुगन्तव्या । H 21 सा बोधिसत्त्वप्रज्ञापारमिता, यत्र अण्वपि न किंचिद्गन्तव्य वा अधिगन्तव्य वा । न ह्यत्र आगमन वा गमन वा प्रज्ञायते । इति ॥

[4]आर्यप्रज्ञापारमिता[या] निदानपरिवर्तः प्रथमः ॥



१ H विगता against Ms and T The reading offends grammar as well २ Not in Ms but is found in C and T ३ Ms and Matsumoto नाभ्यासन्ने. ४ C does not give chapter division, it is found in Sanskrit and T.

# २ आनन्दपरिवर्तो द्वितीयः ।

अथ खल्वायुष्मानानन्दो भगवन्तमेतदवोचत्–उत्त्रसिष्यन्ति भगवन् अस्मिन्निर्देशे अविमानिका निमित्तचारिण इति । अथ खल्वायुष्मान् शारद्वतीपुत्र आयुष्मन्तमानन्दमेतदवोचत्–अगतिरत्रायुष्मन् आनन्द अधिमानिकानाम्, अविषयः । न ते पुनरत्रोत्त्रसिष्यन्ति । तत्कस्माद्धेतोः ? उत्त्रस्ता एते ये पापमित्रहस्तगताः । अगतिस्तेपामत्र, अविषयः । ये पुनरायुष्मन्नानन्द अविमानप्रहाणाय प्रतिपन्ना अधिमानप्रहाणायोद्युक्ताः, ते ह्यत्र उत्त्रसिष्यन्ति । तत्कस्माद्धेतो ? अविमानप्रज्ञया[1] निरधिमानता गवेपन्ते मानप्रहाणं च गवेषन्ते । ये पुनरायुष्मन्नानन्द मान नोपलभन्ते न समनुपश्यन्ति न मन्यन्ते नाभिनिविशन्ते, न ते क्वचिदुत्त्रसिष्यन्ति, नापि क्वचिदुत्त्रासमाप्स्यन्ते । न च आयुष्मन्नानन्द अविमानिकानामर्थाय इय धर्मदेशना प्रवृत्ता । अनवकाशो ह्यत्र आयुष्मन्नानन्द अधिमानिकानाम्, ये च अधिमानप्रहाणायोद्युक्ता व्यायच्छन्ते[2] । अविमान इत्यायुष्मन्नानन्द अधिकारसमारोपस्यैतदविवचनम् । येऽविमाने चरन्ति, अविकारसमारोपे ते चरन्ति । न ते समचारिण । समचारिणोऽप्यस्मिन् धर्मे सशयः ॥

ये पुनरायुष्मन्नानन्द नापि सममुपलभन्ते न विपमम्, नापि सम मन्यन्ते न H 22 विपमम्, एव न सममभिनिविशन्ते न विपमम्, न ते क्वचिदुत्त्रसिष्यन्ति न सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते ॥

अगतिरत्रायुष्मन्नानन्द सर्वबालपृथग्जनानाम्, अविषयः । नात्र आयुष्मन्नानन्द सर्वबालपृथग्जना गतिमपि विन्दन्ति । श्रावकयानीयानामप्यानन्द अगतिरत्र । ये च प्रत्येकबुद्धयानीया गम्भीरेषु धर्मेषु चरन्ति, तेषामप्यत्रागतिः । येऽप्यायुष्मन्नानन्द बोधिसत्त्वयानीया निमित्तचारिणः कल्याणमित्रापरिगृहीताः पापमित्रहस्तगताः, तेषामप्येषु धर्मेषु निरुपलेपेषु अगतिरविषय । स्थापयित्वा आयुष्मन्नानन्द दृष्टसत्यं श्रावकयानीय [बोधिसत्त्वयानीय][3] च कल्याणमित्रोपस्तब्ध गम्भीरधर्माधिमुक्तम्, य एषा धर्माणामनुलोम चरन्ति, य एपा धर्माणा**मवगाहन्तेऽवतरन्ति च । ये पुनरायुष्मन्नानन्द बोधिसत्त्वा निमित्तापगता अनिमित्तचारिणोऽनानात्वचारिणो गम्भीरेषु धर्मेष्वत्यन्तमेव निर्याताः, ये नैव चित्तमुपलभन्ते न बोधिम्, न कस्यचिद्धर्मस्य नानात्व कुर्वन्ति, न समनुपश्यन्ति, तेपामेषु एवरूपेषु धर्मेषु न धन्धायितत्वं न काङ्क्षायितत्वम् । तत्कस्माद्धेतोः ? सर्वधर्माणा हि तेऽनुलोम स्थिता, न विलोमम् । ते यतो यतो धर्मान् पृच्छयन्ते, ततस्तत एव अनुलोम विसर्जयिष्यन्ति, अनुलोम च सधयन्ति ॥

---

१ C and T suggest °परिज्ञया for °प्रज्ञया २ After व्यायच्छन्ते, C and T seem to read a sentence ३ Not in Ms but supplied from C and T.

अथ खलु भगवानायुष्मन्तमानन्दमेतदवोचत्—एवमेतदानन्द यथाय शारद्वतीपुत्रो निर्दिशति । अभूमिरानन्द अस्या धर्मदेशनायामविमान्किानाम्, अविषयो हि अवतर्तुमस्या बुद्धबोधौ । अनुलोमेयमानन्द बुद्धबोधि. । न हि आनन्द हीनाधिमुक्तिकाना सत्त्वानामुदारेषु धर्मेषु बुद्धधर्मेषु चित्त क्रामति । हीनाविमुक्तिका हि आनन्द आभि(धि?)मानिकाः प्रतिलोममवस्थिता बुद्धबोधेः । तेऽधिमानस्य वशेन गच्छन्ति । शुद्धेयमानन्द पर्षत् पूर्वजिनकृताधिकारा अवरोपितकुशलमूला बहुबुद्धपर्युपासिता गम्भीर- H 23 धर्माधिमुक्तिका गम्भीरधर्मचरिता । विश्वस्तो हि आनन्द तथागतोऽस्या पर्षदि प्रसह्य धर्म देशयति, न च कचिदनुरक्ष्यं धर्मं देशयति । सारेयमानन्द पर्षदपगतपर्पटशर्करकठल्या बहुबुद्धशतसहस्रपर्युपासिता सारे प्रतिष्ठिता । शर्करकठल्यमित्यानन्द बालपृथग्जनानामेतदधिवचनम्, येषामेषु धर्मेषु नास्त्यवकाशः । पर्पटमित्यानन्द आधिमानिकाना पुद्गलानामेतदधिवचनम् । निरभिमानेयमानन्द पर्षद् महद्भिः कुशलमूलैरभ्युद्गता ॥

तद्यथापि नाम आनन्द यदा अनवतप्तो नागराजः प्रमुदितो भवति प्रीतिसौमनस्यजातः, तदा स्वभवने पञ्चभिः कामगुणैः परिचारयति, स्वभवनेऽभिप्रमुदितो महावृष्टिमुत्सृजति अष्टाङ्गोपेतस्य पानीयस्य । तदा येऽपि तस्य पुत्रा भवन्ति, तेऽपि प्रमुदिताः स्वेषु स्वेषु भवनेषु पञ्चभिः कामगुणैः समर्पिताः समन्वङ्गीभूताः क्रीडन्तो महावृष्टिमुत्सृजन्ति, एवमेव आनन्द तथागतस्यार्हतः सम्यक्संबुद्धस्य महाधर्मवृष्टिमुत्सृजतो य इमे ज्येष्ठपुत्रा बोधिसत्त्वा महासत्त्वाः, तेऽपि इह लोकधातौ स्वकस्वकानि च बुद्धक्षेत्राणि गत्वा इम धर्मसमुदयमारभ्य तेषा तथागताना पुरस्तान्महाधर्मवृष्टिमुत्सृजन्ति, महाधर्मवर्षं चाभिवर्षन्ति। तद्यथापि नाम आनन्द सागरो नागराजो यदा प्रमुदितो भवति, तदा स्वभवने महावर्षधाराः प्रमुञ्चति । ये च तत्र भवने नैवासिका नागा भवन्ति, ते ता वर्षधाराः सप्रतीच्छन्ति, तुष्टाश्च भवन्ति, ताभिश्च ते वर्षधाराभि सुख च सजानन्ते । येऽपि तस्य पुत्रा भवन्ति, तेऽपि ता वर्षधारा. सहन्ते, ताभिश्च वर्षधाराभिः प्रामोद्य प्रतिलभन्ते । तत्कस्माद्धेतो [2] असह्या हि आनन्द ता वर्षधारा अन्यैर्नागैः । नाप्यन्ये नागाः सुख सजानीरंस्ताभिर्वर्षधाराभिः, न च तुष्टा भवेयुः । एवमेवानन्द ये तथागतस्य धर्मरत्नमध्यावसन्ति, ये च तथागतस्य ज्येष्ठपुत्रा बोधिसत्त्वा महासत्त्वाः कृतकुशलमूला उदाराशया गम्भीरधर्मनय- H 24 निर्जाताः, ते इमा महाधर्मनयवृष्टि तथागतस्य प्रसहन्ते, श्रुत्वा उदग्राः प्रीता प्रहर्षिताः सुखं सजानन्ते । इदमानन्द तथागतोऽर्थवश सप्रतीत्य शुद्धाया पर्षदि महासिंहनाद नदति, महाधर्मवृष्टिमुत्सृजति ॥

तद्यथा आनन्द राजा चक्रवर्ती बहुरत्नकोशसंनिचयः । बहवश्चास्य पुत्रा भवेयुर्जातिमन्तो मातृशुद्धाः । तान् सर्वानानयित्वा रत्नगञ्ज सम सविभजेदनुप्रयच्छेत्, न च कचित्पुत्र वञ्चयेत् । ते खलु एव सविभक्तास्तस्य राज्ञश्चक्रवर्तिनोऽन्तिके भूयस्या मात्रया अधिक प्रेम च प्रसाद च सजनयेयुः, समानार्थता च राज्ञश्चक्रवर्तिनः आत्मसु सजानीरन्।

एवमेव आनन्द तथागतोऽपि धर्मराजा धर्मस्वामी स्वयंभूरिमान् पुत्रान् संनिपात्य इमं धर्मरत्नगञ्जं सविभजति एभ्यः पुत्रेभ्य., न कचिद्वञ्चयति, ते ममान्तिके भूयस्या मात्रया प्रेम च प्रसादं च गौरव चोत्पादयन्ति, समानार्थताया च बुद्धवशस्यानुच्छेदाय तिष्ठन्ति ॥

न शक्यमानन्द अन्यैः सत्त्वैरिदं धर्मरत्नं सोढु हीनाधिमुक्तिकैरधिमानिकैर्दृष्टिचरितैर्निमित्तचरितैरुपलम्भदृष्टिचरितैरस्मिमानहतै रागद्वेषमोहाभिभूतैरुत्पथप्रयातैः । न हि आनन्द हीनाधिमुक्तिकाना सत्त्वाना चक्रवर्तिधन रोचते । ये एव आनन्द चक्रवर्तिपुत्रा भवन्ति, तेषामेव चक्रवर्तिधन रोचते । किमानन्द दरिद्रसत्त्वाना चक्ररत्नेन वा हस्तिरत्नेन वा अश्वरत्नेन वा मणिरत्नेन वा स्त्रीरत्नेन वा गृहपतिरत्नेन वा परिणायकरत्नेन वा उदारैर्वा वस्त्रै, उदारैर्वा सुवर्णमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतैस्तै. प्रयोजनम्, यानि लब्ध्वापि प्रीता न शक्नुवन्ति परिभोक्तुम्। समर्घ वा विक्रीणन्ति, अकौशल्याच्च उज्झन्ति। तत्कस्मात् ?
H 25 न हि ते रत्नकोविदा । नाप्यानन्द दरिद्रसत्त्वा रत्नान्यपि[1] प्रजानन्ति—अस्य रत्नस्येद नामेति । एवमेव आनन्द ये तथागतस्य पुत्रा दृष्टसत्या बोधिसत्त्वाश्च महासत्त्वा', ते खल्वस्य धर्मरत्नकोशस्य प्रत्येपकाः । तेभ्यश्चेद धर्मरत्नमनुपलम्भशून्यताप्रतिसयुक्त बुद्धधर्मप्रतिसयुक्त रोचते क्षमते च। ते एव अनेन कार्यं कुर्वन्ति । किमानन्द दरिद्रसत्त्वाः श्रुतविहीनाः श्रुतविप्रतिपन्ना बाला अचक्षुष्मन्तः अनेन धर्मरत्नकोशेन करिष्यन्ति ? लब्ध्वा चोज्झिष्यन्ति अन्येभ्योऽपि वा दातव्य मस्यन्ते । न हि आनन्द चण्डाला वा पुक्कसा वा वेणुकारा वा, ये वा केचिदन्ये दरिद्रजीविनः सत्त्वाः उदार रत्न लब्ध्वा स्वय परिभुञ्जते । ते समर्घं वा विक्रीणन्ति उज्झन्ति वा । दरिद्र[2]सत्त्वा इत्यानन्द सर्वतीर्थ्यकराणामेतदधिवचनम्, ये [3]चान्यतीर्थिका' श्रावकाः । दरिद्रसत्त्वा इत्यानन्द सर्वबालपृथग्जनानामेतदधिवचनं दृष्टिपङ्कनिमग्नानामौपलम्भिकानां बन्[4]धाभिनिविष्टाना निमित्तचरितानामुत्पथप्रयातानाम्, ये खलु आनन्द इद धर्मरत्न लब्ध्वा न शक्नुवन्ति परिभोक्तुम्, उज्झन्ति वा, मुधा वा अन्येभ्यः प्रयच्छन्ति । ये पुनरानन्द धर्मरत्न प्राप्नुवन्ति बुद्धपुत्रा बुद्धगोचरचारिणस्तथागतवंशानुच्छेदस्थिताः, ते खल्विम (द ?) धर्मरत्न परिभुञ्जते । ते लब्ध्वा च न विप्रणाशयन्ति, रत्नसञ्ज्ञिनश्चात्र भवन्ति । न हि आनन्द शृगालः सिंहनाद परिभुङ्क्ते । ये पुनरानन्द सिहपोतका भवन्ति महासिंहेनोत्पादिता., ते त महासिंहनाद परिभुञ्जते। एवमेव आनन्द शृगालोपमाः सर्वबालपृथग्जना मिथ्यादृष्टयः । ते न समर्था तथागतमहासिंहनादं परिभोक्तुम्, महासिंहस्य सम्यक्सबुद्धस्य धर्[5]मम् । ये पुनरानन्द सम्यक्सबुद्धस्य पोतकाः महाबुद्धसिंहेन स्वयं भुञ्जा-
H 26 नेनोत्पादिताः, ते इम सम्यक्सबुद्धमहासिंहनादं परिभुञ्जते, परिभोक्ष्यन्ते इति ॥

---

१ H रत्नानामपि २ C seems to suggest चण्डाला ३ H चान्ये तीर्थिका. ४ Matsumoto reads वन्धाभिनिविष्टाना though C and T support our reading ५ Ms and H धनम् ex conjecture T supports our reading.

अथ खल्वायुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावत्परिशुद्धेय तथागतस्य पर्षत् सनिपतिता । परमाश्चर्यं भगवन् परिशुद्धेय तथागतस्य पर्षत्, स्वयम्भूपर्षदनवमृद्यपर्षद् वज्रोपमपर्षद् अचलाकम्प्याक्षोभ्यपर्षदियं भगवन् । एवमुक्ते भगवानायुष्मन्तं शारद्वतीपुत्रमेतदवोचत्—गुणांस्त्वं शारद्वतीपुत्र पर्षद परिकीर्तयसि । आह—न ह्यस्या भगवन् पर्षदो मया शक्या गुणा परिकीर्तयितुम् । तत्कस्माद्धेतो. ? सुमेरुकल्पेयं भगवन् पर्षदनन्तगुणसमन्वागता । भगवानाह—एवमेव शारद्वतीपुत्र अनन्तगुणसमन्वागतेयं पर्षत् । न ह्यस्याः पर्षदो गुणानामन्त. शक्योऽधिगन्तुं सम्यक्संबुद्धैरपि, प्रागेव अन्यैः सत्त्वै· । [1]नेयं शारद्वतीपुत्र पर्षत्तथागतेन सनिपतिता, नाप्यस्या तथागतस्य किंचिदौत्सुक्यमासीद्वा । स्वेनैव कुशलमूलेन इयं मम नामधेयं श्रुत्वा पर्षत् सनिपतिता । नास्या पर्षदि तथागतेन कश्चिद्व्यापारितो नाप्यधीष्ट. । स्वेनैव कुशलमूलेनैते सचोदिताः यदस्यां पर्षद्यागता. । धर्मतैषा । अवश्यं हि एवरूपाया धर्मदेशनायामेवरूपाणां महासत्त्वाना सनिपातो भवति । येऽप्यन्ये शारद्वतीपुत्र बुद्धा भगवन्त. इमं सर्वसंशयोच्छेदनं बोधिसत्त्वपिटकं सप्रकाशयिष्यन्ति, तेषामप्येवंरूप. पर्षत्सनिपातो भविष्यति, एवंरूपमेव पर्षन्मण्डलमवश्य भावनीयमस्यां धर्मदेशनायाम् । एषा धर्मतेति ॥

आर्यप्रज्ञापारमितायामानन्दपरिवर्तो नाम द्वितीयः ॥



१ Ms and Matsumoto read नेयं Our reading is based on C and T.

# ३ तथतापरिवर्तस्तृतीयः ।

H 27 अथ खलु भगवान् सुविक्रान्तविक्रामिणं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म–प्रज्ञापारमिता प्रज्ञापारमितेति सुविक्रान्तविक्रामिन् कतमा बोधिसत्त्वस्य प्रज्ञापारमिता ? या पारमिता सर्वधर्माणाम्, न सा शक्या निर्देष्टुम् । यथा पुनर्युष्माकमाजानना[1] भविष्यति, तथा निर्देक्ष्यामि, यथा प्रज्ञापारमिताया व्यवहारपदान्यागमिष्यन्ति । न रूपं प्रज्ञापारमिता । पेयालम् । एवं न वेदना, न संज्ञा, न संस्काराः, न विज्ञानं प्रज्ञापारमिता । नाप्यन्यत्र रूपात्प्रज्ञापारमिता, यावत् नान्यत्र विज्ञानात्प्रज्ञापारमिता । तत्कस्माद्धेतोः ? यद्धि सुविक्रान्तविक्रामिन् रूपस्य पारम्, न तद्रूपम् । पेयालम् । एवं यद्वेदनायाः संज्ञायाः संस्काराणाम्, यद्विज्ञानस्य पारम्, न तद्विज्ञानम् । यथा च रूपस्य पारम्, तथा रूपम् । एवं यथा वेदनायाः संज्ञायाः संस्काराणाम्, यथा च विज्ञानस्य पारम्, तथा विज्ञानम् । यथा च विज्ञानस्य पारम्, तथा सर्वधर्माणां पारम् । यच्च सर्वधर्माणां पारम्, न ते सर्वधर्माः । यथा च सर्वधर्माणां पारम्, तथा सर्वधर्माः । तत्र सुविक्रान्तविक्रामिन् "यद्रूपस्य पारं न तद्रूपम्" इति रूपविसंयोगो ह्येष निर्दिष्टः । "यथा रूपस्य पारं तथा
H 28 रूपम्" इति रूपस्वभावनिर्देशो ह्येष निर्दिष्टः । रूपयथावत्तैषा निर्दिष्टा, रूपप्रकृतिरेषा निर्दिष्टा, रूपानुपलब्धिरेषा निर्दिष्टा । एवं वेदना संज्ञा संस्काराः । "यद्विज्ञानस्य पारं न तद्विज्ञानम्" इति विज्ञानविसंयोगो ह्येष निर्दिष्टः । "यथा विज्ञानस्य पारं तथा विज्ञानम्" इति विज्ञानस्वभावनिर्देश एष निर्दिष्टः, विज्ञानयथावत्ता विज्ञानप्रकृतिर्विज्ञानानुपलब्धिरेषा निर्दिष्टा । "यच्च सर्वधर्माणां पारं न ते सर्वधर्माः" इति सर्वधर्माणामेष विसंयोगो निर्दिष्टः । "यथा च सर्वधर्माणां पारं तथा सर्वधर्माः" इति सर्वधर्मस्वभावनिर्देश एष निर्दिष्टः, सर्वधर्मयथावत्ता सर्वधर्मप्रकृतिः सर्वधर्मानुपलब्धिरेषा निर्दिष्टा । यथा च सर्वधर्मयथावत्ता सर्वधर्मप्रकृतिः सर्वधर्मानुपलब्धिः, तथा प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् प्रज्ञापारमिता रूपनिश्रिता, न वेदनानिश्रिता, न संज्ञानिश्रिता, न संस्कारनिश्रिता, न विज्ञाननिश्रिता । नापि प्रज्ञापारमिता रूपस्याध्यात्मं वा बहिर्धा वा उभयमन्तरेण वा विप्रकृष्टा स्थिता । न वेदनाया न संज्ञाया न संस्काराणाम् । न विज्ञानस्याध्यात्मं वा बहिर्धा वा उभयमन्तरेण वा विप्रकृष्टा स्थिता ॥

न हि सुविक्रान्तविक्रामिन् रूपसंयुक्ता प्रज्ञापारमिता, नापि रूपविसंयुक्ता । न वेदनासंयुक्ता न संज्ञासंयुक्ता न संस्कारसंयुक्ता, न विज्ञानसंयुक्ता प्रज्ञापारमिता । नापि विज्ञानविसंयुक्ता प्रज्ञापारमिता । न हि सुविक्रान्तविक्रामिन् प्रज्ञापारमिता केनचिद्धर्मेण संयुक्ता वा विसंयुक्ता वा ॥

या पुना रूपस्य तथता अवितथता अनन्यतथता यथावत्तथता, इयं प्रज्ञापारमिता । एवं
H 29 या वेदनासंज्ञासंस्कारविज्ञानतथता अवितथता अनन्यतथता यथावत्तथता, सा प्रज्ञापारमिता ॥

---

१ Ms. and Matsumoto अजानना

रूपमिति सुविक्रान्तविक्रामिन् रूपापगतमेतत्। तत्कस्माद्धेतोः? न हि रूपे रूप संविद्यते। या च असविद्यमानता, सेय प्रज्ञापारमिता। एवं वेदना संज्ञा सस्काराः। विज्ञानमिति सुविक्रान्तविक्रामिन् विज्ञानापगतमेतत्। तत्कस्माद्धेतोः? न हि विज्ञाने विज्ञान सविद्यते। या च असविद्यमानता, सेय प्रज्ञापारमिता॥

रूपस्वभावापगत हि सुविक्रान्तविक्रामिन् रूपम्। एव वेदना सज्ञा सस्काराः। विज्ञानस्वभावापगत हि विज्ञानम्। या च अपगतस्वभावता, इय प्रज्ञापारमिता। रूपास्वभाव हि रूपम्। एव वेदना सज्ञा सस्काराः। विज्ञानास्वभाव हि विज्ञानम्। या च अस्वभावता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपस्य रूप गोचरः। न वेदना न सज्ञा न सस्काराः। न विज्ञानस्य विज्ञान गोचरः। अगोचर इति सुविक्रान्तविक्रामिन् न रूप रूप सजानीते वा पश्यति वा। या च रूपस्य अजानना अपश्यना, इय प्रज्ञापारमिता। न हि सुविक्रान्तविक्रामिन् वेदना सज्ञा सस्काराः न विज्ञान [विज्ञान][1] सजानीते वा पश्यति वा। या च विज्ञानस्य अजानना अपश्यना, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपं रूपस्वभावं जहाति। न वेदना, न सज्ञा, न संस्काराः। न विज्ञान विज्ञानस्वभाव जहाति। या च अस्वभावपरिज्ञा, इयमुच्यते प्रज्ञापारमिता। न हि सुविक्रान्तविक्रामिन् रूप रूप सयोजयति न विसयोजयति। या च रूपवेदनासज्ञासस्कारविज्ञाना[ना]मसयोजना, अविसयोजना, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपं हीयते वा वर्धते वा। एव वेदना सज्ञा सस्काराः। H 30 न विज्ञान हीयते वा वर्धते वा। या च रूपवेदनासज्ञासस्कारविज्ञानानामहानिरवृद्धिः, इय सा प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूप सक्लिश्यते वा व्यवदायते वा। एव वेदना सज्ञा संस्काराः। न विज्ञान सक्लिश्यते वा व्यवदायते वा। या च रूपवेदनासज्ञासस्कारविज्ञानानामसक्लेशता अव्यवदानता, इयमुच्यते प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपं विशुद्धधर्मि नाविशुद्धधर्मि। एव न वेदना न सज्ञा न सस्काराः। न विज्ञानं विशुद्धधर्मि नाविशुद्धधर्मि। या च रूपवेदनासज्ञासस्कारविज्ञानाना न विशुद्धधर्मता नाविशुद्धधर्मता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूप संक्रामति वा अवक्रामति वा। एव वेदना सज्ञा संस्काराः। न विज्ञानं सक्रामति वा अवक्रामति वा। या च रूपवेदनासंस्कारविज्ञानानामसंक्रान्तिरनवक्रान्तिः, इयं प्रज्ञापारमिता॥

---

१ Ms om विज्ञानं

न हि सुविक्रान्तविक्रामिन् रूप सयुज्यते वा विसंयुज्यते वा । एवं वेदना संज्ञा सस्कारा· । न विज्ञान सयुज्यते वा विसयुज्यते वा । यश्च रूपवेदनासज्ञासस्कारविज्ञानानामसयोगोऽविसयोग, इय सा प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप च्यवते वा उपपद्यते वा । एव वेदना सज्ञा सस्काराः । न विज्ञान च्यवते वा उपपद्यते वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामच्युतिरनुपपत्ति, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप जायते वा म्रियते वा । एव वेदना सज्ञा सस्कारा· । न विज्ञान जायते वा म्रियते वा । या च रूपवेदनासज्ञासस्कारवेदनाविज्ञानानामजातिरमरणम्, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप ससरति वा ससरणधर्मि वा । एवं न वेदना न सज्ञा न सस्काराः । न विज्ञान ससरति वा ससरणधर्मि वा । या च रूपवेदनासंज्ञासस्कारविज्ञानानामससरणता अससरणधर्मता, इय प्रज्ञापारमिता ॥

H 31 न हि सुविक्रान्तविक्रामिन् रूप क्षीयते वा क्षयधर्मि वा । एव न वेदना न सज्ञा न सस्कारा· । न विज्ञान क्षीयते वा क्षयधर्मि वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामक्षयता अक्षयधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप समुदयधर्मि न निरोधधर्मि । एव वेदना सज्ञा संस्कारा. । न विज्ञान समुदयधर्मि न निरोधधर्मि । या च रूपवेदनासस्कारविज्ञानानामसमुदयधर्मता अनिरोधधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपमुत्पादधर्मि वा व्ययधर्मि वा । एव वेदना सज्ञा सस्कारा· । न विज्ञानमुत्पादधर्मि वा व्ययधर्मि वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामनुत्पादधर्मता अव्ययधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप विपरिणामधर्मि न अविपरिणामधर्मि । एव वेदना सज्ञा सस्काराः । न विज्ञान विपरिणामधर्मि न अविपरिणामधर्मि । या च रूपवेदनासंज्ञासंस्कारविज्ञानाना न विपरिणामधर्मता न अविपरिणामधर्मता, इयं प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप नित्य वा अनित्य वा । एव वेदना संज्ञा संस्काराः । न विज्ञान नित्य वा अनित्य वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना न नित्यता नाप्यनित्यता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप सुख वा दुःख वा । एव वेदना सज्ञा सस्कारा. । न विज्ञान सुख वा दु.ख वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना नापि सुखता
H 32 नाप्यसुखता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपमात्मा वा अनात्मा वा । एव वेदना संज्ञा संस्काराः । न विज्ञानमात्मा वा अनात्मा वा । या च रूपवेदनासज्ञासंस्कारविज्ञानाना नाप्यात्मता नाप्यनात्मता, इयं प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप रागधर्मि वा विरागधर्मि वा । एव वेदना संज्ञा संस्काराः । न विज्ञान रागधर्मि वा विरागधर्मि वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना न रागधर्मता नापि विरागधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप द्वेपधर्मि वा अद्वेषधर्मि वा । एव वेदना सज्ञा सस्काराः । न विज्ञान द्वेषधर्मि वा अद्वेषधर्मि वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना न द्वेषधर्मता नापि विगतद्वेषधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप मोहधर्मि वा विगतमोहधर्मि वा । एव वेदना सज्ञा सस्कारा. । न विज्ञान मोहधर्मि वा विगतमोहधर्मि वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना न मोहधर्मता नापि विगतमोहधर्मता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्य कश्चित्कर्ता वा कारयिता वा । एव वेदनासज्ञासस्काराणाम् । न विज्ञानस्य कश्चित्कर्ता वा कारयिता वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामकर्तृता अकारयितृता, इय प्रज्ञापारमिता ।

न हि सुविक्रान्तविक्रामिन् रूपस्य कश्चिदुत्थापको वा समुत्थापको वा । एव न वेदनाया न सज्ञाया न सस्काराणाम् । न विज्ञानस्य कश्चिदुत्थापको वा समुत्थापको वा । या च रूपवेदनासज्ञासस्कारविज्ञानाना नोत्थापना न समुत्थापना, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्य कश्चिज्ज्ञाता वा ज्ञापको वा । एव न वेदना- H 33
सज्ञासंस्काराणाम् । न विज्ञानस्य कश्चिज्ज्ञाता वा ज्ञापको वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामज्ञातृता अज्ञापकता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्य कश्चिद्वेदको वा वेदयिता वा । एव न वेदनासज्ञासस्काराणाम् । न विज्ञानस्य कश्चिद्वेदको वा वेदयिता वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामवेत्तृता अवेदनता, इयं प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्य कश्चिज्जानको वा पश्यको वा । एव न वेदनाया न सज्ञाया न सस्काराणाम् । न विज्ञानस्य कश्चिज्जानको वा पश्यको वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामजानना अपश्यना, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्योच्छेदता वा शाश्वतता वा । एव न वेदनाया न सज्ञाया न सस्काराणाम् । न विज्ञानस्योच्छेदता वा शाश्वतता वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामनुच्छेदता अशाश्वतता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूपस्य अन्तो वा अनन्तो वा । एव न वेदनाया न सज्ञाया न संस्काराणाम् । न विज्ञानस्य अन्तो [ वा ] अनन्तो वा । या च रूपवेदनासज्ञासस्कारविज्ञानानामन्तता नाप्यनन्तता, इय प्रज्ञापारमिता ॥

न हि सुविक्रान्तविक्रामिन् रूप दृष्टिगत न दृष्टिगतप्रहाणम् । एव न वेदनासज्ञासस्काराः । न विज्ञान दृष्टिगतं न दृष्टिगतप्रहाणम् । यच्च रूपवेदनासज्ञासस्कारविज्ञानाना न दृष्टिगत न दृष्टिगतप्रहाणम्, इय प्रज्ञापारमिता ॥

H 34 न हि सुविक्रान्तविक्रामिन् रूप तृष्णा न तृष्णाप्रहाणम्। एव न वेदना न संज्ञा न सस्काराः। न विज्ञान तृष्णा न तृष्णाप्रहाणम्। या च रूपवेदनासज्ञासस्कारविज्ञानाना न तृष्णा न तृष्णाप्रहाणता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूप कुशल वा अकुशल वा। एव न वेदना सज्ञा सस्काराः। न विज्ञान कुशल वा अकुशल वा। या च रूपवेदनासज्ञासस्कारविज्ञानाना न कुशलता नाकुशलता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपस्य गमन वा आगमन वा प्रज्ञायते। एवं न वेदनाया न सज्ञाया न सस्काराणाम्। न विज्ञानस्य गमन वा आगमन वा प्रज्ञायते। यत्र च रूपवेदनासज्ञासंस्कारविज्ञानाना न गतिर्नागतिः प्रज्ञायते, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानाना स्थितिर्वा अस्थितिर्वा। या च रूपवेदनासज्ञासस्कारवेदनाना न स्थितिर्नाप्यस्थितिः, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानामार वा पार वा। या च रूपवेदनासज्ञासस्कारविज्ञानाना नाप्यारता न पारता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि शील वा दौःशील्यं वा। या च रूपवेदनासज्ञासस्कारविज्ञानानामशीलता अदौःशील्यता, इय प्रज्ञापारमिता॥

H 35 न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि अनुनयो वा प्रतिघो वा। या च रूपवेदनासज्ञासस्कारविज्ञानानामननुनयता अप्रतिघता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासस्कारविज्ञानानि ददति वा प्रतिगृह्णाति वा। या च रूपवेदनासस्कारविज्ञानानामदानता अप्रतिग्रहता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि क्षान्तिर्वा अक्षान्तिर्वा। या च रूपवेदनासज्ञासस्कारविज्ञानाना नापि क्षान्तिर्नाप्यक्षान्तिः, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि वीर्य वा कौसीद्य वा। या च रूपवेदनासज्ञासस्कारविज्ञानानामवीर्यता अकौसीद्यता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानाना समाधिर्न विक्षिप्तचित्तता। या च रूपवेदनासंज्ञासंस्कारविज्ञानाना न समाधिर्न विक्षिप्तचित्तता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि प्रज्ञा वा दौष्प्रज्ञ्यं वा। या च रूपवेदनासज्ञासस्कारविज्ञानानां नापि प्रज्ञता नापि दौष्प्रज्ञता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासस्कारविज्ञानानि विपर्यासा वा अविपर्यासा वा। या च रूपवेदनासज्ञासस्कारविज्ञानानां नापि विपर्यासता नाप्यविपर्यासता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासंस्कारविज्ञानानि स्मृत्युपस्थानानि वा अस्मृत्युपस्थानानि वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नापि स्मृतिर्नाप्यस्मृतिः, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि सम्यक्प्रहाणानि वा असम्यक्प्रहाणानि वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नापि सम्यक्प्रहाणता H 36 नाप्यसम्यक्प्रहाणता, इयं प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासंस्कारविज्ञानानि ऋद्धिपादा वा अप्रमाणानि वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नापि ऋद्धिपादता नाप्यप्रमाणता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि इन्द्रियाणि वा बलबोध्यङ्गमार्गं वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नेन्द्रियता न बलबोध्यङ्गमार्गता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासस्कारविज्ञानानि विद्या वा विमुक्तिर्वा। या च रूपवेदनासञ्ज्ञासंस्कारविज्ञानाना न विद्यता न विमुक्तिता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि ध्यानविमोक्षसमाधिसमापत्त्यभिज्ञा वा नाप्यनभिज्ञा वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना न ध्यानविमोक्षसमाधिसमापत्तिता नाप्यभिज्ञता नाप्यनभिज्ञता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि शून्यता वा अनिमित्त वा अप्रणिहित वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना न शून्यता नानिमित्तता नाप्रणिहितता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि सस्कृतानि वा असस्कृतानि वा। या च रूपवेदनासञ्ज्ञासंस्कारविज्ञानाना नापि सस्कृतता नाप्यसस्कृतता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासस्कारविज्ञानानि सङ्गो वा असङ्गो वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नापि सङ्गता नाप्यसङ्गता, इय प्रज्ञापारमिता॥ H 37

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि ज्ञान वा अज्ञान वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानाना नापि ज्ञानता नाप्यज्ञानता, इयं प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासञ्ज्ञासस्कारविज्ञानानि मन्यना वा स्पन्दना[1] वा प्रपञ्चना वा। या च रूपवेदनासञ्ज्ञासस्कारविज्ञानानामन्यनता अस्पन्दनता अप्रपञ्चता, इयं प्रज्ञापारमिता॥

१ H सन्दना

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासंस्कारविज्ञानानि संज्ञा नासंज्ञा। या च रूपवेदनासज्ञासस्कारविज्ञानाना नापि संज्ञता नाप्यसंज्ञता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासज्ञासस्कारविज्ञानानि उपशान्तानि वा अनुपशान्तानि वा। या च रूपवेदनासज्ञासंस्कारविज्ञानाना नाप्युपशान्तिर्नाप्यनुपशान्तिः, इयं प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासस्कारविज्ञानानां निर्वृत्तिर्न अनिर्वृत्तिः। या च रूपवेदनासज्ञासस्कारविज्ञानाना नापि निर्वृत्तिर्नाप्यनिवृत्तिः, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यः पञ्चाना स्कन्धानामभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुन पञ्चस्कन्धानामभिनिर्वृत्तिपर्यापन्ननिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यो धात्वायतनप्रतीत्यसमुत्पादाभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुनर्धात्वायतनप्रतीत्यसमुत्पादाभिनिर्वृत्तिपर्यापन्ननिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रान्तविक्रामिन् यो विपर्यासनीवरणाभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुनर्विपर्यासनीवरणाभिनिर्वृत्तिपर्यापन्ननिर्देशस्य तथता अवितथता
H 38 अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् य. षट्त्रिंशत्तृष्णाचरिताभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुन. षट्त्रिंशत्तृष्णाचरिताभिनिर्वृत्तिपर्यापन्ननिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यो ध्यानविमोक्षसमाधिसमापत्तिनिर्देशः, सा प्रज्ञापारमिता। या पुनर्ध्यानविमोक्षसमाधिसमापत्तिनिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यः पञ्चानामभिज्ञानां निर्देशः, सा प्रज्ञापारमिता। या पुनः पञ्चानामभिज्ञाना निर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यः सस्कृतपर्यापन्नाना लौकिकाना सर्वेषा कुशलाकुशलाना धर्माणामभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुनस्तेषा निर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यः स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गाभिनिर्वृत्तिपर्यापन्ननिर्देशः, सा प्रज्ञापारमिता। या पुनः स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गाभिनिर्वृत्तिपर्यापन्ननिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इयं प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यश्चतुरार्यसत्यनिर्देश', सा प्रज्ञापारमिता। या पुनश्चतुरार्यसत्यनिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इंय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् य. शीलसमाविप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनविशुद्धिनिर्देशः, सा प्रज्ञापारमिता। या पुन शीलसमाविप्रज्ञाविमुक्तिज्ञानदर्शनविशुद्धिनिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥ H 39

न हि सुविक्रान्तविक्रामिन् योऽसस्कृतपर्यापन्नाना लोकोत्तराणामनिश्रितानामनास्रवाणा धर्माणा निर्देश', सा प्रज्ञापारमिता। या पुनरसस्कृतपर्यापन्नाना लोकोत्तराणामनिश्रितानामनास्रवाणा धर्माणा निर्देशस्य तथता अवितथता अनन्यतथा यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यः शून्यतानिमित्ताप्रणिहितानुत्पादानभिसस्कृतधर्मस्य निर्देश', सा प्रज्ञापारमिता। या पुनः शून्यतानिमित्ताप्रणिहितानुत्पादानभिसस्कृतधर्मनिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् यो विद्याविमुक्तिविरागनिरोधनिर्वाणनिर्देश', सा प्रज्ञापारमिता। या पुनर्विद्याविमुक्तिविरागनिरोधनिर्वाणनिर्देशस्य तथता अवितथता अनन्यतथता यावत्तथता, इयं प्रज्ञापारमिता॥

तत्कस्माद्धेतोः? न हि सुविक्रान्तविक्रामिन् रूपपर्यापन्ना प्रज्ञापारमिता। एव न वेदना न सज्ञा न सस्काराः। न विज्ञानपर्यापन्ना प्रज्ञापारमिता। न पृथिव्यप्तेजोवाय्वाकाशपर्यापन्ना प्रज्ञापारमिता। न कामधातु-न रूपधातु-नारूपधातुपर्यापन्ना प्रज्ञापारमिता। न सस्कृतासस्कृतधर्मपर्यापन्ना प्रज्ञापारमिता। न लौकिकलोकोत्तरसास्रवानास्रवधर्मपर्यापन्ना प्रज्ञापारमिता। न कुशलाकुशलधर्मपर्यापन्ना प्रज्ञापारमिता। न सत्त्वधातुपर्यापन्ना नासत्त्वधातुपर्यापन्ना प्रज्ञापारमिता। नाप्येभिर्धर्मैर्विनिर्मुक्ता प्रज्ञापारमिता॥

न हि सुविक्रान्तविक्रामिन् प्रज्ञापारमिता कस्मिंश्चिद्धर्मे पर्यापन्ना नाप्यपर्यापन्ना। H 40
या च पर्यापन्नापर्यापन्नाना धर्माणा तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता॥

तथतेति सुविक्रान्तविक्रामिन् कस्यैतदधिवचनम्? न ह्येते सुविक्रान्तविक्रामिन् तथा धर्मा यथा बालपृथग्जनैरुपलब्धाः, न चान्यथा। यथा पुनरेते धर्मास्तथागतैस्तथागतश्रावकैर्बोधिसत्त्वैश्च दृष्टाः, तथैव ते सर्वधर्मा', तथता अवितथता अनन्यतथता यावत्तथता, तेनोच्यते तथतेति। अय सुविक्रान्तविक्रामिन् बोधिसत्त्वाना महासत्त्वाना प्रज्ञापारमितानिर्देशः॥

न खलु पुनरियं सुविक्रान्तविक्रामिन् प्रज्ञापारमिता कस्यचिद्धर्मस्य हानाय वा विवृद्धये वा प्रत्युपस्थिता, नापि कस्यचिद्धर्मस्य सयोगाय वा विसयोगाय वा, ऊनत्वाय वा पूर्णत्वाय वा, अपचयाय वा उपचयाय वा, सक्रान्तये वा अवक्रान्तये वा, उत्पादाय वा

निरोधाय वा, सक्लेशाय वा व्यवदानाय वा, प्रवृत्तये वा निवृत्तये वा, समुदयाय वा अस्तगमाय वा, सलक्षणाय वा अलक्षणाय वा, समतायै वा विसमतायै वा, संवृत्यै वा परमार्थाय वा, सुखाय वा दुःखाय वा, नित्यतायै वा अनित्यतायै वा, शुभतायै वा अशुभतायै वा, आत्मतायै वा अनात्मतायै वा, सत्यतायै वा मृषतायै वा, कर्तृत्वेन वा अकर्तृत्वेन वा, कारणत्वेन वा अकारणत्वेन वा, सभवाय वा असभवाय वा, स्वभावतायै वा अस्वभावतायै वा, च्युतये वा उपपत्तये वा, जातये वा अजातये वा, अभिनिर्वृत्तये वा अनभिनिर्वृत्तये वा, उपपत्तये वा उपपत्तिसमुच्छेदाय वा, सामग्र्यै वा विसामग्र्यै वा, सरागाय वा विरागाय वा, सदोषाय वा विगतदोषाय वा, समोहाय वा विगतमोहाय वा, विपर्यासाय वा अविपर्यासाय वा, आरम्बणाय वा अनारम्बणाय वा, क्षयाय वा अक्षयाय वा, ज्ञानाय वा अज्ञानाय वा, नीचत्वाय वा उच्चत्वाय वा, उपकाराय वा निरुपकाराय वा, गमनाय वा आगमनाय वा, अस्तित्वाय वा नास्तित्वाय वा, अनुनयाय वा प्रतिघाय H 41 वा, आलोकाय वा अन्धकाराय वा, कौसीद्याय वा वीर्यारम्भाय वा, शून्यतायै वा अशून्यतायै वा, निमित्ततायै वा अनिमित्ततायै वा, प्रणिधानाय वा अप्रणिधानाय वा, अभिसंस्काराय वा अनभिसंस्काराय वा, अन्तर्धानाय वा अनन्तर्धानाय वा, विद्यायै वा विमुक्तये वा, शान्ततायै वा अनुपशान्ततायै वा, निर्वृत्तये वा अनभिनिर्वृत्तये वा, योनिशाय वा अयोनिशाय वा, परिज्ञायै वा अपरिज्ञायै वा, निर्याणाय वा अनिर्याणाय वा, विनयाय वा अविनयाय वा, शीलाय वा दौःशील्याय वा, विक्षिप्ततायै वा अविक्षिप्ततायै वा, प्रज्ञतायै वा दुष्प्रज्ञतायै वा, विज्ञानाय वा अविज्ञानाय वा, स्थितये वा अस्थितये वा, सभागतायै वा विसभागतायै वा, भवाय वा विभवाय वा, प्राप्तये वा अप्राप्तये वा, अभिसमयाय वा अनभिसमयाय वा, साक्षात्क्रियायै वा असाक्षात्क्रियायै वा, प्रतिवेधाय वा अप्रतिवेधाय वा प्रत्युपस्थिता इति ॥

[ प्रज्ञापारमितायां ] तथतापरिवर्तो नाम तृतीयः ॥



## ४ औपम्यपरिवर्तश्चतुर्थः ।

अथ[१] खलु भगवान् सुविक्रान्तविक्रामिणं बोधिसत्त्वं महासत्त्वमेतदवोचत्—तद्यथापि नाम सुविक्रान्तविक्रामिन् स्वप्नदर्शी पुरुषः स्वप्नस्वभावनिर्देशं च निर्दिशति, न च स्वप्नस्वभावनिर्देशः कश्चित्संविद्यते । तत्कस्माद्धेतोः ? स्वप्न एव न संविद्यते, कुतः पुनः स्वप्नस्वभावनिर्देशो भविष्यति ? एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमितायाः स्वभावश्च निर्दिश्यते, न च प्रज्ञापारमितायाः स्वभावः कश्चित्संविद्यते । तद्यथापि नाम सुविक्रान्तविक्रामिन् स्वप्नो न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थितः । एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य H 42 निदर्शनेन प्रत्युपस्थिता ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् मायादर्शी पुरुषो मायास्वभावनिर्देशं च निर्दिशति, न च मायायाः स्वभावनिर्देशः कश्चित्संविद्यते, कुतः पुनर्मायास्वभावनिर्देशस्य स्वभावो भविष्यति ? एवमेव प्रज्ञापारमिता च निर्दिश्यते, न च प्रज्ञापारमितायाः स्वभावनिर्देशः कश्चित्संविद्यते । तद्यथापि नाम सुविक्रान्तविक्रामिन् माया न कस्यचिद्धर्मस्य अभिनिर्वृत्तये प्रत्युपस्थिता, एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य अभिनिर्वृत्तये प्रत्युपस्थिता ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् प्रतिभासदर्शी पुरुषः प्रतिभासस्वभावनिर्देशं च निर्दिशति, न च कश्चित्प्रतिभासस्वभावः संविद्यते, कुतः पुनः प्रतिभासस्वभावनिर्देशो भविष्यति ? एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता च निर्दिश्यते, न च कश्चित्प्रज्ञापारमितास्वभावः संविद्यते, कुतः पुनः प्रज्ञापारमितास्वभावनिर्देशो भविष्यति ? तद्यथापि नाम सुविक्रान्तविक्रामिन् प्रतिभासो न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थितः, एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थिता ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् मरीचिदर्शी पुरुषो मरीचिदर्शनं च निर्दिशति, न च मरीचिदर्शन[स्वभावः कश्चित्][२] संविद्यते, कुतः पुनर्मरीचिदर्शनस्वभावो भविष्यति ? एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता न निर्दिश्यते, न च पुनः प्रज्ञापारमितायाः स्वभावनिर्देशः कश्चित्संविद्यते । तद्यथापि नाम सुविक्रान्तविक्रामिन् मरीचिर्न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थिता, एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थिता ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् प्रतिश्रुत्कागोचरस्थः पुरुषः प्रतिश्रुत्कायाश्च H 43 शब्दं शृणोति, न च तं समनुपश्यति । यदा पुनः स्वयमेवानुभाषते, तदा तं शब्दं शृणोति । एवमेव प्रज्ञापारमितानिर्देशपदं चाधिगच्छति श्रवणाय, न च कस्यचिद्धर्मस्य निर्देशश्रवणाय गच्छति अन्यत्र यदाभिभाष्यते तदा आज्ञायते, श्रवणपथं चाधिगच्छति ॥

१ C and T om this sentence २ Ms and Matsumoto मरीचिदर्शनं संविद्यते, T मरीचिदर्शनं किंचित्संविद्यते.

तद्यथापि नाम सुविक्रान्तविक्रामिन् फेनपिण्डदर्शी पुरुष. फेनपिण्डस्वभाव च निर्दिशति, न च फेनपिण्डस्वभाव उपलभ्यते अध्यात्म वा बहिर्धा वा, कुतः पुनस्तन्निर्देशस्वभावोपलब्धिर्भविष्यति ? एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता च निर्दिश्यते, न च प्रज्ञापारमितास्वभाव उपलभ्यते । तद्यथापि नाम सुविक्रान्तविक्रामिन् फेनपिण्डो न कस्यचिद्धर्मस्य अभिनिर्वृत्तिस्वभावमुपैति, एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य अभिनिर्वृत्तिस्वभावमुपैति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् बुद्बुददर्शी पुरुषो बुद्बुदस्वभाव च निर्दिशति, न च बुद्बुदस्वभाव· सविद्यते, कुत· पुनर्बुद्बुदस्वभावनिर्देशो भविष्यति ? एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता च निर्दिश्यते, न च प्रज्ञापारमितायाः स्वभावः सविद्यते । तद्यथापि नाम सुविक्रान्तविक्रामिन् बुद्बुदो न कस्यचिद्धर्मस्य अभिनिर्वृत्तिस्वभावेन प्रत्युपस्थितः, एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता न कस्यचिद्धर्मस्य अभिनिर्वृत्तिस्वभावेन प्रत्युपस्थिता ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् पुरुषः कदल्याः सार पर्येषमाणो नोपलभते, अथ च तस्या. पत्रैः कार्य करोति, एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमितायाः सार न सविद्यते, प्रज्ञापारमिताया निर्देश कार्य च करोति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् पुरुष आकाशनिदर्शनेन व्यवहरति, न चाकाशस्य किंचिन्निदर्शन सविद्यते । एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमितेति व्यवहारः क्रियते, न च कस्यचिन्निदर्शनेन व्यवह्रियते । तद्यथापि नाम सुविक्रान्तविक्रामिन् नाकाशं
H 44 च व्यवह्रियते, न च कस्यचिद्धर्मस्य निदर्शनेन वा परिनिष्पत्त्या वा व्यवह्रियते । एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता च व्यवह्रियते, न च कस्यचिद्धर्मस्य निदर्शनेन वा परिनिष्पत्त्या वा व्यवह्रियते ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् छायेति चातपश्चेति व्यवह्रियते, न च तौ कस्यचिद्धर्मस्य परिनिष्पत्तये प्रत्युपस्थितौ, अवभासश्च विज्ञायते । एतमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता व्यवहारपद गच्छति, न च कस्यचिद्धर्मस्य निदर्शनेन व्यवहारपदमागच्छति, अवभास च करोति सर्वधर्माणाम् ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् मणिरत्नमुत्तप्त महतावभासेन प्रत्युपस्थितं भवति, न च सोऽवभासोऽध्यात्म वा बहिर्धा वा दर्शनमुपैति । एवमेव सुविक्रान्तविक्रामिन् प्रज्ञापारमिता अवभासकृत्येन प्रत्युपस्थिता, न च सोऽवभासोऽध्यात्म वा बहिर्धा वा दर्शनमुपैति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् तैलप्रद्योतस्य [1]ध्मायतो नास्यार्चिषो मुहूर्तमपि संतिष्ठन्ते, अवभास च कुर्वन्ति, तेनावभासेन रूपाणि दर्शनमागच्छन्ति । एवमेव सुवि-

१ H ध्यायतो.

क्रान्तविक्रामिन् प्रज्ञापारमिता न कस्मिंश्चिद्धर्मेऽवतिष्ठते, धर्माणा चावभास करोति, तेन चावभासेन सर्वधर्मा यथाभूतदर्शनमागच्छन्त्यार्याणाम् ॥

अथ खल्वायुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—आश्चर्य भगवन् प्रज्ञापारमिता च निर्दिष्टा, प्रज्ञापारमितायाश्च अपरिनिष्पत्तिर्निर्दिष्टा। एवमुक्ते भगवानायुष्मन्त शारद्वतीपुत्रमेतदवोचत्—एवमेतच्छारद्वतीपुत्र, एवमेतत्। अपरिनिष्पन्ना प्रज्ञापारमिता रूपापरिनिष्पत्तित । वेदनासज्ञासस्कारविज्ञानापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। अविद्यापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। एव सस्कारापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। विज्ञानापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। नामरूपापरिनिष्पत्तित, H 45 षडायतनापरिनिष्पत्तितः, स्पर्शापरिनिष्पत्तित., वेदनापरिनिष्पत्तित, तृष्णापरिनिष्पत्तित, उपादानापरिनिष्पत्तितः, भवापरिनिष्पत्तित॰, जात्यपरिनिष्पत्तित॰, जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। धात्वायतनानित्यदुःखानात्मशान्तविपर्यासनीवरणदृष्टिविचरिताचयोपचयापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। सुखदुःखादुःखासुखापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। उदयव्ययस्थित्यन्यथात्वापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। समुदयास्तगतात्मसत्त्वजीवपोषपुरुषपुद्गलमनुजमानवकारककारयितृत्थापकसमुत्थापकवेदकवेदयितृज्ञातृज्ञापकानिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। सत्यमृ[1]षासस्कृतासस्कृतगमनागमनसनिदर्शनानिदर्शनाध्यात्मबहिर्धापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। पृथिव्यप्तेजोवायुकामरूपारूप्याकाशविज्ञानधर्मधात्वपरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। कर्मविपाकहेतुप्रत्ययोच्छेदशाश्वतातीतानागतप्रत्युत्पन्नपूर्वान्तापरान्तमध्यान्तशीलदौ.शील्यक्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यचित्तमनोविज्ञानानन्तरायच्युत्युपपत्तिसक्लेशव्यवदानस्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गार्यसत्याप्रमाणध्यानविमोक्षसमाधिसमापत्त्यभिज्ञाशून्यतानिमित्ताप्रणिहितकुशलाकुशलसास्रवानास्रवलौकिकलोकोत्तरसावद्यानवद्यसस्कृतासस्कृतव्याकृताव्याकृतकृष्णशुक्लाकृष्णशुक्लपर्यापन्नापर्यापन्नहीनप्रणीतमध्यरागद्वेषमोहदृष्टश्रुतमतविज्ञातमन्यनास्थितवितर्कविचारारम्बणमायेर्ष्यामात्सर्यसंयोगद्वयलक्षणानुत्पादानभिसस्कारशमथविदर्शनाविद्याविमुक्तिक्षयविरागनिरोधसर्वोपधिप्रतिनिसर्गसवृतिपरमार्थश्रावकभूमिप्रत्येकबुद्धभूमिसर्वज्ञानाज्ञानासङ्गज्ञानस्वयभूज्ञानासमसमज्ञानबोधिसत्त्वप्रणिधानश्रावकप्रत्येकबुद्धसपदप्रमाणपर्यापन्नासमसमसर्वज्ञज्ञानसर्वधर्मयथावदनिदर्शनसर्वधर्मज्ञानदर्शनापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। सत्त्वपरिपाकापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। लक्षणसपद्बुद्धक्षेत्रपरिशुद्धिबुद्धबलवैशारद्याष्टादशावेणिकबुद्धधर्मापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। निर्वाणापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता, यावत् सर्वधर्मकुशलाकुशलापरिनिष्पत्तितोऽपरिनिष्पन्ना प्रज्ञापारमिता। सर्वमेतद्विस्तरेण कर्तव्यम् ॥

H 46

१ H °मृष° against Ms.

तद्यथापि नाम शारद्वतीपुत्र आकाशमरूप्यनिदर्शनमभावोऽपरिनिष्पन्नम्, एवमेव प्रज्ञापारमिता अरूपिण्यनिदर्शना अभावोऽपरिनिष्पन्ना । तद्यथापि नाम शारद्वतीपुत्र इन्द्रायुध नानारङ्गविचित्रं च सदृश्यते, न चास्य[1] काचिद्रङ्गनिष्पत्तिः संविद्यते नोपलभ्यते, एवमेव प्रज्ञापारमिता नानानिदर्शनैश्च प्रत्युपस्थिता, न चास्या निदर्शनस्वभाव उपलभ्यते । तद्यथापि नाम शारद्वतीपुत्र आकाशे न जातु केनचित्पञ्चाङ्गुलिपरिनिष्पत्तिर्दृष्टपूर्वा, एवमेव शारद्वतीपुत्र न जातु केनचित्प्रज्ञापारमितापरिनिष्पत्तिस्वभावो दृष्टपूर्वः ॥

एवमुक्ते आयुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—दुर्दृशेयं भगवन् प्रज्ञापारमिता । आह—तथा हि शारद्वतीपुत्र न कस्यचिद्दर्शनमुपैति । आह—दुरनुबोधा भगवन् प्रज्ञापारमिता । आह—तथा हि शारद्वतीपुत्र नास्या कश्चिदुपलभ्यते योऽभिसबुद्धः । आह—
H 47 अनिदर्शनेयं भगवन् प्रज्ञापारमिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थिता । आह—अस्वभावेयं भगवन् प्रज्ञापारमिता । आह—रूपवेदनासंज्ञासंस्कारविज्ञानास्वभावत्वात् शारद्वतीपुत्र अस्वभावेयं प्रज्ञापारमिता । धात्वायतनप्रतीत्यसमुत्पादास्वभावतोऽस्वभावा प्रज्ञापारमिता । विपर्यासनीवरणदृष्टिगततृष्णाविचरितास्वभावतोऽस्वभावा प्रज्ञापारमिता । आत्मसत्त्वजीवपोषपुरुषपुद्गलमनुजमानवकारककारयितृत्थापकसमुत्थापकवेदकवेदयितृस्वभावतोऽस्वभावा प्रज्ञापारमिता । पृथिव्यप्तेजोवाय्वाकाशविज्ञानधर्मधात्वस्वभावतोऽस्वभावा प्रज्ञापारमिता । कामरूपारूप्यधात्वस्वभावतोऽस्वभावा प्रज्ञापारमिता । शीलदौःशील्यक्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यास्वभावतोऽस्वभावा प्रज्ञापारमिता । बोधिपक्षधर्मास्वभावतोऽस्वभावा प्रज्ञापारमिता । आर्यसत्यशमथविदर्शनाभिज्ञाध्यानविमोक्षसमाधिसमापत्त्यस्वभावतोऽस्वभावा प्रज्ञापारमिता । विद्याविमुक्त्यस्वभावतोऽस्वभावा प्रज्ञापारमिता । क्षयविरागनिरोधास्वभावतोऽस्वभावा प्रज्ञापारमिता । अनुत्पादज्ञाननिरोधज्ञानास्वभावतोऽस्वभावा प्रज्ञापारमिता । निर्वाणास्वभावतोऽस्वभावा प्रज्ञापारमिता । श्रावकभूमिप्रत्येकबुद्धभूमिबुद्धभूम्यस्वभावतोऽस्वभावा प्रज्ञापारमिता । परमार्थज्ञानदर्शनसंवृत्यस्वभावतोऽस्वभावा प्रज्ञापारमिता । असङ्गज्ञानसर्वज्ञज्ञानास्वभावतोऽस्वभावा प्रज्ञापारमिता ॥

H 48 एवमुक्ते आयुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—नेयं भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य परिनिष्पत्तये प्रत्युपस्थिता न निरोधाय । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्य उत्पादाय वा परिनिष्पत्तये वा निरोधाय वा आत्मतायै वा अनात्मतायै वा प्रत्युपस्थिता । आह—नेयं भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य आरम्बणयोगेन प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र निरारम्बणाः सर्वधर्माः । तथा हि त एव धर्मा न संविद्यन्ते, यत्रारम्बणं भवेत् । आह—नेयं भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य हानये वा वृद्धये वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापार-

१ H चास्य

मिता न कंचिद्धर्मं समनुपश्यन्ति, यो धर्मो हीयते वा वर्धते वा । आह–नेय भगवन्
प्रज्ञापारमिता कस्यचिद्धर्मस्य समतिक्रमाय प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञा-
पारमिता न कंचिद्धर्ममुपलभते, य समतिक्रामेत् । आह–नेय भगवन् प्रज्ञापारमिता कस्य-
चिद्धर्मस्य अपचयाय वा उपचयाय वा प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता
न कंचिद्धर्ममुपलभते, यस्य अपचयो वा उपचयो वा भवेत् । आह–नेय भगवन् प्रज्ञापार-
मिता कस्यचिद्धर्मस्य सयोगाय वा विसयोगाय वा प्रत्युपस्थिता । आह–तथा हि शारद्वती-
पुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, य धर्मं सयोजयेद्वा विसयोजयेद्वा । आह–नेय
भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य नये वा विनये वा प्रत्युपस्थिता । आह–तथा हि
शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्मो नेतव्यो वा विनेतव्यो वा ।
आह–नेय भगवन प्रज्ञापारमिता कस्यचिद्धर्मस्य उपकाराय वा अपकाराय वा प्रत्युपस्थिता ।
आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्य उपकार वा
अपकार वा कुर्यात् । आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य सभवाय वा H 49
असभवाय वा प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते,
यो धर्मः सभवेद्वा न सभवेद्वा । आह–नेयं भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य सप्र-
योगाय वा विप्रयोगाय वा प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न
कंचिद्धर्ममुपलभते, यो धर्म. सप्रयुज्यते वा विप्रयुज्यते वा । आह–नेय भगवन् प्रज्ञापार-
मिता कस्यचिद्धर्मस्य सवासाय वा असवासाय वा प्रत्युपस्थिता । आह–तथा हि
शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्म· सवसेद्वा न सवसेद्वा । आह–
नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य प्रवृत्तये वा अप्रवृत्तये वा प्रत्युपस्थिता । आह–
तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्य धर्मस्य प्रवृत्तिर्वा अप्रवृत्तिर्वा
भवेत् । आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य क्रियया वा करणेन वा
प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते,
यस्य धर्मस्य क्रिया वा करण वा भवेत् । आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य
समतया वा विषमतया वा प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न
कंचिद्धर्ममुपलभते, यो धर्म. समो वा विपमो वा स्यात् । आह–नेय भगवन् प्रज्ञापारमिता
कस्यचिद्धर्मस्य सग्रहाय वा असंग्रहाय वा प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र
प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्म. सग्रहीतव्यो वा उत्स्रष्टव्यो वा स्यात् ।
आह–नेय भगवन् प्रज्ञापारमिता केनचित्कार्येण प्रत्युपस्थिता । आह–तथा हि शारद्वतीपुत्र
प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्मः कार्यकर· स्यात् ॥

आह–गम्भीरेय भगवन् प्रज्ञापारमिता । आह–रूपगम्भीरतया शारद्वतीपुत्र H 50
गम्भीरा प्रज्ञापारमिता । एवं वेदनासंज्ञासंस्कारविज्ञानगम्भीरतया शारद्वतीपुत्र गम्भीरा
प्रज्ञापारमिता । अविद्यागम्भीरतया गम्भीरा प्रज्ञापारमिता । संस्कारविज्ञाननामरूपषडा-

यतनस्पर्शवेदनातृष्णोपादानभवजातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासगम्भीरतया गम्भीरा प्रज्ञापारमिता । विपर्यासगम्भीरतया गम्भीरा प्रज्ञापारमिता । पञ्चनीवरणगम्भीरतया गम्भीरा प्रज्ञापारमिता । दृष्टिगम्भीरतया गम्भीरा प्रज्ञापारमिता । आत्मगम्भीरतया गम्भीरा प्रज्ञापारमिता । सत्त्वगम्भीरतया गम्भीरा प्रज्ञापारमिता । प्रपञ्चगम्भीरतया गम्भीरा प्रज्ञापारमिता । अप्रपञ्चगम्भीरतया गम्भीरा प्रज्ञापारमिता । शीलदौःशील्यगम्भीरतया गम्भीरा प्रज्ञापारमिता । क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्येन्द्रियबलबोध्यङ्गस्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाविपर्यासार्याष्टाङ्गमार्गदुःखसमुदयनिरोधमार्गविमुक्तिज्ञानदर्शनातीतानागतप्रत्युत्पन्नत्र्यध्वसमतागम्भीरतया गम्भीरा प्रज्ञापारमिता । चतुर्वैशारद्यर्द्धिपादाभिज्ञागम्भीरतया गम्भीरा प्रज्ञापारमिता । अतीतानागतप्रत्युत्पन्नासङ्गज्ञानगम्भीरतया गम्भीरा प्रज्ञापारमिता । बुद्धधर्मगम्भीरतया गम्भीरा प्रज्ञापारमिता । क्षयज्ञानानुत्पादज्ञाननिरोधज्ञानाभिसंस्कारज्ञानविरागज्ञानगम्भीरतया गम्भीरा प्रज्ञापारमिता । नीवरणगम्भीरतया गम्भीरा प्रज्ञापारमिता ॥

तद्यथापि नाम शारद्वतीपुत्र समुद्रो गम्भीरो विपुलोऽप्रमेयः, एवमेव प्रज्ञापारमिता गम्भीरा विपुला अप्रमेया । गम्भीरेति शारद्वतीपुत्र अप्रमेयधर्मरत्नसंचयभूता, यस्या गाधो न
H 51 लभ्यते । गम्भीरेति शारद्वतीपुत्र नास्या गतिर्लभ्यते । गम्भीरेति शारद्वतीपुत्र नास्या गुणपर्यन्तोऽधिगम्यते । तद्यथापि नाम शारद्वतीपुत्र समुद्रो महासागरः सर्वरत्नसनिचयोऽप्रमेयरत्नभरितो महारत्नपरिपूर्ण, एवमेव प्रज्ञापारमिता सर्वधर्मरत्नसनिचया महाधर्मरत्नसनिचया अप्रमेयधर्मरत्नसनिचया । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य निदर्शनेन प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्योपलम्भेन प्रत्युपस्थिता, य धर्मं निदर्शयेत् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य ज्ञानेन वा अज्ञानेन वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्य धर्मस्य ज्ञान वा अज्ञान वा स्यात् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य आरक्षायै वा गुप्त्यै वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्य धर्मस्य आरक्षा वा गुप्तिं वा कुर्यात् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य सग्रहाय वा परिग्रहाय वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्य धर्मस्य सग्रह वा परिग्रह वा कुर्यात् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य निश्रयेण वा अनिश्रयेण वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्मं समनुपश्यति, यस्य धर्मस्य निश्रय वा अनिश्रयं वा कुर्यात् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य आलयेन वा विलयेन वा प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्मिन् आलय वा विलय वा कुर्यात् । आह—नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य अभिनिवेशेन प्रत्युपस्थिता । आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्मिन्नभि-

निवेश कुर्यात्। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य अध्यवसानेन प्रत्युपस्थिता। H 52 आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, न समनुपश्यति, यस्मिन्नध्यवसान कुर्यात्। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य सवासेन वा असवासेन वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, येन धर्मेण सार्धं वसेत्। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य सधिना वा विसधिना वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्म. सधातव्यो वा विसधातव्यो वा। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य रागेण वा विरागेण वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यस्मिन् धर्मे रज्येत[1] वा विरज्येत वा। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य द्वेषेण वा अद्वेषेण वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्मः सद्वेषो वा विगतद्वेषो वा भवेत्। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य मोहेन वा विगतमोहेन वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते, यो धर्मो मूढो वा स्याद्विगतमोहो वा। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य ज्ञापयित्री वा अज्ञापयित्री वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते न समनुपश्यति, य धर्मं जानीयात् यस्य वा धर्मस्य ज्ञापयित्री[2] वा भवेत्। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य प्रकृत्या वा अप्रकृत्या वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्य प्रकृतिं वा अप्रकृतिं वा समनुपश्यति। आह–नेय भगवन् प्रज्ञापारमिता कस्यचिद्धर्मस्य शुद्ध्या वा विशुद्ध्या वा प्रत्युपस्थिता। आह–तथा हि शारद्वतीपुत्र H 53 प्रज्ञापारमिता न कंचिद्धर्मं समनुपश्यति, य धर्मं शोधयेद्वा विशोधयेद्वा॥

आह–प्रकृतिपरिशुद्धेयं भगवन् प्रज्ञापारमिता। आह–रूपपरिशुद्धित. शारद्वतीपुत्र परिशुद्धा प्रज्ञापारमिता। एव वेदनासज्ञासस्कारविज्ञानपरिशुद्धित. शारद्वतीपुत्र परिशुद्धा प्रज्ञापारमिता। अविद्यापरिशुद्धितः परिशुद्धा प्रज्ञापारमिता, सस्कारपरिशुद्धितो विज्ञानपरिशुद्धितो नामरूपपरिशुद्धित. षडायतनपरिशुद्धित. परिशुद्धा प्रज्ञापारमिता, स्पर्शवेदनातृष्णोपादानभवजातिजरामरणपरिशुद्धित. परिशुद्धा प्रज्ञापारमिता, शोकपरिदेवदुःखदौर्मनस्योपायासपरिशुद्धित' परिशुद्धा प्रज्ञापारमिता। विपर्यासनीवरणदृष्टिगतपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। रागद्वेषमोहपरिशुद्धित' परिशुद्धा प्रज्ञापारमिता। आत्मसत्त्वजीवपोषपुरुषपुद्गलमनुजमानवकारककारयितृवेदयितृत्थापकसमुत्थापकज्ञातृदर्शकपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। उच्छेदशाश्वतपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। अन्तानन्तपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। दानपारमितापरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। शीलक्षान्तिवीर्यध्यानप्रज्ञापरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। इन्द्रियबलबोध्यङ्गध्यान-

१ H रज्येद्वा and विरज्येद्वा २ H ज्ञापयित्रा and अज्ञापयित्रा.

विमोक्षसमाधिसमापत्तिपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। मैत्रीकरुणामुदितोपेक्षापरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। स्मृत्युपस्थानसम्यक्प्रहाणपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। अविपर्यासपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। दुःखसमुदयनिरोधमार्गपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। अभिज्ञापरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। मार्गपरिशुद्धितः H 54 परिशुद्धा प्रज्ञापारमिता। श्रावकभूमिपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। प्रत्येकबुद्धभूमिपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। बुद्धभूमिपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। बुद्धधर्मसंघपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। [1]श्रावकधर्मपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। प्रत्येकबुद्धधर्मपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता[1]। अतीतानागतप्रत्युत्पन्नदर्शनपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। असङ्गज्ञानदर्शनपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। अष्टादशावेणिकबुद्धधर्मपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। कामधातुपरिशुद्धितो रूपधातुपरिशुद्धितः आरूप्यधातुपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। पृथ्वीधातुपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। अप्तेजोवायुधातुपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता। सत्त्वधातुपरिशुद्धितो धर्मधातुपरिशुद्धितः आकाशधातुपरिशुद्धितः परिशुद्धा प्रज्ञापारमिता॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावत् प्रकृतिपरिशुद्धा प्रज्ञापारमिता। आह—आकाशपरिशुद्धितः शारद्वतीपुत्र प्रज्ञापारमिता। आह—अरूपिण्यनिदर्शना भगवन् प्रज्ञापारमिता। आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्य रूपपरिनिष्पत्त्या वा निदर्शनेन वा प्रत्युपस्थिता। आह—अप्रतिहतेयं भगवन् प्रज्ञापारमिता। आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्मं समनुपश्यति यस्मिन् प्रतिहन्येत। आह—अकृतेयं भगवन् प्रज्ञापारमिता। आह—कारकानुपलब्धितः शारद्वतीपुत्र। आह—असमवसरणेयं भगवन् प्रज्ञापारमिता। आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्मं समनुपश्यति येन धर्मेण सार्धं समवसरेत्। आह—अप्रज्ञपनीयेयं भगवन् प्रज्ञापारमिता। आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न H 55 कंचिद्धर्ममुपलभते येन धर्मेण प्रज्ञप्येत। आह—[2]असाधारणेयं भगवन् प्रज्ञापारमिता। [[3]आह—तथा हि शारद्वतीपुत्र प्रज्ञापारमिता न कंचिद्धर्ममुपलभते येन धर्मेण साधारणा भवेत्।] आह—अलक्षणेयं भगवन् प्रज्ञापारमिता। आह—लक्षणानुपलब्धितः शारद्वतीपुत्र। आह—अप्रतिभासेयं भगवन् प्रज्ञापारमिता। आह—प्रतिभासानुपलब्धितामुपादाय। आह—अनन्तपारमितेयं भगवन् प्रज्ञापारमिता। आह—रूपानन्ततया शारद्वतीपुत्र अनन्तपारमितेयम्। एवं वेदनासंज्ञासंस्कारविज्ञानानन्ततया अनन्तपारमितेयम्। विपर्यासानन्ततया अनन्तपारमितेयम्। नीवरणानन्ततया अनन्तपारमितेयम्। अविद्यानन्ततया संस्कारानन्ततया विज्ञानानन्ततया नामरूपानन्ततया षडायतनस्पर्शवेदनातृष्णोपादानभवजाति-

---

१ T om these two sentences २ Ms साधारणेय ३ Ms om. the phrase which is supplied from C and T

जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासानन्ततया अनन्तपारमितेयम्। दृष्टिगतानन्ततया रागद्वेषमोहानन्ततया उच्छेदशाश्वतानन्ततया पूर्वान्तकोट्यनन्ततया अनन्तपारमितेयम्। अपरान्तकोट्यनन्ततया अनन्तपारमितेयम्।[1]दानानन्ततया शीलानन्ततया क्षान्त्यनन्ततया वीर्यानन्ततया ध्यानानन्ततया प्रज्ञानन्ततया अनन्तपारमितेय प्रज्ञापारमिता। स्मृत्युपस्थानानन्ततया सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गानन्ततया अविपर्यासानन्ततया अनन्तपारमितेयम्। ध्यानविमोक्षसमाधिसमापत्त्यनन्ततया अनन्तपारमितेयम्।[1] आरम्बणानन्ततया अनन्तपारमितेयम्। विद्याविमुक्तिज्ञानदर्शनानन्ततया अनन्तपारमितेयम्। श्रावकभूमिप्रत्येकबुद्धभूमिबुद्धभूम्यनन्ततया अनन्तपारमितेयम्। श्रावकधर्मप्रत्येकबुद्धधर्मबुद्धधर्मानन्ततया अनन्तपारमितेयम्। आत्मसत्त्वानन्ततया अनन्तपारमितेयम्। H 56 कामधात्वनन्ततया अनन्तपारमितेयम्। रूपधात्वनन्ततया अनन्तपारमितेयम्। आरूप्यधात्वनन्ततया अनन्तपारमितेयम्। अभिज्ञानन्ततया अनन्तपारमितेयम्। नीवरणानन्ततया अनन्तपारमितेयम्। अतीतानागतप्रत्युत्पन्नज्ञानदर्शनानन्ततया अनन्तपारमितेयम्। असङ्गानन्ततया आकाशानन्ततया धर्मधात्वनन्ततया अनन्तपारमितेयम्॥

न ह्यस्याः शारद्वतीपुत्र प्रज्ञापारमिताया अन्तो वा मध्य वा पर्यवसान वा उपलभ्यते, नापि केनचिदुपलब्धाः। अनन्तापर्यन्तपारमितेय शारद्वतीपुत्र यदुत प्रज्ञापारमिता। तद्यथापि नाम शारद्वतीपुत्र आकाशस्यान्तो नोपलभ्यते, एवमेव प्रज्ञापारमिताया अन्तो नोपलभ्यते। पृथिवीधात्वनन्ततया शारद्वतीपुत्र प्रज्ञापारमितानन्तता द्रष्टव्या। अब्धात्वनन्ततया तेजोधात्वनन्ततया वायुधात्वनन्ततया विज्ञानधात्वनन्ततया प्रज्ञापारमितानन्तता अनुगन्तव्या। अनन्तमध्यपर्यन्तता हि शारद्वतीपुत्र प्रज्ञापारमिता अनुबोद्धव्या। न हि शारद्वतीपुत्र प्रज्ञापारमिता देशस्था न प्रदेशस्था। रूपापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। पेयालम्। एव वेदनासज्ञासस्कारविज्ञानापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। अविद्यापर्यन्ततया सस्कारापर्यन्ततया विज्ञानापर्यन्ततया नामरूपषडायतनापर्यन्ततया यावत् जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। विपर्यासापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। नीवरणापर्यन्ततया दृष्टिगतापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। H 57 आत्मानन्ततया सत्त्वानन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। दानानन्ततया शीलानन्ततया क्षान्त्यनन्ततया वीर्यानन्ततया ध्यानानन्ततया प्रज्ञानन्ततया शारद्वतीपुत्र प्रज्ञापारमितानन्तता अनुगन्तव्या। [1]स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादापर्यन्ततया प्रज्ञापारमितानन्तता अनुगन्तव्या[1]। इन्द्रियबलबोध्यङ्गमार्गध्यानविमोक्षसमाधिसमापत्त्यपर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। दुःखसमुदयनिरोधमार्गापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। अभि-

---

१ C om. this sentence.

ज्ञापर्यन्ततया विमुक्त्यपर्यन्ततया विमुक्तिज्ञानदर्शनापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। पृथग्जनधर्मापर्यन्ततया श्रावकधर्मापर्यन्ततया प्रत्येकबुद्धधर्मापर्यन्ततया बुद्धधर्मापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। विद्यापर्यन्ततया विमुक्त्यपर्यन्ततया विमुक्तिज्ञा[नदर्श]नापर्यन्ततया शारद्वतीपुत्र प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। पर्यन्तानुपलब्धितः शारद्वतीपुत्र प्रज्ञापारमितापर्यन्ततेत्युच्यते, अन्तानुपलब्धितोऽनन्तेत्युच्यते। अनन्तेति शारद्वतीपुत्र अपर्यन्तवचनमेतत्। आत्मानुपादानतः शारद्वतीपुत्र सर्वधर्मानन्तता अनुगन्तव्या। आकाशानन्ततया शारद्वतीपुत्र सर्वधर्मानन्तापर्यन्तता अनुगन्तव्या॥

एवमुक्ते आयुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—कीदृशानां भगवन् बोधिसत्त्वानामेषु धर्मेषु विषयः? भगवानाह—ये ते शारद्वतीपुत्र बोधिसत्त्वा धर्ममपि नोपलभन्ते
H 58 प्रागेवाधर्मम्, मार्गमपि नोपलभन्ते प्रागेवामार्गम्, शीलमपि नोपलभन्ते न मन्यन्ते प्रागेव दौःशील्यम्, अपर्यापन्नाश्च सर्वत्रैधातुके, अपर्यापन्नाश्च सर्वभवगतिच्युत्युपपत्तिषु, अनध्यवसिताश्च काये जीविते च प्रागेव बाह्येषु वस्तुषु, कृतपर्यन्ताश्च संसारस्रोतसः, उत्तीर्णाश्च महाभवार्णवात्, समुत्तीर्णाश्च महासंग्रामात्, तेषां शारिपुत्र बोधिसत्त्वानां महासत्त्वानामेषु धर्मेषु विषयश्च गतिश्च, सर्वविषया अविषया इति च येषां परिजानन्ते (परिज्ञानम्?), ते तथारूपाः सत्पुरुषाः सर्वविपर्येष्वनध्यवसिताः, ते महासिंहाः। ते सर्वविषयेष्वनध्यापन्ना, ते तद्रूपाः सत्पुरुषाः। सर्वविषयनिरुपलिप्तास्ते, तेऽसंसृष्टाः। सर्वविषयसमतिक्रान्तास्ते, ते महासार्थवाहाः। येषां शारद्वतीपुत्र एषु धर्मेषु विषयो गतिश्च। नाहं शारद्वतीपुत्र अस्यां पर्षदि समनुपश्यामि एकमपि बोधिसत्त्वम्, यस्य नैषु धर्मेषु विषयो वा अधिमुक्तिर्वा, यो वा एषु धर्मेषु साकाङ्क्षो वा सविचिकित्सो वा। निष्काङ्क्षेयं शारद्वतीपुत्र पर्षदेषु धर्मेषु निर्विचिकित्सा निर्वैमतिका। नास्ति शारद्वतीपुत्र एषां बोधिसत्त्वानामेषु धर्मेषु विमतिः। विमतिसमुद्घाताय शारद्वतीपुत्र एते सत्पुरुषाः सर्वसत्त्वानां स्थिताः। निःसंशया ह्येते शारद्वतीपुत्र एष्वेवंरूपेषु धर्मेषु संशयसमतिक्रान्ताः॥

येऽपि ते शारद्वतीपुत्र पश्चिमे काले पश्चिमे समये इमां धर्मदेशनां श्रोष्यन्ति, तेऽपि निःसंशया भविष्यन्ति सर्वधर्मेषु, सर्वसत्त्वानां च संशयच्छेदनाय प्रतिपन्ना भविष्यन्ति, निःसंशयाश्च ते धर्मं देशयिष्यन्ति। नाहं शारद्वतीपुत्र परीत्तकुशलमूलानां सत्त्वानामेषु धर्मेष्वधिमुक्तिं वदामि। नापि तेषामेषु धर्मेष्ववकाशः, नापि तेषामिदं
H 59 धनम्। नापि ते शारद्वतीपुत्र सत्त्वाः परीत्तकुशलमूलसमन्वागता भविष्यन्ति, येषामियं धर्मदेशना श्रोत्रपथमप्यागमिष्यति किमङ्ग पुनर्ये उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति। नियतास्ते बुद्धधर्मेषु, व्याकृतास्ते बुद्धैर्भगवद्भिः। एवं च ते सिंहनादं नदिष्यन्ति यथाहमेतर्हि सिंहनादं नदामि अस्तम्भितनादं महापुरुषनादं स्वयंभूनादम्। ये एषु धर्मेष्वल्पशः श्रद्धां जनयित्वा छन्दं जनयिष्यन्ति अनुत्तरायां सम्यक्संबोधौ,

1 Ms om °नदर्श°.

तेषामपि त एव व्याकरण भविष्यन्ति। तत्कस्माद्धेतोः? दुर्लभा हि शारद्वतीपुत्र ते सत्त्वाः, य इमान् गम्भीरान् धर्मान् श्रुत्वा प्रीतिं च विन्दन्ति, प्रामोद्य च जनयन्ति, अधिमुच्यन्ते च। अत· शारद्वतीपुत्र दुर्लभतमास्ते सत्त्वा., ये गम्भीरान् धर्मान् श्रुत्वा अनुत्तराया सम्यक्संबोधौ चित्तमुत्पादयन्ति, छन्द च जनयन्ति महाकुशलमूलसमन्वागताः। नाहं शारद्वतीपुत्र तान् सत्त्वान् महासंसारसंप्रस्थितानिति वदामि येषामय प्रज्ञापारमितानिर्देश श्रवणपथमप्यागमिष्यति, श्रुत्वा च [ये] पठिष्यन्ति अविमोक्ष्यन्ति उदार च प्रीतिसौमनस्य जनयिष्यन्ति, एषु धर्मेषु छन्द जनयिष्यन्ति पुन पुनः श्रवणायापि, क पुनर्वाद. उद्देष्टु वा स्वाध्यातु वा परेभ्यो देशयितु वा। व्याकरोम्यहं शारद्वतीपुत्र अनवक्रान्तनियामान् अनियतान् श्रावकप्रत्येकबुद्धयाने अनुत्तराया सम्यक्संबोधौ। नाहं शारद्वतीपुत्र हीनधर्मसमन्वागताना सत्त्वानामग्रतो धर्मेष्ववकाश समनुपश्यामि। उदारेयं शारद्वतीपुत्र बुद्धबोधि·। यद्भूयसा च सत्त्वा हीनाधिमुक्तिका हीनधर्मसमन्वागता अकृतकल्याणा। अकुशला एष्वेवंरूपेषु गम्भीरेषु धर्मेषु निरुपलेपेषु। ये पुनस्ते शारद्वतीपुत्र उदारा· सत्त्वा उदारधर्माधिमुक्ता महायानसंप्रस्थिताः सुपरिप्राप्तकार्या सुसंनाहसंनद्धाः सुविचित्रार्था महामार्गेण संप्रस्थिता अविषमेण H 60
ऋजुना, अगहनेन समेन अपगतखाणुकण्टकेन अपगतश्वभ्रप्रपातेन शुचिना अपगतकिल्बिषेण अकुटिलेन अवङ्केन, ये लोकहिताय संप्रस्थिता लोकसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय च देवाना च मनुष्याणा च, अवभासकरास्तीर्थभूता· सत्त्वानाम्, महाकारुणिका हितानुकम्पका हितकामा सुखकामा योगक्षेमकामा, सर्वसत्त्वाना सुखोपधानाय प्रत्युपस्थिता·, तेषा शारद्वतीपुत्र तथारूपाणा सत्त्वाना बोधिसत्त्वाना महासत्त्वानामिद महाधनम्। त एव च शारद्वतीपुत्र महासत्त्वा अस्य धर्मरत्नस्य प्रत्येषकाः। तेषा चैतद्धनमुदारधनम्। तत्कस्य हेतो.? न हि शारद्वतीपुत्र अकृतपुण्याना सत्त्वानामकृतकल्याणाना हीनाधिमुक्तिकाना श्रद्धाविहीनानामस्मिन्नुदारे धनेऽधिमुक्तिर्जायते। एतच्च मे शारद्वतीपुत्र संधाय भाषितम्—धातुशः सत्त्वा· संस्यन्दन्ति हीनाधिमुक्तिका हीनाधिमुक्तिकैः, उदाराधिमुक्तिका उदाराधिमुक्तिकैरिति॥

अथ खल्वायुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—किंगोचरा भगवन् प्रज्ञापारमिता? एवमुक्ते भगवानायुष्मन्त शारद्वतीपुत्रमेतदवोचत्—अनन्तविषयगोचरा शारद्वतीपुत्र प्रज्ञापारमिता। तद्यथापि नाम शारद्वतीपुत्र वायुधातुरनन्तविषयगोचरः, एवमेव प्रज्ञापारमिता अनन्तविषयगोचरा। तद्यथापि नाम शारद्वतीपुत्र वायुधातुराकाशधातुविषयगोचरः, एवमेव प्रज्ञापारमिता आकाशधातुविषयगोचरा। तद्यथापि नाम शारद्वतीपुत्र आकाशधातुर्वायुधातुश्च न क्वचित्संदृश्येते, न कस्यचिद्धर्मस्य अभिनिर्वृत्तिलक्षणेन प्रत्युपस्थितौ, एवमेव शारद्वतीपुत्र प्रज्ञापारमिता न क्वचिद्धर्मे संदृश्यते, न कस्यचिद्धर्मस्य अभिनिर्वृत्तिलक्षणेन प्रत्युपस्थिता। तद्यथापि नाम शारद्वतीपुत्र आकाशधातुर्वायुधातुश्च अग्राह्यापरिनिष्पत्तितो न वर्णनिमित्तेन संख्या गच्छतः, एवमेव शारद्वतीपुत्र प्रज्ञापारमिता अग्राह्यानिष्पत्तितो न

१ H °ष्यन्ति.

H 61 केनचिद्वर्णनिमित्तेन सख्या गच्छति वा उपैति वा । तद्यथापि नाम शारद्वतीपुत्र आकाशधातुर्वायुधातुश्च न कस्यचिद्धर्मस्य परिनिष्पत्ति[1]दर्शनेनोपयातौ[2], एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य परिनिष्पत्ति[1]दर्शनेनोपैति[2] ॥

आह—किंलक्षणेयं भगवन् प्रज्ञापारमिता ? भगवानाह—अलक्षणेयं शारद्वतीपुत्र प्रज्ञापारमिता । तद्यथापि नाम शारद्वतीपुत्र आकाशधातुश्च वायुधातुश्च न कस्यचिद्धर्मस्य परिनिष्पत्तिलक्षणेनोपगच्छतः, एवमेव शारद्वतीपुत्र प्रज्ञापारमिता न कस्यचिद्धर्मस्य परिनिष्पत्तिलक्षणेनोपैति । आह[3]—किंलक्षणेयं भगवन् प्रज्ञापारमिता ? भगवानाह—अलक्षणा हि शारद्वतीपुत्र प्रज्ञापारमिता, यतो न सङ्गलक्षणेन संविद्यते । तद्यथापि नाम शारद्वतीपुत्र आकाशधातुर्वायुधातुश्च न कस्यचिद्धर्मस्य परिनिष्पत्तिलक्षणेनोपगच्छतः, एवमेव प्रज्ञापारमिता न कस्यचिद्धर्मस्य परिनिष्पत्तिलक्षणेनोपैति[3] । अलक्षणा हि शारद्वतीपुत्र प्रज्ञापारमिता, यतो न संविद्यते । तद्यथापि नाम शारद्वतीपुत्र आकाशधातुर्न क्वचित्सज्जति, एवमेव प्रज्ञापारमिता न क्वचित्सज्जति, तेनोच्यते असङ्गलक्षणेति । न च शारद्वतीपुत्र असङ्गस्य किंचिल्लक्षणम्, अपि तु खलु व्यवहारपदमेतत् । तेनोच्यते असङ्गलक्षणा प्रज्ञापारमितेति । तदेवैतत् शारद्वतीपुत्र असङ्गलक्षणं निर्दिश्यते । न च असङ्गस्य लक्षणं न निमित्तम् । असङ्ग इति शारद्वतीपुत्र सङ्गपरिज्ञैषा, सङ्गानुपलब्धिरेषा, सङ्गयथाभूततैषा, सङ्गविपर्यासपरिज्ञैषा । न हि शारद्वतीपुत्र सङ्गे सङ्गो विद्यते, तेनोच्यते सङ्गयथाभूतता सङ्गानुपलब्धि । असङ्गेति शारद्वतीपुत्र इयं प्रज्ञापारमिता, असङ्गलक्षणज्ञाननिर्देश एषः । सर्वधर्मा हि शारद्वतीपुत्र असङ्गलक्षणाः । यद्यस्य धर्मस्य लक्षणम्, तदलक्षणम् । न हि तल्लक्षणाभिनिर्वृत्तये कश्चिद्धर्मः प्रत्युपस्थितः । यत्र च लक्षणं न

H 62 संविद्यते, तदुच्यते अलक्षणमिति । यच्चालक्षणम्, तत्र नास्ति सङ्गः । सचेद्धर्मलक्षणमभविष्यत्, सङ्गोऽभविष्यत्सर्वधर्माणाम् । यस्मात्तर्हि सर्वधर्माणां लक्षणं न संविद्यते, तेनैषां सङ्गो नास्ति । तेनोच्यते असङ्गलक्षणाः सर्वधर्मा इति, न पुनर्यथोच्यते । यदसङ्गलक्षणम्, न तच्छक्यं प्रव्याहर्तुम् । तत्कस्य हेतोः ? असत्त्वादसङ्गलक्षणस्य, विविक्तत्वादसङ्गलक्षणस्य, अनुपलब्धेरसङ्गलक्षणस्य । यो हि शारद्वतीपुत्र धर्मोऽसङ्गलक्षणः, स न केनचिन्निदर्शनेन प्रत्युपस्थितः, न सङ्गदर्शनेन, अपि तु खलु पुनः सत्त्वानामेतदसङ्गलक्षणनिदर्शनं कृतम् । यद्धि शारद्वतीपुत्र संक्लेशस्य लक्षणम्, तदलक्षणम् । न हि लक्षणेन संक्लेशः प्रत्युपस्थितः, विपर्यासेन शारद्वतीपुत्र संक्लेशः प्रत्युपस्थितः । यश्च विपर्यासः, तदलक्षणम् । यदलक्षणम्, न तद्व्यवहारेणापि लक्षणम् । अलक्षणमेतत् । यदपि शारद्वतीपुत्र व्यवदानम्, तस्यापि नास्ति लक्षणम् । तत्कस्माद्धेतोः ? संक्लेश एव च तावच्छारद्वतीपुत्र अलक्षणः, प्रागेव व्यवदानम् । या शारद्वतीपुत्र संक्लेशस्य परिज्ञा, सा यथाभूता । न तस्याः कश्चित्संक्लेशः । विपर्यस्तास्तु सत्त्वाः संक्लिश्यन्ते । यश्च विपर्यासः, सोऽभूतः । योऽभूतः, तत्र[4] भूतस्य परि-

१ H परिनिष्पत्तिर् २ H उपयाता ३ C and T rightly om this sentence as it is a mere repetition of the previous phrase ४ Ms and Matsumoto तत्राभूतस्य

निष्पत्तिर्वा लक्षणं वा नास्ति । यैव शारद्वतीपुत्र परिज्ञा, तद्व्यवदानमित्युच्यते । संक्लेश एवालक्षणः, प्रागेव व्यवदानम् । उभावेतौ शारद्वतीपुत्र धर्मावलक्षणौ अपरिनिष्पन्नौ, यदुत सक्लेशो व्यवदानं च । या च शारद्वतीपुत्र सर्वधर्माणामलक्षणता अपरिनिष्पत्तिः, इयमसङ्गतेत्युच्यते । असङ्गलक्षणाः सर्वधर्मा इति । सर्वधर्माणां हि सङ्गो न संविद्यते । असङ्गलक्षणेषु हि शारद्वतीपुत्र संजन्ति[1] सर्वबालपृथग्जनाः । अयं शारद्वतीपुत्र सर्वधर्माणा- H 63
मसङ्गलक्षणज्ञानगोचरनिर्देशः । अयं च शारद्वतीपुत्र प्रज्ञापारमितायाः गोचरः । असङ्गलक्षणज्ञानगोचरा हि शारद्वतीपुत्र प्रज्ञापारमिता । तेनोच्यते अनन्तगोचरा प्रज्ञापारमितेति । या असङ्गता, सा अनन्तविषयज्ञानगोचरा । गोचर इति शारद्वतीपुत्र अगोचरस्यैतदधिवचनम् । न हि शारद्वतीपुत्र गोचरनिदर्शनलक्षणेन प्रज्ञापारमिता भाव्यते । विषय इति शारद्वतीपुत्र अविषय एष धर्माणाम् । एषा यथाभूतता, यथावत्ता । सर्वधर्मा हि अविषयाः, अविषयत्वात् । यैव धर्माणां परिज्ञा, अयमुच्यते विषयगोचर इति, न पुनर्यथोच्यते । य एवं सर्वधर्मपरिज्ञया न क्वचित्सङ्ग, इदमुच्यते असङ्गलक्षणमिति । तेनोच्यते असङ्गलक्षणा प्रज्ञापारमिता इति ॥

एष्वेवरूपेषु शारद्वतीपुत्र धर्मेषु न बहवः सहायकाः प्रतिलभ्यन्ते । तथागतज्ञानविषयनिर्देश एष, यैव धर्माणां सूचना संप्रकाशना विभाजना । न ह्येषु शारद्वतीपुत्र धर्मेषु कश्चिदन्यः सहायः, अन्यत्र दृष्टसत्यैः श्रावकैरविनिवर्तनीयैर्वा बोधिसत्त्वैर्महासत्त्वैर्दृष्टिसंपन्नैर्वा पुद्गलैरप्रत्युदावर्तनीयैः । तेषामपि तावच्छारद्वतीपुत्र दृष्टिसंपन्नानामेषु धर्मेषु चरितानां संशयः स्यात् । निःसंशयः शारद्वतीपुत्र कायसाक्षी च बोधिसत्त्वश्च प्रतिलब्धक्षान्तिकः । अभूमिरेषु शारद्वतीपुत्र धर्मेषु बालपृथग्जनानाम् । नायं शारद्वतीपुत्र प्रज्ञापारमितानिर्देशो हीनाधिमुक्तिकानां सत्त्वानां हस्तं गमिष्यति । परिशुद्धकुशलमूलसमन्वागतास्ते शारद्वतीपुत्र सत्त्वा भविष्यन्ति बहुबुद्धपर्युपासिताः, येषामयं प्रज्ञापारमितानिर्देशो हस्तं गमिष्यति । अवरोपितकुशलमूलास्ते सत्त्वा भविष्यन्ति कल्याणाशयाः, कृताधिकारा बुद्धेषु भगवत्सु बोधायावरोपितबुद्धबीजा बुद्धयानसमारूढा बुद्धानां भगवतामासन्नस्थायिनो योनिशः प्रश्नपृच्छकाः, येषामयं प्रज्ञापारमितानिर्देशो हस्तं गमिष्यति । आसन्नास्ते क्षान्ति- H 64
प्रतिलम्भस्य, क्षान्तिप्रतिलब्धा वा भविष्यन्ति, येषामयं प्रज्ञापारमितानिर्देशो हस्तं गमिष्यति[2] । ये च व्याकृताः, ते क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते स्थापयित्वा प्रणिधानवशात् । ये न व्याकृताः, ते क्षिप्रं संमुखं व्याकरणं प्रतिलप्स्यन्ते, अथ च शारद्वतीपुत्र व्याकृता एव ते मन्तव्याः संमुखव्याकरणेन । न हि शारद्वतीपुत्र अपरिपक्वकुशलमूलानां सत्त्वानामयं सूत्रान्तः श्रोत्रपथमप्यागमिष्यति, किमङ्ग पुनर्यदेतं सूत्रान्तं प्रतिलभेरन् वा लेखयेयुर्वा आराधयेयुर्वा उद्दिशेयुर्वा ध्यायेरन् वा, परेभ्यो वा विस्तरेण संप्रकाशयेयुः, नैतत्स्थानं विद्यते । परिपक्वकुशलमूलास्ते शारद्वतीपुत्र सत्त्वाः, य इमं सूत्रान्तं श्रोष्यन्ति लिखिष्यन्ति वाचयिष्यन्ति स्वाध्यास्यन्ति । किंचापि शारद्वतीपुत्र

१ Ms om सजन्ति, H सजन्ति   २ H गमिष्यन्ति

उत्तप्तकुशलमूलाना सत्त्वानामय धर्मपर्यायो हस्त गमिष्यति। अपि तु खलु पुनः शारद्वतीपुत्र आरोचयामि ते, प्रतिवेदयामि ते । न तेन कुलपुत्रेण वा कुलदुहित्रा वा बोधिसत्त्वयानीयेन वा श्रावकयानीयेन वा इमान् धर्मान् प्रतिलभ्य अल्पोत्सुकेन भवितव्यम्, कुसीदेन वा मिद्धबहुलेन वा असप्रज्ञेन वा अनुपस्थितस्मृतिना वा विक्षिप्तचित्तेन वा आमिषगृद्धेन वा लोलेन वा मुखरेण वा तुन्देन[1] वा प्रगल्भेन वा प्राकृतेन्द्रियेण वा । किंचापि शारद्वतीपुत्र कुशलमूलानि कृतानि न विसवादयन्ति । अपि तु खलु इमान् धर्मान् लब्ध्वा बोधिसत्त्वेन भूयस्या मात्रया अप्रमादश्च वीर्यं च उत्साहश्च छन्दश्च अकौसीद्य च सवृतेन्द्रियता च अमुखरता चासेवितव्या, स्मृत्युपस्थानेषु बाहुश्रुत्येषु च योगः करणीयः । आरब्धवीर्येण चैषामेवरूपाणा गुणाना परिपूरये व्यायन्तव्यम् । नैतच्छारद्वतीपुत्र एवरूपाणा धर्माणा श्रवणफलम्, यद्बोधिसत्त्वो वा श्रावकयानिको वा एवरूपान् धर्मान् श्रुत्वा प्रमादमापद्येत, विश्वास वा गच्छेत्, छन्दं वा परिहीयेत[2], वीर्यं वा हापयेत्, शैथिल्य वोपदर्शयेत्, व्यापादबहुलो वा भवेत् । नैतत्सफलं भवेत्, नापि तेन इमे एवरूपा धर्माः श्रुता भवेयुः । श्रुतमपि शारद्वतीपुत्र भूतप्रतिपत्तेरेतदधिवचनम्, न विप्रतिपत्ते । न हि शारद्वतीपुत्र विप्रतिपन्नेन अय धर्म श्रुतो भवति । श्रुतार्थकुशलैः शारद्वतीपुत्र युष्माभिर्भवितव्य प्रतिपत्तिस्थितैः । नास्ति शारद्वतीपुत्र विप्रतिपन्नानामानु[3]लोमिकी क्षान्तिः । प्रतिपत्तिरेषा शारद्वतीपुत्र अस्मिन् धर्मे उच्यते, यो यथानिर्दिष्टेषु धर्मेषु प्रतिपद्यते । क्षान्तिसपन्नस्य शारद्वतीपुत्र पुद्गलस्य प्रतिपत्तिस्थितस्य न भूयोऽपायगमन भवति, क्षिप्र चैषु धर्मेषु समुदागच्छति । न अवरमात्रकेण कुशलमूलेन विश्वासमापत्तव्यम् । अनिक्षिप्तधुरेणापि विश्वासो न कर्तव्यः, यावदेषु धर्मेषु परिनिष्पत्स्यत इति । यः शारद्वतीपुत्र एषु धर्मेषु परिनिष्पन्न शिक्षितो लब्धक्षान्तिर्न भूयसा अपायगमनसंवर्तनीय कर्म कुर्यात् । न चास्य भूयः कौसीद्य वा हीनभागीय वा भवेत् । नापि तस्य प्रत्युदावर्तनभयं भवेत् । नापि शैथिल्यमापद्येत । तत्कस्य हेतोः ? परिज्ञातो हि शारद्वतीपुत्र तेन भवति सक्लेशश्च व्यवदानं च, दृष्टं च तेन यथाभूत भवति—सर्वधर्मा विपर्याससमुत्थिता अभूता इति । स एव सम्यग्दर्शी क्षान्तिसपन्नो भवति सूरतोऽमन्दवान् (?) शीलविशुद्धिस्थित आचारगोचरचारित्रसवरसपन्नः । देवा अपि शारद्वतीपुत्र तथारूपेभ्य स्पृहयन्ति प्रागेव मनुष्याः । देवानामपि ते तथारूपाः सत्त्वाः स्पृहणीया भवन्ति प्रागेव मनुष्याणाम् । देवानामपि ते सत्कारार्हा भवन्ति प्रागेव मनुष्याणाम् । देवैरपि ते रक्षणीया भवन्ति प्रागेव मनुष्यै । देवनागयक्षराक्षसगरुडगन्धर्वैरपि ते रक्षणीया भवन्ति, तेषा च रक्षावरणगुप्तये समुत्सुका भवन्तीति ॥

आर्यप्रज्ञापारमितायामौपम्यपरिवर्तो नाम चतुर्थः ॥

१ H तुण्डेन  २ H परिहीयेत्  ३ H अनुलो°.

## ५ सुभूतिपरिवर्तः पञ्चमः ।

अथ खल्वायुष्मान् शारद्वतीपुत्र आयुष्मन्त सुभूतिमेतदवोचत्—किमायुष्मन् सुभूते तूर्ष्णींभावेनातिनामयसि ? किं न प्रतिभाति ते प्रज्ञापारमितामारभ्य अयं शास्ता स्वय H 66 समुखीभूतः, इय च पर्षद् भाजनीभूता गम्भीराया धर्मदेशनायाः ? शुद्धेयमायुष्मन् सुभूते पर्षत्, आकाङ्क्षति च गम्भीरं धर्मं श्रोतुम् ॥

एवमुक्त आयुष्मान् सुभूतिरायुष्मन्त शारिपुत्रमेवमाह—नाह तमायुष्मन् धर्म समनुपश्यामि य मे आरभ्य प्रतिभायात्—न चाहमायुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता समनुपश्यामि, न च बोधिसत्त्वं नापि प्रतिभानम्, नापि यत्प्रतिभायात्, नापि येन प्रतिभायात्, नापि यत. प्रतिभायात् । एव समनुपश्यन् नाहमायुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता बोधिसत्त्वाना महासत्त्वाना यच्च प्रतिभायात्, येन च प्रतिभायात्, यतश्च प्रतिभायात्, यस्य च प्रतिभायात्, किमिति निर्देक्ष्यामि, किं मे आरभ्य प्रतिभास्यति । एषैवात्र आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता योऽव्याहारः, अनुदाहार , अनभिहार', अनभिलाप. । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता शक्योदाहर्तुं वा, प्रव्याहर्तुं वा, अभिलपितु वा । यैव विसर्जना, इय प्रज्ञापारमिता । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता अतीता वा अनागता वा प्रत्युत्पन्ना वा । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता अतीतलक्षणा वा शक्या निर्देष्टुम्, अनागतलक्षणा वा प्रत्युत्पन्नलक्षणा वा । अलक्षणा अव्यवहारा एषा आयुष्मन् शारद्वती- H 67 पुत्र प्रज्ञापारमिता । नाहमायुष्मन् शारद्वतीपुत्र प्रज्ञापारमिताया लक्षण समनुपश्यामि, येन लक्षणेन प्रज्ञापारमिता निर्दिश्येत[1] । न हि आयुष्मन् शारद्वतीपुत्र यद्रूपस्य अतीतलक्षण वा अनागतलक्षण वा प्रत्युत्पन्नलक्षण वा, सा प्रज्ञापारमिता । नापि यद्वेदनासञ्ज्ञासस्कारविज्ञानानामतीतलक्षण वा अनागतलक्षण वा प्रत्युत्पन्नलक्षण वा सा प्रज्ञापारमिता । यच्च आयुष्मन् शारद्वतीपुत्र अतीतानागतप्रत्युत्पन्नरूपलक्षणस्य तथता अवितथता अनन्यतथता यावत्तथता, सा प्रज्ञापारमिता । या च अतीतानागतप्रत्युत्पन्नाना वेदनासञ्ज्ञासस्कारविज्ञानाना तथता अवितथता अनन्यतथता यावत्तथता, इय प्रज्ञापारमिता । या च आयुष्मन् शारद्वतीपुत्र अतीतानागतप्रत्युत्पन्नस्य रूपवेदनासञ्ज्ञासस्कारविज्ञानलक्षणस्य तथता अवितथता अनन्यतथता यावत्तथता, सा न शक्या प्रज्ञपयितु वा उदाहर्तुं वा अभिलपितु वा वाक्कर्मणा वा विसर्जयितुम् । य आयुष्मन् शारद्वतीपुत्र एव प्रज्ञापारमितानिर्देशमवतरति, स प्रज्ञापारमिता बुध्यते । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता कस्यचिद्धर्मस्य निर्देशलक्षणेन प्रत्युपस्थिता, न रूपनिदर्शनलक्षणेन प्रत्युपस्थिता, न वेदनासञ्ज्ञासस्कारविज्ञाननिर्देशलक्षणेन प्रत्युपस्थिता, न सस्कारनिर्देशलक्षणेन, न प्रतीत्यसमुत्पादनिर्देशलक्षणेन, न नामरूपलक्षणेन, नात्मलक्षणेन, न सत्त्वलक्षणेन, न धर्मधातुलक्षणेन, न सयोगलक्षणेन, न विसयोगलक्षणेन, न हेतुलक्षणेन, न प्रत्ययलक्षणेन, न दुःखलक्षणेन,

१ H निर्दिशेत्.

न सुखलक्षणेन, न व्यवस्थानलक्षणेन नाव्यवस्थानलक्षणेन, नोत्पादलक्षणेन न व्ययलक्षणेन, न सङ्क्लेशलक्षणेन न व्यवदानलक्षणेन, न प्रकृतिलक्षणेन, [न] संवृतिलक्षणेन न परमार्थलक्षणेन, न सत्यलक्षणेन न मृषालक्षणेन, न सङ्क्रान्तिलक्षणेन नावक्रान्तिलक्षणेन
H 68 प्रत्युपस्थिता । तत्कस्य हेतोः ? सर्वलक्षणविगता हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता । सा न कस्यचिद्दर्शनमुपैति–इयं वा प्रज्ञापारमिता, इह वा प्रज्ञापारमिता, अनेन वा प्रज्ञापारमिता, अस्य वा प्रज्ञापारमितेति ॥

नाहमायुष्मन् शारद्वतीपुत्र तं धर्मं समनुपश्यामि येन धर्मेण प्रज्ञापारमिता निर्दिश्येत । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता कस्यचिद्धर्मस्य निदर्शनमुपैति वा उत्पश्यति वा । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता रूपस्य निदर्शनमुपैति, न वेदनासंज्ञासंस्कारविज्ञानानां निदर्शनमुपैति, न चक्षुःश्रोत्रघ्राणजिह्वाकायमनसां निदर्शनमुपैति । नापि धात्वायतनानां निदर्शनमुपैति, न प्रतीत्यसमुत्पादस्य निदर्शनमुपैति, नापि विद्याविमुक्त्योर्निदर्शनमुपैति । यापि सा आयुष्मन् शारद्वतीपुत्र प्रज्ञा[1] लोकोत्तरा निर्वेधगामिनी, तस्या अपि प्रज्ञापारमिता निदर्शनं नोपैति । तद्यथा आयुष्मन् शारद्वतीपुत्र धर्मो निदर्शनं नोपैति कस्यचिद्धर्मस्य, कथं तस्या एव उदाहारनिर्देशो भविष्यति ? अपि तु खलु आयुष्मन् शारद्वतीपुत्र य एव धर्माणां धर्मनयं प्रजानन्ति, ते प्रज्ञापारमितानिर्देशं प्रजानन्ति ॥

न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता कस्यचिद्धर्मस्य संदर्शनेन प्रत्युपस्थिता, नापि निदर्शनेन । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता रूपस्य संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न वेदनासंज्ञासंस्कारविज्ञानानां संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न नामरूपस्य संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न सङ्क्लेशस्य न व्यवदानस्य संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न प्रतीत्यसमुत्पादस्य संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न विपर्यासानां संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न
S 69 सत्त्वधातोः, नात्मधातोः संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न पृथिवीधातोः, न अप्तेजोवायुधातोः संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न कामधातोः, न रूपधातोः, न आरूप्यधातोः संदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । (न दानमात्सर्यशीलदौःशील्यसंदर्शनेन प्रत्युपस्थिता न निदर्शनेन । न क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यसंदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाप्रमाणेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्त्यभिज्ञासंदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न सत्यमार्गफलसंदर्शनेन प्रत्युपस्थिता, न निदर्शनेन ।)[2] न श्रावकप्रत्येकबुद्धबोधिसत्त्वभूमिसंदर्शनेन प्रत्युपस्थिता, न निदर्शनेन । न श्रावकधर्मं न प्रत्येकबुद्धधर्मं, न बोधिसत्त्वधर्मं,

---

[1] Ms. प्रज्ञापारमिता, Matsumoto प्रज्ञालोकोत्तरा as one word  [2] T om दानमात्सर्य°.

न बुद्धधर्मसदर्शनेन प्रत्युपस्थिता[1], न निदर्शनेन । नापि कस्यचिद्धर्मस्य ज्ञानेन वा अज्ञानेन वा सदर्शनेन वा निदर्शनेन वा प्रत्युपस्थिता । नाप्यनुत्पादज्ञानस्य वा क्षयज्ञानस्य वा निरोधज्ञानस्य वा सदर्शनेन वा निदर्शनेन वा प्रत्युपस्थिता । नापि निर्वाणस्य सदर्शनेन वा निदर्शनेन वा प्रत्युपस्थिता । तद्यथा आयुष्मन् शारद्वतीपुत्र न कस्यचिद्धर्मस्य सदर्शनेन वा प्रत्युपस्थिता निदर्शनेन वा, कथ तस्या व्यवहार निर्देक्ष्यामि ? अपि तु खलु आयुष्मन् शारद्वतीपुत्र य एव निर्देशमवबुध्यते—न प्रज्ञापारमिता कस्यचिद्धर्मस्य सदर्शनेन वा निदर्शनेन वा प्रत्युपस्थितेति, स प्रज्ञापारमिता जानीते, प्रज्ञापारमितानिर्देश च प्रजानीते । न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता कस्यचिद्धर्मस्य योगाय वा वियोगाय वा प्रत्युपस्थिता । तत्कस्माद्धेतो. ? न हि आयुष्मन् शारद्वतीपुत्र प्रज्ञापारमिता रूप सयोजयति न विसयोजयति । एव न वेदनासज्ञासस्कारविज्ञानानि सयोजयति न H 70 विसयोजयति । न प्रतीत्यसमुत्पाद सयोजयति न विसयोजयति । न कामधातु न रूपधातु नारूप्यधातु सयोजयति न विसयोजयति । न पृथिवीधातु नाब्धातु न तेजोधातु न वायुधातु सयोजयति न विसयोजयति । न सत्त्वधातु नात्मधातु न धर्मधातु नाकाशधातु सयोजयति न विसयोजयति । [2]न दान न मात्सर्य न शील न दौःशील्य न क्षान्ति न व्यापाद न वीर्य न कौसीद्य न ध्यान न विक्षेप न प्रज्ञा न दौष्प्रज्ञ्य सयोजयति न विसयोजयति । न स्मृत्युपस्थानानि न सम्यक्प्रहाणानि न ऋद्धिपादाप्रमाणानि नेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्त्यभिज्ञा' सयोजयति न विसयोजयति । न मार्ग न मार्गफल न दु ख न दु'खसमुदय न निरोध सयोजयति न विसयोजयति । न श्रावकभूमिं न प्रत्येकबुद्धभूमिं न बोधिसत्त्वभूमिं न बुद्धभूमिं सयोजयति न विसयोजयति । न श्रावकधर्मान् न प्रत्येकबुद्धधर्मान् न बोधिसत्त्वधर्मान् न बुद्धधर्मान् सयोजयति न विसयोजयति । नातीतानागतप्रत्युत्पन्नत्र्यध्वसमता सयोजयति न विसंयोजयति । नासङ्गतानुत्पादज्ञान न क्षयज्ञान न निर्वाण सयोजयति न विसयोजयति । तद्यथा आयुष्मन् शारद्वतीपुत्र धर्मो न कस्यचिद्धर्मस्य संयोगाय वा विसयोगाय वा प्रत्युपस्थितः, कथ तस्य निर्देशो भविष्यति ? इदमायुष्मन् शारद्वतीपुत्र अर्थवश सपश्यन्नहमेव वदामि—नाह त धर्म समनुपश्यामि यो मे धर्मः प्रतिभायात्, येन मे प्रतिभायात्, यतो मे प्रतिभायात्, य मे आरभ्य प्रतिभायादिति ॥

आर्यप्रज्ञापारमिताया सुभूतिपरिवर्तः पञ्चमः ॥   H 71



१ Ms and H निदर्शनेन   २ T om न दान न मात्सर्य

## ६ चर्यापरिवर्तः षष्ठः ।

अथ खलु भगवान् सुविक्रान्तविक्रामिणं बोधिसत्त्वं महासत्त्वमेतदवोचत्–इह खलु सुविक्रान्तविक्रामिन् बोधिसत्त्वो महासत्त्व. प्रज्ञापारमितायां चरन्न कचिद्धर्मे चरति । तत्कस्माद्धेतो·[²] सर्वधर्मा हि सुविक्रान्तविक्रामिन् विपर्याससमुत्थिता, अभूता असन्तो मिथ्या वितथा । तद्यथा सुविक्रान्तविक्रामिन् कस्मिंश्चिद्धर्मे चरति, विपर्यासे स चरति । विपर्यासे चरन् न भूते चरति । न च सुविक्रान्तविक्रामिन् बोधिसत्त्वो विपर्यासचर्याप्रभावितः, अभूतचर्याप्रभावितो वा । नापि विपर्यासे वा अभूते वा चरन् बोधिसत्त्वः प्रज्ञापारमितायां चरति । यश्च विपर्यासः, सोऽभूतः । न तत्र काचिच्चर्या, तेन तत्र बोधिसत्त्वो न चरति । विपर्यास इति सुविक्रान्तविक्रामिन् वितथ । एष बालपृथग्जनैर्गृहीत. । न[¹] तथा यैस्ते ते धर्मा । ये च न तथा यथा गृहीता, स उच्यतेऽविपर्यासोऽत्र भूत इति । न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वो महासत्त्वो विपर्यासे वा अभूते वा चरति । भूत[²]वादीति सुविक्रान्तविक्रामिन् बोधिसत्त्वोऽविपर्यासचारी । यत्र च भूतमविपर्यासः, तत्र च न काचिच्चर्या । तेनोच्यते–अचर्या बोधिसत्त्वचर्येति । सर्वचर्यासमुच्छिन्ना हि सुविक्रान्तविक्रामिन् बोधिसत्त्वचर्या । सा न शक्या आदर्शयितुम्–इयं वा बोधिसत्त्वचर्या, अनेन वा बोधिसत्त्वचर्या, इह वा बोधित्त्वचर्या, इतो वा बोधिसत्त्वचर्येति । नैव बोधिसत्त्वचर्या प्रभाविता । सर्वचर्याविनिवृत्तये हि बोधिसत्त्वा बोधिसत्त्वचर्यां चरन्ति पृथग्जनचर्याविनि-
H 72 वृत्तये श्रावकचर्याविनिवृत्तये प्रत्येकबुद्धचर्याविनिवृत्तये । येऽपि ते सुविक्रान्तविक्रामिन् बुद्धधर्मा·, तेष्वपि बोधिसत्त्वा न चरन्ति नाभिनिविशन्ते–इमे वा ते बोधिसत्त्वधर्मा·, इह वा ते बोधिसत्त्वधर्मा·, अनेन वा ते बोधिसत्त्वधर्मा·, अस्य वा ते बोधिसत्त्वधर्मा इति । एवमपि सुविक्रान्तविक्रामिन् बोधिसत्त्वो न चरति । सर्वा[³] एषा सुविक्रान्तविक्रामिन् विकल्पचर्या । न बोधिसत्त्वो विकल्पे चरति नाविकल्पे । सर्वविकल्पप्रहीणा हि बोधिसत्त्वचर्या । कल्प इति सुविक्रान्तविक्रामिन् विकल्पनैषा सर्वधर्माणाम् । न हि शक्या. सर्वधर्माः कल्पयितुम् । अकल्पिता हि सर्वधर्माः । तद्यो धर्मं कल्पयति, स विकल्पयति । न हि सुविक्रान्तविक्रामिन् धर्म· कल्पो वा विकल्पो वा । कल्प इति सुविक्रान्तविक्रामिन् एष एकोऽन्तः, विकल्प इति द्वितीयोऽन्तः । न च सुविक्रान्तविक्रामिन् बोधिसत्त्वोऽन्ते चरति, नाप्यनन्ते । यो नैव अन्ते न अनन्ते चरति, स मध्य न समनुपश्यति । मध्यमपि सुविक्रान्तविक्रामिन् समनुपश्यन् मध्ये चरन् अन्त एव चरति । न हि सुविक्रान्तविक्रामिन् मध्यस्य काचिच्चर्या [ वा[⁴] किंचि ]द्दर्शन वा [ निर्दर्शन वा ] । मध्यमिति सुविक्रान्तविक्रा-

---

१ The sentence is rather obscure, neither C nor T helps in arriving at the correct sense २ Ms अभूत° ३ Ms and Matsumoto सर्वेषा for सर्वा एषा ४ Ms and Matsumoto om. वा किंचिद् and निदर्शन वा. It is supplied from C and T.

मिन् नापि[1] आर्याष्टाङ्गमार्गस्यैतदधिवचनम् । न च सुविक्रान्तविक्रामिन् आर्याष्टाङ्गो मार्गः कस्यचिद्धर्मस्योपलम्भेन प्रत्युपस्थितः, नापि कस्यचिद्धर्मस्य समनुपश्यनतया ॥

अपि तु यस्मिन् समये सुविक्रान्तविक्रामिन् बोधिसत्त्वो न कचिद्धर्मं भावयति न विभावयति, तदा प्रतिप्रस्रब्धमार्ग इत्युच्यते । स सर्वधर्मान् न भावयन्न विभावयन् भावनासमतिक्रान्तो धर्मसमतामनुप्राप्नोति, यया धर्मसमतया मार्गसंज्ञाप्यस्य न प्रवर्तते, कुतः पुनर्मार्गं द्रक्ष्यति ? प्रतिप्रस्रब्धमार्ग इति सुविक्रान्तविक्रामिन् अर्हतः क्षीणास्रवस्यैतद्भिक्षोरधिवचनम् । तत्कस्माद्धेतोः ? विभावितो हि स[2] मार्गो न भावितो न H 73 विभावितः । तेनोच्यते विभावित इति । विभावनापि तत्र नास्ति, तेनोच्यते विभावित इति । विगता तस्य भावना, तेनोच्यते विभावनेति । सचेत्खलु पुनः सुविक्रान्तविक्रामिन् भावना स्याद्विभावना वा, सा पुनरुपलभ्यते, नास्या विभावना स्यात् । विभावनेति सुविक्रान्तविक्रामिन् विगता अस्या भावनेति विभावना, भावोऽस्या विगत इति, तेनोच्यते विभावनेति, न पुनर्यथोच्यते । तत्कस्मात् ? अव्याहारा हि विभावना, विगम एष विभावना । कतमो विगमः ? यतो विपर्यासस्य असमुत्थानं यदभूतस्यासमुत्थानम् । न हि सुविक्रान्तविक्रामिन् विपर्यासो विपर्यासं समुत्थापयति । असमुत्थित एष विपर्यासः । न हि तत्र किंचित्समुत्थानम् । यदि तत्र किंचित्समुत्थानमभविष्यत्, नोच्येत । यस्मादभूतसमुत्थितः, तस्मादुच्यते विपर्यास इति । अविपर्यस्ता हि सुविक्रान्तविक्रामिन् सर्वधर्मा बोधिसत्त्वेनानुबुद्धाः । तत्कस्माद्धेतोः ? ज्ञातो हि तेन विपर्यासोऽभूत इति । न विपर्यासे विपर्यासः संविद्यते । येन विपर्यासोऽभूतो ज्ञातः, न विपर्यासे विपर्यासः संविद्यते, तेन अविपर्यस्ताः सर्वधर्माः समनुबुद्धाः । यश्च अविपर्यासस्यानुबोधः, न तत्र भूयो विपर्यासः । यत्र [न][3] कश्चिद्विपर्यासः, तत्र न काचिच्चर्या । सर्वा हि सुविक्रान्तविक्रामिन् चर्या सा चर्यासमुत्थाना । चर्याविकल्पाद्विपर्यासः । बोधिसत्त्वस्तु चर्यायां[4] न विकल्पयति । तेन सार्धम्[5]विपर्यासस्थित इत्युच्यते । यश्च अ[6]विपर्यस्तः, स न कचिद्भूयश्चरति । तेनोच्यते अचर्या बोधिसत्त्वचर्येति । अचर्येति सुविक्रान्तविक्रामिन् यन्न कचिद्धर्मे चरति न विचरति न चर्यालक्षणं संदर्शयति, इयमुच्यते बोधिसत्त्वचर्येति । य एव चरति, स चरति प्रज्ञापारमितायाम् ॥

न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वो रूपारम्बणे चरंश्चरति प्रज्ञापारमितायाम्, H 74 न वेदनासंज्ञासंस्कारविज्ञानारम्बणे चरंश्चरति प्रज्ञापारमितायाम् । तत्कस्माद्धेतोः ? सर्वारम्बणानि हि तेन विविक्तानि विज्ञातानि । यश्च विवेकः, न तत्र काचिच्चर्या । तेनोच्यते अचर्या बोधिसत्त्वचर्येति । न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वश्चक्षुरारम्बणे चरंश्चरति प्रज्ञापारमितायाम्, न श्रोत्रघ्राणजिह्वाकायमनआरम्बणे चरंश्चरति प्रज्ञापारमितायाम् ।

---

१ H अपि for नापि against Ms २ Ms न for स ३ Ms and Matsumoto om न, C and T give it ४ Ms चर्या ५ Ms om. अ° ६ Ms and Matsumoto विपर्यस्त

तत्कस्माद्धेतो ? सर्वारम्बणानि हि तेन अभूतानि ज्ञातानि। यश्च सर्वारम्बणानि अभूतानीति जानाति, नासौ क्वचिच्चरति। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वो रूपशब्दगन्धरसस्प्रष्टव्यधर्मारम्बणे चरश्चरति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? सर्वारम्बणानि हि तेन विपर्याससमुत्थितानि ज्ञातानि। यश्च विपर्यास, सोऽभूत परिज्ञात। येन विपर्यास अभूत. परिज्ञात, स न कस्मिंश्चिदारम्बणे चरति। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वो नामरूपारम्बणे चरश्चरति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? सर्वारम्बणानि हि तेन अनारम्बणानीत्यनुबुद्धानि। येन च सर्वारम्बणानि अनारम्बणानीत्यनुबुद्धानि, स न क्वचिदारम्बणे चरति। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधि[^१सत्त्वा महासत्त्वा.] सत्त्वारम्बणे [^१च आत्मारम्बणे] च चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो. ? परिज्ञाता हि तैः सत्त्वसंज्ञा च आत्मसंज्ञा च–अभूतैषा सत्त्वसंज्ञा च आत्मसंज्ञा चेति। यैश्च अभूता सत्त्वसंज्ञा च आत्मसंज्ञा च ज्ञाता, न ते कस्याचिच्चर्याया चरन्ति। ये न कस्याचिच्चर्याया चरन्ति, तेन च चर्या अपगता। तेनोच्यते अचर्या बोधिसत्त्वचर्येति।

H 75 न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा जीवसंज्ञाया वा पोषपुरुषपुद्गलमनुजमानवोत्थापकसमुत्थापककारककारयितृवेदकवेदयितृसंज्ञाया ज्ञातृज्ञापकसंज्ञाया चरन्तः प्रज्ञापारमिताया चरन्ति। तत्कस्माद्धेतोः ? विभाविता हि तै. सर्वसंज्ञाः। यैश्च विभाविता. सर्वसंज्ञा, न ते भूय. कस्याचित्संज्ञाया चरन्ति। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा विपर्यासैर्वा दृष्टिगतैर्वा नीवरणैर्वा चरन्तश्चरन्ति प्रज्ञापारमितायाम्। नापि विपर्यासदृष्टिगतनीवरणारम्बणेषु चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतोः ? परिज्ञातानि हि तैर्विपर्यासदृष्टिगतनीवरणारम्बणानि। या च परिज्ञा, सा अचर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा. प्रतीत्यसमुत्पादारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो. ? परिज्ञातो हि तैः प्रतीत्यसमुत्पादः, परिज्ञात प्रतीत्यसमुत्पादस्यारम्बणम्। या च परिज्ञा प्रतीत्यसमुत्पादस्य प्रतीत्यसमुत्पादारम्बणस्य च, तत्र न काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वाः कामधात्वारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। न रूपारूप्यधात्वारम्बणे वा चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतोः ? विभावितानि हि तैः कामधातुरूपधात्वारूप्यधात्वारम्बणानि। या च कामधातुरूपधात्वारूप्यधात्वारम्बणविभावना, न तस्याः काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा दानमात्सर्यशीलदौःशील्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्य हेतोः ? परिज्ञातं हि तैर्दानमात्सर्यशीलदौःशील्यारम्बणम्। या च परिज्ञा दानमात्सर्यशीलदौःशील्यारम्बणस्य, तस्या न काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न

१ Portion in [ ] lacking in Ms. and is supplied from C and T

H 76 हि सुविक्रान्तविक्रामिन् बोधिसत्त्वाः क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? परिज्ञातानि हि तै सर्वारम्बणानि। या च परिज्ञा सर्वारम्बणानाम्, तत्र न काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा अविपर्याससम्यक्प्रहाणस्मृत्युपस्थानाप्रमाणारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो. ? सर्वारम्बणानि हि तैर्वशिकानि ज्ञातानि। या च वशिका आरम्बणपरिज्ञा, तस्या न काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा इन्द्रियबलबोध्यङ्गध्यानसमाधिसमापत्त्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? विभावितानि हि तैरिन्द्रियबलबोध्यङ्गध्यानसमाधिसमापत्त्यारम्बणानि। या च विभावना, तस्या न काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा दु खसमुदयनिरोधमार्गारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतोः ? विभावितानि हि तैर्दुःखसमुदयनिरोधमार्गारम्बणानि। या च विभावना, न तस्या काचिद्भावना, न च तस्या भूयः काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा विद्याविमुक्त्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो. ? विभावित हि तैर्विद्याविमुक्त्यारम्बणम्। या च विभावना, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा अनुत्पादारम्बणे वा क्षयारम्बणे वा अनभिसंस्कारारम्बणे वा चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतोः ? विभावित हि तैरनुत्पादक्षयानभिसंस्कारारम्बणम्। या च विभावना, न तत्र काचिद्भूयश्चर्या। H 77 तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वाः पृथिव्यप्तेजोवाय्वाकाशारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो· ? विभावितानि हि तै. पृथिव्यप्तेजोवाय्वाकाशारम्बणानि। या च विभावना, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा· श्रावकप्रत्येकबुद्धभूम्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? विभावितानि हि तै· श्रावकप्रत्येकबुद्धभूम्यारम्बणानि। या च विभावना, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा· श्रावकप्रत्येकबुद्धधर्मारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो ? विभावितानि हि तै श्रावकप्रत्येकबुद्धधर्मारम्बणानि। या च विभावना, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् निर्वाणारम्बणे बोधिसत्त्वाश्चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो· ? परिज्ञात हि तैर्भवति निर्वाणारम्बणम्। या च परिज्ञा, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वा लक्षणपरिशुद्ध्यारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्, न बुद्धक्षेत्रपरिशुद्ध्यारम्बणे चरन्तः, न श्रावकसपदारम्बणे चरन्तः, न बोधिसत्त्वसपदारम्बणे चरन्तश्चरन्ति प्रज्ञापारमितायाम्। तत्कस्माद्धेतो. ? विभावितानि हि तैर्लक्षणपरिशुद्ध्यारम्बणम्,

बुद्धक्षेत्रपरिशुद्ध्यारम्बणम्, श्रावकसपदारम्बणम्, बोधिसत्त्वसपदारम्बणम्। या च विभावना, न तत्र काचिच्चर्या। तेनोच्यते अचर्या बोधिसत्त्वचर्येति। एव चरन्त सुविक्रान्तविक्रामिन् बोधिसत्त्वाश्चरन्ति प्रज्ञापारमितायाम्। इय बोधिसत्त्वस्य प्रज्ञापारमिताया चरत सर्वारम्बणपरि[ज्ञा]चर्या, सर्वारम्बणविभावनाचर्या यदुत प्रज्ञापारमिताचर्या॥

H 78 एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो रूपारम्बणपरिशुद्धावपि न चरति। एव वेदनासज्ञासस्कारविज्ञानारम्बणपरिशुद्धावपि न चरति। तत्कस्माद्धेतोः? प्रकृतिपरिशुद्ध हि तेन रूपारम्बण परिज्ञातम्। एव वेदनासज्ञासस्कारविज्ञानारम्बण परिज्ञातम्। या एव चर्या, इय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न चक्षुरारम्बणविशुद्धौ चरति, न श्रोत्रघ्राणजिह्वाकायमनआरम्बणविशुद्धौ चरति। तत्कस्माद्धेतो? प्रकृतिपरिशुद्ध हि तेन यावन्मनआरम्बण परिज्ञातम्। या एव चर्या, इय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न रूपशब्दगन्धरसस्प्रष्टव्यधर्मारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतोः? प्रकृतिपरिशुद्धं हि तेन यावद्धर्मारम्बण परिज्ञातम्। या एव चर्या, इयं बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न नामरूपारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतो? प्रकृतिपरिशुद्ध हि तेन नामरूपारम्बण परिज्ञातम्। या एव चर्या, इय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो नात्मसत्त्वारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतोः? परिज्ञाता हि तेन आत्मसत्त्वारम्बणप्रकृतिपरिज्ञा[1]। या एव चर्या, इय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न जीवभवपुद्गलकारककारयितृत्थापकसमुत्थापकवेदकवेदयितृद्रष्टृारम्बणपरिशुद्धावपि चरति। तत्कस्माद्धेतोः? प्रकृतिपरिशुद्ध हि तेन जीवभवपुद्गलकारककारयितृत्थापकसमुत्थापकवेदकवेदयितृद्रष्टृारम्बण परिज्ञातम्। या एवं चर्या, बोधिसत्त्वस्येयं प्रज्ञापारमिताचर्या।
H 79 एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न विपर्यासदृष्टिगतारम्बणपरिशुद्धावपि चरति। तत्कस्य हेतोः? प्रकृतिपरिशुद्ध हि तेन विपर्यासदृष्टिगतारम्बण परिज्ञातम्। या एवं चर्या, इय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न नीवरणारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतो? प्रकृतिपरिशुद्ध हि नीवरणारम्बण परिज्ञातम्। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न प्रतीत्यसमुत्पादारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतो? प्रकृतिपरिशुद्ध हि तेन प्रतीत्यसमुत्पादारम्बण परिज्ञातम्। एवं चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न कामधातुरूपधात्वारूप्यधात्वारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतोः? प्रकृतिपरिशुद्ध हि तेन कामधातुरूपधात्वारूप्यधात्वारम्बणं परिज्ञातम्। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न दानमात्सर्यशीलदौःशील्यारम्बणविशुद्धावपि चरति। तत्कस्माद्धेतो? प्रकृतिपरिशुद्ध हि तेन दानमात्सर्यशीलदौःशील्या-

१ H °परिशुद्धा against Ms °परिशुद्धता would have been better

रम्बण परिज्ञातम् । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यारम्बणविशुद्धावपि चरति । तत्कस्माद्धेतो [2] प्रकृतिपरिशुद्ध हि तेन क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यारम्बण परिज्ञातम् । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो नातीतानागतप्रत्युत्पन्नारम्बणविशुद्धावपि चरति । तत्कस्माद्धेतोः [2] प्रकृतिपरिशुद्धानि हि तेन अतीतानागतप्रत्युत्पन्नारम्बणानि परिज्ञातानि । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो नासङ्गावरणविशुद्धावपि चरति । तत्कस्माद्धेतो [2] प्रकृतिपरिशुद्ध हि तेन असङ्गारम्बण परिज्ञातम् । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो नाभिज्ञारम्बणविशुद्धावपि चरति । तत्कस्माद्धेतो [2] प्रकृतिपरिशुद्ध हि तेनाभिज्ञारम्बण H 80 परिज्ञातम् । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न सर्वज्ञतारम्बणविशुद्धावपि चरति । तत्कस्माद्धेतो. [2] प्रकृतिपरिशुद्ध हि तेन सर्वज्ञतारम्बण परिज्ञातम् । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वश्चरति प्रज्ञापारमितायाम्, यन्न कस्याचिदारम्बणविशुद्धौ चरति । तत्कस्माद्धेतोः [2] प्रकृतिपरिशुद्धत्वात्सर्वारम्बणानाम् । इय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य महासत्त्वस्य सर्वारम्बणप्रकृतिपरिशुद्धिः प्रज्ञापारमिताया चरत. ॥

एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्व इद रूपमिति न समनुपश्यति, अनेन रूपमिति न समनुपश्यति, अस्य रूपमिति न समनुपश्यति, अस्माद्रूपमिति न समनुपश्यति । स एव रूपमसमनुपश्यन् न रूपमुत्क्षिपति न निक्षिपति, न रूपमुत्पादयति न निरोधयति, न रूपे चरति न विचरति, न रूपारम्बणे चरति न विचरति । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वश्चरति प्रज्ञापारमितायाम् । एवमिमे वेदनासञ्ज्ञासस्कारा', इद विज्ञानमिति न समनुपश्यति, अनेन विज्ञानमिति न समनुपश्यति, अस्य विज्ञानमिति न समनुपश्यति, अस्माद्विज्ञानमिति न समनुपश्यति । स एव विज्ञानमसमनुपश्यन् न विज्ञानमुत्क्षिपति न निक्षिपति, न विज्ञानमुत्पादयति न निरोधयति, न विज्ञाने चरति न विचरति, न विज्ञानारम्बणे चरति न विचरति । एव सुविक्रान्तविक्रामिन् बोधिसत्त्वश्चरति प्रज्ञापारमितायाम् ॥

पुनरपर सुविक्रान्तविक्रामिन् एवं चरन् बोधिसत्त्वो न रूपमतीतमिति चरति, न रूपमनागतमिति चरति, न रूप प्रत्युत्पन्नमिति चरति । एव न वेदनासञ्ज्ञासस्काराः । H 81 न विज्ञानमतीतमिति चरति, न अनागतम्, न प्रत्युत्पन्नम् ॥

न रूपमात्मेति चरति, न रूपमात्मीयमिति चरति । एव न वेदनासञ्ज्ञासंस्काराः । न विज्ञानमात्मेति चरति, न विज्ञानमात्मीयमिति चरति । न रूप दुःखमिति चरति । एव न वेदनासञ्ज्ञासस्काराः । न विज्ञान दु.खमिति चरति । न रूपं मम नान्येषामिति चरति । एव न वेदनासञ्ज्ञासस्कारा. । न विज्ञान मम नान्येषामिति चरति । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वश्चरति प्रज्ञापारमितायाम् ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमितायां चरन् न रूपसमुदये चरति, न रूपनिरोधे चरति, न रूप गम्भीरमिति चरति, न रूपमुत्तानमिति चरति, न रूप शून्यमिति चरति, न रूपमशून्यमिति चरति, न रूप निमित्तमिति चरति, न रूपमनिमित्तमिति चरति, न रूप प्रणिहितमिति चरति, न रूपमप्रणिहितमिति चरति, न रूपमभिसंस्कारमिति चरति, न रूपमनभिसंस्कारमिति चरति । एवं[1] वेदनासंज्ञासंस्काराः । न विज्ञानसमुदये चरति, न विज्ञाननिरोधे चरति, न विज्ञान गम्भीरमिति चरति, न विज्ञानमुत्तानमिति चरति, न विज्ञान शून्यमिति चरति, न विज्ञानमशून्यमिति चरति, न विज्ञान निमित्तमिति चरति, न विज्ञानमनिमित्तमिति चरति, न विज्ञान प्रणिहितमिति चरति, न विज्ञानमप्रणिहितमिति चरति, न विज्ञानमभिसंस्कारमिति चरति, न विज्ञानमनभिसंस्कारमिति चरति । तत्कस्माद्धेतोः ? सर्वाण्येतानि सुविक्रान्तविक्रामिन् मन्यितानि स्पन्दितानि[2] प्रपञ्चितानि तृष्णागतानि । अह चरामीति स्पन्दितमेतत्, इह चरामीति प्रपञ्चितमेतत्, अनेन चरामीति तृष्णागतमेतत्, अस्मिंश्चरामीति मन्यितमेतत् । तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्वा सर्वाण्येतानि मन्यितस्पन्दितप्रपञ्चितानि तृष्णागतानि
H 82 ज्ञात्वा सर्वाज्ञानसमुद्धातान्[3] न कचिद्धर्मं मन्यन्ते, अमन्यमाना न क्वचिच्चरन्ति, न क्वचिदालीयन्ते । ते अनालया असयोगा अविसयोगा न क्वचिदुत्थापयन्ति, न समुत्थापयन्ति । अय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वमन्यनासमुद्धातः प्रज्ञापारमितायां चरतः ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वः एव प्रज्ञापारमितायां चरन् न रूप नित्यं नानित्यमिति चरति, न रूप शून्य नाशून्यमिति चरति, न रूप मायोपममिति चरति, न रूप स्वप्नोपममिति चरति, न रूप प्रतिभासोपममिति चरति, न रूप प्रतिश्रुत्कोपममिति चरति । एव वेदना सज्ञा सस्काराः । न विज्ञान नित्य नानित्यमिति चरति, न विज्ञान शून्यं नाशून्यमिति चरति, न विज्ञानं मायोपममिति चरति, न विज्ञान स्वप्नोपममिति चरति, न विज्ञान प्रतिभासोपममिति चरति, न विज्ञान प्रतिश्रुत्कोपममिति चरति । तत्कस्य हेतोः ? सर्वाण्येतानि सुविक्रान्तविक्रामिन् वितर्कितानि विचरितानि[4] चरितविचरितानि । तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्वः एतानि सर्वाणि वितर्कितानि विचरितानि चरितविचरितानि ज्ञात्वा सर्वचर्यासमुद्धाताय सर्वचर्यापरिज्ञायै प्रज्ञापारमितायां चरति । अय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वचर्यानिर्देशः ॥

(एवमुक्ते सुविक्रान्तविक्रामी बोधिसत्त्वो भगवन्तमेतदवोचत्—अचिन्त्येय भगवन् बोधिसत्त्वस्य प्रज्ञापारमिताचर्या । भगवानाह—एवमेतत् सुविक्रान्तविक्रामिन् । रूपाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या । एवं वेदनासज्ञासस्कारविज्ञानाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या । नामरूपाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य
H 83 प्रज्ञापारमिताचर्या । प्रतीत्यसमुत्पादाचिन्त्यतया सक्लेशाचिन्त्यतया अचिन्त्येयं बोधिसत्त्वस्य

१ After एवं, H adds न against Ms. २ H स्यन्दितानि ३ H °समुद्धाता against Ms ४ H विचारितानि against Ms

प्रज्ञापारमिताचर्या। कर्मविपाकाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। साराचिन्त्यतया अचिन्त्येय बोधि[सत्त्व]स्य प्रज्ञापारमिताचर्या। विपर्यासाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या, दृष्टिगताचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। कामधात्वचिन्त्यतया, रूपधात्वचिन्त्यतया, आरूप्यधात्वचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। आत्माचिन्त्यतया, सत्त्वाचिन्त्यतया, दानाचिन्त्यतया, मात्सर्याचिन्त्यतया, शीलाचिन्त्यतया, दौःशील्याचिन्त्यतया, क्षान्त्यचिन्त्यतया, व्यापादाचिन्त्यतया, वीर्याचिन्त्यतया, कौसीद्याचिन्त्यतया, ध्यानाचिन्त्यतया, विक्षेपाचिन्त्यतया, प्रज्ञाचिन्त्यतया, दौष्प्रज्ञ्याचिन्त्यतया अचिन्त्या बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। रागद्वेषमोहाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। स्मृत्युपस्थानाचिन्त्यतया सम्यक्प्रहाणाविपर्यासर्द्धिपादाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। इन्द्रियबलबोध्यङ्गसमाधिसमापत्त्यचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। [1]गत्यचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या[1]। दुःखसमुदयनिरोधमार्गाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। विद्याविमुक्त्यचिन्त्यतया, क्षयज्ञानानुत्पादज्ञानाभिसंस्कारज्ञानाचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। श्रावकभूमिप्रत्येकबुद्धभूम्यचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। श्रावकप्रत्येकबुद्धधर्माचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। अभिज्ञाचिन्त्यतया, अतीतानागतप्रत्युत्पन्नज्ञानाचिन्त्यतया अचिन्त्या बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। H 84
असङ्गज्ञानाचिन्त्यतया, निर्वाणाचिन्त्यतया, बुद्धधर्माचिन्त्यतया अचिन्त्येय बोधिसत्त्वस्य प्रज्ञापारमिताचर्या। तत्कस्माद्धेतोः? न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य प्रज्ञापारमिताचर्या चित्तजनिका, तेनोच्यते अचिन्त्येति॥

चित्तस्योत्पाद इति सुविक्रान्तविक्रामिन् विपर्यास एष। चित्त चित्तजमिति सुविक्रान्तविक्रामिंश्चेतस[2]. प्रतिषेध एष। न हि सुविक्रान्तविक्रामिन् या चित्तस्य प्रकृतिः सा उत्पद्यते वा जायते वा। विपर्याससंप्रयुक्तं सुविक्रान्तविक्रामिंश्चित्तमुत्पद्यते। तत्र चित्तमपि विवृतम्, येन विपर्यासेनोत्पद्यते तदपि विवृतम्। न पुनः सुविक्रान्तविक्रामिन् बालपृथग्जना जानन्ति विवृतं चित्तमिति। यत्राप्युत्पद्येत तदपि विवृतम्, येनाप्युत्पद्येत तदपि विवृतमिति। ते चित्तविवेकमजानन्त, आरम्बणविवेकमजानन्तः अभिनिविशन्ते—अहं चित्तम्, मम चित्तम्, अस्य चित्तम्, अस्माच्चित्तमिति। ते चित्तमभिनिविश्य कुशलमिति वा अभिनिविशन्ते, अकुशलमिति वा अभिनिविशन्ते। सुखमिति वा अभिनिविशन्ते, दुःखमिति वा अभिनिविशन्ते। उच्छेद इत्यभिनिविशन्ते, शाश्वत इत्यभिनिविशन्ते, दृष्टिगत इत्यभिनिविशन्ते, नीवरण इत्यभिनिविशन्ते। दानमात्सर्यशीलदौःशील्यमित्यभिनिविशन्ते। धर्मधातुकामधातुरूपधात्वारूप्यधातुमित्यभिनिविशन्ते, प्रतीत्यसमुत्पादमित्यभिनिविशन्ते, नामरूपमि- H 85

[1] C and T om this sentence [2] C प्रतिवेध, T प्रतिबोध.

त्यभिनिविशन्ते, रागद्वेषमोहमित्यभिनिविशन्ते । ईर्ष्यामात्सर्यमित्यभिनिविशन्ते । अस्मिमानमित्यभिनिविशन्ते । दु खमित्यभिनिविशन्ते । समुदयमित्यभिनिविशन्ते । निरोधमित्यभिनिविशन्ते । मार्गमित्यभिनिविशन्ते । स्मृत्युपस्थानमित्यभिनिविशन्ते । सम्यक्प्रहाणाविपर्यासर्द्धिपादेन्द्रियबलबोध्यङ्गानीत्यभिनिविशन्ते । ध्यानविमोक्षसमाधिसमापत्तीनप्यभिनिविशन्ते । अनुत्पादक्षयानभिसंस्कारमित्यभिनिविशन्ते । श्रावकप्रत्येकबुद्धभूमिमभिनिविशन्ते । श्रावकप्रत्येकबुद्धधर्मानप्यभिनिविशन्ते । मार्गमित्यभिनिविशन्ते । अभिज्ञामप्यभिनिविशन्ते । निर्वाणमप्यभिनिविशन्ते । बुद्धज्ञानमप्यभिनिविशन्ते । लक्षणान्यप्यभिनिविशन्ते । प्रत्येकबुद्धसपदमप्यभिनिविशन्ते । बोधिसत्त्वसपदमप्यभिनिविशन्ते ॥

तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्व. इमानेवरूपानभिनिवेशान् सत्त्वाना विपर्यासचित्तजान् समनुपश्यन् न कचिद्विपर्यासे चित्तमुत्पादयति । तत्कस्माद्धेतो. ? चित्तापगता हि प्रज्ञापारमिता । या च चित्तस्य प्रकृतिप्रभास्वरता प्रकृतिपरिशुद्धता[1], तत्र न काचिच्चित्तस्योत्पत्ति । आरम्बणे सति सुविक्रान्तविक्रामिन् बालपृथग्जनाश्चित्तमुत्पादयन्ति । तत्र बोधिसत्त्वोऽप्यारम्बण प्रजानन्नपि चित्तस्योत्पत्तिं प्रजानाति—कुतश्चित्तमुत्पद्यते ? स एव
H 86 प्रत्यवेक्षते—प्रकृतिप्रभास्वरमिद चित्तम् । तस्यैव भवति—आरम्बण प्रतीत्य चित्तमुत्पद्यते इति । स आरम्बण परिज्ञाय न चित्तमुत्पादयति नापि निरोधयति । तस्य तच्चित्त प्रभास्वर भवति असंक्लिष्ट कमनीय परिशुद्धम् । स चित्तानुत्पादस्थितो न कचिद्धर्ममुत्पादयति न निरोधयति । इय सुविक्रान्तविक्रामिन् चित्तानुत्पादपरिज्ञा प्रज्ञापारमितायां चरत । य एव चरति बोधिसत्त्व, स प्रज्ञापारमितायां चरति । तस्यैव चरतो नैव भवति—अह चरामि प्रज्ञापारमितायाम्, अस्यां चरामि प्रज्ञापारमितायाम्, अनेन चरामि प्रज्ञापारमितायाम्, अस्माच्चरामि प्रज्ञापारमितायामिति । सचेत्पुन संजानीते—इय प्रज्ञापारमिता, अनेन प्रज्ञापारमिता, अस्य वा प्रज्ञापारमितेति, न चरति प्रज्ञापारमितायाम् । अथ तामपि प्रज्ञापारमिता न समनुपश्यति नोपलभते—अह चरामि प्रज्ञापारमितायामिति न चरति, चरति प्रज्ञापारमितायाम् ॥

एवमुक्ते सुविक्रान्तविक्रामी बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—अनुत्तरेय चर्या भगवन् बोधिसत्त्वस्य यदुत प्रज्ञापारमिताचर्या । प्रभास्वरेयं भगवन् बोधिसत्त्वस्य चर्या यदुत प्रज्ञापारमिताचर्या । निरुत्तरेय भगवन् बोधिसत्त्वस्य चर्या यदुत प्रज्ञापारमिताचर्या । अत्यद्भुतेय भगवन् बोधिसत्त्वस्य चर्या यदुत प्रज्ञापारमिताचर्या । अनवक्रान्तेय भगवन् बोधिसत्त्वस्य चर्या मारेण वा मारपर्षद्भिर्वा अन्यैर्वा पुनः कैश्चिन्निमित्तचरितैरुपलम्भचरितैरात्मदृष्टिभि. सत्त्वदृष्टिभिर्जीवदृष्टिभि पुद्गलदृष्टिभिर्भवदृष्टिभिर्विभवदृष्टिभिरुच्छेददृष्टिभि शाश्वतदृष्टिभि· सत्कायदृष्टिभि. स्कन्धदृष्टिभिर्धातुदृष्टिभिरायतनदृष्टिभिर्बुद्धदृष्टिभिर्धर्मदृष्टिभि सङ्घदृष्टिभिर्निर्वाणदृष्टिभि प्राप्तसंज्ञैर्वा अधिमानिकैर्वा रागद्वेषमोहचरितैर्वा

१ H °परिशुद्धिता.

विपर्यासचरितैर्वा उत्पथोन्मार्गप्रस्थितैर्वा अनाक्रमणीया । सर्वलोकाभ्युदयचर्येयं भगवन् H 87
बोधिसत्त्वस्य चर्या यदुत प्रज्ञापारमिताचर्या ॥

एवमुक्ते भगवान् सुविक्रान्तविक्रामिणं बोधिसत्त्वं महासत्त्वमेतदवोचत्—एवमेतत् सुविक्रान्तविक्रामिन्, एवमेतत् । अनवक्रान्तचर्येयं बोधिसत्त्वस्य मारेण वा मारकायिकैर्वा देवपुत्रैर्मारपर्षदा वा, अन्तशो निर्वाणदृष्टिकैरपि निर्वाणाभिनिविष्टैर्वा अनाक्रमणीया सर्वबालपृथग्जनैर्वा । या बोधिसत्त्वानामियं सुविक्रान्तविक्रामिंश्चर्या, नेयं चर्या बालपृथग्जनानाम् । नापीयं चर्या शैक्षाशैक्षाणां श्रावकयानीयानाम्, नापि प्रत्येकबुद्धयानीयानाम् । सचेत् सुविक्रान्तविक्रामिन् इयं चर्या श्रावकयानीयानां वा प्रत्येकबुद्धयानीयानां वा अभविष्यत्, न तेषां कश्चिद्व्यवहारोऽभविष्यत्—श्रावकयानीया वा प्रत्येकबुद्धयानीया वेति । बोधिसत्त्वा एवाभविष्यन्, तेऽपि तथागता वा चतुर्वैशारद्यप्राप्ता अभविष्यन् । यस्मात्तर्हि सुविक्रान्तविक्रामिन् न श्रावकयानीयानां न प्रत्येकबुद्धयानीयानामियं चर्या, तस्मात्ते न बोधिसत्त्वा इति संख्यां गच्छन्ति, न च तथागता भवन्ति चतुर्वैशारद्यप्राप्ताः । वैशारद्यभूमिरियं सुविक्रान्तविक्रामिन् धर्मे[1], नेयं प्रज्ञापारमिताचर्या । एवं चरन्तः सुविक्रान्तविक्रामिन् बोधिसत्त्वाः क्षिप्रं चतुर्वैशारद्यतामनुप्राप्नुवन्ति, अनभिसंबुद्धा एव यावदनुत्तरां सम्यक्संबोधिं प्रणिधानवशेन च बुद्धानां च भगवतामधिष्ठानवशेन । न हि सुविक्रान्तविक्रामिन् श्रावकयानिकानां वा प्रत्येकबुद्धयानिकानां वा चतुर्वैशारद्यं भवति, नापि तथागतस्तेषां चतुर्वैशारद्यमधितिष्ठति । बोधिसत्त्वभूमिरेषा सुविक्रान्तविक्रामिन् यस्यां चतुर्वैशारद्यमनुप्राप्यते प्रणिधानवशेन । तत्कस्माद्धेतोः[2] प्रज्ञापारमितायां सुविक्रान्तविक्रामिंश्चरन्तो बोधिसत्त्वाः चतस्रः प्रतिसंविदोऽनुप्राप्नुवन्ति । कतमाश्चतस्रः[2] यदुत अर्थप्रतिसंविदं धर्मप्रतिसंविदं निरुक्तिप्रतिसंविदं प्रतिभानप्रतिसंविदम् । आभिश्चतसृभिः प्रतिसंविद्भिः समन्वागता अनभिसंबुद्धा एव प्रणिधानवशेन H 88
वैशारद्यानि प्रतिगृह्णन्ति । तथागता अपि तान् कुशलमूलसमन्वागतानिति विदित्वा प्रज्ञापारमिताभूम्यनुप्राप्तानिति विदित्वा अधितिष्ठन्ति चतुर्वैशारद्येन । तस्मात्तर्हि सुविक्रान्तविक्रामिन् बोधिसत्त्वेन चतस्रः प्रतिसंविदोऽनुप्राप्तुकामेन क्षिप्रं चतुर्वैशारद्यकुशलेन भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं चरितव्यम् ॥

पुनरपरं सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमितायां चरन् सर्वधर्माणां हेतुं च समुदयं च अस्तगमं च निरोधं च प्रविध्यति न कंचिद्धर्मम्, यत्प्रज्ञापारमितायां न योजयति । सर्वधर्माणां हेतुसमुदयनिरोधमार्गलक्षणं प्रजानाति । तेषां हेतुसमुदयनिरोधमार्गलक्षणं प्रजानन् न रूपं प्रभावयति न विभावयति । एवं वेदनासंज्ञासंस्कारान् । न विज्ञानं भावयति न विभावयति । न नामरूपं भावयति न विभावयति । न संक्लेशव्यवदानं भावयति न विभावयति । न विपर्यासदृष्टिगतनीवरणानि भावयति न विभावयति ।

१ H धर्मेणेयं against Ms. which reads धर्मे नेयं   २ H °मितस्या

न रागद्वेषमोहान् भावयति न विभावयति। न कामधातु न रूपधातु नारूप्यधातु भावयति न विभावयति। न सत्त्वधातु नात्मधातु भावयति न विभावयति। नोच्छेददृष्टिं न शाश्वतदृष्टि भावयति न विभावयति। न दानमात्सर्यं भावयति न विभावयति। न शीलदौःशील्य भावयति न विभावयति। न क्षान्तिव्यापाद भावयति न विभावयति। न वीर्यकौसीद्य न ध्यानविक्षेप न प्रज्ञादौष्प्रज्य भावयति न विभावयति। न स्मृत्युपस्थानसम्यक्प्रहाणाविपर्यासर्द्धिपादाप्रमाणानि भावयति न विभावयति। नेन्द्रियबलबोध्यङ्गसमाधि-
H 89 समापत्तीर्भावयति न विभावयति। न प्रतीत्यसमुत्पाद भावयति न विभावयति। न दुःखसमुदयनिरोधमार्गान् भावयति न विभावयति। नानुत्पादज्ञान न क्षयज्ञान नाभिसंस्कारज्ञान भावयति न विभावयति। न पृथग्जनभूमि भावयति न विभावयति। न श्रावकभूमिं न प्रत्येकबुद्धभूमिं न बोधिसत्त्वभूमिं भावयति न विभावयति। न पृथग्जनधर्मान् न श्रावकधर्मान् न प्रत्येकबुद्धधर्मान् [न बोधिसत्त्वधर्मबुद्धधर्मान्] भावयति न विभावयति। न शमथ न विदर्शना भावयति न विभावयति। न निर्वाण भावयति न विभावयति। नातीतानागतप्रत्युत्पन्नज्ञानदर्शन भावयति न विभावयति। न सङ्गता भावयति न विभावयति। नासङ्गता भावयति न विभावयति। न बुद्धज्ञान भावयति न विभावयति। न बुद्धवैशारद्यानि भावयति न विभावयति। तत्कस्माद्धेतो [1] अभाव्यानि हि सुविक्रान्तविक्रामिन् रूपवेदनासंज्ञासंस्कारविज्ञानानि। अभाव्यानि नामरूपविपर्यासदृष्टिगतस्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाविपर्यासाप्रमाणेन्द्रियबलबोध्यङ्गसमाधिसमापत्त्यभिज्ञाक्षयज्ञानाभिसंस्कारज्ञानानि। अभाव्या पृथग्जनभूमि, अभाव्याः श्रावकप्रत्येकबुद्धबोधिसत्त्वभूमयः, अभाव्या पृथग्जनश्रावकप्रत्येकबुद्धधर्मा, अभाव्य निर्वाणम्, अभाव्यमतीतानागतप्रत्युत्पन्नज्ञानदर्शनम्, अभाव्यमसङ्गज्ञानदर्शनम्, अभाव्यमनासङ्गज्ञानदर्शनम्, अभाव्य सम्यक्संबुद्धज्ञानम्। तत्कस्माद्धेतो. [1] न हि सुविक्रान्तविक्रामिन् काचिदस्ति भावपरिनिष्पत्ति। अभूता
H 90 ह्येते सर्व एव व्यवहारा। नात्र कश्चित्स्वभाव। अभावस्वभावा हि सुविक्रान्तविक्रामिन् सर्वधर्मा, अभूता असंभूताः। तत्कस्माद्धेतो. [1] यो हि विपर्यास. सोऽभूत.। विपर्याससमुत्थिता. सर्वधर्मा। यो हि विपर्यास, सोऽभावः। भावापगता हि सुविक्रान्तविक्रामिन् सर्वधर्मा। भावो नोपलभ्यतेऽस्वभावत्वात्। अभाव इति सुविक्रान्तविक्रामिन् अभूतः। सोऽसंभूत., तेनोच्यते अभाव इति। असत्परिदीपनैषा सुविक्रान्तविक्रामिन् अभाव इति। यश्च अभावः, तत्र न भावना न विभावना। विपर्याससमुत्थिततया हि सुविक्रान्तविक्रामिन् सत्त्वा भावयन्ति च विभावयन्ति च। न तत्र किंचिद्भाव्यम्। तत्कस्माद्धेतोः [1] अभावस्वभावा हि सुविक्रान्तविक्रामिन् सर्वधर्मा, भावापगता वस्त्वसत्त्वात्। न तत्र किंचिद्भाव्यम्। यस्मिन् समये सुविक्रान्तविक्रामिन् बोधिसत्त्व एव धर्मेषु धर्मानुदर्शी विहरन् प्रज्ञापारमितायां चरन् न कंचिद्धर्मं भावयति न विभावयति, इयमुच्यते प्रज्ञापारमिताभावनेति। एव चरत एव विहरतः सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताभावना परिपूरिं गच्छति॥

१ Ms om this expression, it is however found in both C and T.

(पुनरपरं सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो न H 91
रूपसंप्रयोगनिमित्तं चित्तमुत्पद्यते। न वेदना, न संज्ञा, न संस्कार । न विज्ञानसंप्रयोगनिमित्तं चित्तमुत्पद्यते। न खिलसहगतं चित्तमुत्पद्यते । न व्यापादसहगतं चित्तमुत्पद्यते । न मात्सर्यसहगतं चित्तमुत्पद्यते । न संक्लेशसहगतं चित्तमुत्पद्यते । न कौसीद्यसहगतं चित्तमुत्पद्यते । न विक्षेपसहगतं चित्तमुत्पद्यते । न दौष्प्रज्ञ्यसहगतं चित्तमुत्पद्यते । न कामसहगतं चित्तमुत्पद्यते । न रूपारम्बणाभिनिवेशसहगतं चित्तमुत्पद्यते । नाभिध्यासहगतं चित्तमुत्पद्यते । न पैशुन्यसहगतं चित्तमुत्पद्यते । न मिथ्यादृष्टिसहगतं चित्तमुत्पद्यते । न भोगाभिनिवेशसहगतं चित्तमुत्पद्यते । नैश्वर्याभिष्वङ्गसहगतं चित्तमुत्पद्यते । न महाकुलोपपत्त्यभिष्वङ्गसहगतं चित्तमुत्पद्यते । न देवोपपत्त्यभिष्वङ्गसहगतं चित्तमुत्पद्यते । न कामधात्वभिष्वङ्गसहगतं चित्तमुत्पद्यते । न रूपारूप्यधात्वभिष्वङ्गसहगतं चित्तमुत्पद्यते । न श्रावकभूमौ चित्तमुत्पद्यते । न प्रत्येकबुद्धभूमौ चित्तमुत्पद्यते । न बोधिसत्त्वचर्याभिनिवेशाभिष्वङ्गसहगतं चित्तमुत्पद्यते । नान्तशो नीवरणदृष्टिसहगतमपि चित्तमुत्पद्यते । सोऽनया चित्तविशुद्ध्या समन्वागतः सत्त्वान् मैत्र्या [1]स्फरति करुणया मुदितयोपेक्षया । सत्त्वसंज्ञा चानेन विभाविता भवति, न च सत्त्वसंज्ञायां तिष्ठति, न चैनांश्चतुरो ब्राह्मान् विहारानभिनिविशते, प्राज्ञश्च भवत्युपायकौशल्यसमन्वागतः । तस्यैभिर्धर्मैः समन्वागतस्य प्रज्ञापारमितायां चरतः क्षिप्रं प्रज्ञापारमिताभावना परिपूरिं गच्छति । स एवं प्रज्ञापारमितां भावयन् न रूपमुपैति, नोपादत्ते । न वेदनां न संज्ञां न संस्कारान् । न विज्ञानमुपैति, नोपादत्ते । न विपर्यासनीवरणदृष्टिगतान्युपैति, नोपादत्ते । न कामधातुं न रूपधातुं नारूप्यधातुमुपैति, नोपादत्ते । नोच्छेदशाश्वतमुपैति, नोपादत्ते । न प्रतीत्यसमुत्पादमुपैति, नोपादत्ते । न पृथिव्यप्तेजोवायुधातुमुपैति, नोपादत्ते । न रागद्वेषमोहानुपैति, नोपादत्ते । न दानमात्सर्यशीलदौःशील्यमुपैति, नोपादत्ते । न क्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यमुपैति, नोपादत्ते । न स्मृत्युपस्थानसम्यक्प्रहाणाविपर्यासाप्रमाणर्द्धिपादानुपैति, नोपादत्ते । नेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमापत्तीरुपैति, नोपादत्ते । नाभिज्ञामुपैति, H 92
नोपादत्ते । न दुःखसमुदयनिरोधमार्गानुपैति, नोपादत्ते । नानुत्पादज्ञानक्षयज्ञानाभिसंस्कारज्ञानान्युपैति, नोपादत्ते । नात्मधातुं न सत्त्वधातुं न धर्मधातुमुपैति नोपादत्ते । न पृथग्जनश्रावकप्रत्येकबुद्धसम्यक्संबुद्धभूमिमुपैति, नोपादत्ते । न पृथग्जनधर्मान्, न श्रावकधर्मान् न प्रत्येकबुद्धधर्मानुपैति, नोपादत्ते । नातीतानागतप्रत्युत्पन्नज्ञानदर्शनमुपैति, नोपादत्ते । नासङ्गज्ञानदर्शनमुपैति, नोपादत्ते । न बुद्धज्ञानबलवैशारद्यान्युपैति, नोपादत्ते । न नीवरणान्युपैति, नोपादत्ते । तत्कस्माद्धेतोः ? सर्वधर्मा हि सुविक्रान्तविक्रामिन् अनुपगता अनुपादत्ताः, न केनचिदुपगताः । न हि सुविक्रान्तविक्रामिन् कश्चिद्धर्म उपादातव्यो नापि केनचिदुपादत्तः । तत्कस्माद्धेतोः ? नात्र किंचिदुपा-

१ H स्फुरति, Matsumoto हरति

दातव्य नोपादानीय वा । तत्कस्माद्धेतो [2] असारका हि सुविक्रान्तविक्रामिन् सर्वधर्मा मायोपमतया । वशिका हि सर्वधर्मा सारानुपलब्धित । प्रतिभाससमा हि सर्वधर्मा अग्राह्यतामुपादाय । रिक्तका हि सर्वधर्मा स्वभावासत्त्वात् । फेनपिण्डोपमा हि सर्वधर्मा अविमर्दनक्षमत्वात् । बुद्बुदोपमा हि सर्वधर्मा उत्पन्नभङ्गविलीनतामुपादाय । मरीच्युपमा हि सर्वधर्मा विपर्याससमुत्थानतामुपादाय । कदलीगर्भोपमा हि सर्वधर्मा[1] सारासत्तामुपादाय । उदकचन्द्रसदृशा हि सर्वधर्मा अग्राह्यतामुपादाय । इन्द्रायुधरङ्गसदृशा हि सर्वधर्मा असत्परिकल्पनतामुपादाय । निरीहका हि सर्वधर्मा असमुत्थापनतामुपादाय । रिक्तमुष्टिसमा हि सर्वधर्मा वशिकस्वभावलक्षणतया । तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्व एव सर्वधर्मान्
H 93 समनुपश्यन् न कञ्चिद्धर्ममुपैति नोपादत्ते, नाधितिष्ठति, नाध्यवसाय तिष्ठति । इय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वधर्मश्रद्धानता अनधिष्ठानता अनध्यवसानता अनभिष्वङ्गता प्रज्ञापारमितायां चरत । एव चरत सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य प्रज्ञापारमिताभावना परिपूरिं गच्छति ॥

पुनरपर सुविक्रान्तविक्रामिन् एव शिक्षमाणो बोधिसत्त्वो न रूपे शिक्षते, न रूपसमतिक्रमाय शिक्षते । न वेदनाया न सज्ञाया न सस्कारेषु । न विज्ञाने शिक्षते न विज्ञानसमतिक्रमाय शिक्षते । न रूपोत्पत्तौ शिक्षते, न रूपनिरोधे शिक्षते । एव न वेदना न सज्ञा न सस्काराः । न विज्ञानोत्पत्तौ शिक्षते, न विज्ञाननिरोधे शिक्षते । न रूपविनयाय शिक्षते नाविनयाय । एव न वेदनासज्ञासस्कारविज्ञानविनयाय शिक्षते नाविनयाय । न रूपस्य सक्रान्तये शिक्षते नावक्रान्तये । न स्थितये शिक्षते नास्थितये । एव न वेदनासज्ञासस्कारविज्ञानाना सक्रान्तये शिक्षते नावक्रान्तये, न स्थितये शिक्षते नास्थितये । एव शिक्षमाण सुविक्रान्तविक्रामिन् बोधिसत्त्वो न रूपनित्यताया शिक्षते, न रूपसुखताया शिक्षते, न रूपदुःखताया शिक्षते न रूपशुभतायाम्, न रूपानात्मताया शिक्षते । न वेदनासज्ञासस्कारा , न विज्ञाननित्यताया शिक्षते, न विज्ञानसुखताया शिक्षते, न विज्ञानदु.खतायाम्, न विज्ञानशुभताया न विज्ञानात्मताया शिक्षते । एव शिक्षमाणः सुविक्रान्तविक्रामिन् बोधिसत्त्वो न रूपातीतारम्बणे चरति, न रूपानागतारम्बणे चरति, न रूपप्रत्युत्पन्नारम्बणे चरति । न वेदना, न सज्ञा, न सस्काराः । न विज्ञानातीतारम्बणे
H 94 चरति, नानागतारम्बणे चरति, न प्रत्युत्पन्नारम्बणे चरति । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वोऽतीत शून्याकारेण शान्ताकारेण अनात्माकारेण प्रत्यवेक्षते—यदतीत तच्छून्यम्, एव शान्तमनात्मेति । एवमपि [न][2] चरति । अनागत शून्याकारेण शान्ताकारेण अनात्माकारेण प्रत्यवेक्षते—यदतीत तच्छून्य शान्तमनात्मेति । एवमपि [न][2] चरति । प्रत्युत्पन्नं शून्याकारेण शान्ताकारेण अनात्माकारेण प्रत्यवेक्षते—यत्प्रत्युत्पन्न तच्छून्यं शान्तमनात्मेति । एवमपि [न][2] चरति । अतीत शून्य शान्त[3]मनात्मना वा अनात्मीयेन

१ C and T suggest the addition of न here. २ H C and T read न which Ms om ३ C and T om. शान्तम्

वा अनित्येन वा अध्रुवेण वा अशाश्वतेन वा विपरिणामधर्मिणा वा, एवमपि न चरति । अनागत शून्य शान्तम्[1] अनात्मना वा अनात्मीयेन वा अनित्येन वा अध्रुवेण वा अशाश्वतेन वा विपरिणामधर्मिणा वा, एवमपि न चरति । प्रत्युत्पन्न शून्य शान्तमनात्मना वा अनात्मीयेन वा अनित्येन वा अध्रुवेण वा अशाश्वतेन वा विपरिणामधर्मिणा वेति, एवमपि न चरति । एव चरत सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य प्रज्ञापारमिताभावना परिपूरिं गच्छति । एव चरत सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य मार पापीयानवतार न लभते । एव चरन् सर्वमारकर्माणि बुध्यते, न च तैर्मारकर्मभि. सह्रियते ॥

पुनरपर सुविक्रान्तविक्रामिन् एव चरन् बोधिसत्त्वो न रूपमालम्बते, न वेदना न सज्ञा न सस्कारान्, न विज्ञानमालम्बते । न नामरूपमालम्बते, न विपर्यासदृष्टिगतमालम्बते, नात्माभिनिवेशमालम्बते, न सत्त्वाभिनिवेशमालम्बते, नोच्छेदशाश्वतमालम्बते, नान्त नानन्तमालम्बते । न रूपशब्दगन्धरसस्पर्शधर्मानालम्बते । न कामधातु न रूपधातु H 95 नारूप्यधातुमालम्बते । न प्रतीत्यसमुत्पादमालम्बते । न पृथिव्यप्तेजोवाय्वाकाशधातूनालम्बते । न सत्य न मृषाम्[2] आलम्बते । न सयोग न विसयोगमालम्बते । न रागद्वेषमोहानालम्बते । न रागद्वेषमोहप्रहाणमालम्बते । न दानमात्सर्यशीलदौःशील्यमालम्बते । न क्षान्तिव्यापादमालम्बते । न वीर्यकौसीद्यमालम्बते । न ध्यानविक्षेपमालम्बते । न प्रज्ञादौष्प्रज्ञ्यमालम्बते । न स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाविपर्यासानालम्बते । नेन्द्रियबलबोध्यङ्गसमाधिसमापत्तीरालम्बते । न मैत्रीकरुणामुदितोपेक्षा आलम्बते । नानुत्पादज्ञानक्षयज्ञानाभिसस्कारज्ञानान्यालम्बते । न पृथग्जनश्रावकप्रत्येकबुद्धभूमीरालम्बते । न पृथग्जनश्रावकप्रत्येकबुद्धधर्मानालम्बते । न दु खसमुदयनिरोधमार्गानालम्बते । नाभिज्ञाज्ञानदर्शनमालम्बते । न विमुक्तिमालम्बते । न विमुक्तिज्ञानदर्शनमालम्बते । न निर्वाणमालम्बते । नातीतानागतप्रत्युत्पन्न[ज्ञानदर्शन][3]मालम्बते । नासङ्गज्ञानमालम्बते । न बुद्धज्ञानमालम्बते । न बुद्धबलवैशारद्यान्यालम्बते । न बुद्धक्षेत्रपरिशुद्धिमालम्बते । न लक्षणपरिशुद्धिमालम्बते । न श्रावकसपदमालम्बते । न प्रत्येकबुद्धसपदमालम्बते । न बोधिसत्त्वसपदमालम्बते । तत्कस्माद्धेतो ? निरालम्बना हि सुविक्रान्तविक्रामिन् सर्वधर्मा । न हि सर्वधर्माणा किंचिद्ग्रहण सविद्यते यत्रैषामालम्बन भवेत् । यावत् सुविक्रान्तविक्रामिन् आलम्बनम्, तावदध्यवसानम्, तावदभिनिवेशः, तावदुपादानम् । यावदुपादानम्, यावदालम्बनम्, H 96 तावद्दुःखदौर्मनस्यम्, तावद्गाढा शोकशल्योपायासपरिदेवा. सभवन्ति । यावत् सुविक्रान्तविक्रामिन् आलम्बन तावद्बन्धनम् । यावदालम्बन तावन्नास्ति मार्गः[4], तावद्दु खदौर्मनस्यम् । यावदालम्बन तावन्मन्यना स्पन्दना[5] प्रपञ्चना । यावदालम्बन तावदधिकरणविग्रहविवादाः । यावदालम्बन तावदविद्यान्धकारमोहा. । यावदालम्बन तावद्भयानि,

---

१ C and T om शान्तम् २ H मृषम् against Ms ३ Ms and Matsumoto om 'ज्ञानदर्शन' which is supplied from C and T ४ H मार्गम् 5 H स्पन्दना.

तावद्वैरवाणि । यावदालम्बन तावन्मारपाशमारविध्वंसनानि । यावदालम्
तावद्दुःखप्रतिपीडना सुखैपर्येषणा च । तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्व इमानादीनः
सपश्यन् न कचिद्धर्ममालम्बते । सोऽनालम्बमानो न कचिद्धर्मं परिगृह्णाति ।
नाप्युद्ग्रहाय नाग्रहाय स्थित सर्वधर्माणां तामपि निरालम्बनवशिकता न मन्यते ।
चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो महासत्त्वो न कचिद्धर्ममभिनिविशते नाभिवद
न कचिद्धर्ममध्यवसाय तिष्ठति । अथ सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वधर्मालम्ब
विसयोग प्रज्ञापारमितायां चरत । एव सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य चरत प्रज्ञाप
मिताभावना परिपूरिं गच्छति । न चास्य मार पापीयान् अन्तराय शक्नोति कर्तुम्,
मारकायिका देवता, न मारपर्षत्, न माराविष्ठिता[1] । न चास्य तेऽवतार लभन्ते यत्र
विहेठान् कुर्यु, यत्रैन गृहीत्वा वर्षयेयु । नित्य च सर्वाणि मारकर्माण्यवबुध्यन्ते । न
मारकर्मवशगो भवति । सर्वाणि च मारभवनानि ध्यामीकरोति । सर्वान्यतीर्थिकाना
H 97 निग्रहाय स्थितो भवति, सर्वांश्चान्यतीर्थिकांश्चरकपरिव्राजकानभिभवति । अनवमर्दनीय
भवति सर्वपरप्रवादिभि ॥

एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न रूपकल्पनाया स्थितो भवति
रूपविकल्पनायाम् । एव न वेदनासंज्ञासंस्कारविज्ञानकल्पनाया स्थितो भवति न विकल
नायाम् । नापि रूप कल्पयति न विकल्पयति । एव न वेदनासंज्ञासंस्कारविज्ञाना
कल्पयति न विकल्पयति । न नीवरणदृष्टिगतानि कल्पयति न विकल्पयति । नोच्छे
शाश्वत कल्पयति न विकल्पयति । न कामधातुरूपधात्वारूप्यधातून् कल्पयति
विकल्पयति । न रागद्वेषमोहान् कल्पयति न विकल्पयति । न सत्य कल्पयति
विकल्पयति । न मृषा[2] कल्पयति न विकल्पयति । न पृथिव्यप्तेजोवाय्वाकाशधातु कल्पय
न विकल्पयति । न सयोग कल्पयति न विकल्पयति । न विसयोग कल्पयति न विकल
यति । न प्रतीत्यसमुत्पाद कल्पयति न विकल्पयति । नात्मसंज्ञा कल्पयति न विकल्पयति
न सत्त्वसंज्ञा कल्पयति न विकल्पयति । न जीवसंज्ञा कल्पयति न विकल्पयति ।
पुद्गलसंज्ञा कल्पयति न विकल्पयति । न दानमात्सर्यशीलदौःशील्य कल्पयति न विकल
यति । न क्षान्तिव्यापादौ कल्पयति न विकल्पयति । न वीर्यकौसीद्य कल्पयति
विकल्पयति । न ध्यानविक्षेपौ कल्पयति न विकल्पयति । न प्रज्ञादौष्प्रज्ञ्ये कल्पयति
विकल्पयति । नाविपर्याससम्यक्प्रहाणर्द्धिपादस्मृत्युपस्थानानि कल्पयति न विकल्पयति
नेन्द्रियबलबोध्यङ्गसमाधिसमापत्ती कल्पयति न विकल्पयति । न दुःखसमुदयनिरोधमार्ग
H 98 कल्पयति न विकल्पयति । न मैत्रीकरुणामुदितोपेक्षाः कल्पयति न विकल्पयति
नानुत्पादज्ञानक्षयज्ञानाभिसंस्कारज्ञानानि कल्पयति न विकल्पयति । न पृथग्जनधर्मा
न श्रावकधर्मान् न प्रत्येकबुद्धधर्मान् न बुद्धधर्मान् कल्पयति न विकल्पयति

१ H माराविष्ठिता २ H मृषं against Ms.

न पृथग्जनभूमिं न श्रावकभूमिं न प्रत्येकबुद्धभूमिं न बुद्धभूमिं कल्पयति न विकल्पयति । न नीवरणानि कल्पयति न विकल्पयति । नातीतानागतप्रत्युत्पन्नज्ञानदर्शनं कल्पयति न विकल्पयति । नासङ्गज्ञानं कल्पयति न विकल्पयति । न विद्याविमुक्तिं कल्पयति न विकल्पयति । न मुक्तिं न विमुक्तिज्ञानदर्शनं कल्पयति न विकल्पयति । न बुद्धज्ञानवैशारद्यानि कल्पयति न विकल्पयति । न लक्षणपरिशुद्धिं कल्पयति न विकल्पयति । न बुद्धक्षेत्रपरिशुद्धिं कल्पयति न विकल्पयति । न श्रावकसंपदं कल्पयति न विकल्पयति । न प्रत्येकबुद्धसंपदं कल्पयति न विकल्पयति । न बोधिसत्त्वसंपदं कल्पयति न विकल्पयति । तत्कस्माद्धेतोः ? कल्पनाया सुविक्रान्तविक्रामिन् सत्या विकल्पो भवति । यत्र पुनः सुविक्रान्तविक्रामिन् कल्पना नास्ति, न तत्र विकल्पना । सर्वबालपृथग्जना हि सुविक्रान्तविक्रामिन् कल्पनासमुत्थिताः । तेषां सञ्ज्ञा विकल्पसमुत्थिता. । ते कल्पयन्ति विकल्पयन्ति च । कल्पनेति सुविक्रान्तविक्रामिन् एष एकोऽन्तः, विकल्पनेति द्वितीयोऽन्तः । यत्र नास्ति कल्पो वा विकल्पो [ वा ], तत्र नास्ति अन्तो वा मध्यं वा । मध्यमिति सुविक्रान्तविक्रामिन् कल्पयतः स एवान्तो भवति । यावत्कल्पना, तावद्विकल्पना । नास्त्यत्र विकल्पनासमुच्छेदः । यत्र पुनः सुविक्रान्तविक्रामिन् न कल्पना न विकल्पना, तत्र कल्पसमुच्छेदः । कल्पसमुच्छेद इति सुविक्रान्तविक्रामिन् नात्र कस्यचिच्छेदः । तत्कस्माद्धेतोः ? अन्तो हि सुविक्रान्तविक्रामिन् कल्पो विकल्पो विकल्पसमुत्थितः । तेषां यो व्युपशमः, सोऽविपर्यासः । योऽविपर्यासः, न तत्र कश्चिच्छेदः । समुच्छेद इति सुविक्रान्तविक्रामिन् दुःखसमुच्छेदस्यैतदधिवचनम् । न च दुःखस्य कश्चित्समुच्छेदः । स्याद्दुःखसमुच्छेदः, यदि दुःखस्य काचित्परिनिष्पत्तिः स्यात् । अपरिनिष्पत्तिदर्शनमेतत् दुःखसमुच्छेद इति । दुःखपरिज्ञानमेतत्, यदिदं दुःखसमुच्छेद इति । यो दुःखं नैव कल्पयति न विकल्पयति, अयं दुःखव्युपशमः, अयं दुःखस्यानुत्पादोऽप्रादुर्भावः । स एवं पश्यन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न कंचिद्धर्मं कल्पयति न विकल्पयति । इयं सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्व[कल्प][1]विकल्पपरिज्ञा प्रज्ञापारमितायां चरतः । एवं चरतः सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य प्रज्ञापारमिताभावना परिपूरिं गच्छति । न चास्य मारः पापीयानन्तरायस्थितो भवति, न च मारपर्षत् । उत्पन्नोत्पन्नानि च मारकर्माणि बुध्यते । न चोत्पन्नोत्पन्नानां मारकर्मणां[2] वशं गच्छति । मारस्य च पापीयसः पराजयं करोति ध्यामीकरोति च । एवमल्पपक्षीकरोति[3] विगतभयभैरवश्च भवति । न च मारैराक्रमणीयो भवति । प्रस्रब्धानि चास्य संभवन्ति सर्वाण्यपायगमनानि । पिथिताश्च भवन्ति कुमार्गाः । सर्वौघोत्तीर्णश्च भवति, विगतमोहान्धकारश्च भवति, प्रतिलब्धचक्षुरालोकभूतश्च भवति सर्वसत्त्वानाम्, स्थितश्च भवत्यनुच्छेदाय बुद्धवंशस्य, प्रतिलब्धमार्गश्च भवति मार्गसमतायाम्, अनुकम्प-

H 99

---

१ Ms om °कल्प,° which is supplied from C and T   २ H °कर्माणा.
३ Ms and Matsumoto अल्पपक्षविगत°, our reading is adopted by H.

[क]¹श्च भवति सर्वसत्त्वानाम्, विशुद्ध² चक्षुर्भवति वर्णेषु, वीर्यसंपन्नश्च भवत्यकुसीदः, क्षान्तिबलप्रतिलब्धश्च भवत्यव्यापन्नचित्तः, ध्यायी च भवत्यनिश्रितध्यायी, प्रतिलब्धप्रज्ञश्च भवति निर्वेधिकप्रज्ञासमन्वागतः, विगतकौकृत्यश्च भवति अपगतनीवरणः, विसयुक्तश्च भवति सर्वमारपाशैः, छिन्नबन्धनश्च भवति सर्वतृष्णाजालवियोगात्, उपस्थितस्मृतिश्च भवत्यसप्र- H 100 मोषधर्मतया, विशुद्धशीलश्च भवति शीलविशुद्धिपारमिताप्राप्तः, परमगुणप्रतिष्ठितश्च भवति सर्वदोषनिर्घाताय, प्रज्ञाबलाधानप्राप्तश्च भवत्यप्रकम्प्यतया, अनाक्षिप्तश्च भवति सर्वमारै³-परवादिभिः, अपरिहीणधर्मा च भवति सर्वधर्मविशुद्धिप्राप्ततया, विशारदश्च भवति सर्वधर्मदेशनायाम्, अमङ्कुश्च भवति पर्षदुपसक्रमणाय, अनागृहीतश्च भवति मुक्तत्यागो धर्मदानम् (?), प्रतिविशोधितमार्गश्च भवति मार्गसमतया, विभावितभावनश्च भवति कुमार्गा⁴-परिज्ञतया, वासितवासनश्च भवति विशुद्धधर्मतया, शोधितशोधनश्च भवति विशुद्धप्रज्ञतया, गम्भीरप्रज्ञश्च भवति सागरोपमतया, दुरवगाहश्च भवति अस्तम्भिततया, अप्रमेयश्च भवति धर्मसागराप्रमेयतया । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः एभिश्चान्यैश्च⁵ गुणैः समन्वागतो भवति येषा गुणाना न पर्यन्त शक्योऽधिगन्तुम् ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्व. एव प्रज्ञापारमिताया चरन् नेन्द्रियविकलो भवति । स न रूपविकलो भवति, न भोगविकलो भवति, न परिवारविकलो भवति, न जातिविकलो भवति, न कुलविकलो भवति, न देशविकलो भवति, न च प्रत्यन्तेषु जनपदेषूपपद्यते, न चाक्षणप्राप्तो भवति, न चापरिशुद्धैः सत्त्वैरपरिशुद्धकर्मान्तैः ससर्गजातो भवति, न च स्वचित्त हापयति, न च प्रज्ञाया हीयते । स यान् धर्मान् परतः शृणोति, तान् सर्वधर्मसमताया सस्यन्दयति, स्थितश्च भवति बुद्धवशस्य सर्वज्ञतावशस्यानुपच्छेदाय । स आलोकलब्धश्च भवति बुद्धधर्मेषु, अत्यासन्नश्च भवति सर्वज्ञतायाम् । त सचेन्मारः पापीयान् उपसक्रामति विहेठनार्थम्, स तन्मारपर्षद भस्मीकरोति छिन्नप्रतिभा⁶नाम्, सर्वांश्च मारपाशांश्छिनत्ति, सर्वैर्मारकायिकैर्मारकोटिभिश्चाधृष्यो भवति । ततो मारा भीतास्त्रस्ताः H 101 पलायन्ते । एव च मारस्य पापीयसो भवति—अतिक्रान्तविषयोऽय मम, नायं मम भूयो विषये चरति, नाय मम भूयो विषये स्थितः, नाय मम भूयो विषयमाक्रमिष्यतीति, अन्याश्च सत्त्वान् मम विषयान्मोचयिष्यतीति, उत्तारयिष्यतीति । तत्र मारः पापीयान् शोचति क्रन्दति परिदेवते—अल्पपक्षीकरिष्यति अय बोधिसत्त्वो मामिति । दौर्बल्य चास्य विशति, दुःखितश्च भवति दुर्मना विप्रतिसारी । यस्मिंश्च समये सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमिताया चरति, प्रज्ञापारमिता भावयति, प्रज्ञापारमिताया योगमापद्यते, सर्वमारभवनानि तस्मिन् समये ध्यामीभवन्ति अल्पतेजस्कानि, माराश्च पापीयासो दुःखिता दुर्मनसो भवन्ति शोकशल्यसमर्पिता महाशोकशल्यविद्धाः—अतिवाहयिष्यत्यय बत सत्त्वानस्मद्विषयात्, उत्तार-

१ H om °क°. २ H °विशुद्ध° ३ C T om. °मार° ४ H कुमार्गपरि° against Ms ५ H om. च. ६ H प्रतिभानम्

यिष्यत्यय सत्त्वानस्मद्विषयात्, परिमोचयिष्यत्ययं सत्त्वानस्मद्विषयात्, अभ्युद्धरिष्यत्ययं बत सत्त्वानस्मद्विषयात्, छेदयिष्यत्ययं सत्त्वान् मारपाशात्, समुत्क्षेप्स्यत्यय सत्त्वान् कामपङ्क-लग्नान्, मोचयिष्यत्यय सत्त्वान् दृष्टिजालेभ्यः, उत्तारयिष्यत्यय सत्त्वान् नीवरणपथात्, प्रतिष्ठापयिष्यत्यय सत्त्वान् सन्मार्गे, उत्तारयिष्यत्यय सत्त्वान् दृष्टिगहनादिति। इममर्थवशं सुविक्रान्तविक्रामिन् सपश्यन्तस्ते मारा दुःखिता भवन्ति दुर्मनसः शोकशल्यविद्धाः। तद्यथापि नाम सुविक्रान्तविक्रामिन् पुरुषो महता धनस्कन्धेन विपन्नेन दुःखितो वेदनात्त(र्त)मना महता दुःखदौर्मनस्येन समन्वागतः। एवमेव मार पापीयान् दुःखितो भवति दुर्मना विप्रतिसारी शोकशल्यविद्धः। न च स्वके आसने रमते, यस्मिन् समये बोधिसत्त्वः प्रज्ञापारमितायां चरति, प्रज्ञापारमितां भावयति, प्रज्ञापारमितायां योगमापद्यते। पुनरपरं सुविक्रान्तविक्रामिन् ते माराः पापीयांस एकतः समागम्य चिन्तयन्ति—कथं करिष्यामः, किं नु करिष्यामः। कथंकथाशोकशल्यविद्धा भवन्ति। ते कथंकथाशोकशल्यविद्धा भूत्वा उपसंक्रामन्ति बोधि-सत्त्वस्यावतारगवेषिणः प्रज्ञापारमितायां चरतः। तत्र बोधिसत्त्वस्य रोमापि न हृष्यति, न[1] पुनः कायस्यान्यथात्वं भविष्यति चित्तस्यान्यथात्वं वा। विगतभयरोमहर्षश्च मारः पापीया-निति संबुध्यते। बुद्ध्वा चाधिष्ठानं करोति। ततो मारः पापीयानधिष्ठितो दुर्बलो भवति लीनचित्तो भयमापन्नः। न चास्य शक्तोत्यवतारं लब्धुम्। तस्यैव भवति—अहमेवास्य न शक्तोऽवतारं लब्धुम्, किं पुनर्मम पर्षत्, किं पुनर्यदन्येऽधिष्ठास्यन्ति। ततस्ते मारा[ध्वस्ता[2] उत्साहप]रिहीणाः स्वभवनानि गत्वा दुःखदौर्मनस्यजाताः प्रध्यायन्तस्तिष्ठन्ति, न च शक्नुवन्ति बोधिसत्त्वस्य प्रज्ञापारमितायां चरतोऽच्छटामात्रमपि चित्तस्य मोहनं कर्तुम्, प्रागेवास्यान्तरायम्। ईदृ(द)शं सुविक्रान्तविक्रामिन् प्रज्ञापारमितायां चरतो [बोधिसत्त्वस्य] एवंरूपं प्रज्ञाबलाधिष्ठानं भवति, एवंरूपेण च प्रज्ञाबलाधिष्ठानेन समन्वागतो भवति। सचेद्ये सर्वस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, ते सर्वे मारा भवेयुः, ते सर्वे महतीभिर्मारपर्षद्भिः सार्धं तं बोधिसत्त्वं प्रज्ञापारमितायां चरन्तमुपसंक्रमेयुर्विहेठाभिप्रायाः। तेऽपि सर्वे सुविक्रान्तविक्रामिन् माराः पापीयांसो न प्रभवन्त्यन्तरायं कर्तुम्। तत्कस्माद्धेतोः? तथारूपेण हि प्रज्ञाबलाधानेन प्रज्ञाखड्गेन प्रज्ञाशस्त्रेण तस्मिन् समये बोधिसत्त्वः समन्वागतो भवति। अचिन्त्यया सुविक्रान्तविक्रामिन् प्रज्ञया अप्रमेयया असमसमया बोधिसत्त्वस्तदा समन्वागतो भवति। तेन तं न प्रतिबलो भवति मारः पापीयानभिभवितुम्। महाशस्त्रं ह्येतत्सुविक्रान्तविक्रामिन् यदुत प्रज्ञाशस्त्रम्, महाखड्गो ह्येष सुविक्रान्तविक्रामिन् यदुत प्रज्ञाखड्गः, यत्रागतिरविषयो माराणां पापीयसाम्, अभूमिर्माराणां पापीयसाम्। येऽपि तावत्सुविक्रान्तविक्रामिन् बाह्या ऋषयश्चतुर्णां ध्यानानां लाभिनः, चतसृणां वा आरूप्य-समापत्तीनाम्, ये मारविषयं कामधातुमतिक्रम्य ब्रह्मलोके चोपपद्यन्ते चतुर्षु च आरूप्येषु

H 102

१ C and T suggest कि for न which is better  २ Ms illegible, our reading is based on C and T

H 103 सदेवनिकायेषु, तेषामपि तावदगतिरविषय. यदुत एवरूपाया प्रज्ञायाम्, या बोधिसत्त्वस्य प्रज्ञा प्राकृता, किं पुनर्या प्रज्ञापारमिताया चरतः प्रज्ञा, कः पुनर्वादो माराणा पापीयसां येषामविषयो रूपारूप्यधातौ। बलाधानप्राप्तः सुविक्रान्तविक्रामिन् बोधिसत्त्वस्तस्मिन् समये भवति महाबलाधानसमन्वागतो यदुत प्रज्ञापारमिताबलेन। ये खलु केचित् सुविक्रान्तविक्रामिन् प्रज्ञापारमिताबलेन समन्वागता भवन्ति तीक्ष्णेन प्रज्ञाशस्त्रेण, अधृष्यास्ते भवन्ति मारैः पापीयोभिरनाक्रमणीया.। ये केचित् सुविक्रान्तविक्रामिन् प्रज्ञाबलेन समन्वागता भवन्ति तीक्ष्णेन च प्रज्ञाशस्त्रेण, न ते क्वचिन्निश्रय कुर्वन्ति, अनिश्रितास्ते भवन्ति। तत्कस्माद्धेतो॰? निश्रये हि सुविक्रान्तविक्रामिन् सति चलित भवति, चलिते सति स्पन्दना[1] भवति, स्पन्दनाया सत्या प्रपञ्चना भवति। येषा केषाचित् सुविक्रान्तविक्रामिन् निश्रयश्च भवति चलित च भवति स्पन्दित[1] च भवति प्रपञ्चना [च]भवति, ते मारस्य पापीयसो वशगता भवन्ति, अपरिमुक्ताश्च भवन्ति ते मारविषयात्। येऽपि तावत् सुविक्रान्तविक्रामिन् यावद् भवाग्रोपपन्नाः सत्त्वा निश्रिता निश्रयनिबद्धा निश्रयाध्यासिता, तेऽप्यागमिष्यन्ति पुनर्मारविषयम्। अपरिमुक्ताश्च ते मारपाशेभ्यः, अनुगतसूत्राश्च ते मारपाशैः। तद्यथा उद्रकश्च रामपुत्र आराडश्च कालाम., ये वा पुनरन्येऽपि केचिन्निश्रिता आरूप्येषु निश्रयविनिबद्धा निश्रयाध्याश्रिताः। बोधिसत्त्वस्तु पुनः सुविक्रान्तविक्रामिन् प्रज्ञापारमिताया चरन् प्रज्ञापारमिता भावयन् प्रज्ञापारमिताया योगमापद्यमानः न क्वचिन्निश्रय करोति, अनिश्रितो भवति सर्वत्र। यस्मिन् खलु पुनः समये सुविक्रान्तविक्रामिन् बोधिसत्त्व. प्रज्ञापारमिताभावनायोगमनुयुक्तो विहरति, तस्मिन् समये न रूपनिश्रितो भवति, न वेदनासज्ञासंस्कारविज्ञाननिश्रितो भवति, न विपर्यासनीवरणदृष्टिगतनिश्रितो भवति, न नामरूपनिश्रितो भवति, न कामरूपारूप्यधातुनिश्रितो भवति, नात्मसत्त्वसज्ञानिश्रितो भवति, न जीवपुद्गलधात्वायतन-
H 104 निश्रितो भवति, न पृथिव्यप्तेजोवाय्वाकाशविज्ञानेनैवसज्ञानासज्ञायतननिश्रितो भवति, न तृष्णानिश्रितो भवति, न भवतृष्णानिश्रितो भवति, नोच्छेदतृष्णानिश्रितो भवति, नान्तानन्तनिश्रितो भवति, न प्रतीत्यसमुत्पादनिश्रितो भवति, न दानमात्सर्यनिश्रितो भवति, न शीलदौःशील्यनिश्रितो भवति, न क्षान्तिव्यापादनिश्रितो भवति, न वीर्यकौसीद्यनिश्रितो भवति, न ध्यानविक्षेपनिश्रितो भवति, न प्रज्ञादौष्प्रज्ञ्यनिश्रितो भवति, नाविपर्याससम्यक्प्रहाणाप्रमाणस्मृत्युपस्थाननिश्रितो भवति, नेन्द्रियबलबोध्यङ्गसमाधिसमापत्तिनिश्रितो भवति, न दुःखसमुदयनिरोधमार्गनिश्रितो भवति, नानुत्पादज्ञानक्षयज्ञानानभिसंस्कारज्ञाननिश्रितो भवति, न विद्याविमुक्तिनिश्रितो भवति, न विमुक्तिज्ञानदर्शननिश्रितो भवति, न पृथग्जनश्रावकप्रत्येकबुद्धभूमिनिश्रितो भवति, न पृथग्जनश्रावकप्रत्येकबुद्धसम्यक्संबुद्धधर्मनिश्रितो भवति, न नीवरणनिश्रितो भवति, नातीतानागतप्रत्युत्पन्नासङ्गतानिश्रितो भवति, न त्र्यध्वसमतानिश्रितो भवति, न बुद्धज्ञानबलवैशारद्यनिश्रितो भवति, न सर्वज्ञज्ञाननिश्रितो

1 H स्पन्दना, स्पन्दितं.

H 105

भवति, न लक्षणसंपत्तिनिश्रितो भवति, न बुद्धक्षेत्रसपन्निश्रितो भवति, न श्रावकव्यूहसपन्निश्रितो भवति, न बोधिसत्त्वव्यूहसपन्निश्रितो भवति । स सर्वधर्मैश्चानिश्रितो न चलति न सचलति, निश्रयाश्च तेन सर्वे विभाविता भवन्ति । अनिश्रितश्च स मार्गमपि नाभिनिविशते, अनिश्रय न मन्यते । सोऽय निश्रय इति नोपलभते, इह निश्रय इति नोपलभते, अस्य निश्रय इति नोपलभते न मन्यते, अस्मान्निश्रय इति नोपलभते न मन्यते । सर्वनिश्रयानमन्यमानोऽनुपलभमानोऽनभिनिविशमानः न क्वचिन्निश्रयमुपैति नोपदिशति नाभिनन्दति नाध्यवसाय तिष्ठति । स सर्वनिश्रयानुपलिप्तोऽसक्त· सर्वधर्मनिश्रयविशुद्धिमनुप्राप्नोति । इद सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वधर्मनिश्रयविशुद्धिज्ञानदर्शन प्रज्ञापारमिताया चरत., येनास्य मारा पापीयासोऽवतार न लभन्ते, अनाक्रमणीयश्च भवति सर्वमारै. पापीयोभिः, अभिभवति च मारान् पापीयस इति ॥

आर्यप्रज्ञापारमिताया चर्यापरिवर्त. षष्ठः ॥



## ७ अनुशंसापरिवर्तः सप्तमः ।

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्व आदित एव अनुत्तरायां सम्यक्सबोधावुत्पन्ने चित्ते बहुकुशलमूलसंभारसमुदागतश्च भवति, बहुबुद्धपर्युपासितश्च भवति, बहुबुद्धपरिपृच्छकश्च भवति, कृताधिकारश्च भवति बुद्धाना भगवताम्, अध्याशयसंपन्नश्च भवति, दानसविभागरतश्च भवति, शीलविशुद्धिगुरुकश्च भवति, क्षान्तिसौरत्यसंपन्नश्च भवति, वीर्यवाश्च भवति, वीर्यविशुद्धिगुरुकः, ध्यानविशुद्धिगुरुकश्च भवति, प्रज्ञावाश्च भवति, प्रज्ञाविशुद्धिगुरुक । सोऽनुत्तराया सम्यक्सबोधौ चित्तमुत्पाद्य प्रज्ञापारमितायामभियुक्तो मारान् H 106 पापीयसोऽवितिष्ठति तेन प्रज्ञाबलेन ज्ञानबलेन च—यथा मे माराः पापीयासोऽवतार न लभेरन्, मा च मे विहेठा कुर्यु. । तस्याधिष्ठाने मारा[1] अवतार न लभन्ते, न चास्यान्तरायाय प्रत्युपस्थिता भवन्ति, नापि चित्तमुत्पादयन्ति—किमिति वयमस्य बोधिसत्त्वस्य अवतार गवेषामहे, विहेठना कुर्यामह इति । सचेत्तेषा चित्तमुत्पद्यतेऽन्तरायाय, ततो महाव्यसनमात्मन सजानते, भय च तेषा महत्प्रत्युपस्थित भवति, सविग्नाश्च भवन्ति—मा वय सर्वेण सर्वं न भविष्याम इति। ते तद्विहेठनाचित्त पुनरपि प्रतिसहरन्ति। पुनरपि तेषा ते चित्तोत्पादा अन्तर्धीयन्ते। अनेनापि सुविक्रान्तविक्रामिन् पर्यायेण बोधिसत्त्वस्य मारा' पापीयासोऽन्तरायाय प्रत्युपस्थिता अवतार न लभन्ते ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिताया भाष्यमाणाया देश्यमानाया छन्दश्च अध्याशयश्च गौरव च चित्रीकारश्च शास्तृसज्ञा च उत्पादिता भवति । न च षट्पारमितासयुक्ताया कथाया भाष्यमाणाया काङ्क्षा वा विमतिर्वा विचिकित्सा वा उत्पादिता भवति, नापि गम्भीरान् धर्मान् श्रुत्वा काङ्क्षायितत्व वा धन्धायितत्व[2] वा विचिकित्सायितत्व वा उत्पादित भवति, नाप्यनेन जातु धर्मव्यसनसवर्तनीय कर्मोपचित भवति, नाप्यनेन जातु धर्मव्यसनसवर्तनीय चित्तमुत्पादित भवति । अन्ये च बहवः सत्त्वा' प्रज्ञापारमिताया समादापिता भवन्ति, सर्वासु षट्पारमितासु सहर्षिता भवन्ति समुत्तेजिता.। तस्य पूर्वाशयचित्तविशुद्धितया पूर्वाशयासक्लिष्टतया न माराः पापीयासोऽन्तरायाय प्रत्युपस्थिता भवन्ति, नापि तस्य माराः पापीयासोऽवतार लभन्ते । सर्वाणि च मारकर्माण्युत्पन्नोत्पन्नानि बुध्यते । न च मारकर्मभिः सह्रियते, न च मारकर्मवशगो भवति । अनेनापि सुविक्रान्तविक्रामिन् पर्यायेण बोधिसत्त्वस्य माराः पापीयासो न विहेठाय प्रत्युपस्थिता भवन्ति ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्व' प्रज्ञापारमिताया चरन् न रूपयोगनिमित्ते चरति, न रूपविसयोगनिमित्ते चरति, न वेदनासज्ञासस्कारविज्ञानयोगनिमित्ते चरति, न H 107 वेदनासज्ञासस्कारविज्ञानविसयोगनिमित्ते चरति। न रूपलक्षणयोगनिमित्ते चरति, न रूपलक्षणविसयोगनिमित्ते चरति, न वेदनासंज्ञासस्कारविज्ञानलक्षणसयोगनिमित्ते चरति। न रूपविशुद्धिनिमित्ते चरति, न रूपविशुद्ध्यनिमित्ते चरति, न वेदनासज्ञासंस्कारविज्ञान-

१ H मारावतार. २ H बन्धायितत्व.

विशुद्धिनिमित्ते चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानविशुद्धिनिमित्ते चरति। न रूपारम्बणविशुद्धिनिमित्ते चरति, न रूपारम्बणविशुद्ध्यनिमित्ते चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणविशुद्धिनिमित्ते चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणविशुद्ध्यनिमित्ते चरति। न रूपसभवविशुद्धिसंयोगे चरति, न रूपसभवविशुद्धिविसंयोगे चरति। न वेदना-न संज्ञा-न संस्कार-न विज्ञानसभवविशुद्धिसंयोगे चरति, न विज्ञानसभवविशुद्धिविसंयोगे चरति। न रूपारम्बणस्वभावविशुद्धिसंयोगे चरति, न रूपारम्बणस्वभावविशुद्धिविसंयोगे चरति। न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणस्वभावविशुद्धिसंयोगे चरति, न विज्ञानारम्बणस्वभावविशुद्धिविसंयोगे चरति। न रूपप्रकृतिविशुद्धौ चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानप्रकृतिविशुद्धौ चरति। न रूपारम्बणप्रकृतिविशुद्धिसंयोगे चरति, न रूपारम्बणप्रकृतिविशुद्धिविसंयोगे चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणप्रकृतिविशुद्धिविसंयोगे चरति। न रूपातीतानागतप्रत्युत्पन्नविशुद्धौ चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानातीतानागतप्रत्युत्पन्नविशुद्धौ चरति। न रूपारम्बणातीतानागतप्रत्युत्पन्नविशुद्धौ चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणातीतानागतप्रत्युत्पन्नविशुद्धौ चरति। न रूपातीतानागतप्रत्युत्पन्नविशुद्धिसंयोगे चरति, न रूपातीतानागतप्रत्युत्पन्नविशुद्धिविसंयोगे चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानातीतानागतप्रत्युत्पन्नविशुद्धिसंयोगे चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानातीतानागतप्रत्युत्पन्नविशुद्धिविसंयोगे चरति। न रूपारम्बणातीतानागतप्रत्युत्पन्नविशुद्धिसंयोगे चरति, न रूपारम्बणातीतानागतप्रत्युत्पन्नविशुद्धिविसंयोगे न वेदना-न संज्ञा-न संस्कार-न H 108 विज्ञानारम्बणातीतानागतप्रत्युत्पन्नविशुद्धिसंयोगे चरति, न वेदना-न संज्ञा-न संस्कार-न विज्ञानारम्बणातीतानागतप्रत्युत्पन्नविशुद्धिविसंयोगे चरति। एवं चरन् न रूपेण संयुज्यते न विसंयुज्यते। न वेदनासंज्ञासंस्कारविज्ञानैः संयुज्यते न विसंयुज्यते। न नामरूपेण संयुज्यते न विसंयुज्यते। न विपर्यासदृष्टिगतैः संयुज्यते न विसंयुज्यते। न कामरूपारूप्यधातुभिः संयुज्यते न विसंयुज्यते। न रागद्वेषमोहैः संयुज्यते न विसंयुज्यते। नात्मसत्त्वजीवपुद्गलभावाभावसंज्ञया संयुज्यते न विसंयुज्यते। नोच्छेदशाश्वतेन संयुज्यते न विसंयुज्यते। न धात्वायतनैः संयुज्यते न विसंयुज्यते। न पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातुभिः संयुज्यते न विसंयुज्यते। न प्रतीत्यसमुत्पादेन संयुज्यते न विसंयुज्यते। न पञ्चभिः कामगुणैः संयुज्येत न विसंयुज्यते। न संक्लेशव्यवदानेन संयुज्यते न विसंयुज्यते। न दानमात्सर्येण संयुज्यते न विसंयुज्यते। न शीलदौःशील्येन संयुज्यते न विसंयुज्यते। न क्षान्तिव्यापादेन संयुज्यते न विसंयुज्यते। न वीर्यकौसीद्येन संयुज्यते न विसंयुज्यते। न ध्यानविक्षेपेण संयुज्यते न विसंयुज्यते। न प्रज्ञादौष्प्रज्ञ्यचित्ततया संयुज्यते न विसंयुज्यते। नाविपर्याससम्यक्प्रहाणस्मृत्युपस्थानर्द्धिपादैः संयुज्यते न विसंयुज्यते। नेन्द्रियबलबोध्यङ्गसमाधि- H 109 समापत्तिभिः संयुज्यते न विसंयुज्यते। न दुःखसमुदयनिरोधमार्गैः संयुज्यते न

विसंयुज्यते। न शमथविदर्शनाभ्या सयुज्यते न विसयुज्यते। न विद्याविमुक्तिभ्या सयुज्यते न विसयुज्यते। न विमुक्तिज्ञानदर्शनेन सयुज्यते न विसयुज्यते। नाभिज्ञाभि· सयुज्यते न विसयुज्यते। न पृथग्जनश्रावकप्रत्येकबुद्धभूमिभि. सयुज्यते न विसयुज्यते। नानुत्पादज्ञानक्षयज्ञानाभिसस्कारज्ञानै सयुज्यते न विसयुज्यते। न ससारनिर्वाणाभ्या सयुज्यते न विसयुज्यते। न बुद्धज्ञानबलवैशारद्यै. सयुज्यते न विसयुज्यते। न लक्षण-सपदा सयुज्यते न विसयुज्यते। न बुद्धक्षेत्रव्यूहै· सयुज्यते न विसयुज्यते। न दुःख-समुदयनिरोधमार्गै. सयुज्यते न विसयुज्यते। न श्रावकप्रत्येकबुद्धबोधिसत्त्वसपदा सयुज्यते न विसयुज्यते। तत्कस्माद्धेतोः? सर्वधर्मा हि सुविक्रान्तविक्रामिन् न सयुक्ता न विसयुक्ताः। तत्कस्माद्धेतो.? न हि सुविक्रान्तविक्रामिन् सर्वधर्मा. सयोगेन प्रत्युप-स्थिता न विसयोगेन। सयोग इति हि सुविक्रान्तविक्रामिन् शाश्वतपदमेतत्, विसयोग इत्युच्छेद एष.। सर्वधर्माणा हि सुविक्रान्तविक्रामिन् न कश्चिदवबोध·, येन सयुज्येरन् वा विसयुज्येरन् वा। सर्वधर्माणा हि सुविक्रान्तविक्रामिन् न कश्चिन्सयोगाय प्रत्युपस्थितो न विसयोगाय। सचेत् सुविक्रान्तविक्रामिन् धर्माणा कश्चित्सयोजयिता वा विसयोजयिता वा अभविष्यत्, लब्धोऽभविष्यद्धर्माणा कारको वा कारयिता वा, उत्थापको वा उत्थापयिता वा, H 110 समुत्थापको वा समुत्थापयिता [वा], वेदको वा वेदयिता वा, ज्ञाता वा ज्ञापयिता वा, संयोजको वा विसयोजको वा। प्रज्ञपयेत्तथागत.-अयमसौ धर्माणा कारको वा कारयिता वा, उत्था-पको वा उत्थापयिता वा, समुत्थापको वा समुत्थापयिता वा, वेदको वा वेदयिता वा, ज्ञाता वा ज्ञापयिता वा, सयोजको वा विसयोजको वा। यस्मात्तर्हि विक्रान्तविक्रामिन् सर्वधर्माणा न कश्चित्सयोगाय प्रत्युपस्थितो न विसयोगाय, तस्मान्न कश्चिद्धर्माणा कारको वा कारयिता वा, उत्थापको वा उत्थापयिता वा, समुत्थापको वा समुत्थापयिता वा, वेदको वा वेदयिता वा, ज्ञाता वा ज्ञापयिता वा, सयोजको वा विसयोजको वा समुपलभ्यते। अनुपलभ्यमाने न तथागत प्रज्ञपयति। विपर्याससमुत्थिता हि सुविक्रान्तविक्रामिन् सर्वधर्माः। न च विपर्यासः केनचित्सयुक्तो वा विसयुक्तो वा। तत्कस्माद्धेतो.? न हि सुविक्रान्तविक्रामिन् विपर्यासस्य वस्तूपलभ्यते, नापि सभव उपलभ्यते। तत्कस्माद्धेतो·? अभूतो हि सुविक्रान्त-विक्रामिन् विपर्यास, वितथो मृषाधर्मस्तुच्छ.। न चात्र कश्चिद्धर्म उपलभ्यते योऽसौ विप-र्यास इत्युच्येत। विपर्यास इति सुविक्रान्तविक्रामिन् विप्रतिलम्भ एष सत्त्वानाम्, उल्लाप-नैषा सत्त्वानाम्, अभूतपरिकल्प एष सत्त्वानाम्, मन्यना स्पन्दना प्रपञ्चनैषा सत्त्वानाम्। तद्यथापि नाम सुविक्रान्तविक्रामिन् बालदारको रिक्तेन मुष्टिनोल्लापित. सजानाति भूतमिति, एवमेव सुविक्रान्तविक्रामिन् बालपृथग्जना उच्छेदेन विपर्यासेनोल्लापिता मूढा एव मन्यन्ते—भूतमेतदिति। ते अभूते भूतसज्ञिनो विपर्यासग्रस्ता दुर्मोच्या भवन्ति तस्माद्विपर्यासात्। एव H 111 सुविक्रान्तविक्रामिन् सर्वबालपृथग्जना असयुक्ता अविसंयुक्ता बन्धनबद्धाः सधावन्ति। ते

१ Ms नाप्यसभव.

सयोग इति मन्यन्ते, ते सयोग इत्युपलभन्ते, सयोग इति स्थापितं पश्यन्ति, संयोग इत्यभिनिविशन्ते। यत्र सुविक्रान्तविक्रामिन् सयोगः, तत्र विसयोगः। यः पुनः सयोग नोपलभते न मन्यते नाभिनिविशते, न विसयोगमपि स मन्यते, सोऽत्यन्तविमुक्तः। सचेद्विसयोग मन्येत वा उपलभेत वा अभिनिविशेत वा, सयुक्त एवासौ भवेन्न विसयुक्तः। तत्र सुविक्रान्तविक्रामिन् बोधिसत्त्व इममर्थवश सपश्यन् न केनचिद्धर्मेण सयुज्यते न विसयुज्यते, नापि कस्यचिद्धर्मस्य सयोगाय प्रत्युपस्थितो भवति न विसयोगाय। इय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य महासत्त्वस्य सयोगविसयोगपरिज्ञा प्रज्ञापारमिताया चरत। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्व. क्षिप्र सर्वधर्माणा पारमधिगच्छति॥

(पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमिताया चरन् न रूपासङ्गताया चरति, न वेदना-न सज्ञा-न सस्कार-न विज्ञानासङ्गताया चरति। न रूपासङ्गविशुद्धौ चरति, न वेदना-न सज्ञा-न सस्कार-न विज्ञानासङ्गविशुद्धौ चरति। न रूपासङ्गारम्बणे चरति, न वेदना-न सज्ञा-न सस्कार-न विज्ञानासङ्गारम्बणे चरति। न रूपासङ्गतासयोगे चरति, न रूपासङ्गताविसयोगे चरति। न वेदना-न सज्ञा-न सस्कार-न विज्ञानासङ्गतासयोगे चरति, न विज्ञानासङ्गताविसयोगे चरति। न रूपासङ्गताविशुद्धिसयोगे चरति, न रूपासङ्गताविशुद्धिविसयोगे चरति। न वेदना-न सज्ञा-न सस्कार-न विज्ञानासङ्गताविशुद्धिसयोगे चरति, न विज्ञानासङ्गताविशुद्धिविसयोगे चरति। न रूपारम्बणविशुद्धिसयोगे चरति, न रूपारम्बणविशुद्धिविसयोगे चरति। न वेदना-न सज्ञा-न सस्कार-न विज्ञानारम्बणविशुद्धिसयोगे चरति, न विज्ञानारम्बणविशुद्धिविसयोगे चरति। तत्कस्माद्धेतो.[१] सर्वाणि H 112
ह्येतानि सुविक्रान्तविक्रामिन् इञ्जितानि निमित्तानि स्पन्दितानि चरितानि विचरितानि बोधिसत्त्वेन परिज्ञातानि। स न क्वचिद्भूयश्चरति विचरति॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमिताया चरन् न रूपातीतानागतप्रत्युत्पन्नसङ्गताया चरति, न रूपातीतागतप्रत्युत्पन्नासङ्गताया चरति। न वेदना—न सज्ञा—न सस्कार-न विज्ञानातीतानागतप्रत्युत्पन्नसङ्गताया चरति, न विज्ञानातीतानागतप्रत्युत्पन्नासङ्गताया चरति। न रूपातीतानागतप्रत्युत्पन्नविशुद्धौ चरति, न रूपातीतानागतप्रत्युत्पन्नाविशुद्धौ चरति। न वेदना—न सज्ञा—न सस्कार—न विज्ञानातीतानागतप्रत्युत्पन्नविशुद्धौ चरति, न विज्ञानातीतानागतप्रत्युत्पन्नाविशुद्धौ चरति। न रूपातीतानागतप्रत्युत्पन्नासङ्गारम्बणविशुद्धौ चरति, न रूपातीतानागतप्रत्युत्पन्नासङ्गारम्बणाविशुद्धौ चरति। न वेदना—न सज्ञा—न सस्कार—न विज्ञानातीतानागतप्रत्युत्पन्नासङ्गारम्बणविशुद्धौ चरति, न विज्ञानातीतानागतप्रत्युत्पन्नासङ्गारम्बणाविशुद्धौ चरति। तत्कस्माद्धेतोः? न हि सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमिताया चरश्चर्यां समनुपश्यति। अचर्येय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वचर्या। प्रज्ञाप्रवेशश्चैष प्रज्ञापारमितायां चरतः। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्र सर्वज्ञताधर्मपरिपूरिमधिगच्छति॥

१ C T मन्यितानि.

पुनरपरं सुविक्रान्तविक्रामिन् बोधिसत्त्व· प्रज्ञापारमितायां चरन् न रूप विवृतमिति चरति, न रूपमविवृतमिति चरति। न वेदना न संज्ञा न सस्कारा·। न विज्ञानं विवृत-
H 113 मिति चरति, न विज्ञानमविवृतमिति चरति। न रूप शान्तमिति चरति, न रूपमशान्त-मिति चरति। न वेदना न सज्ञा न सस्कारा·। न विज्ञान शान्तमिति चरति, न विज्ञानमशान्तमिति चरति। न रूप प्रकृतिविवृतमिति चरति, न रूप प्रकृत्यविवृतमिति चरति। न वेदना न सज्ञा न सस्कारा। न विज्ञान प्रकृतिविवृतमिति चरति, न विज्ञानं प्रकृत्यविवृतमिति चरति। न रूप प्रकृतिशान्तमिति अशान्तमिति चरति। न वेदना न सज्ञा न सस्कारा·। न विज्ञान [1]प्रकृतिशान्तमिति अशान्तमिति चरति। न रूपमतीतानागतप्रत्युत्पन्न प्रकृतिविविक्त वा प्रकृतिशान्त वा चरति। न रूपमतीतानागत-प्रत्युत्पन्न प्रकृत्यविविक्त वा प्रकृत्यशान्त वा चरति। न वेदना न संज्ञा न सस्कारा·। न विज्ञानमतीतानागतप्रत्युत्पन्न प्रकृतिविविक्त वा प्रकृतिशान्त वा चरति, न विज्ञानमतीता-नागतप्रत्युत्पन्न प्रकृत्यविविक्त वा प्रकृतिशान्त वा चरति। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्र सर्वज्ञताधर्मपरिपूरिमधिगच्छति ॥

पुनरपर सुविक्रान्तविक्रामिन् बोधिसत्त्वः प्रज्ञापारमिताया चरन् रूपं न मन्यते। एव न वेदनां न सज्ञा न सस्कारान्। न विज्ञान मन्यते। रूपविशुद्धिं न मन्यते, रूपारम्बणविशुद्धिं न मन्यते। एव वेदना सज्ञा सस्कारा·। विज्ञानविशुद्धिं न मन्यते, विज्ञानारम्बणविशुद्धिं न मन्यते ॥

पुनरपरं सुविक्रान्तविक्रामिन् बोधिसत्त्वः [[2]प्रज्ञापारमिताया चरन्] रूप नाभि-निविशते। एव वेदना सज्ञा सस्कारान्। विज्ञान नाभिनिविशते। रूपविशुद्धिं
H 114 नाभिनिविशते। एव वेदना–सज्ञा–सस्कारा·। विज्ञानविशुद्धिं नाभिनिविशते। रूपारम्बणविशुद्धिं नाभिनिविशते। एव वेदना–सज्ञा–सस्कारा। विज्ञानारम्बणविशुद्धिं नाभिनिविशते। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्र सर्वज्ञताधर्मपरिपूरिं गच्छति। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्व आसन्नो भवति दशाना तथा-गतबलानाम्, चतुर्णां तथागतवैशारद्यानाम्, अष्टादशानामावेणिकाना बुद्धधर्माणाम्, महामैत्र्या महाकरुणाया महामुदिताया महोपेक्षायाः। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्व आसन्नो भवति द्वात्रिंशता महापुरुषलक्षणानाम्। आसन्नो भवति सुवर्णवर्ण-च्छवितायाः। आसन्नो भवति तथागतानन्तप्रभताया·। आसन्नो भवति नागावलोकितस्य। आसन्नो भवत्यनवलोकितमूर्धतायाः। आसन्नो भवत्यतीतानागतप्रत्युत्पन्नासङ्गज्ञानदर्शनस्य। आसन्नो भवति तथागतानुवादानुशासनीप्रातिहार्यस्य। आसन्नो भवति अतीतानागतप्रत्यु-त्पन्नासङ्गज्ञानदर्शनव्याकरणस्य। एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्रं सर्व-

[1] Ms. om. प्रकृति° [2] Ms. om प्रज्ञापारमिताया चरन् which is supplied from C and T

बुद्धधर्मपरिपूरिमधिगच्छति। एवं चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्रं बुद्धक्षेत्रपरिशुद्धिमधिगच्छति। क्षिप्रं श्रावकबोधिसत्त्वव्यूहसंपदं परिगृह्णाति। एवं चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वो न रूपे प्रतिष्ठते, न वेदनासंज्ञासंस्कारविज्ञानेषु प्रतिष्ठते। न नामरूपे प्रतिष्ठते। न विपर्यासनीवरणदृष्टिगतेषु प्रतिष्ठते। न कामरूपारूप्यधातौ प्रतिष्ठते, नात्मधातौ, न सत्त्वधातौ प्रतिष्ठते। न पुद्गलजीवसंज्ञायां प्रतिष्ठते। न पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातौ प्रतिष्ठते। न धात्वायतनेषु प्रतिष्ठते। न संक्लेशव्यवदाने प्रतिष्ठते। H 115
न प्रतीत्यसमुत्पादे प्रतिष्ठते। न त्यागमात्सर्ये प्रतिष्ठते। न शीलदौःशील्ये प्रतिष्ठते। न क्षान्तिव्यापादे प्रतिष्ठते। न वीर्यकौसीद्ये प्रतिष्ठते। न ध्यानविक्षेपे प्रतिष्ठते। न प्रज्ञादौष्प्रज्ञ्ये प्रतिष्ठते। न स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गेषु प्रतिष्ठते। न ध्यानविमोक्षसमाधिसमापत्तिषु प्रतिष्ठते। न दुःखसमुदयनिरोधमार्गेषु प्रतिष्ठते। न क्षयानुत्पादाभिसंस्कारज्ञानेषु प्रतिष्ठते। न शमथविदर्शनायां प्रतिष्ठते। नाभिज्ञासु प्रतिष्ठते। न विद्याविमुक्तौ प्रतिष्ठते। न श्रावकप्रत्येकबुद्धसम्यक्संबुद्धभूमिषु प्रतिष्ठते। न पृथग्जनश्रावकप्रत्येकबुद्धधर्मेषु प्रतिष्ठते। न निर्वाणे प्रतिष्ठते। न बुद्धज्ञानबलवैशारद्येषु प्रतिष्ठते। नासङ्गज्ञाने प्रतिष्ठते। नातीतानागतप्रत्युत्पन्नज्ञानदर्शनेषु प्रतिष्ठते। न बुद्धक्षेत्रसंपदि प्रतिष्ठते। न श्रावकव्यूहसंपदि प्रतिष्ठते। न बोधिसत्त्वव्यूहसंपदि प्रतिष्ठते। तत्कस्माद्धेतोः? अप्रतिष्ठिता हि सुविक्रान्तविक्रामिन् सर्वधर्माः। न हि सुविक्रान्तविक्रामिन् सर्वधर्माणां प्रतिष्ठानं विद्यते। तत्कस्माद्धेतोः? सर्वधर्मा हि सुविक्रान्तविक्रामिन् अनालयाः। अनालयत्वान्न प्रतिष्ठन्ते। सचेत्सुविक्रान्तविक्रामिन् धर्माणां प्रतिष्ठानमभविष्यत्, आलयो वा कूटस्थो वा धर्माणामभविष्यत्, नि[न्य?]दर्शयिष्यत्तथागतो धर्माणां प्रतिष्ठानम्—इदं धर्माणां प्रतिष्ठानम्, अयं धर्माणामालयः, अयं धर्माणां संचय इति। यस्मात्तर्हि सुविक्रान्तविक्रामिन् सर्वधर्मा अप्रतिष्ठिताः अनालयाः असंचयाः, तस्मान्न कश्चिद्धर्मः कूटस्थः। तस्मात्तथागतो H 116
धर्माणां प्रतिष्ठानं वा आलयं वा संचयं वा न निर्दिशति। न हि सुविक्रान्तविक्रामिन् धर्माः परिनिष्पन्नाः, नापि स्वभावः कश्चित्, असंभवादपरिनिष्पत्तितो धर्माणां न कश्चिदवतिष्ठते। तेनोच्यते अप्रतिष्ठिताः सर्वधर्मा इति। अस्थानयोगेन अनधिष्ठानयोगेन सुविक्रान्तविक्रामिन् अप्रतिष्ठिताः सर्वधर्माः। नास्ति सुविक्रान्तविक्रामिन् सर्वधर्माणां स्थितिः। तद्यथापि नाम सुविक्रान्तविक्रामिन् चतसृणां महानदीनामनवतप्तात् सरसः प्रस्रवन्तीनां नास्त्यधिष्ठानमन्यत्र महासमुद्रात्, एवमेव सुविक्रान्तविक्रामिन् सर्वधर्माणां नास्ति स्थितिः, यावदनभिसंस्कारं न क्षपयन्ति। अनभिसंस्कार इति सुविक्रान्तविक्रामिन् न तत्र स्थानं नास्थानं नाधिष्ठानम्, सर्वत्रैषा गणना नास्ति। स्थानमिति वा अधिष्ठानमिति वा अस्थानमिति वा अभिसंस्कार इति सुविक्रान्तविक्रामिन् गणनैषा निर्दिष्टा। यथासत्त्वप्रवृत्तिसंदर्शनमेतत्कृतमस्थानं वा स्थानं वा प्रतिष्ठानं वा। नानभिसंस्कारे काचिद्भूय इयं गणना। तेनोच्यते अप्रतिष्ठिताः सर्वधर्मा इति। अयं सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वधर्मा-

प्रतिष्ठानयोग. प्रज्ञापारमिताया चरत । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः क्षिप्र सर्वज्ञधर्मान् परिपूरयति, आसन्नश्च भवत्यनुत्तरायां सम्यक्संबोधौ, क्षिप्र च बोधिमण्डमुपसंक्रामति, क्षिप्र च सर्वज्ञज्ञान प्रतिलभते, क्षिप्र च अतीतानागतप्रत्युत्पन्नज्ञानपरिपूरिमधिगच्छति, क्षिप्रं च सर्वसत्त्वचित्तचरितविस्पन्दिताना[1] पार गच्छति ॥

तस्मात्तर्हि सुविक्रान्तविक्रामिन् बोधिसत्त्वेन महासत्त्वेन अर्थं कर्तुकामेन, सर्वसत्त्वाना H 117 दानं दातुकामेन, सर्वसत्त्वान्[2] धर्मदानेन सतर्पयितुकामेन, सर्वसत्त्वानामविद्याण्डकोश भेत्तुकामेन, सर्वसत्त्वाना महाज्ञान बुद्धज्ञानमुपसंहर्तुकामेन, सर्वसत्त्वानामनुकम्पकेन भवितुकामेन, सर्वसत्त्वाना हितैषिणा भवितुकामेन, सर्वसत्त्वाना धर्मसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना भोगसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना शीलसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना क्षान्तिसौरत्यसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना वीर्यसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना ध्यानसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना प्रज्ञासुभिक्षं कर्तुकामेन, सर्वसत्त्वाना विमुक्तिसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना स्वर्गोपपत्तिसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना विद्याविमुक्तिसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना विमुक्तिज्ञानदर्शनसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना नीवरणसुभिक्षं कर्तुकामेन, सर्वसत्त्वाना बुद्धधर्मसुभिक्ष कर्तुकामेन, सर्वसत्त्वाना सर्वगुणसपत्सुभिक्ष कर्तुकामेन, धर्मचक्र प्रवर्तयितुकामेन अप्रवर्तितपूर्वं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा अन्येन वा पुन' केनचिल्लोकेन सहधर्मेण, धर्मसाकथ्य कर्तुकामेन, बुद्धभूमौ व्याकर्तुकामेन, श्रावकभूमौ व्याकर्तुकामेन, प्रत्येकबुद्धभूमौ व्याकर्तुकामेन, सर्वसत्त्वाना पूर्वप्रणिधानकुशलमूलानि संचोदयितुकामेन अस्या प्रज्ञापारमिताया शिक्षितव्य घटितव्य व्यायच्छितव्य प्रज्ञापारमिताभावनयोगमनुयुक्तेन भवितव्यम्[3] । नाह सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य कचिद्धर्ममेव क्षिप्र परिपूरिकर समनुपश्यामि सर्वधर्माणा यथेह[4] प्रज्ञापारमिताया यथानिर्दिष्टायामभियोगः प्रतिपत्ति. अस्य विहारस्यानुत्सर्गः यदुत प्रज्ञापारमिताविहाराय ॥

H 118 ये केचित्सुविक्रान्तविक्रामिन् बोधिसत्त्वा अस्या प्रज्ञापारमिताया चरन्ति, निष्ठा तत्र गन्तव्या—आसन्ना इमे बोधिसत्त्वा अनुत्तराया सम्यक्संबोधाविति । येषां केषाचित् सुविक्रान्तविक्रामिन् इयं प्रज्ञापारमिता श्रोत्रावभासमप्यागमिष्यति, श्रुत्वा चाधिमोक्ष्यन्ति अभिनन्दिष्यन्ति, भूतसञ्ज्ञा चोत्पादयिष्यन्ति, तेषामप्यह कुशलमूलमनुत्तरायाः सम्यक्संबोधेराहारक वदामि—निष्ठा च तत्र गन्तव्या—महाप्रज्ञासभारोपचिता ह्येते कुलपुत्रा वा कुलदुहितरो वा, अन्यानि च कुशलमूलानि परिगृह्णन्तीति । येषा च सुविक्रान्तविक्रामिन् बोधिसत्त्वानामय प्रज्ञापारमितोपायकौशल्यपरिवर्तनिर्देशो हस्त गमिष्यति, किंचापि तत्र केचिन्न व्याकृता भविष्यन्ति समुखं बुद्धैर्भगवद्भिः, अथ च पुनर्वेदितव्यमेतत्—आसन्ना ह्येते व्याकरणस्य, नचिरेणैते समुख व्याकरण प्रतिलप्स्यन्त इति ॥

---

१ H °विस्पन्दिताना २ H °सत्त्वाना ३ H भावितव्यं against Ms ४ H अन्यथेह against Ms

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये सत्त्वा दशकुशलान् कर्मपथान् समादाय वर्तन्ते, निष्ठा तत्र गन्तव्या–आसन्ना ह्येते सत्त्वा उत्तरकुरुषूपपत्ते. । एवमेव सुविक्रान्तविक्रामिन् यस्य कस्यचिद्बोधिसत्त्वस्य इय प्रज्ञापारमिता हस्त गमिष्यति, वेदितव्यमेतत्–आसन्नोऽयमनुत्तरायाः सम्यक्सत्रोधेरिति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये सत्त्वा दान प्रयच्छन्ति मुक्तत्यागाश्च भवन्ति, सत्त्वांश्च दानेन प्रियवद्यतया अर्थचर्यया समानार्थतया च संगृह्णन्ति, शील च रक्षन्ति, निहतमानाश्च भवन्ति, निष्ठा तत्र गन्तव्या–क्षिप्रमिमे सत्त्वा महाभोगा भवन्त्युच्चकुलीनाश्च ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये सत्त्वा दानशीलाश्च भवन्ति शीलसपन्नाश्च भवन्ति, क्षान्तिसपन्नाश्च भवन्ति, वीर्यध्यानप्रतिष्ठिताः प्रज्ञया समन्वागताश्च भवन्ति, मैत्रीं च सत्त्वानामन्तिके उत्पादयन्ति, सत्त्वाश्च शीले समादापयन्ति, अविपतिसवर्तनीय च H 119
कर्मोपचिन्वन्ति, वेदितव्यमेतत्–अचिरादेते चक्रवर्तिराज्य कारयिष्यन्ति इति । एवमेव सुविक्रान्तविक्रामिन् यस्य कस्यचिद्बोधिसत्त्वस्य इय प्रज्ञापारमिता हस्तगता भविष्यति, वेदितव्यमेतत्–क्षिप्रमय बोधिमण्डमुपसक्रमिष्यतीति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् यस्य राज्ञ' क्षत्रियस्य पूर्णाया पूर्णमास्या पञ्चदश्या पुरतोऽर्थकरणे सनिषण्णस्य चक्ररत्न प्रादुर्भवति, तत्रैव वेदितव्यम्–चक्रवर्ती चाय भविष्यति, क्षिप्र चास्य सप्त रत्नानि प्रादुर्भविष्यन्तीति । एवमेव सुविक्रान्तविक्रामिन् यस्य बोधिसत्त्वस्य अय प्रज्ञापारमितापरिवर्तो हस्त गमिष्यति, वेदितव्यमिदम्–क्षिप्रमय सर्वज्ञतारम्बणै समन्वङ्गीभविष्यति इति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये सत्त्वा उत्कृष्टकुशलमूलसमन्वागताश्च भविष्यन्ति शोभनसमाचाराश्च भविष्यन्ति, उदाराविमुक्तिकाश्च भविष्यन्ति, प्रतिकूलसज्ञा चैषा मानुष्यके आत्मभावे सतिष्ठते, शीलसपन्नाश्च भवन्ति, महाजनस्य च कृत्यकारिणो भवन्ति, देवोपपत्तिं चाकाङ्क्षन्ति, वेदितव्यमेतत्–क्षिप्रमेते चातुर्महाराजिकाना देवाना सहव्रतायोपपत्स्यन्ते, तत्र चाविपत्य कारयिष्यन्ति । ये केचित्सुविक्रान्तविक्रामिन् परिशुद्धतरैः कुशलमूलैः समन्वागता उत्कृष्टकुशलमूलाश्च पूर्वं च दान ददति पश्चात्स्वय भुञ्जते, प्राक् चान्येषा सत्त्वाना कृत्यानि कुर्वन्ति पश्चादात्मन, न चाधर्मरागरक्ता भवन्ति, न विषमरागरक्ता भवन्ति, देवैश्वर्याधिपत्य चाकाङ्क्षन्ति, वेदितव्यमेतत्–अचिरादेते अप्रकम्प्य देवाना त्रायस्त्रिंशतामैश्वर्याधिपत्य करिष्यन्ति, शक्राश्च भविष्यन्ति देवानामिन्द्रा इति । एवमेव सुविक्रान्तविक्रामिन् यस्य कस्यचिद्बोधिसत्त्वस्य इय प्रज्ञापारमिता उपनस्यते, निष्ठा तत्र गन्तव्या–क्षिप्रमय सर्वधर्मैश्वर्याधिपतिवशवर्तितामनुप्राप्स्यतीति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये सत्त्वाश्चतुर्णां ब्रह्मविहाराणा[1] लाभिनो भवन्ति, H 120
वेदितव्यमेतत्–क्षिप्रमेते ब्रह्मलोके उपपत्स्यन्त इति । एवमेव सुविक्रान्तविक्रामिन् यस्य

1 H ब्रह्मणा विहाराणा.

कस्यचिद् बोधिसत्त्वस्य अय प्रज्ञापारमितानिर्देश उपनस्यते, वेदितव्यमिदम्—क्षिप्रमय धर्मचक्र प्रवर्तयिष्यतीति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् वार्षिकेषु मासेषु प्रत्युपस्थितेषु इयं महापृथिवी मेघान् प्रतीक्ष्य स्निग्धा भवति, अनुपूर्वेण च प्रवर्षति, देवेनाभिष्यन्दमाना उपर्युपरि उदक प्रवर्षन्ति, येनोत्साह[1] बहवोऽनुगच्छन्ति । ये चास्या महापृथिव्यास्तल सतर्पयन्ति । एवमिय महापृथिवी अभ्यन्तरा च अभिष्यन्दिता स्निग्धा च भवति, उपरिष्टाच्च उदकमुह्यते, यथा निम्नानि च स्थलानि सतर्पयति, एवमिय महापृथिवी उपरिष्टान्मेघैरभिष्यन्दिता सती तृणगुल्मौषधिवनस्पतीनभिष्यन्दयति । तेऽभिष्यन्दिता सन्तो बहून् शाखापत्रपलाशान् मुञ्चन्ति बहुपुष्पफलाश्च भवन्ति, तदा चेय महापृथिवी मनोज्ञगन्धमुत्सृजति । एवमिय महापृथिवी पुष्पफलोत्ससर[2]स्तडागैस्तस्मिन् समये उपशोभिता भवति । ततश्च तुष्टा भवन्ति मनुष्याश्च अमनुष्याश्च तानि पुष्पफलानि परिभुञ्जमानास्त च गन्ध जिघ्रन्त । एवमेव सुविक्रान्तविक्रामिन् यदा बोधिसत्त्वस्य इय प्रज्ञापारमिता अभिमुखी भवति, अस्या च प्रज्ञापारमिताया योगमापद्यते, वेदितव्यमेतत् सुविक्रान्तविक्रामिन् अचिरेणाय बोधिसत्त्वोऽभिष्यन्दितः सर्वज्ञज्ञानेन, सर्वज्ञज्ञान विवरिष्यति, सर्वज्ञज्ञानं प्रकाशयिष्यति, तेन च सत्त्वानार्द्रीकरिष्यत्यनुत्तरधर्मरत्नप्रकाशनतायै ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् येऽनवतप्तस्य नागराजस्य भवने सत्त्वा उपपन्ना, H 121 ते चत्वारो महानदीरुत्सृजति या महासमुद्र सतर्पयन्ति । एवमेव सुविक्रान्तविक्रामिन् येषा बोधिसत्त्वानामिय प्रज्ञापारमिता हस्तमुपनस्यति, अस्या च शिक्षिष्यन्ते, सर्वे ते महाधर्मधाराः प्रवर्षन्ति, याभिः सर्वसत्त्वान् धर्मदानेन सतर्पयिष्यन्ति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् ये केचित्सत्त्वा सुमेरोः पर्वतराजस्यान्तिकमुपसक्रामन्ति, सर्वे ते एकवर्णा भवन्ति यदुत सुवर्णवर्णा भवन्ति । एवमेव सुविक्रान्तविक्रामिन् येषा बोधिसत्त्वानामय प्रज्ञापारमितानिर्देशो हस्तगतो भविष्यति, सर्वे ते एका गतिं गमिष्यन्ति यदुत तथागतगतिं सर्वज्ञतागतिम् ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् सागरो महासमुद्र सर्वोदकसधारयिता, नित्य तत्र सर्वमुदक समवसरति, एवमेव सुविक्रान्तविक्रामिन् यस्य कस्यचिद्बोधिसत्त्वस्य अय प्रज्ञापारमितानिर्देशो हस्तगतो भविष्यति, निष्ठा तत्र गन्तव्या—क्षिप्रमयं सर्वधर्मसागरतां सर्वधर्मभाजनता सर्वधर्मसमवसरणतामनुप्राप्स्यति, क्षिप्र च धर्मसकेतेन अक्षोभ्यो भविष्यतीति ॥

तद्यथापि नाम सुविक्रान्तविक्रामिन् सूर्यमण्डलमभ्युद्गच्छत् सर्वा दिशः प्रभाध्यामीकरोति, एवमेव सुविक्रान्तविक्रामिन् बोधिसत्त्वोऽस्या प्रज्ञापारमिताया चरन् सर्वसत्त्वाना धर्मावभासकृत्येन प्रत्युपस्थितो भवति, इहाभ्युद्गच्छन् सुविक्रान्तविक्रामिन् बोधिसत्त्वः

१ H उत्सधि against Ms. २ Ms. फलासेसर°, Matsumoto °फलाशसर°.

सर्वसत्त्वाना कुशलमूलावभासेन प्रत्युपस्थितो भवति, सर्वसत्त्वाना च दक्षिणीयता गच्छति, सर्वसत्त्वाना च पुण्यक्षेत्रविशुद्धिं गच्छति, सर्वसत्त्वानां चाभिगमनीयो भवति, सर्वसत्त्वानां च पूज्यो भवति प्रशसनीय. ॥

अस्या सुविक्रान्तविक्रामिन् प्रज्ञापारमिताया शिक्षमाणो बोधिसत्त्वोऽग्रताया शिक्षते, सर्वसत्त्वाना च निर्वाणपथशोधनाय शिक्षते। तत्कस्माद्धेतो·[2] एषा हि सुविक्रान्तविक्रामिन् अग्रा शिक्षा ज्येष्ठा वरा प्रवरा अनुत्तरा निरुत्तरा येय प्रज्ञापारमिताशिक्षा। अस्या शिक्षमाणः सुविक्रान्तविक्रामिन् बोधिसत्त्वः सर्वशिक्षापारमितां प्राप्नोति, सर्वशिक्षाश्च समादाय अभ्युद्गच्छति, सर्वशिक्षाणा च देशयिता भवति, सर्वशिक्षाणा च अभिवाहयिता H 122 भवति। अस्या हि सुविक्रान्तविक्रामिन् शिक्षायामतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तो बोधिसत्त्वचर्याया चरन्त शिक्षिता. शिक्षिष्यन्ते शिक्षन्ते च। अस्या च शिक्षाया सुप्रतिष्ठिता बुद्धा भगवन्त सर्वसत्त्वेभ्योऽनुत्तरा शिक्षापरिशुद्धिं सप्रकाशितवन्तः, सप्रकाशयिष्यन्ति सप्रकाशयन्ति च। तत्कस्माद्धेतो·[2] सर्वलोकाभ्युद्गतशिक्षा ह्येषा सुविक्रान्तविक्रामिन् यदुत प्रज्ञापारमिताशिक्षा। सर्वलोकविशिष्टा शिक्षा सर्वलोकस्वयभूशिक्षा यदुत प्रज्ञापारमिताशिक्षा। प्रज्ञापारमिताया शिक्षमाणः सुविक्रान्तविक्रामिन् बोधिसत्त्वो न कस्मिंश्चिद्धर्मे शिक्षितो भवति लौकिके वा लोकोत्तरे वा, सस्कृते वा असंस्कृते वा, सास्रवे वा अनास्रवे वा, सावद्ये वा अनवद्ये वा। न कचित्सङ्ग जनयति, सर्वधर्मासङ्गविहारी भवति। तत्कस्माद्धेतो·[2] सर्वधर्मा हि सुविक्रान्तविक्रामिन् असक्ता अबद्धा अमुक्ता·। नापि कस्यचिद्धर्मस्य सङ्गेन प्रत्युपस्थिता न बन्धनेन। रूप हि सुविक्रान्तविक्रामिन् असक्तमबद्धममुक्तम्। वेदनासज्ञासस्कारविज्ञानमसक्तमबद्धममुक्तम्। नामरूपमसक्तमबद्धममुक्तम्। विपर्यासदृष्टिगतनीवरणान्यसक्तानि अबद्धानि अमुक्तानि। रागद्वेषमोहा असक्ता अबद्धा अमुक्ताः। षडाध्यात्मिकान्यायतनानि असक्तानि अबद्धानि अमुक्तानि। षड्बाह्यायतनानि असक्तानि H 123 अबद्धानि अमुक्तानि। कामरूपारूप्यधातवोऽसक्ता अबद्धा अमुक्ता.। आत्मधातुः सत्त्वधातुश्च असक्तोऽबद्धोऽमुक्तः। प्रतीत्यसमुत्पादोऽसक्तोऽबद्धोऽमुक्त.। सक्लेशव्यवदानमसक्तमबद्धममुक्तम्। एव त्यागमात्सर्यशीलदौ.शील्यक्षान्तिव्यापादवीर्यकौसीद्यध्यानविक्षेपप्रज्ञादौष्प्रज्ञ्यानि असक्तानि अबद्धानि अमुक्तानि। दु.खसमुदयनिरोधमार्गा असक्ता अबद्धा अमुक्ताः। स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाप्रमाणाविपर्यासा असक्ता अबद्धा अमुक्ता। इन्द्रियबलबोध्यङ्गसमाधिसमापत्तयोऽसक्ता अबद्धा अमुक्ताः। पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातवोऽसक्ता अबद्धा अमुक्ताः। अनुत्पादक्षयाभिसस्कारज्ञानानि असक्तानि अबद्धानि अमुक्तानि। विद्याविमुक्ती असक्ते अबद्धे अमुक्ते। अभिज्ञासङ्गता असक्ता अबद्धा अमुक्ता। विद्याविमुक्तिज्ञानदर्शनमसक्तमबुद्धममुक्तम्। पृथग्जनश्रावकप्रत्येकबुद्धधर्मा असक्ता अबद्धा अमुक्ताः। निर्वाणमसक्तमबद्धममुक्तम्। बुद्धज्ञानबलवैशारद्यानि असक्तानि अबद्धानि अमुक्तानि। अतीतानागतप्रत्युत्पन्नासङ्गज्ञानदर्शनमसक्तमबद्धममुक्तम्। तत्कस्माद्धेतोः[2] सर्वधर्माणा हि सुविक्रान्तविक्रामिन् बन्धन नोपलभ्यते। असङ्गा अबद्धा हि सुविक्रान्त-

विक्रामिन् सर्वधर्माः, तेन तेषां विमुक्तिर्नोपलभ्यते । असक्ता इति सुविक्रान्तविक्रामिन् न तेषा कश्चिन्मोचयिता, अपि तु यदेव सर्वधर्माणा दर्शनम्, इदमुच्यते असङ्गज्ञानदर्शनमिति । असङ्ग इति सुविक्रान्तविक्रामिन् सङ्गानुपलब्धिः । असङ्गोऽसङ्गतया, असङ्गोऽसङ्गभूतनया असङ्ग इत्युच्यते । नात्र कश्चिदुपलभ्यते, यः सयुज्येत वा बध्येत वा । यतश्च
H 124 नोपलभ्यते यः सयुज्येत वा बध्येत वा, तेन असङ्ग इत्युच्यते । अबद्ध इति सुविक्रान्तविक्रामिन् बन्धानानुपलब्धित , बन्धनाभूततया अबद्ध इत्युच्यते । न हि तत्र किंचिद्बन्धन विद्यते, नापि तत्र कश्चिदुपलभ्यते यो बद्ध । यतश्च नोपलभ्यते यो बद्ध', तेन अबद्ध इत्युच्यते । यश्च असक्तोऽबद्ध', कुतस्तस्य मुक्ति ? यश्च न सज्जते न बध्यते, मुक्तोऽसौ विसयुक्त. शीतीभूतो विप्रमुक्त' । तत्र न काचिद्भूयो बन्धना । तेनोच्यते विमुक्त इति । मोक्षोऽस्य भूयो न सविद्यते । अय सुविक्रान्तविक्रामिन् बोधिसत्त्वस्य सर्वधर्मासक्ताबद्धामुक्तज्ञानदर्शनप्रवेशः प्रज्ञापारमितायां चरतः । एव चरन् सुविक्रान्तविक्रामिन् बोधिसत्त्व आसन्नो भवत्यनुत्तराया. सम्यक्सबोधे' । क्षिप्र च स सर्वज्ञज्ञान प्रतिलभते । इमामह सुविक्रान्तविक्रामिन् मुद्रा स्थापयामि बोधिसत्त्वाना सशयच्छेदाय प्रज्ञापारमितामभियुक्ताना प्रज्ञापारमिताया चरताम् । स्वयमिम सुविक्रान्तविक्रामिन् मुद्रानिर्देशमधिष्ठास्यामि, न प्रतिबला मम श्रावका इमा प्रज्ञापारमितामुद्रा पश्चिमे काले पश्चिमे समये पश्चिमाया पञ्चशत्या धारयितुम् ॥

अथ खलु भगवान् भद्रपालसुसार्थवाहपूर्वंगमानि पञ्चमात्राणि बोधिसत्त्वशतान्यामन्त्रयते स्म सुविक्रान्तविक्रामिण च बोधिसत्त्वम्—शक्यथ यूय कुलपुत्रास्तथागते परिनिर्वृते पश्चिमे काले पश्चिमे समये पश्चिमिकाया पञ्चशत्या सद्धर्मान्तर्धानकालसमये सद्धर्मविप्रलोपे वर्तमाने सक्षीणकाले इम तथागतस्य अनेककल्पकोटीनियुतशतसहस्रसमुदानीत धर्मरत्नकोष प्रज्ञापारमितापूर्वंगम प्रज्ञापारमिताप्रभव प्रज्ञापारमिताप्रतिष्ठान धारयितुम्, परेभ्यश्च विस्तरेण सप्रकाशयितुम् ? एवमुक्ते बोधिसत्त्वा भगवन्तमेतदवोचन्—शक्यामो वय भगवन्
H 125 इम तथागतस्य अनेककल्पकोटीनियुतशतसहस्रसमुदानीतमनुत्तर धर्मरत्नकोष प्रज्ञापारमितापूर्वंगम प्रज्ञापारमिताप्रभव प्रज्ञापारमिताप्रतिष्ठान धारयितुम्, परेभ्यश्च विस्तरेण सप्रकाशयितुम् । किंचापि भगवन् स कालो महाभयो महाकान्तारो महाघोरश्च भविष्यति, यद्भूयसा च तस्मिन् समये सत्त्वाः सद्धर्मव्यसनसवर्तनीयेन कर्मणा समन्वागता भविष्यन्ति, विषमलोभलुब्धा विषमरागरक्ता अधर्मरागरक्ता ईर्ष्यालोभपरीतचेतसः क्रोधनाश्चण्डा. परुषा' दुर्वचस' शठाः कुहका मायाविनोऽधर्मचारिणः कलहभण्डनविवादविग्रहबहुला असवरस्थिता लुब्धा लोभाभिभूताः कुसीदा हीनवीर्या मुषितस्मृतयोऽसंप्रज्ञास्तुण्डाः मुखराः प्रगल्भा अन्तर्हृदयप्रतिच्छन्नपापकर्माणः उत्सदरागद्वेषमोहा अविद्याण्डकोषतमोमोहान्धकाराभिभूता मारपक्षानुकूलचारिणः प्रत्यर्थिकाश्च भविष्यन्ति, अस्य गम्भीरस्य धर्मविनयस्य धर्मरत्नकोषस्य अप्रत्युद्गतमनःशीलाश्च भविष्यन्ति, अथ च पुनरुत्सहामहे वय भगवन् इम तथागतस्य अनेककल्पकोटीनियुतशतसहस्रकुशलमूलसमुदानीतमनुत्तर धर्मरत्नकोष धारयितु वाचयितुम्, ये च तस्मिन्नन्तकाले परीत्तपरीत्ता अपि

सत्त्वा भविष्यन्ति एभिर्धर्मैरर्थिका, एषु धर्मेषु शिक्षितुकामा, अशठा ऋजवोऽमायाविनः, ये जीवितमपि परित्यजेयु, न पुनरेषा धर्माणा प्रत्यर्थिका भवेयु, नापीमान् धर्मान् प्रतिक्षिपेयु, नाप्येभ्यो धर्मेभ्यः पराङ्मुखा भवेयु, तेषामर्थं करिष्याम, उत्साह च दास्याम, एष्वेवरूपेषु धर्मेषु सदर्शयिष्यामः, समुत्तेजयिष्याम. सप्रहर्षयिष्यामः ॥

अथ खलु भगवास्तस्यां वेलायामिद धर्माधिष्ठान प्रज्ञापारमितानिर्देशमधितिष्ठति स्म, मारस्य च पापीयसोऽस्मिन् धर्मपर्याये मारपाशाना छेदाय अधिष्ठानमकरोत् । अथ खलु H 126 भगवान् स्मित प्राविष्करोति स्म, यथाय त्रिसाहस्रमहासाहस्रो लोकधातुर्महतावभासेन स्फुटोऽभूत् । देवा अपि मनुष्यान् पश्यन्ति स्म, मनुष्या अपि देवान् । ये तत्र सनिपतिता देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगा, त सर्वे दिव्यै पुष्पैर्भगवन्तमभ्यवकिरन्ति स्म, दिव्यानि च चीवराणि क्षिपन्ति स्म, महान्त च निर्नादनिर्घोषमकार्षु –महाविष्ठान बतेद तथागतेनाधिष्ठित यत्रागतिर्माराणा पापीयसाम् । सर्वमारपाशा हि च्छिन्ना अनेन धर्माधिष्ठानेन च । तेषा कुलपुत्राणा कुलदुहितॄणा च भूयो मारेभ्य[1] पापीयोभ्योऽभय प्रतिकाङ्क्षितव्यम् । ये इम धर्मपर्याय धारयिष्यन्ति वाचयिष्यन्ति परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, उत्तीर्णास्ते बोधिसत्त्वा भविष्यन्ति । मार च ते[2] पापीयास ससैन्य पराजयिष्यन्ति ये इम धर्मपर्यायं धारयिष्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति ॥

अथ खलु भगवान् सुविक्रान्तविक्रामिण बोधिसत्त्वमेतदवोचत्—एवमेत सुविक्रान्तविक्रामिन्, एवमेतत्, यथैते देवपुत्रा वाचो भाषन्ते । बद्धसीमा सुविक्रान्तविक्रामिन् माराणा पापीयसामस्मिन् धर्मपर्याये भाष्यमाणे तथागतेन । येऽत्र खलु पुनः सुविक्रान्तविक्रामिन् कुलपुत्रा वा कुलदुहितरो वा इम धर्मपर्यायमुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, अगतिस्तत्र मारस्य पापीयसो भविष्यति, अनाक्रमणीयाश्च ते कुलपुत्राः कुलदुहितरश्च भविष्यन्ति मारैः पापीयोभि । निहतमारप्रत्यर्थिकाश्च ते भविष्यन्ति उत्तीर्णसग्रामाश्च, ये इम धर्मपर्यायमुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति । न खलु पुनः सुविक्रान्तविक्रामिन् अय धर्मपर्यायः सक्लिष्टाना H 127 सत्त्वानां हस्त गमिष्यति[3], नापि मारपाशबद्धानाम् । [4]आजानेयभूमिरिय सुविक्रान्तविक्रामिन्, नेयमनाजानेयाना[5]मनाजानेयभूमि. । तद्यथापि नाम सुविक्रान्तविक्रामिन् ये ते भविष्यन्ति हस्त्याजानेया वा अश्वाजानेया वा, न ते कोट्टराज्ञा परिचर्यां कुर्वन्ति, नापि ते क्रूरजनाना दर्शनमुपयान्ति । चक्रवर्तिना सुविक्रान्तविक्रामिंस्तथारूपा हस्त्याजानेया अश्वाजानेयाश्च दर्शनमुपयान्ति, तेषा च अभ्युद्गच्छन्ति परिभोगाय उपस्थानपरिचर्यायै, चक्रवर्तिना हि राज्ञा परिभोगाय भवन्ति । एवमेव सुविक्रान्तविक्रामिन् मनुष्याजानेयाना सत्त्वानामिमे एवरूपा धर्मपर्यायाः परिभोगाय हस्त गमिष्यन्ति । तद्यथापि नाम सुविक्रान्तविक्रामिन्

१ Ms and Matsumoto मारा पापीयासो भय, our reading is based on C and T २ Ms and Matsumoto तेषा for ते. ३ H गमिष्यन्ति ४ Ms अजानेय°. ५ Ms. अजानेय°

उपोषधो नागराजः सुप्रतिष्ठितश्च नागराजः ऐरावणो नागराजः । न ते मनुष्याणामुपभोगाय सक्रामन्ति, नापि ते मनुष्याणा दर्शनायोपसक्रामन्ति, नापि ते अन्येषा देवानामुपभोगाय परिभोगाय सक्रामन्ति, देवाजानेयाना ते नागराजानः परिभोगाय सक्रामन्ति । यथा यथा च शक्रो देवानामिन्द्रोऽभिक्रामति व्यूह कृत्वा, तथा तथा चापि नागराजानस्तादृशमेव व्यूहं कृत्वा उपसक्रामन्ति परिभोगाय । एवमेव सुविक्रान्तविक्रामिन् ये ते भविष्यन्ति मनुष्येन्द्राः पुरुषेन्द्रा., तेषामिमे धर्मपर्याया उपभोगपरिभोगाय भविष्यन्ति, यदुत वाचनतया देशनतया सप्रकाशनतया, तेषा चेमे धर्मपर्याया महाव्यूहा महाविष्कारा[1] महाधर्मालोका
H 128 भविष्यन्ति, महती च धर्मप्रीतिमेषु धर्मपर्यायेषु तेऽनुभविष्यन्ति । महता च प्रीतिप्रामोद्येन समन्वागता भविष्यन्ति, अस्य धर्मपर्यायस्य एक नय ये धारयिष्यन्ति[2], क. पुनर्वादो ये सकलसमाप्त लेखयित्वा धारयिष्यन्ति वाचयिष्यन्ति पूजयिष्यन्ति वैस्तारिकं च करिष्यन्ति, ते ते मनुष्येन्द्रा मनुष्याजानेयाः । परिगृहीतास्ते खलु पुन. सुविक्रान्तविक्रामिन् अनेन धर्मपर्यायेण भविष्यन्ति । अगतिरस्मिन्ननाजानेयानाम् । एतदप्यह सुविक्रान्तविक्रामिन् सर्वसशयच्छेदाय वदामि ॥

अस्मिन् खलु पुनर्धर्मपर्याये भगवता भाष्यमाणे अनेकैरप्रमेयैर्बोधिसत्त्वैरनुत्पत्तिकेषु धर्मेषु क्षान्तिः प्रतिलब्धाभूत् । अप्रमेयासख्येयाश्च सत्त्वा अनुत्तराया सम्यक्सबोधौ चित्तान्युत्पादयन्ति । नियताश्च ते तथागतेन निर्दिष्टा अभूवन् बोधाय ॥

इदमवोचद्भगवान् । आत्तमना. सुविक्रान्तविक्रामी बोधिसत्त्वो महासत्त्वः, चतस्रः पर्षदः, सदेवमानुषनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगश्च लोको भगवतो भाषितमभ्यनन्दन् । इति ॥

आर्यप्रज्ञापारमितायामनुशसापरिवर्त. सप्तमः ॥
आर्यसुविक्रान्तविक्रामिपरिपृच्छा प्रज्ञापारमितानिर्देश· ॥
सार्धद्विसाहस्रिका भगवती आर्यप्रज्ञापारमिता समाप्ता ॥

* * * * *

H 129 यां[3] सर्वज्ञतया नयत्युपशम शान्तैषिणः श्रावकान्
या मार्गज्ञतया जगद्धितकृता लोकार्थसपादिका ।
सर्वाकारमिद वदन्ति मुनयो विश्व यया सगता-
स्तस्यै श्रावकबोधिसत्त्वगणिनो बुद्धस्य मात्रे नमः ॥ १ ॥
ये धर्मा हेतुप्रभवा हेतु तेषा तथागतो ह्यवदत् ।
तेषा च यो निरोधो एव वादी महाश्रमणः ॥ २ ॥



१ H महाविष्फारा २ H धारयिष्यमाणा ३ These verses are not found in Chineese and Tibetan translations.

# २

## वज्रच्छेदिका नाम

### त्रिशतिका प्रज्ञापारमिता ।

॥ नमो भगवत्या आर्यप्रज्ञापारमितायै ॥

एव मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवनेऽनाथ- M 19
पिण्डदस्यारामे महता भिक्षुसघेन सार्धं त्रयोदशभिर्भिक्षुशतैः सबहुलैश्च बोधिसत्त्वैर्महासत्त्वैः ।
अथ खलु भगवान् पूर्वाह्णकालसमये निवास्य पात्रचीवरमादाय श्रावस्तीं महानगरीं पिण्डाय
प्राविक्षत् । अथ खलु भगवान् श्रावस्तीं महानगरीं पिण्डाय चरित्वा कृतभक्तकृत्य पश्चा-
द्भक्तपिण्डपातप्रतिक्रान्तः पात्रचीवर प्रतिशाम्य पादौ प्रक्षाल्य न्यषीदत्प्रज्ञप्त एवासने पर्यङ्क-
माभुज्य ऋजु काय प्रणिधाय प्रतिमुखीं स्मृतिमुपस्थाप्य । अथ खलु सबहुला भिक्षवो येन
भगवांस्तेनोपसंक्रामन् । उपसक्रम्य भगवत पादौ शिरोभिरभिवन्द्य भगवन्त त्रिष्प्रदक्षिणी-
कृत्य एकान्ते न्यषीदन् ॥ १ ॥

तेन खलु पुनः समयेनायुष्मान् सुभूतिस्तस्यामेव पर्षदि सनिपतितोऽभूत्सनिषण्णः ।
अथ खल्वायुष्मान् सुभूतिरुत्थायासनादेकांसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या M 20
प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—आश्चर्य भगवन्, परमाश्चर्य
सुगत, यावदेव तथागतेनार्हता सम्यक्सबुद्धेन बोधिसत्त्वा महासत्त्वा अनुपरिगृहीताः
परमेणानुग्रहेण । आश्चर्य भगवन् यावदेव तथागतेनार्हता सम्यक्सबुद्धेन बोधिसत्त्वा
महासत्त्वा परीन्दिता. परमया परीन्दनया । तत्कथ भगवन् बोधिसत्त्वयानसप्रस्थितेन
कुलपुत्रेण वा कुलदुहित्रा वा स्थातव्य कथ प्रतिपत्तव्य कथ चित्त प्रग्रहीतव्यम् ?

एवमुक्ते भगवानायुष्मन्त सुभूतिमेतदवोचत्—साधु साधु सुभूते, एवमेतत्सुभूते,
एवमेतद्यथा वदसि । अनुपरिगृहीतास्तथागतेन बोधिसत्त्वा महासत्त्वा. परमेणानुग्रहेण ।
परीन्दितास्तथागतेन बोधिसत्त्वा महासत्त्वा. परमया परीन्दनया । तेन हि सुभूते शृणु,
साधु च सुष्ठु च मनसि कुरु, भाषिष्येऽहं ते—यथा बोधिसत्त्वयानसप्रस्थितेन स्थातव्य
यथा प्रतिपत्तव्य यथा चित्त प्रग्रहीतव्यम् । एव भगवन् इत्यायुष्मान् सुभूतिर्भगवतः
प्रत्यश्रौषीत् ॥ २ ॥

भगवानस्यैतदवोचत्—इह सुभूते बोधिसत्त्वयानसप्रस्थितेनैव चित्तमुत्पादयितव्यम्—
यावन्तः सुभूते सत्त्वा. सत्त्वधातौ सत्त्वसग्रहेण सगृहीता अण्डजा वा जरायुजा वा
सस्वेदजा वा औपपादुका वा रूपिणो वा अरूपिणो वा सज्ञिनो वा असंज्ञिनो वा नैव-
सज्ञिनो नासंज्ञिनो वा, यावान् कश्चित्सत्त्वधातुः प्रज्ञप्यमानः प्रज्ञप्यते, ते च मया सर्वेऽनुपधि- M 21
शेषे निर्वाणधातौ परिनिर्वापयितव्याः । एवमपरिमाणानपि सत्त्वान् परिनिर्वाप्य न
कश्चित्सत्त्वः परिनिर्वापितो भवति । तत्कस्य हेतोः ? सचेत्सुभूते बोधिसत्त्वस्य सत्त्वसज्ञा
प्रवर्तेत, न स बोधिसत्त्व इति वक्तव्यः । तत्कस्य हेतोः ? न स सुभूते बोधिसत्त्वो वक्तव्यो
यस्य सत्त्वसज्ञा प्रवर्तेत, जीवसंज्ञा वा पुद्गलसज्ञा वा प्रवर्तेत ॥ ३ ॥

अपि तु खलु पुन सुभूते न बोधिसत्त्वेन वस्तुप्रतिष्ठितेन दान दातव्यम्, न क्वचित्प्रतिष्ठितेन दान दातव्यम्। न रूपप्रतिष्ठितेन दान दातव्यम्। न शब्दगन्धरसस्प्रष्टव्यधर्मेषु प्रतिष्ठितेन दान दातव्यम्। एव हि सुभूते बोधिसत्त्वेन महासत्त्वेन दान दातव्य यथा न निमित्तसज्ञायामपि प्रतितिष्ठेत्। तत्कस्य हेतो ? यः सुभूते बोधिसत्त्वोऽप्रतिष्ठितो दान ददाति, तस्य सुभूते पुण्यस्कन्धस्य न सुकर प्रमाणमुद्ग्रहीतुम्। तत्किं मन्यसे सुभूते सुकर पूर्वस्या दिशि आकाशस्य प्रमाणमुद्ग्रहीतुम् ? सुभूतिराह—नो हीद भगवन्। भगवानाह—एव दक्षिणपश्चिमोत्तरासु अध ऊर्ध्वं दिग्विदिक्षु समन्ताद्दशसु दिक्षु सुकरमाकाशस्य प्रमाणमुद्ग्रहीतुम् ? सुभूतिराह—नो हीद भगवन्। भगवानाह—एवमेव सुभूते यो बोधिसत्त्वोऽप्रतिष्ठितो दान ददाति, तस्य सुभूते पुण्यस्कन्धस्य न सुकर प्रमाणमुद्ग्रहीतुम्। एव हि सुभूते बोधिसत्त्वयानसप्रस्थितेन दान दातव्य यथा न निमित्तसज्ञायामपि प्रतितिष्ठेत् ॥ ४ ॥

M 22 तत्किं मन्यसे सुभूते लक्षणसपदा तथागतो द्रष्टव्यः ? सुभूतिराह—नो हीद भगवन्। न लक्षणसपदा तथागतो द्रष्टव्य.। तत्कस्य हेतो. ? या सा भगवन् लक्षणसपत्तथागतेन भाषिता सैवालक्षणसपत्। एवमुक्ते भगवानायुष्मन्त सुभूतिमेतदवोचत्—यावत्सुभूते लक्षणसपत् तावन्मृषा, यावदलक्षणसपत् तावन्न मृषेति हि लक्षणालक्षणतस्तथागतो द्रष्टव्य ॥ ५ ॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—अस्ति भगवन् । केचित्सत्त्वा भविष्यन्त्यनागतेऽध्वनि पश्चिमे काले पश्चिमे समये पश्चिमाया पञ्चशत्या सद्धर्मविप्रलोपकाले वर्तमाने, ये इमेष्वेवरूपेषु सूत्रान्तपदेषु भाष्यमाणेषु भूतसज्ञामुत्पादयिष्यन्ति । अपि तु खलु पुन. सुभूते भविष्यन्त्यनागतेऽध्वनि बोधिसत्त्वा महासत्त्वा पश्चिमे काले पश्चिमे समये पश्चिमाया पञ्चशत्या सद्धर्मविप्रलोपे वर्तमाने गुणवन्त. शीलवन्तः प्रज्ञावन्तश्च भविष्यन्ति, ये इमेष्वेवरूपेषु सूत्रान्तपदेषु भाष्यमाणेषु भूतसज्ञामुत्पादयिष्यन्ति। न खलु पुनस्ते सुभूते बोधिसत्त्वा महासत्त्वा एकबुद्धपर्युपासिता भविष्यन्ति, नैकबुद्धावरोपितकुशलमूला
M 23 भविष्यन्ति। अपि तु खलु पुन॰ सुभूते अनेकबुद्धशतसहस्रपर्युपासिता अनेकबुद्धशतसहस्रावरोपितकुशलमूलास्ते बोधिसत्त्वा महासत्त्वा भविष्यन्ति, ये इमेष्वेवरूपेषु सूत्रान्तपदेषु भाष्यमाणेषु एकचित्तप्रसादमपि प्रतिलप्स्यन्ते। ज्ञातास्ते सुभूते तथागतेन बुद्धज्ञानेन, दृष्टास्ते सुभूते तथागतेन बुद्धचक्षुषा, बुद्धास्ते सुभूते तथागतेन। सर्वे ते सुभूते अप्रमेयमसख्येय पुण्यस्कन्ध प्रसविष्यन्ति प्रतिग्रहीष्यन्ति। तत्कस्य हेतोः ? न हि सुभूते तेषा बोधिसत्त्वाना महासत्त्वानामात्मसज्ञा प्रवर्तते, न सत्त्वसज्ञा, न जीवसज्ञा, न पुद्गलसज्ञा प्रवर्तते। नापि तेषा सुभूते बोधिसत्त्वाना महासत्त्वाना धर्मसज्ञा प्रवर्तते। एव नाधर्मसज्ञा। नापि तेषा सुभूते सज्ञा नासज्ञा प्रवर्तते। तत्कस्य हेतो॰ ? सचेत्सुभूते तेषा बोधिसत्त्वाना महासत्त्वाना धर्मसज्ञा प्रवर्तेत, स एव तेषामात्मग्राहो भवेत्, सत्त्वग्राहो जीवग्राह पुद्गलग्राहो भवेत्। सचेदधर्मसज्ञा प्रवर्तेत, स एव तेषामात्मग्राहो भवेत्, सत्त्वग्राहो

जीवग्राहः पुद्गलग्राह इति। तत्कस्य हेतोः? न खलु पुनः सुभूते बोधिसत्त्वेन महासत्त्वेन धर्म उद्ग्रहीतव्यो नाधर्मः। तस्मादियं तथागतेन सधाय वाग्भाषिता–कोलोपमं धर्मपर्याय-माजानद्भिर्धर्मा एव प्रहातव्याः प्रागेवाधर्मा इति ॥ ६ ॥

पुनरपरं भगवानायुष्मन्तं सुभूतिमेतदवोचत्–तत्किं मन्यसे सुभूते, अस्ति स M 24 कश्चिद्धर्मो यस्तथागतेनानुत्तरा सम्यक्संबोधिरित्यभिसंबुद्धः, कश्चिद्वा धर्मस्तथागतेन देशितः? एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि, नास्ति स कश्चिद्धर्मो यस्तथागतेन अनुत्तरा सम्यक्संबोधिरित्यभिसंबुद्धः, नास्ति धर्मो यस्तथागतेन देशितः। तत्कस्य हेतोः? योऽसौ तथागतेन धर्मोऽभिसंबुद्धो देशितो वा, अग्राह्यः सोऽनभिलप्यः। न स धर्मो नाधर्मः। तत्कस्य हेतोः? असंस्कृतप्रभाविता ह्यार्यपुद्गलाः ॥ ७ ॥

भगवानाह–तत्किं मन्यसे सुभूते यः कश्चित्कुलपुत्रो वा कुलदुहिता वा इमं त्रिसाहस्रमहासाहस्रं लोकधातुं सप्तरत्नपरिपूर्णं कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्यात्, अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यस्कन्धं प्रसुनुयात्? सुभूतिराह–बहु भगवन्, बहु सुगत स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं पुण्यस्कन्धं प्रसुनुयात्। तत्कस्य हेतोः? योऽसौ भगवन् पुण्यस्कन्धस्तथागतेन भाषितः, अस्कन्धः स तथागतेन भाषितः। तस्मात्तथागतो भाषते–पुण्यस्कन्धः पुण्यस्कन्ध इति। भगवानाह–यश्च खलु पुनः सुभूते कुलपुत्रो वा कुलदुहिता वा इमं त्रिसाहस्रमहासाहस्रं लोकधातुं सप्तरत्नपरिपूर्णं कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्यात्, यश्च M 25 इतो धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य परेभ्यो विस्तरेण देशयेत् संप्रकाशयेत्, अयमेव ततोनिदानं बहुतरं पुण्यस्कन्धं प्रसुनुयादप्रमेयमसंख्येयम्। तत्कस्य हेतोः? अतोनिर्जाता हि सुभूते तथागतानामर्हतां सम्यक्संबुद्धानामनुत्तरा सम्यक्संबोधिः, अतोनिर्जाताश्च बुद्धा भगवन्तः। तत्कस्य हेतोः? बुद्धधर्मा बुद्धधर्मा इति सुभूते अबुद्धधर्माश्चैव ते तथागतेन भाषिताः। तेनोच्यन्ते बुद्धधर्मा इति ॥ ८ ॥

तत्किं मन्यसे सुभूते अपि नु स्रोतआपन्नस्यैवं भवति–मया स्रोतआपत्तिफलं प्राप्तमिति? सुभूतिराह–नो हीदं भगवन्। न स्रोतआपन्नस्यैवं भवति–मया स्रोतआपत्तिफलं प्राप्तमिति। तत्कस्य हेतोः? न हि स भगवन् कंचिद्धर्ममापन्नः, तेनोच्यते स्रोतआपन्न इति। न रूपमापन्नो न शब्दान् न गन्धान् न रसान् न स्प्रष्टव्यान् धर्मानापन्नः। तेनोच्यते स्रोतआपन्न इति। सचेद्भगवन् स्रोतआपन्नस्यैवं भवेत्–मया स्रोतआपत्तिफलं प्राप्तमिति, स एव तस्यात्मग्राहो भवेत्, सत्त्वग्राहो जीवग्राहः पुद्गलग्राहो भवेदिति ॥

भगवानाह–तत्किं मन्यसे सुभूते अपि नु सकृदागामिन एवं भवति–मया सकृदागामिफलं प्राप्तमिति? सुभूतिराह–नो हीदं भगवन्। न सकृदागामिन एवं भवति–मया

सकृदागामिफल प्राप्तमिति । तत्कस्य हेतो. ? न हि स कश्चिद्धर्मो य सकृदागामित्व मापन्नः । तेनोच्यते सकृदागामीति ॥

M 26 भगवानाह—तत्किं मन्यसे सुभूते अपि नु अनागामिन एव भवति—मयानागामिफलं प्राप्तमिति ? सुभूतिराह—नो हीद भगवन् । न अनागामिन एव भवति—मया अनागामिफल प्राप्तमिति । तत्कस्य हेतो ? न हि स भगवन् कश्चिद्धर्मो योऽनागामित्वमापन्न. । तेनोच्यते अनागामीति ॥

भगवानाह—तत्किं मन्यसे सुभूते अपि नु अर्हत एव भवति—मया अर्हत्त्व प्राप्तमिति ? सुभूतिराह—नो हीद भगवन् । नार्हत एव भवति—मया अर्हत्त्व प्राप्तमिति । तत्कस्य हेतो ? न हि स भगवन् कश्चिद्धर्मो योऽर्हन्नाम । तेनोच्यते—अर्हन्निति । सचेद्भगवन् अर्हत एव भवेत्—मया अर्हत्त्व प्राप्तमिति, स एव तस्यात्मग्राहो भवेत्, सत्त्वग्राहो जीवग्राह· पुद्गलग्राहो भवेत् । तत्कस्य हेतो ? अहमस्मि भगवस्तथागतेनार्हता सम्यक्सबुद्धेन अरणाविहारिणामग्र्यो निर्दिष्टः । अहमस्मि भगवन् अर्हन् वीतराग । न च मे भगवन्नेव भवति—अर्हन्नस्म्यह वीतराग इति । सचेन्मम भगवन्नेव भवेत्—मया अर्हत्त्व प्राप्तमिति, न मा तथागतो व्याकरिष्यदरणाविहारिणामग्र्य. सुभूति कुलपुत्रो न क्वचिद्विहरति, तेनोच्यते अरणाविहारी अरणाविहारीति ॥ ९ ॥

भगवानाह—तत्किं मन्यसे सुभूते—अस्ति स कश्चिद्धर्मो यस्तथागतेन दीपकरस्य तथागतस्यार्हत· सम्यक्सबुद्धस्यान्तिकादुद्गृहीत ? सुभूतिराह—नो हीद भगवन् । नास्ति स कश्चिद्धर्मो यस्तथागतेन दीपकरस्य तथागतस्यार्हत. सम्यक्सबुद्धस्यान्तिकादुद्गृहीतः ॥

M 27 भगवानाह—य· कश्चित्सुभूते बोधिसत्त्व एव वदेत्—अह क्षेत्रव्यूहान् निष्पादयिष्यामीति, स वितथ वदेत् । तत्कस्य हेतोः ? क्षेत्रव्यूहा. क्षेत्रव्यूहा इति सुभूते अव्यूहास्ते तथागतेन भाषिताः । तेनोच्यन्ते क्षेत्रव्यूहा इति । तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन एवमप्रतिष्ठित चित्तमुत्पादयितव्यं यन्न क्वचित्प्रतिष्ठित चित्तमुत्पादयितव्यम् । न रूपप्रतिष्ठित चित्तमुत्पादयितव्य न शब्दगन्धरसस्प्रष्टव्यधर्मप्रतिष्ठित चित्तमुत्पादयितव्यम् । तद्यथापि नाम सुभूते पुरुषो भवेदुपेतकायो महाकायो यत्तस्यैवं रूप आत्मभाव. स्यात् तद्यथापि नाम सुमेरुः पर्वतराज. । तत्किं मन्यसे सुभूते अपि नु महान् स आत्मभावो भवेत् ? सुभूतिराह—महान् स भगवान्, महान् सुगत स आत्मभावो भवेत् । तत्कस्य हेतो· ? आत्मभाव आत्मभाव इति भगवन् न भाव· स तथागतेन भाषितः । तेनोच्यत आत्मभाव इति । न हि भगवन् स भावो नाभावः । तेनोच्यते आत्मभाव इति ॥ १० ॥

भगवानाह—तत्किं मन्यसे सुभूते—यावत्यो गङ्गाया महानद्या वालुकास्तावत्य एव गङ्गानद्यो भवेयुः ? तासु या वालुकाः, अपि नु ता बह्व्यो भवेयुः ? सुभूतिराह—ता एव तावद्भगवन् बह्व्यो गङ्गानद्यो भवेयुः, प्रागेव यास्तासु गङ्गानदीषु वालुकाः । भगवानाह—

आरोचयामि ते सुभूते, प्रतिवेदयामि ते। यावत्यस्तासु गङ्गानदीषु वालुका भवेयुस्तावतो लोकधातून् कश्चिदेव स्त्री वा पुरुषो वा सप्तरत्नपरिपूर्णं कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्स- M 28 बुद्धेभ्यो दान दद्यात्, तत् किं मन्यसे सुभूते—अपि नु सा स्त्री वा पुरुषो वा ततोनिदान बहु पुण्यस्कन्ध प्रसुनुयात्? सुभूतिराह—बहु भगवन्, बहु सुगत स्त्री वा पुरुषो वा ततोनिदान पुण्यस्कन्ध प्रसुनुयादप्रमेयमसख्येयम्। भगवानाह—यश्च खलु पुनः सुभूते स्त्री वा पुरुषो वा तावतो लोकधातून् सप्तरत्नपरिपूर्ण कृत्वा तथागतेभ्योऽर्हद्भ्य. सम्यक्सबुद्धेभ्यो दान दद्यात्, यश्च कुलपुत्रो वा कुलदुहिता वा इतो धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य परेभ्यो देशयेत् सप्रकाशयेत्, अयमेव ततोनिदान बहुतरं पुण्यस्कन्ध प्रसुनुयादप्रमेयमसख्येयम् ॥ ११ ॥

अपि तु खलु पुन. सुभूते यस्मिन् पृथिवीप्रदेशे इतो धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य भाष्येत वा सप्रकाश्येत वा, स पृथिवीप्रदेशश्चैत्यभूतो भवेत् सदेवमानुषासुरस्य लोकस्य, क पुनर्वादो ये इम धर्मपर्याय सकलसमाप्त धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति। परमेण ते सुभूते आश्चर्येण समन्वागता भविष्यन्ति। तस्मिश्च सुभूते पृथिवीप्रदेशे शास्ता विहरत्यन्यतरान्यतरो वा विज्ञगुरुस्थानीयः ॥ १२ ॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—को नाम अय भगवन् धर्मपर्यायः, कथ चैनं धारयामि? एवमुक्ते भगवानायुष्मन्त सुभूतिमेतदवोचत्—प्रज्ञापारमिता नामाय सुभूते धर्मपर्यायः। एव चैन धारय। तत्कस्य हेतो.? यैव सुभूते प्रज्ञापारमिता तथागतेन भाषिता, सैव अपारमिता तथागतेन भाषिता। तेनोच्यते प्रज्ञापारमितेति ॥ M 29

तत्किं मन्यसे सुभूते—अपि नु अस्ति स कश्चिद्धर्मो यस्तथागतेन भाषितः? सुभूतिराह—नो हीद भगवन्। नास्ति स कश्चिद्धर्मो यस्तथागतेन भाषितं[1] ॥

भगवानाह—[2]तत्किं मन्यसे सुभूते—यावत् त्रिसाहस्रमहासाहस्रे लोकधातौ पृथिवीरजः कश्चित्[3], तद्बहु [4]भवेत्? सुभूतिराह—बहु भगवन्, बहु[5] सुगत पृथिवीरजो [6]भवेत्। तत्कस्य हेतोः? यत्तद्भगवन् पृथिवीरजस्तथागतेन भाषितम्, अरजस्तद्भगवंस्तथागतेन भाषितम्[6]। तेनोच्यते पृथिवीरज इति। योऽप्यसौ लोकधातुस्[7]तथागतेन भाषित, अधातुः स तथागतेन भाषितः। तेनोच्यते लोकधातुरिति ॥

भगवानाह—तत्किं मन्यसे सुभूते द्वात्रिंशन्महापुरुषलक्षणैस्तथागतोऽर्हन् सम्यक्सबुद्धो द्रष्टव्य.? सु[9]भूतिराह—नो हीद[10] भगवन्। [11]द्वात्रिंशन्महापुरुषलक्षणैस्तथागतोऽर्हन् सम्य-

१ Gilgit Ms (G) begings here on folio 5*a*   २ G om तत्किं मन्यसे सुभूते   ३ G कश्चित्   ४ G om भवेत्? सुभूति   ५ G om बहु सुगत   ६ G om. from भवेत् upto भाषितम्   ७ G om तथागतेन भाषित   ८ G om अर्हन् सम्यक्सबुद्ध.   ९ G om. सुभूति   १० G om हीद   ११ G om. from द्वात्रि upto द्रष्टव्य.

क्सबुद्धो द्रष्टव्य । तत्कस्य हेतो ? यानि हि तानि भगवन् द्वात्रिंशन्महापुरुषलक्षणानि तथागतेन भाषितानि, अलक्षणानि तानि भगवंस्तथागतेन भाषितानि । तेनोच्यन्ते द्वात्रिंशन्महापुरुषलक्षणानीति ॥

भगवानाह—यश्च खलु पुन सुभूते स्त्री वा पुरुषो वा दिने दिने गङ्गानदी[1]वालुका-
M 30 समानात्मभावान् परित्यजेत्, [2]एवं परित्यजन् गङ्गानदीवालुकासमान् कल्पास्तानात्मभावान् परित्यजेत्[2], यश्च इतो धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य परेभ्यो देशयेत् स[3]प्रकाशयेत्, अयमेव ततोनिदान [4]बहुतर पुण्यस्कन्ध [5]प्रसुनुयादप्रमेयमसङ्ख्येयम् ॥ १३ ॥

अथ खल्वायुष्मान् सुभूतिर्[6]धर्मवेगेनाश्रूणि प्रामुञ्चत् । सोऽश्रूणि प्रमृज्य भगवन्तमेतदवोचत्—आश्चर्यं भगवन्, परमाश्चर्यं सुगत, यावदय धर्मपर्यायस्तथागतेन भाषितोऽ[7]ग्रयानसंप्रस्थितानां सत्त्वानामर्थाय[7], श्रेष्ठयानसंप्रस्थितानामर्थाय, यतो मे भगवन् ज्ञानमुत्पन्नम् । न [8]मया भग[9]वन् [10]जात्वेवरूपो धर्मपर्यायः श्रुतपूर्व । परमेण ते भगवन् आश्चर्येण समन्वागता बोधिस[11]त्त्वा भविष्यन्ति, ये इह सूत्रे भाष्यमाणे [12]श्रुत्वा भूतसंज्ञामुत्पादयिष्यन्ति । [13]तत्कस्य हेतोः ? या चैषा भगवन् भूतसंज्ञा, सैव अभूतसंज्ञा । तस्मात्तथागतो भाषते—भूतसंज्ञा भूतसंज्ञेति ॥

न मम भगवन् आश्चर्य य[14]दहमिम धर्मपर्याय भाष्यमाणमवकल्पयामि अधि[15]मुच्ये । येऽपि ते भगवन् सत्त्वा [16]भविष्यन्त्यनागतेऽध्वनि पश्चिमे काले पश्चिमे समये पश्चिमाया पञ्चशत्या सद्धर्मविप्रलोपे वर्तमाने, ये इम भगवन् धर्मपर्यायमुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्[16]स्यन्ति, परे[17]भ्यश्च विस्तरेण संप्रकाशयिष्यन्ति, ते परमाश्चर्येण समन्वागता भविष्यन्ति । अपि तु खलु पुनर्भगवन् न तेषामात्मसंज्ञा प्र[18]वर्तिष्यते, न सत्त्वसंज्ञा न जीवसंज्ञा न पुद्गलसंज्ञा [19]प्रवर्तिष्यते, नापि तेषां काचित्संज्ञा नासंज्ञा प्रवर्तते ।
M 31 तत्कस्य हेतो[19] ? या सा भगवन् आत्मसंज्ञा, सैवासंज्ञा । या सत्त्वसंज्ञा जीवसंज्ञा पुद्गलसंज्ञा, सैवासंज्ञा । तत्कस्य हेतोः ? सर्वसंज्ञापगता हि बुद्धा भगवन्तः ॥

[20]एवमुक्ते भगवाना[21]युष्मन्त सुभूतिमेतदवोचत्—एवमेतत् सुभूते, [22]एवमेतत् । परमाश्चर्यसमन्वागतास्ते [23]सत्त्वा भविष्यन्ति, ये इ[24]ह सुभूते सूत्रे भाष्यमाणे नोत्रसिष्यन्ति न

---

१ G °कोपमान्  २ G om. from एव upto °त्यजेत्  ३ G om सप्रकाशयेत्  ४ G बहु पुण्य for बहुतर पुण्यस्कन्धं  ५ G प्रसवेत for प्रसुनुयात्  ६ G धर्मप्रवेगेन  ७ G om from अग्र° upto अर्थाय  ८ G मे for मया  ९ G om भगवन  १० G जात्वय for जात्वेवरूप  ११ G om बोधिसत्त्वा  १२ G om श्रुत्वा  १३ G om तत्कस्य हेतोः.  १४ M यदाहं for यदहं  १५ G अधिमुच्ये for °मुच्य  १६ G om from भविष्यन्ति upto पर्यवाप्स्यन्ति  १७ G om परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति  १८ G प्रवत्स्यते  १९ G om from प्रवर्तिष्यते upto तत्कस्य हेतो (second)  २० G om एवमुक्ते  २१ G om आयुष्मन्त सुभूतिमेतद्  २२ G om एवमेतत्  २३ G om सत्त्वा  २४ G इम धर्मपर्यायं श्रुत्वा for इह सुभूते सूत्रे

सत्रसिष्यन्ति न संत्रासमापत्स्यन्ते । तत्कस्य हेतो. ? परमपारमितेय सुभूते तथागतेन भाषिता यदुत[1]पारमिता । यां च सुभूते तथागतः परमपारमिता भाषते, तामपरिमाणा अपि[2] बुद्धा भगवन्तो भाषन्ते । तेनोच्यते परमपारमितेति ॥

अपि तु खलु पुनः सुभूते या तथागतस्य क्षान्तिपारमिता, सैव अपारमिता । तत्कस्य हेतोः ? यदा मे सुभूते कलिराजा[3] अङ्गप्रत्यङ्गमासान्यच्छैत्सीत्, नासीन्मे[4] तस्मिन् समये आत्मसंज्ञा वा सत्त्वसज्ञा वा जीवसज्ञा वा पुद्गलसज्ञा वा, नापि[5] मे काचित्सज्ञा वा असज्ञा वा बभूव । तत्कस्य हेतोः ? सचेन्मे सुभूते तस्मिन् समये आत्मसज्ञा अभविष्यत्, व्यापादसज्ञापि मे तस्मिन् समयेऽभविष्यत् । सचेत्सत्त्वसज्ञा जीवसज्ञा पुद्गलसज्ञाभविष्यत्, व्यापादसज्ञापि मे तस्मिन् समयेऽभविष्यत् । तत्कस्य[6] हेतोः ? अभिजानाम्यह सुभूते अतीतेऽध्वनि पञ्च जातिशतानि यदह[7] क्षान्तिवादी ऋषिरभूवम् । तत्रापि मे नात्मसज्ञा बभूव[8], न सत्त्वसज्ञा, न जीवसज्ञा, न पुद्गलसज्ञा बभूव[9] । तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन सर्वसज्ञा विवर्जयित्वा[10] अनुत्तराया[11] सम्यक्सबोधौ चित्तमुत्पादयितव्यम् । न M 32 रूपप्रतिष्ठित चित्तमुत्पादयितव्यम्, न शब्दगन्धरसस्प्रष्टव्यधर्मप्रतिष्ठित चित्तमुत्पादयितव्यम्, न धर्मप्रतिष्ठित चित्तमुत्पादयितव्यम्, नाधर्मप्रतिष्ठितं चित्तमुत्पादयितव्यम्, न क्वचित्प्रतिष्ठित चित्तमुत्पादयितव्यम् । तत्कस्य हेतोः ? यत्प्रतिष्ठित तदेवाप्रतिष्ठितम् । तस्मादेव तथागतो भाषते—अप्रतिष्ठितेन बोधिसत्त्वेन दान दातव्यम् । न रूपशब्दगन्धरसस्पर्शधर्मप्रतिष्ठितेन दान दातव्यम् ॥

अपि तु खलु पुनः सुभूते बोधिसत्त्वेन एवरूपो दानपरित्याग कर्तव्यः सर्वसत्त्वानामर्थाय । तत्कस्य हेतो. ? या चैषा सुभूते सत्त्वसंज्ञा, सैव असंज्ञा । य एव ते सर्वसत्त्वास्तथागतेन भाषितास्त एव असत्त्वा' । तत्कस्य हेतो. ? भूतवादी सुभूते तथागतः, सत्यवादी तथावादी अनन्यथावादी तथागतः, न वितथवादी तथागत. ॥

अपि तु खलु पुनः सुभूते यस्तथागतेन धर्मोऽभिसबुद्धो देशितो निध्यात., न तत्र सत्य न मृषा । तद्यथापि नाम सुभूते पुरुषोऽन्धकारप्रविष्टो न किंचिदपि पश्येत्, एव वस्तुपतितो बोधिसत्त्वो द्रष्टव्यो यो वस्तुपतितो दान परित्यजति । तद्यथापि नाम सुभूते चक्षुष्मान् पुरुषः प्रभाताया रात्रौ सूर्येऽभ्युद्गते नानाविधानि रूपाणि पश्येत्, एवमवस्तुपतितो बोधिसत्त्वो द्रष्टव्यो योऽवस्तुपतितो दान परित्यजति ॥

अपि तु खलु पुनः सुभूते ये कुलपुत्रा वा कुलदुहितरो वा इम धर्मपर्यायमुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, M 33

---

१ G om यदुतापारमिता २ G om अपि ३ M कलिङ्गराजा ४ M om नासीन्मे ५ G om from नापि upto अभविष्यद् ६ G om तत्कस्य हेतो ७ G योऽहं for यदह ८ G अभूत् for बभूव ९ G om बभूव १० G वर्जयित्वा for विवर्ज° ११ Folio 6 is missing in G

ज्ञातास्ते सुभूते तथागतेन बुद्धज्ञानेन, दृष्टास्ते सुभूते तथागतेन बुद्धचक्षुषा, बुद्धास्ते तथागतेन । सर्वे ते सुभूते सत्त्वा अप्रमेयमसङ्ख्येय पुण्यस्कन्ध प्रसविष्यन्ति प्रतिग्रहीष्यन्ति ॥ १४ ॥

यश्च खलु पुनः सुभूते स्त्री वा पुरुषो वा पूर्वाह्णकालसमये गङ्गानदीवालुकासमानात्मभावान् परित्यजेत्, एव मध्याह्नकालसमये गङ्गानदीवालुकासमानात्मभावान् परित्यजेत्, सायाह्नकालसमये गङ्गानदीवालुकासमानात्मभावान् परित्यजेत्, अनेन पर्यायेण बहूनि कल्पकोटिनियुतशतसहस्राण्यात्मभावान् परित्यजेत्, यश्चेम धर्मपर्याय श्रुत्वा न प्रतिक्षिपेत्, अयमेव ततोनिदान बहुतर पुण्यस्कन्ध प्रसुनुयादप्रमेयमसङ्ख्येयम्, कः पुनर्वादो यो लिखित्वा उद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात्, परेभ्यश्च विस्तरेण सप्रकाशयेत् ॥

अपि तु खलु पुनः सुभूते अचिन्त्योऽतुल्योऽय धर्मपर्याय. । अय च सुभूते धर्मपर्यायस्तथागतेन भाषितोऽग्रयानसप्रस्थिताना सत्त्वानामर्थाय, श्रेष्ठयानसप्रस्थिताना सत्त्वानामर्थाय । ये इम धर्मपर्यायमुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, ज्ञातास्ते सुभूते तथागतेन बुद्धज्ञानेन, दृष्टास्ते सुभूते तथागतेन बुद्धचक्षुषा, बुद्धास्ते तथागतेन । सर्वे ते सुभूते सत्त्वा अप्रमेयेण पुण्यस्कन्धेना

M 34 समन्वागता भविष्यन्ति । अचिन्त्येनातुल्येनामाप्येना[1]परिमाणेन [2]पुण्यस्कन्धेन समन्वागता भविष्यन्ति । सर्वे ते सुभूते सत्त्वा. समाशेन बोधि धारयिष्यन्ति [3]वाचयिष्यन्ति पर्यवाप्स्यन्ति । तत्कस्य हेतो. ? न हि शक्य सुभूते अय धर्मपर्यायो हीनाधिमुक्तिकैः सत्त्वै श्रोतुम्, नात्मदृष्टिकैर्न [4]सत्त्वदृष्टिकैर्न जीवदृष्टिकैर्न पुद्गलदृष्टिकै· । नाबोधिसत्त्वप्रतिज्ञैः सत्त्वैः शक्यमय धर्मपर्यायः श्रोतु वा उद्ग्रहीतु वा [5]धारयितुं वा वाचयितु वा पर्यवाप्तु वा । नेद स्थान विद्यते ॥

अपि तु खलु पुनः सुभूते यत्र पृथिवीप्रदेशे इद सूत्र प्रकाशयिष्यते, पूजनीयः स पृथिवीप्रदेशो भविष्यति सदेवमानुषासुरस्य लोकस्य । वन्दनीयः [6]प्रदक्षिणीयश्च [7]स पृथिवीप्रदेशो भविष्यति, चैत्यभूत. स पृथिवीप्रदेशो भविष्यति ॥ १५ ॥

[8]अपि तु ये ते सुभूते कुलपुत्रा वा कुलदुहितरो वा इमानेवरूपान् सूत्रान्तानुद्ग्रहीष्यन्ति [9]धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, योनि[10]शश्च मनसिकरिष्यन्ति, परेभ्यश्च विस्तरेण सप्रका[10]शयिष्यन्ति, ते परिभूता भविष्यन्ति, [11]सुपरिभूताश्च भविष्यन्ति । तत्कस्य हेतो ? यानि च तेषा [12]सुभूते सत्त्वाना पौर्वजन्मिकान्यशुभानि कर्माणि [13]कृतान्यपायसवर्त-

१ In G, folio 7a begins here २ G om पुण्यस्कन्धेन समन्वागता भविष्यन्ति ३ G om वाचयिष्यन्ति पर्यवाप्स्यन्ति ४ G सत्त्वजीवपुद्गलदृष्टिकै for सत्त्वदृष्टिकैर्न जीवदृष्टिकैर्न पुद्गलदृष्टिकै नाबोधिसत्त्वप्रतिज्ञै सत्त्वै ५ G om धारयितु वा वाचयितु वा पर्यवाप्तु वा ६ G प्रदक्षिणीकरणीयः for प्रदक्षिणीयश्च ७ G om स पृथिवीप्रदेशो भविष्यति ८ G om अपि तु ९ G यावत् for धारयिष्यन्ति वाचयिष्यन्ति १० G om from योनिशश्च upto सप्रकाशयिष्यन्ति. ११ G सुपरिभूता for सुपरिभूताश्च भविष्यन्ति । तत्कस्य हेतो. १२ G om. सुभूते सत्त्वाना. १३ G om कृतानि

नीयानि, दृष्ट एव धर्मे परिभूततया [1]तानि पौर्वजन्मिकान्यशुभानि कर्माणि क्षपयिष्यन्ति, बुद्धबोधिं चानुप्राप्स्यन्ति ॥

अभिजानाम्यहं सुभूते अतीतेऽध्वन्यसंख्येयैः कल्पैरसंख्येयतरैर्दीपंकरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य परेण [2]परतरेण चतुरशीतिबुद्धकोटिनियुतशतसहस्राण्यभूवन् [3]ये M 35 मयारागिताः, आराग्य न विरागिताः। यच्च मया सुभूते ते बुद्धा भगवन्त [4]आरागिताः, आराग्य न विरागिताः, यच्च [5]पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां [6]सद्धर्मविप्रलोपकाले वर्तमाने इमानेवंरूपान् सूत्रान्तानुद्ग्रहीष्यन्ति [7]धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, [8]परेभ्यश्च विस्तरेण संप्रकाशयिष्यन्ति, अस्य खलु[9] पुनः सुभूते पुण्यस्कन्धस्यान्तिकाद्[10]सौ पौर्वकः पुण्यस्कन्धः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि [11]कोटितमीमपि कोटिशततमीमपि कोटिशतसहस्रतमीमपि कोटिनियुतशतसहस्रतमीमपि[11]। संख्यामपि कलामपि गणनामपि उपमामपि [12]उपनिषदमपि [13]यावदौपम्यमपि न क्षमते ॥

सचेत्पुनः सुभूते तेषां कुलपुत्राणां कुलदुहितॄणां वा अहं पुण्यस्कन्धं भाषेयम्, [14]यावत्ते कुलपुत्रा वा कुलदुहितरो [15]वा तस्मिन् समये पुण्यस्कन्धं [16]प्रसविष्यन्ति, प्रतिग्रहीष्यन्ति, उन्मादं सत्त्वा अनुप्राप्नुयुश्चित्तविक्षेपं वा गच्छेयुः। अपि तु खलु पुनः सुभूते अचिन्त्योऽ[17]तुल्योऽयं धर्मपर्यायस्[18]तथागतेन भाषितः। अस्य अचिन्त्य एव विपाकः [19]प्रतिकाङ्क्षितव्यः ॥ १६ ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—कथं भगवन् बोधिसत्त्वयानसंप्रस्थितेन स्थातव्यम्, कथं प्रतिपत्तव्यम्, कथं चित्तं प्रग्रहीतव्यम्? भगवानाह—इह सुभूते बोधिसत्त्वयानसंप्रस्थितेन एवं चित्तमुत्पादयितव्यम्—सर्वे सत्त्वा मया अनुपधिशेषे निर्वाण- M 36 धातौ परिनिर्वापयितव्याः। एवं च सत्त्वान् परिनिर्वाप्य न कश्चित्सत्त्वः परिनिर्वापितो भवति। तत्कस्य हेतोः? सचेत्सुभूते बोधिसत्त्वस्य सत्त्वसंज्ञा प्रवर्तेत, [20]न स बोधिसत्त्व इति वक्तव्यः। जीवसंज्ञा वा यावत्पुद्गलसंज्ञा वा प्रवर्तेत, न स बोधिसत्त्व इति वक्तव्यः। तत्कस्य हेतोः? नास्ति सुभूते स [21]कश्चिद्धर्मो यो बोधिसत्त्वयानसंप्रस्थितो नाम ॥

१ G om तानि पौर्वजन्मिकान्यशुभानि कर्माणि २ G om परतरेण ३ G आरागितानि, आराग्य च न विरागितानि ४ G om आरागिता ५ G वरिमे for पश्चिमे काले पश्चिमे समये ६ G om सद्धर्मविप्रलोपकाले वर्तमाने ७ G यावत् for धारयिष्यन्ति वाचयिष्यन्ति ८ G om परेभ्यश्च विस्तरेण संप्रकाशयिष्यन्ति ९ G om खलु. १० G om अन्तिकात् ११ G om from कोटितमीमपि upto °सहस्रतमीमपि १२ G उपनिशामपि for उपनिषदमपि १३ G om यावदौपम्यमपि १४ G यावन्तस्ते सत्त्वा for यावत्ते १५ G च for वा १६ G om प्रसविष्यन्ति १७ G om अतुल्य १८ G om तथागतेन भाषित १९ G आह for प्रतिकाङ्क्षितव्य। अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् २० G om न स बोधिसत्त्व इति वक्तव्य. २१ G om. कश्चित्.

तत्किं मन्यसे सुभूते अस्ति स कश्चिद्धर्मो यस्तथागतेन दीपकरस्य तथागतस्यान्तिकादनुत्तरा सम्यक्संबोधिमभिसंबुद्धः ? [1]एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यथाहं भगवतो भाषितस्यार्थमाजानामि, नास्ति स भगवन् कश्चिद्धर्मो यस्तथागतेन दीपकरस्य तथागतस्यार्हतः[2] सम्यक्संबुद्धस्यान्तिकादनुत्तरा सम्यक्संबोधिमभिसंबुद्धः । एव[3]मुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत् । नास्ति सुभूते स कश्चिद्धर्मो यस्तथागतेन दीपकरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिकादनुत्तरा सम्यक्संबोधिमभिसंबुद्धः । सचेत्पुनः सुभूते कश्चिद्धर्मस्तथागतेनाभिसंबुद्धोऽभविष्यत्, न मां दीपंकरस्तथागतो व्याकरिष्यत्—भविष्यसि त्वं माणव अनागतेऽध्वनि शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्ध इति । यस्मात्तर्हि सुभूते तथागतेनार्हता सम्यक्संबुद्धेन नास्ति स कश्चिद्धर्मो योऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः, तस्मादहं दीपंकरेण तथागतेन व्याकृतः—भविष्यसि त्वं माणव अनागतेऽध्वनि शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धः । तत्कस्य हेतोः ? तथागत इति सुभूते भू[4]ततथताया एतदधिवचनम् । [5]तथागत इति सुभूते अनुत्पादधर्मताया एतदधिवचनम् । तथागत इति सुभूते धर्मोच्छेदस्यैतदधिवचनम् । तथागत इति सुभूते अत्यन्तानुत्पन्नस्यैतदधिवचनम् । तत्कस्य हेतोः ? एष सुभूते अनुत्पादो यः परमार्थः[5] । यः कश्चित्सुभूते एवं वदेत्—तथागतेनार्हता[6] सम्यक्संबुद्धेन अनुत्तरा सम्यक्संबोधिरभिसंबुद्धेति, स[7] वितथं वदेत् । अभ्याचक्षीत मां स सुभूते असतोद्गृहीतेन । तत्कस्य हेतोः[7] ? नास्ति सुभूते स कश्चिद्धर्मो यस्तथागतेन अनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । यश्च सुभूते तथागतेन धर्मोऽभिसंबुद्धो देशितो[8] वा तत्र न सत्यं न मृषा । तस्मात्तथागतो भाषते—सर्वधर्मा बुद्धधर्मा इति । त[9]त्कस्य हेतोः ? सर्वधर्मा इति सु[10]भूते अधर्मास्त[11]थागतेन भाषिताः । तस्मादुच्यन्ते सर्वधर्मा बु[12]द्धधर्मा इति ॥

M 37

तद्यथापि नाम सुभूते पुरुषो भवेदुपेतकायो महाकायः ? [13]आयुष्मान् सुभूतिराह—योऽसौ [14]भगवंस्तथागतेन पुरुषो भाषित उपेतकायो महाकाय [15]इति, अकायः स भगवंस्तथागतेन भाषितः । तेनोच्यते उपेतकायो महाकाय इति ॥

भगवानाह—एवमेतत्सुभूते । यो बोधिसत्त्व एवं वदेत्—अहं सत्त्वान् परिनिर्वापयिष्यामीति, न स बोधिसत्त्व इति वक्तव्यः । तत्कस्य हेतोः ? अस्ति सुभूते स कश्चिद्धर्मो

M 38

यो बोधिसत्त्वो नाम ? [16]सुभूतिराह—नो हीदं भगवन् । [17]नास्ति स कश्चिद्धर्मो यो बोधिसत्त्वो

---

१ G आह for एवमुक्ते माजानामि २ G om अर्हत सम्यक्संबुद्धस्य ३ G आह for एवमुक्ते मभिसंबुद्ध ४ G om भूत°. ५ G om from तथागत upto परमार्थ. ६ G om अर्हता सम्यक्संबुद्धेन ७ G om from स वितथं upto हेतो ८ G om देशितो वा. ९ G om तत्कस्य हेतो ? सर्वधर्मा इति १० After सुभूते, G adds सर्वे ते ११ G om तथागतेन भाषिताः । तेनोच्यते १२ G om. बुद्धधर्मा १३ G om आयुष्मान् १४ G om भगवन्. १५ G om इति १६ G om सुभूतिः १७ G om. from नास्ति upto नाम.

नाम[१]। भगवानाह—सत्त्वा[२] सत्त्वा इति सुभूते असत्त्वास्ते तथागतेन भाषिता., तेनोच्यन्ते सत्त्वा[२] इति। तस्मात्तथागतो भाषते—निरात्मानः सर्वधर्मा निर्जीवा निष्पोषा[३] निष्पुद्गलाः सर्वधर्मा[४] इति॥

य· सुभूते बोधिसत्त्व एव वदेत्—अह क्षेत्रव्यूहान्निष्पादयिष्यामीति, स[५] वितथ वदेत्। तत्कस्य हेतोः? क्षेत्रव्यूहाः क्षेत्रव्यूहा इति सुभूते अव्यूहास्ते तथागतेन भाषिता.। तेनोच्यन्ते क्षेत्रव्यूहा इति॥

य सुभूते बोधिसत्त्वो निरात्मानो धर्मा निरात्मानो धर्मा इत्यधिमुच्यते, तथागतेनार्हता सम्यक्सबुद्धेन बोधिसत्त्वो महासत्त्व इत्याख्यातः॥ १७॥

भगवानाह[६]—तत्किं मन्यसे सुभूते—सविद्यते तथागतस्य मासचक्षु·? सुभूतिराह[७]—एवमेतद्भगवन्, सविद्यते तथागतस्य मासचक्षु। भगवानाह—तत्किं मन्यसे सुभूते सविद्यते तथागतस्य दिव्य चक्षु·? सुभूतिराह[८]—एवमेतद्भगवन्, सविद्यते तथागतस्य दिव्य चक्षु। भगवानाह—तत्किं मन्यसे सुभूते सविद्यते तथागतस्य प्रज्ञाचक्षु·? सुभूतिराह—एवमेतद्भगवन्, सविद्यते तथागतस्य प्रज्ञाचक्षुः। भगवानाह—तत्किं मन्यसे सुभूते सविद्यते तथागतस्य धर्मचक्षु? सुभूतिराह—एवमेतद्भगवन्, सविद्यते तथागतस्य धर्मचक्षुः। M 39
भगवानाह—तत्किं मन्यसे सुभूते सविद्यते तथागतस्य बुद्धचक्षु.? सुभूतिराह—एवमेतद्भगवन्, सविद्यते तथागतस्य बुद्धचक्षुः॥

भगवानाह[९]—तत्किं मन्यसे सुभूते यावन्त्यो गङ्गाया महानद्या वालुका., अपि नु ता वालुकास्तथागतेन भाषिताः? सुभूतिराह—एवमेतद्भगवन्, एवमेतत् सुगत। भाषितास्तथागतेन वालुका। भगवानाह- तत्किं मन्यसे सुभूते यावत्यो गङ्गाया महानद्या वालुका, तावत्य एव गङ्गानद्यो भवेयुः, तासु या वालुकाः, तावन्तश्च लोकधातवो भवेयु, कच्चिद्बहवस्ते लोकधातवो भवेयुः? सुभूतिराह[१०]—एवमेतद्भगवन्, एवमेतत् सुगत। बहवस्ते लोकधातवो भवेयु। भगवानाह—यावन्तः सुभूते तेषु लोकधातुषु सत्त्वा, तेषामह नानाभावा चित्तधारा प्रजानामि[११]। तत्कस्य हेतो.? चित्तधारा चित्तधारेति सुभूते अधारैषा[१२] तथागतेन भाषिता, तेनोच्यते चित्तधारेति। तत्कस्य हेतो.? अतीत सुभूते चित्त नोपलभ्यते। अनागत चित्त नोपलभ्यते। प्रत्युत्पन्न चित्त नोपलभ्यते॥ १८॥

तत्किं मन्यसे सुभूते यः कश्चित्कुलपुत्रो[१३] वा कुलदुहिता वा इम त्रिसाहस्रमहासाहस्र लोकधातु सप्तरत्नपरिपूर्णं कृत्वा तथागतेभ्योऽर्हद्भ्यः[१४] सम्यक्सबुद्धेभ्यो दान दद्यात्, अपि नु

१ G om from सत्त्वा upto सत्त्वा इति २ G नि सत्त्वा for निरात्मान ३ G reads निष्पुद्गला before निष्पोषा. ४ G om सर्वधर्मा इति ५ G सोऽपि तथैव वक्तव्य for स वितथं वदेत् ६ G om भगवानाह ७ G om. सुभूति ८ G प्रज्ञाचक्षु धर्मचक्षु बुद्धचक्षु for the expanded phrases of the text ९ G om from भगवानाह upto वालुका १० G om from सुभूतिराह upto भवेयु ११ G जानीया for प्रजानामि १२ G अधारास्ता for अधारैषा १३ G om कश्चित्कुलपुत्रो वा कुलदुहिता वा. १४ G om. तथागतेभ्योऽर्हद्भ्य सम्यक्सबुद्धेभ्य.

M 40 स कुलपुत्रो वा कुलदुहिता वा ततोनिदान बहु [1]पुण्यस्कन्ध [2]प्रसुनुयात् ? सुभूतिराह—बहु भगवन्, बहु सुगत । भगवानाह—एवमेतत्सुभूते, एवमेतत् । बहु स कुलपुत्रो वा कुलदुहिता वा ततोनिदान [3]पुण्यस्कन्ध प्रसुनु[4]यादप्रमेयमसङ्ख्येयम् । तत्कस्य हेतोः ? पुण्यस्कन्ध पुण्यस्कन्ध इति सुभूते अस्कन्धः स तथागतेन भाषितः । तेनोच्यते पुण्यस्कन्ध इति । सचेत् पुन सुभूते पुण्यस्कन्धोऽभविष्यत्, न तथागतोऽभाषिष्यत् पुण्यस्कन्ध पुण्यस्कन्ध इति ॥ १९ ॥

तत्किं मन्यसे सुभूते रूपकायपरिनिष्पत्त्या तथागतो द्रष्टव्य· ? [5]सुभूतिराह—नो हीद भगवन् । न रूपकायपरिनिष्पत्त्या तथागतो द्रष्टव्य· । तत्कस्य हेतो ? रूपकायपरिनिष्पत्ती रूपकायपरिनिष्पत्तिरिति भगवन् अपरिनिष्पत्तिरेषा तथागतेन भाषिता । तेनोच्यते रूपकायपरिनिष्पत्तिरिति ॥

भगवानाह—तत्किं मन्यसे सुभूते लक्षणसपदा तथागतो द्रष्टव्य ? [6]सुभूतिराह—नो हीद भगवन् । न लक्षणसपदा तथागतो द्रष्टव्य । तत्कस्य हेतोः ? यैषा भगवन् लक्षणसपत्तथागतेन भाषिता, अलक्षणसपदेषा तथागतेन भाषिता । तेनोच्यते लक्षणसपदिति ॥२०॥

भगवानाह—तत्किं मन्यसे सुभूते अपि नु तथागतस्यैव भवति—मया धर्मो देशित इति ? [7]सुभूतिराह—नो हीद भगवन् तथागतस्यैव भवति—मया धर्मो देशित इति ।
M 41 भगवानाह—यः सुभूते एव वदेत्—तथागतेन धर्मो देशित इति, [8]स वितथ वदेत् । अभ्याचक्षीत मा स सुभूते असतोद्गृहीतेन । तत्कस्य हेतो· ? धर्मदेशना धर्मदेशनेति सुभूते नास्ति स कश्चिद्धर्मो यो धर्मदेशना नामोपलभ्यते ॥

[9]एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—अस्ति भगवन् केचित्सत्त्वा भविष्यन्त्यनागतेऽध्वनि [10]पश्चिमे काले पश्चिमे समये पश्चिमाया पञ्चशत्या सद्धर्मविप्रलोपे वर्तमाने, य इमानेवरूपान् [11]धर्मान् श्रुत्वा अभिश्रद्धास्यन्ति । भगवानाह—न ते सुभूते सत्त्वा नासत्त्वाः । तत्कस्य हेतो· ? [12]सत्त्वाः सत्त्वा इति सुभूते सर्वे ते सुभूते असत्त्वास्तथागतेन भाषिताः । तेनोच्यन्ते [13]सत्त्वा इति ॥ २१ ॥

तत्किं मन्यसे सुभूते—अपि नु अस्ति स कश्चिद्धर्म·, यस्तथागतेनानुत्तरां सम्यक्सबोधिमभिसबुद्धः ? आयु[14]ष्मान् सुभूतिराह—नो[15] हीद भगवन् । नास्ति स भगवन् कश्चिद्धर्मो यस्तथागतेनानुत्तरा सम्यक्सबोधिमभिसबुद्ध· । भगवानाह—एवमेतत्सुभूते, एवमेतत् । अणुरपि तत्र धर्मो न सविद्यते नोपलभ्यते । तेनोच्यते अनुत्तरा सम्यक्सबोधिरिति ॥ २२ ॥

---

१ G पुण्यं for पुण्यस्कन्ध. २ G प्रसवेत for प्रसुनुयात् ३ G बहुपुण्यं for पुण्यस्कन्ध ४ G om from अप्रमेय upto पुण्यस्कन्ध इति ५ G om सुभूतिराह ६ G om सुभूति ७ G om from सुभूति upto भगवानाह ८ G om स वितथं वदेत् ९ G om from एवमुक्ते upto अवोचत् १० G om from पश्चिमे upto वर्तमाने ११ After धर्मान् G adds भाषमाणान्. १२ G सर्वसत्त्वा for सत्त्वा सत्त्वा १३ G सर्वसत्त्वा for सत्त्वा. १४ G om. आयुष्मान् सुभूति १५ G om नो हीद भगवन्.

अपि तु खलु पुनः सुभूते समः स धर्मो न तत्र [१]कश्चिद्विषमः । तेनोच्यते अनुत्तरा सम्यक्सबोधिरिति । [२]निरात्मत्वेन नि सत्त्वत्वेन निर्जीवत्वेन निष्पुद्गलत्वेन समा सा अनुत्तरा सम्यक्सबोधिः सर्वै कुशलैर्धर्मैरभिसबुध्यते । तत्कस्य[३] हेतोः ? कुशला धर्मा. कुशला धर्मा इति सुभूते अधर्माश्चैव ते तथागतेन भाषिता । तेनोच्यन्ते कुशला धर्मा इति ॥ २३ ॥

यश्च खलु पुनः सुभूते स्त्री [४]वा पुरुषो वा यावन्तस्त्रिसाहस्रमहासाहस्रे लोकधातौ सुमेरव पर्वतराजान, तावतो राशीन् सप्ताना रत्नानामभिसहृत्य [५]तथागतेभ्योऽर्हद्भ्य. सम्यक्सबुद्धेभ्यो दान दद्यात्, यश्च [६]कुलपुत्रो वा कुलदुहिता वा इतः प्रज्ञापारमिताया [७]धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य परेभ्यो देशयेत्, अस्य सुभूते पुण्यस्कन्धस्य असौ पौर्वक. पुण्यस्कन्ध. शततमीमपि कला नोपैति, [८]यावदुपनिषदमपि न क्षमते ॥ २४ ॥ M 42

तत्किं मन्यसे सुभूते—अपि नु तथागतस्यैव भवति—मया सत्त्वा [९]परिमोचिता इति ? न खलु पुन सुभूते एव द्रष्टव्यम् । तत्कस्य हेतो. ? [१०]नास्ति सुभूते कश्चित्सत्त्वो यस्तथागतेन परिमोचित. । यदि पुनः सुभूते कश्चित्सत्त्वोऽभविष्यद्यस्तथागतेन परिमोचित स्यात्, स एव [११]तथागतस्यात्मग्राहोऽभविष्यत्, सत्त्वग्राहो जीवग्राह पुद्गलग्राहोऽभविष्यत् । आत्मग्राह इति सुभूते अग्राह एष तथागतेन भाषितः । स च बालपृथग्जनैरुद्गृहीतः । बालपृथग्जना इति सुभूते अजना एव ते तथागतेन भाषिता. । तेनोच्यन्ते बालपृथग्जना इति ॥ २५ ॥

तत्किं मन्यसे सुभूते—लक्षणसपदा तथागतो द्रष्टव्य. ? [१२]सुभूतिराह—नो हीद भगवन् । [१३]यथाह भगवतो भाषितस्यार्थमाजानामि, न लक्षणसपदा तथागतो द्रष्टव्य. । भगवानाह—[१४]साधु साधु सुभूते, एवमेतत्सुभूते, एवमेतद्यथा वदसि । न लक्षणसपदा तथागतो द्रष्टव्य । तत्कस्य हेतोः ? सचेत्पुन सुभूते लक्षणसपदा तथागतो द्रष्टव्योऽभविष्यत्, राजापि चक्रवर्ती तथागतोऽभविष्यत् । [१५]तस्मान्न लक्षणसपदा तथागतो द्रष्टव्य । आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यथाह भगवतो भाषितस्यार्थमाजानामि, न लक्षणसपदा तथागतो द्रष्टव्य. ॥ M 43

अथ खलु भगवांस्तस्या वेलायामिमे[१६] गाथे अभाषत—

ये मा रूपेण [१७]चाद्राक्षुर्ये मा घोषेण [१७]चान्वगुः ।
मिथ्याप्रहाणप्रसृता न मा द्रक्ष्यन्ति ते जनाः ॥ १ ॥
[१८]धर्मतो बुद्धो द्रष्टव्यो धर्मकाया हि नायका ।
[१९]धर्मता च न विज्ञेया न सा शक्या विजानितुम् ॥ २ ॥ २६ ॥

१ G किंचित् for कश्चित् २ G om निरात्मत्त्वेन नि सत्त्वत्वेन ३ G om तत्कस्य हेतो ४ G om. स्त्री वा पुरुषो वा ५ G om तथागतेभ्योऽर्हद्भ्य सम्यक्सबुद्धेभ्यो ६ G om कुलपुत्रो वा कुलदुहितावा इत ७ G om धर्मपर्यायात् ८ G उपनिशाम् for उपनिषदम् ९ G मोचिता for परिमोचिता १० G न स for नास्ति सुभूते ११ G तस्य for तथागतस्य १२ आहैवं for सुभूतिराह–नो हीद १३ G om यथाहं भगवतो भाषितस्यार्थमाजानामि १४ G om from साधु upto हेतो १५ G om from तस्मान्न upto अवोचत् १६ G इमा गाथा for इमे गाथे १७ G om च १८ G द्रष्टव्यो धर्मतो बुद्धो धर्मकायस्तथागत for धर्मतो बुद्धो द्रष्टव्यो धर्मकाया हि नायका १९ G धर्मतो चास्य विज्ञेया न स शक्यं विजानितुम् for line.

तत्किं मन्यसे सुभूते लक्षणसंपदा तथागतेन अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा? न खलु पुनस्ते सुभूते एवं द्रष्टव्यम् । [1]तत्कस्य हेतोः? न हि[2] सुभूते लक्षणसंपदा तथागतेन अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा स्यात्[3] । न[4] खलु पुनस्ते सुभूते कश्चिदेव वदेत्—बोधिसत्त्वयानसंप्रस्थितैः[5] कस्यचिद्धर्मस्य विनाशः प्रज्ञप्तः उच्छेदो वेति । न खलु पुनस्ते सुभूते एवं द्रष्टव्यम् । [1]तत्कस्य हेतोः? न बोधिसत्त्वयानसंप्रस्थितैः कस्यचिद्धर्मस्य विनाशः प्रज्ञप्तो नोच्छेदः ॥ २७ ॥

यश्च खलु पुनः सुभूते कुलपुत्रो वा कुलदुहिता वा गङ्गानदीवालुकासमाँल्लोकधातून् सप्तरत्नपरिपूर्णं कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्यात्, यश्च

M 44 बोधिसत्त्वो निरात्मकेष्वनुत्पत्तिकेषु[5] धर्मेषु क्षान्तिं प्रतिलभते, अयमेव ततोनिदानं बहुतरं पुण्यस्कन्धं[6] प्रसवेद[7]प्रमेयमसंख्येयम् । न खलु पुनः सुभूते बोधिसत्त्वेन महासत्त्वेन[8] पुण्यस्कन्धः परिग्रहीतव्यः । आयुष्मान्[9] सुभूतिराह—ननु भगवन् बोधिसत्त्वेन पुण्यस्कन्धः परिग्रहीतव्यः? भगवानाह—परिग्रहीतव्यः सुभूते नो ग्रहीतव्यः । तेनोच्यते परिग्रहीतव्य इति ॥ २८ ॥

अपि तु खलु पुनः सुभूते यः कश्चिदेव वदेत्—तथागतो गच्छति वा आगच्छति वा तिष्ठति वा निषीदति वा, शय्यां वा कल्पयति, न मे सुभूते (स[10]) भाषितस्यार्थमाजानाति । तत्कस्य हेतोः? तथागत इति सुभूते उच्यते न क्वचिद्गतो न कुतश्चिदागतः । तेनोच्यते तथागतोऽर्हन् सम्यक्संबुद्ध इति ॥ २९ ॥

यश्च खलु पुनः सुभूते कुलपुत्रो वा कुलदुहिता वा यावन्ति त्रिसाहस्रमहासाहस्रे लोकधातौ पृथिवीरजांसि, तावता[11] लोकधातूनामेवंरूपं मषिं कुर्यात् यावदेवमसंख्येयेन[12] वीर्येण तद्यथापि नाम परमाणुसंचयः, तत्किं मन्यसे सुभूते—अपि[13] नु बहुः स परमाणुसंचयो भवेत्? सुभूतिराह[14]—एवमेतद्भगवन्, एवमेतत्सुगत[15] । बहुः स परमाणुसंचयो भवेत् । तत्कस्य हेतोः? सचेद्भगवन् बहुः[16] परमाणुसंचयोऽभविष्यत्, न भगवानवक्ष्यत्—परमाणुसंचय इति । तत्कस्य हेतोः? योऽसौ भगवन्[17] परमाणुसंचयस्तथागतेन[18] भाषितः, असंचयः

M 45 स तथागतेन[19] भाषितः । तेनोच्यते परमाणुसंचय इति । यश्च तथागतेन[20] भाषितस्त्रिसाहस्रमहासाहस्रो लोकधातुरिति, अधातुः स तथागतेन भाषितः । तेनोच्यते त्रिसाहस्रमहासाहस्रो लोकधातुरिति । तत्कस्य हेतोः? सचेद्भगवन् लोकधातुर[21]भविष्यत्, स एव पिण्डग्राहोऽ-

---

१ G om तत्कस्य हेतो  २ G खलु पुनस्ते for हि  ३ G om स्यात्.  ४ G यत्खलु पुन सुभूते स्यादेव for न खलु पुनस्ते सुभूते कश्चिदेव वदेत्  ५ G om अनुत्पत्तिकेषु.  ६ G पुण्य for पुण्यस्कन्ध  ७ G om अप्रमेयमसख्येयम्  ८ G om. महासत्त्वेन  ९ G om आयुष्मान् सुभूति  १० M om स  ११ G तावतो लोकधातून् for तावता लोकधातूना. १२ G om यावदेवमसख्येयेन वीर्येण.  १३ G om अपि नु  १४ G om. सुभूति  १५ G om एवमेतत् सुगत  १६ G om बहु परमाणु  १७ G om. भगवन्.  १८ G om. तथागतेन.  १९ G भगवता for तथागतेन.  २० G तथागतो भाषति for तथागतेन भाषित  २१ G धातु for लोकधातुः.

भविष्यत् । यश्चैव पिण्डग्राहस्तथागतेन भाषितः, अग्राहः स तथागतेन भाषित. । तेनोच्यते पिण्डग्राह इति । भगवानाह—पिण्डग्राहश्चैव [1] सुभूते अव्यवहारोऽनभिलाप्यः । [2] न स धर्मो नाधर्मः । स च बालपृथग्जनैरुद्गृहीत. ॥ ३० ॥

तत्कस्य हेतो· ? यो हि [3] कश्चित्सुभूते एव वदेत्—आत्मदृष्टिस्तथागतेन भाषिता, सत्त्वदृष्टिर्जीवदृष्टिः पुद्गलदृष्टिस्[4]तथागतेन भाषिता, अपि नु स सुभूते सम्यग्वदमानो वदेत् ? [5] सुभूतिराह—नो हीद भगवन्, नो [6] हीद सुगत, न सम्यग्वदमानो वदेत् । तत्कस्य हेतो· ? या सा भगवन् आत्मदृष्टिस्तथागतेन भाषिता, अदृष्टि· सा तथागतेन भाषिता । तेनोच्यते आत्मदृष्टिरिति ॥

भगवानाह—एवं हि [3] सुभूते बोधिसत्त्वयानसप्रस्थितेन सर्वधर्मा ज्ञातव्या [7] द्रष्टव्या अधिमोक्तव्या । तथाच [8] ज्ञातव्या द्रष्टव्या अधिमोक्तव्या., यथा न धर्मसञ्ज्ञा[9]यामपि प्रत्युपतिष्ठेन्[10]नाधर्मसञ्ज्ञायाम् । तत्कस्य हेतो. ? धर्मसञ्ज्ञा धर्मसञ्ज्ञेति सुभूते असञ्ज्ञैषा तथागतेन भाषिता । तेनोच्यते धर्मसञ्ज्ञेति ॥ ३१ ॥

यश्च खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वोऽप्रमेयानसख्येयाल्लोकधातून् सप्तरत्नपरिपूर्णं कृत्वा [11] तथागतेभ्योऽर्हद्भ्यः सम्यक्सबुद्धेभ्यो दान दद्यात्, यश्च कुलपुत्रो वा कुलदुहिता वा इत. प्रज्ञापारमिताया [12] धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथामुद्गृह्य [13] धारयेद्देशयेद्वाचयेत् पर्यवाप्नुयात्, [14] परेभ्यश्च विस्तरेण सप्रकाशयेत्, अयमेव ततोनिदा[15]नं बहुतर [16] पुण्यस्कन्ध प्रसुनुयादप्रमेयमसख्येयम् । कथ च सप्रकाशयेत् ? [17] तद्यथाकाशे—

तारका तिमिर दीपो मायावश्याय बुद्बुदम् ।
[18] स्वप्न च विद्युदभ्र च एव द्रष्टव्य सस्कृतम् ॥

[19] तथा प्रकाशयेत्, तेनोच्यते सप्रकाशयेदिति ॥

इदमवोचद्भगवान् आत्तमना· । स्थविरसुभूतिस्ते च भिक्षुभिक्षुण्युपासकोपासिकास्ते [20] च बोधिसत्त्वाः सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥ ३२ ॥

॥ आर्यवज्रच्छेदिका भगवती प्रज्ञापारमिता समाप्ता ॥



१ G om सुभूते २ G om स धर्मे for न स धर्मो नाधर्मे ३ G om हि ४ G om तथागतेन भाषिता ५ G om सुभूति ६ G om नो हीदं सुगत, न सम्यग्वदमानो वदेत् ७ G om द्रष्टव्या ८ G om ज्ञातव्या द्रष्टव्या ९ G °सञ्ज्ञापि for °सञ्ज्ञायामपि १० G om नाधर्मसञ्ज्ञायाम् ११ G om तथागतेभ्योऽर्हद्भ्य सम्यक्सबुद्धेभ्य १२ G om धर्मपर्यायात् १३ G om धारयेत् १४ G om परेभ्यश्च विस्तरेण प्रकाशयेत् १५ G om. °निदान १६ G पुण्यं for पुण्यस्कन्धं १७ G यथा न प्रकाशयेत्, तेनोच्यते सप्रकाशयेदिति for यथाकाशे. १८ G सुपिन for स्वप्नं च १९ G om तथा प्रकाशयेत्, तेनोच्यते सप्रकाशयेदिति २० G om ते च बोधिसत्त्वा

## ३

### नय-द्व्यर्धशतिका-अर्धशतिकाद्यपरपर्याया

## अध्यर्धशतिका प्रज्ञापारमिता ।

ॐ नमो भगवत्यै प्रज्ञापारमितायै नमः ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् * * * * * * वज्रपाणिना बोधिसत्त्वेन महासत्त्वेन, अवलोकितेश्वरेण च बोधिसत्त्वेन महासत्त्वेन, आकाशगर्भेण च, वज्रमुष्टिना च, मञ्जुश्रिया, च सचित्तोत्पादधर्मचक्रप्रवर्त(र्ति)ना (?) च, गगनगञ्जेन च, सर्वमारप्रमर्दिना च बोधिसत्त्वेन महासत्त्वेन । एवप्रमुखैरष्टाभिर्बोधिसत्त्वकोटिभिः * * * आदौ कल्याण मध्ये कल्याणं पर्यवसाने कल्याण सदर्थं सुपदाक्षर पर्यवदातम्, सर्वधर्मविशुद्धिनिर्हारं देशयति स्म—कामविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । दृष्टिविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । रतिविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । तृष्णाविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । भूषणविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । आह्लादनविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । आलोकविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । कायसुखविशुद्धिपदेमतत् यदुत बोधिसत्त्वपदम् । [ वाक्सुख ]विशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । मनोविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । शब्दविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । गन्धविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । रसविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । स्पर्शविशुद्धिपदमेतत् यदुत बोधिसत्त्वपदम् । तत्कस्य हेतो. ? तद्यथा सर्वधर्मा स्वभावविशुद्धा । सर्वधर्माः [ स्वभावशून्याः ] । स्वभावशून्यतया प्रज्ञापारमिताविशुद्धिर्भवति[2] ॥

अथ भगवान् वैरोचनस्तथागतः पुनरपीद प्रज्ञापारमितानय सर्वतथागतशान्तधर्मताभिसबोधिनिर्हार देशयति स्म—वज्रसमताभिसबोधि(धौ ?) महाबोधिवज्रदृढतया । अर्थसमताभिसबोधौ महाबोधिरेकार्थतया । धर्मसमताभिसबोधौ महाबोधि· स्वभावशुद्धतया (?) । सर्वसमताभिसबोधौ महाबोधिः सर्वाविकल्पनतयेति[2] ॥

अथ भगवान् सर्वदुष्टविनयशाक्यमुनिस्तथागतः पुनरपि सर्वधर्मसमताविजयसंग्रह नाम प्रज्ञापारमितानिर्हार देशयामास—रागाप्रपञ्चतया * * * । द्वेषाप्रपञ्चतया * * * मोहाप्रपञ्चता, मोहाप्रपञ्चतया सर्वधर्माप्रपञ्चता, सर्वधर्माप्रपञ्चतया प्रज्ञापारमिताप्रपञ्चता वेदितव्या इति[2] ॥

---

१ The text of अध्यर्धशतिका as pıınted by E Leumann ın his work "Zur nordaıischen Lıteıatur und Sprache" 1912, (pp 92–98) ıs a fıagment, and ıepıoduced here as he gave ıt wıth slıght modıficatıons regardıng punctuatıon Taısho Unıversıty Journal, Tokyo, 1930, also republıshed ıt, but I could not get the Journal ın Indıa २ After thıs theıe ıs one folıo whıch does not contaın Sanskrıt text, but gıves only Khotanese translatıon.

अथ भगवान् स्वभावशुद्धस्तथागत. पुनरपीद सर्वधर्मसमतावलोकितेश्वरज्ञानमुद्र नाम प्रज्ञापारमितानय देशयामास—सर्वरागविशुद्धिता लोके द्वेषविशुद्धितायै सवर्तते। सर्वमलविशुद्धिता लोके द्वेषवि[शु]द्धितायै सवर्तते। सर्वमलविशुद्धिता लोके सर्वपापविशुद्धितायै सवर्तते। सर्वधर्मविशुद्धिता लोके सर्वसत्त्वविशुद्धितायै सवर्तते। सर्वज्ञानविशुद्धिता लोके प्रज्ञापारमिताविशुद्ध्यै सवर्तते इति ॥

अथ भगवान् सर्वत्रैधातुकाधिपतिस्तथागतः पुनरपि सर्वतथागताभिषेकसभवज्ञानगर्भं नाम प्रज्ञापारमितानय देशयामास—अभिषेकदान सर्वत्रैधातुकराज्यप्रतिलम्भाय सवर्तते। अर्थदान सर्वाशापरिपूरये सवर्तते। धर्मदान सर्वधर्मताप्राप्तये सवर्तते। आमिषदान सर्वकायवाक्चित्तसुखप्रतिलम्भाय सवर्तते इति ॥

अथ भगवान् सर्वतथागतज्ञानमुद्राप्राप्तसर्वतथागतमुष्टिधरस्तथागतः [ शाश्वत ] (?) पुनरपि सर्वतथागतज्ञानमुद्राधिष्ठानवज्र नाम प्रज्ञापारमितानय देशयामास—सर्वतथागतकायमुद्रापरिग्रहः सर्वतथागतत्वाय सवर्तते। वाग्मुद्रापरिग्रह. सर्वधर्मप्रतिलम्भाय सवर्तते। चित्तमुद्रापरिग्रह· सर्वसमाधिप्रतिलम्भाय सवर्तते। वज्रमुद्राप्रतिग्रह. सर्वकायवाक्चित्तवज्रसत्त्वसर्वोत्तमसिद्धये सवर्तते इति ॥

अथ भगवान् सर्वधर्माप्रपञ्चस्तथागतः पुनरपि चक्राक्षरपरिवर्तं नाम प्रज्ञापारमितानय देशयामास—शून्या. सर्वधर्मा नि स्वभावयोगेन, निर्निमित्ता. सर्वधर्मा निर्निमित्ततामुपादाय, अप्रणिहिता सर्वधर्मा अप्रणिधानयोगेन, प्रकृतिप्रभास्वरा प्रज्ञापारमितापरिशुद्ध्या इति ॥

अथ भगवान् सर्वतथागतचक्रान्तर्गतस्तथागतः पुनरपि महाचक्रप्रवेशं नाम प्रज्ञापारमितानय देशयामास—वज्रसमताप्रवेश सर्वतथागतचक्रप्रवेशाय सवर्तते। अर्थसमताप्रवेशो महाबोधिसत्त्वचक्रप्रवेशाय सवर्तते। धर्मसमताप्रवेशः सर्वधर्मचक्रप्रवेशाय सवर्तते। सर्वसमताप्रवेश सर्वचक्रप्रवेशाय सवर्तते इति ॥

अथ भगवान् सर्वपूजाविधिविस्तरभाजनस्तथागत. पुनरपि सर्वपूजाग्र्य नाम प्रज्ञापारमितानय देशयामास—बोधिचित्तोत्पादनता सर्वतथागतपूजाविधिविस्तरः। सर्वसत्त्वधातुपरित्राणता सर्वतथागतपूजाविधिविस्तर.। सद्धर्मपरिग्रह· सर्वतथागतपूजाविधिविस्तरः। प्रज्ञापारमितालिखनलेखनधारणवाचनोच्चारणभावनपूजनकर्मण(कर्म ?) सर्वतथागतपूजाविधिविस्तरः इति ॥

अथ खलु भगवान् सर्वविनयसमर्थस्तथागतः पुनरपीद ज्ञानमुष्टिपरिग्रह सर्व[स]त्त्वविनयज्ञानगर्भं नाम प्रज्ञापारमितानय देशयामास—सर्वसत्त्वसमताया क्रोधसमता, सर्वसत्त्वविनयनताया क्रोधविनयनता, सर्वसत्त्वधर्मताया क्रोधधर्मता, सर्वसत्त्ववज्रताया क्रोधवज्रता। तत्कस्य हेतोः [२] सर्वसत्त्वविनयो बोधिरिति ॥

---

१ After this there is one folio which does not contain Sanskrit text, but gives only Khotanese translation २ This phrase occurs in the Madhyamakavrtti of Candrakīrti on pp 104, 122, 193, 218 and 219 under अध्यर्धशतिका, अर्धशतिका and प्रज्ञापारमिता See our edition in BST No 10

अथ भगवान् सर्वधर्मसमताप्रनिष्ठितस्तथागत पुनरपीदं सर्वधर्माग्र्य नाम प्रज्ञापारमितानय देशयामास—सर्वसमनया प्रज्ञापारमितासमता, सर्वार्थतया प्रज्ञापारमितार्थता, सर्वधर्मतया प्रज्ञापारमितावर्मता, सर्वकर्मतया प्रज्ञापारमिताकर्मता वेदितव्या इति ॥

अथ भगवांस्तथागतो वैरोचन पुनरपि सर्वसत्त्वाधिष्ठान नाम प्रज्ञापारमितानय देशयामास—सर्वसत्त्वास्तथागतगर्भा समन्तभद्रमहाबोधिसत्त्वसर्वात्मतयो( या ? ) । वज्रगर्भाः सर्वसत्त्वा वज्रगर्भाभिपिक्ततया, धर्मगर्भा. सर्वसत्त्वा सर्ववाक्प्रवर्तनतया, कर्मगर्भाः सर्वसत्त्वाः सर्वसत्त्वकरणताप्रयोगतया इति ॥

अथ भगवाननन्तापर्यन्तानिष्ठस्तथागतोऽनन्तापर्यन्तानिष्ठधर्मा पुनरप्यस्य कल्पस्य परिनिष्ठाधिष्ठानार्थमिद सर्वधर्मसमतापरिनिनधिष्ठानवज्र नाम प्रज्ञापारमितानय देशयामास-प्रज्ञापारमितानन्ततया सर्वतथागतानन्तता, प्रज्ञापारमितापर्यन्ततया सर्वतथागतापर्यन्तता, प्रज्ञापारमितानैकतया सर्वधर्मानैकता, प्रज्ञापारमितापरिनिष्ठतया सर्वधर्मापरिनिष्ठता भवति ॥

अथ भगवान् वैरोचन सर्वतथागतगुह्यधर्मताप्राप्तसर्वधर्माप्रपञ्चः पुनरपि इद महासुखवज्रामोघ * * * नाम वज्रामोघधर्मताप्रज्ञापारमितामुख परममनादिनिधनमध्य देशयामास—महारागोत्तमसिद्धिर्महाबोधिसत्त्वाना महासुखोत्तमसिद्ध्यै सवर्तते । महासुखोत्तमसिद्धिर्महाबोधिसत्त्वाना सर्वतथागतमहाबोध्युत्तमसिद्ध्यै सवर्तते । सर्वतथागतमहाबोध्युत्तमसिद्धिर्महाबोधिसत्त्वाना सर्वमहामारप्रमर्दनोत्तमसिद्ध्यै सवर्तते । सर्वमहामारप्रमर्दनोत्तमसिद्धिर्महाबोधिसत्त्वाना सकलमहात्रैधातुकैश्वर्योत्तमसिद्ध्यै सवर्तते । सकलमहात्रैधातुकैश्वर्योत्तमसिद्धिर्महाबोधिसत्त्वानामशेषानवशेषसर्वसत्त्वधातुपरित्राणसर्वसत्त्वहितसुखपरमात्यन्तमहासुखोत्तमसिद्ध्यै सवर्तते इति ॥ तत्कस्य हेतो ?

यावद्भवाधिष्ठानेऽत्र भवन्ति वरसूरय ।
तावत्सत्त्वार्थमतुल शक्या कर्तुमनिर्वृताः ॥ १ ॥
प्रज्ञापारमितोपायज्ञानाधिष्ठानसाधिता ।
सर्वकर्मविशुद्ध्या तु भवशुद्धा भवन्ति ह ॥ २ ॥
रागादिविनयो लोके आभवात्मासक्तत्सदा ।
तेषा विशोधनार्थं तु विनय ज्ञातवान् स्वयम् ॥ ३ ॥
यथा पद्म सुरक्त तु रागदोषैर्न लिप्यते ।
वासदोषैर्भवे नित्यं न लिप्यन्ते जगद्धिताम् ( ? ) ॥ ४ ॥
महारागविशुद्धास्तु महासौख्या महाधना ।
त्रिधात्वीश्वरतां प्राप्ता अर्थं कुर्वन्तु तं दृढम् ॥ ५ ॥ इति ॥

अध्यर्धशतिका प्रज्ञापारमिता समाप्ता ॥

---

१ After this there is one folio which does not contain Sanskrit text, but gives only Khotanese translation

## ४ स्वल्पाक्षरा प्रज्ञापारमिता ।

नम. सर्वबुद्धबोधिसत्त्वेभ्य· ॥

एव मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसंघेन सार्धं द्वादशसाहस्रपञ्चशतैर्बोधिसत्त्वकोटिनियुतशतसहस्रैः सार्धं विहरति स्म, लोकपालादिदेवकोटिनियुतसहस्रैः परिवृत· पुरस्कृत. श्रीसिंहासने विहरति स्मं ॥

अथ खलु बोधिसत्त्वो महासत्त्वो आर्यावलोकितेश्वरो उत्थाय आसनादेकमसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य प्रहसितवदनो भूत्वा भगवन्तमेतदवोचत्—देशयतु भगवान् प्रज्ञापारमिता स्वल्पाक्षरा महापुण्याम्, यस्या· श्रवणमात्रेण सर्वसत्त्वा. सर्वकर्मावरणानि क्षपयिष्यन्ति, नियत च बोधिपरायणा भविष्यन्ति । ये च सत्त्वा मन्त्रसाधने उद्युक्तास्तेषा चाविघ्नेन मन्त्रा सिध्यन्ति ॥

अथ खलु भगवान् आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकरुणिकाय साधुकारमदात्—साधु साधु कुलपुत्र, यस्त्व सर्वसत्त्वानामर्थाय हिताय सुखाय प्रधानाय च दीर्घरात्र नियुक्त· । तेन हि त्व कुलपुत्र शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते प्रज्ञापारमिता स्वल्पाक्षरा महापुण्याम्, यस्या. श्रवणमात्रेण सर्वसत्त्वा सर्वकर्मावरणानि क्षपयिष्यन्ति, नियत च बोधिपरायणा भविष्यन्ति । ये च सत्त्वा मन्त्रसाधने उद्युक्तास्तेषा चाविघ्नेन मन्त्राः सिध्यन्ति ॥

अथ खलु आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—तेन हि सुगत भाषतु सर्वसत्त्वानामर्थाय हिताय सुखाय च ॥

अथ खलु भगवास्तस्या वेलाया सर्वदु खप्रमोचनो नाम समाधिं समापद्यते स्म, यस्य च समाधिं समापन्नस्य भगवत ऊर्णाकोशविवराद्भ्यादनेकानि रश्मिकोटिनियुतशतसहस्राणि निश्चरन्ति स्म । तैश्च रश्मिभि सर्वबुद्धक्षेत्राणि परिस्फुटान्यभूवन् । ये च सत्त्वास्तया प्रभया स्पृष्टा·, ते सर्वे नियता अभूवन्ननुत्तराय सम्यक्सबोधौ । यावन्नारकाः सत्त्वाः * * * सर्वे च बुद्धक्षेत्राणि पङ्किकार प्रविचेलु. । दिव्यानि च चन्दनचूर्णवर्षाणि तथागतपादमूलं ववर्षुः ॥

(अथ खलु भगवास्तस्या वेलाया प्रज्ञापारमिता भाषते स्म । तद्यथा—बोधिसत्त्वेन महासत्त्वेन समचित्तेन भवितव्यम् । सर्वसत्त्वेषु मैत्रचित्तेन भवितव्यम् । कृतज्ञेन भवितव्यम् । कृतवेदिना च भवितव्यम् । सर्वपापविरतचित्तेन भवितव्यम् । इद च प्रज्ञापारमिताहृदयमाग्रहीतव्यम्—नमो रत्नत्रयाय ।) नमः शाक्यमुनये तथागताय अर्हते सम्यक्संबुद्धाय । तद्यथा—ओं मुने मुने महामुनये स्वाहा ॥ अस्याः प्रज्ञापारमिताया लाभात् मया अनुत्तरा सम्यक्सबोधिरनुप्राप्ता । सर्वबुद्धाश्च अतो निर्याताः । मया अपि इयमेव

प्रज्ञापारमिता श्रुता महाशाक्यमुनेस्तथागतस्य साक्षात् । तेन हि त्वं सर्वबोधिसत्त्वानामग्रतो बुद्ध्वे च व्याकृतः—भविष्यसि त्व माणव अनागतेऽध्वनि स(मन्तरश्मिसमु)द्गत· श्रीकूटराजा नाम तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसपन्न सुगतो लोकविद् अनुत्तर· पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान् । [बदियमपि ?] ये इद नामधेय श्रोष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति लिखययिष्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, पुस्तकलिखितमपि कृत्वा गृहे धारयिष्यन्ति पूजयिष्यन्ति, ते सर्वे अल्पोपायेन अल्पश्रवणेन च तथागता भविष्यन्ति । तद्यथा—ओ जेय जेय पद्माभे अवमे अवमे सरसरणि विरिधिरि देवता अनुपालनि युद्धोत्तारिणि परचक्रनिवारिणि पूरय पूरय भगवति सर्व आशा मम च सर्वसत्त्वाना च । सर्वकर्मावरणानि विशोधय, बुद्धाधिष्ठिते स्वाहा ॥ इय सा कुलपुत्र परमार्थप्रज्ञापारमिता सर्वबुद्धाना जननी बोधिसत्त्वमाता (बोधिदात्री) पापहारका । सर्वबुद्धैरपि न शक्नोति अस्यानुशसा वक्तु यावत्कल्पकोटिशतैरपि । अनया पठितमात्रेण सर्वपर्षन्मण्डलाभिषिक्ता भवन्ति, सर्वे च मन्त्रा· अभिमुखा भवन्ति ॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—केन कारणेन भगवन् इय स्वल्पाक्षरा प्रज्ञापारमिता ? भगवानाह—अल्पोपायत्वात् । येऽपि सत्त्वा मन्दास्वादाः, तेऽपि इमा प्रज्ञापारमिता स्वल्पाक्षरा धारयिष्यन्ति वाचयिष्यन्ति लिखिष्यन्ति लिखयिष्यन्ति, ते सर्वे अल्पोपायेन बोधिपरायणा भविष्यन्ति । अनेन कारणेन कुलपुत्र इय सक्षिप्ता स्वल्पाक्षरा प्रज्ञापारमिता ॥

एवमुक्ते आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—आश्चर्यं भगवन्, परमाश्चर्यं सुगत, यावदेव भगवान् सर्वसत्त्वहिताय अय धर्मपर्यायो भाषितो मन्दपुद्गलानामेव अर्थाय हिताय सुखाय चेति ॥

इदमवोचद्भगवान् । आत्तमना आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः, ते च भिक्षवस्ते च बोधिसत्त्वाः सा च सर्वावती पर्षत् सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

स्वल्पाक्षरा प्रज्ञापारमिता समाप्ता ॥



## ५ कौशिकप्रज्ञापारमितासूत्रम् ।

नमो सर्वबुद्धबोधिसत्त्वेभ्यः ॥

एव मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसघेन सार्धमनेकैश्च बोधिसत्त्वशतसहस्रैः सर्वैः कुमारभूतैः । तत्र खलु भगवान् शक्र देवानामिन्द्रमामन्त्रयते स्म ॥

अय कौशिक प्रज्ञापारमितायाः अर्थः—प्रज्ञापारमिता न द्वयेन द्रष्टव्या न अद्वयेन । न निमित्ततो न अनिमित्तत· । न आयूहतो न निरायूहतः । नोत्क्षेपतो न प्रक्षेपतः । न सक्लेशतो न असक्लेशतः । न व्यवदानतो न अव्यवदानतः । नोत्सर्गतो न अनुत्सर्गतः । न स्थानतो न अस्थानतः । न योगतो न अयोगतः । न सबन्धतो न असबन्धतः । न प्रत्ययतो न अप्रत्ययतः । न धर्मतो न अधर्मतः । न तथत( या ) न अतथत( या ) न भूतकोटया न अभूतकोट्या ( वेदि )तव्या ॥

एवमेवायं स कौशिक प्रज्ञापारमिताया· अर्थः । तद्यथा सर्वधर्मसमत्वात् प्रज्ञापारमिता समा । सर्वधर्मविविक्तत्वात् प्रज्ञापारमिता विविक्ता । सर्वधर्माचलत्वात् प्रज्ञापारमिता अचला । सर्वधर्मामन्यत्वात् प्रज्ञापारमिता अमन्यता । सर्वधर्माभीरुत्वात् प्रज्ञापारमिता अभीरु । सर्वधर्माच्छम्भिततया प्रज्ञापारमिता अच्छम्भी । सर्वधर्मैकरसत्वात् प्रज्ञापारमिता एकरसा । सर्वधर्मानुत्पादत्वात् प्रज्ञापारमिता अनुत्पादा । सर्वधर्मानिरोधत्वात् प्रज्ञापारमिता अनिरोधा । गगनकल्पत्वात् सर्वधर्माणा प्रज्ञापारमिता गगनकल्पा । रूपापर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । एव वेदनासज्ञासस्कारविज्ञानापर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । पृथिवीधात्वपर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । एवमब्धातु-तेजोधातु-वायुधातु-आकाशधातु–विज्ञानधात्वपर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । सुमेर्वपर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । समुद्रापर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता । वज्रसमत्वात् प्रज्ञापारमिता समा । सर्वधर्माभेदत्वात् प्रज्ञापारमिता अभेदा । सर्वधर्म( स्वभावा )नुपलब्धित्वात् प्रज्ञापारमिता अनुपलब्धिः । सर्वधर्मविभाव( ना )-समत्वात् प्रज्ञापारमिता( अ )-विभाव( ना )-समा । सर्वधर्मनिश्चेष्टत्वात् प्रज्ञापारमिता निश्चेष्टा । सर्वधर्माचिन्त्यत्वात् प्रज्ञापारमिता अचिन्त्येति ॥

एव दानपारमिता-शीलपारमिता-क्षान्तिपारमिता-वीर्यपारमिता-ध्यानपारमिता-प्रज्ञापारमितात्रिमण्डलपरिशुद्ध्यपर्यन्तत्वात् प्रज्ञापारमिता अपर्यन्ता इति ॥

प्रज्ञापारमिता उच्यते यदुत अष्टादशशून्यता । तद्यथा—आध्यात्मशून्यता बहिर्धाशून्यता आध्यात्माबहिर्धाशून्यता शून्यताशून्यता महाशून्यता परमा(र्थ )शून्यता सस्कृतशून्यता असस्कृतशून्यता अत्यन्तशून्यता अनावग्रशून्यता ( अन )पकारशून्यता प्रकृतिशून्यता स्वलक्षणशून्यता सर्वधर्मशून्यता अनुपलम्भशून्यता अभावशून्यता स्वभावशून्यता अभावस्वभावशून्यता इति । अयमुच्यते सक्षिप्तेन प्रज्ञापारमितेति ॥

तारका तिमिरं दीपो मायावश्याय बुद्बुदम् ।
सुपिन विद्युदभ्र च एव द्रष्टव्य संस्कृतमिति ॥
अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशम शिवम् ।
देशयामास सबुद्धस्त वन्दे वदता वरम् ॥

नमो दशसु दिक्षु सर्वेषामतीतानागतप्रत्युत्पन्नाना त्रयाणा रत्नानाम् । नमो भगवत्यै प्रज्ञापारमितायै सर्वतथागतमुनिमायै सर्वतथागतानुज्ञातविज्ञातायै । (ओ) प्रज्ञे महाप्रज्ञे प्रज्ञावभासे प्रज्ञालोककारि अज्ञानविधमने सिद्धे सुसिद्धे सिद्ध्यमने (भ)गवते सर्वाङ्ग-सुन्दरि (भ)क्तिवत्सले प्रसारहस्ते समाश्वासकरे सिध्य सिध्य, बुध्य बुध्य, कम्प कम्प, चल चल, राव राव, आगच्छ भगवते मा विलम्ब स्वाहा ॥

नमो धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य महाकारुणकस्य ॥

नमो प्रज्ञापारमितायै । तद्यथा—मुनिधर्मे सग्रहधर्मे अनुग्रहधर्मे विमोक्षधर्मे सत्त्वानुग्रहधर्मे वैश्रमणधर्मे समन्तनुपरिवर्तनधर्मे गुणिग्रहसग्रहधर्मे सर्वत्रानुगतधर्मे सर्वकालपरिपूर्णधर्मे स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—अखने निखने मुखन नेखने (अवरवन्दने) पटने पटने पटरे स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—गङ्गा गङ्गा न तीरावभास गङ्गा स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा श्रीये श्रीये मुनि श्रीये श्रीयसे स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—ओ वज्रवले स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—ओ ह्री श्री धी श्रुति स्मृति मति गति विजये स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—बम्बरि बम्बरि महाबम्बरि बूरु बूरु महाबूरु स्वाहा ॥

नमः प्रज्ञापारमितायै । तद्यथा—हूते हूते हूविताशने सर्व-कर्मावरणने स्वाहा ॥

नम. प्रज्ञापारमितायै । तद्यथा—ओ आरोलिक् स्वाहा ॥

नमो प्रज्ञापारमितायै । तद्यथा—ओ सर्ववित् स्वाहा ॥

नम. प्रज्ञापारमितायै । तद्यथा—गते गते पारगते पारसगते बोधि स्वाहा ॥

इदमवोचद्भगवान् । आत्तमना आयुष्मान् सारिपुत्रः शक्रो देवानामिन्द्रस्ते च बोधिसत्त्वा महासत्त्वा· सा च सर्वावती पर्षद् सदेवगन्धर्वमानुषासुरश्च लोको भगवतो भाषितमभ्यनन्दन् ॥

कौशिकनाम प्रज्ञापारमिता समाप्ता ॥



## ६ प्रज्ञापारमिताहृदयसूत्रम् ।

[ संक्षिप्तमातृका ]

॥ नमः सर्वज्ञाय ॥

आर्यावलोकितेश्वरबोधिसत्त्वो गम्भीरायां प्रज्ञापारमितायां चर्यां चरमाणो व्यवलोकयति स्म । पञ्च स्कन्धाः, तांश्च स्वभावशून्यान् पश्यति स्म ॥

इह शारिपुत्र रूपं शून्यता, शून्यतैव रूपम् । रूपान्न पृथक् शून्यता, शून्यताया न पृथग् रूपम् । यद्रूपं सा शून्यता, या शून्यता तद्रूपम् ॥

एवमेव वेदनासंज्ञासंस्कारविज्ञानानि ॥

इह शारिपुत्र सर्वधर्माः शून्यतालक्षणा अनुत्पन्ना अनिरुद्धा अमला न विमला नोना न परिपूर्णाः । तस्माच्छारिपुत्र शून्यतायां न रूपम्, न वेदना, न संज्ञा, न संस्काराः, न विज्ञानानि । न चक्षुःश्रोत्रघ्राणजिह्वाकायमनांसि, न रूपशब्दगन्धरसस्प्रष्टव्यधर्माः । न चक्षुर्धातुर्यावन्न मनोधातुः ॥

न विद्या नाविद्या न विद्याक्षयो नाविद्याक्षयो यावन्न जरामरणं न जरामरणक्षयो न दुःखसमुदयनिरोधमार्गा न ज्ञानं न प्राप्तित्वम् ॥

बोधिसत्त्वस्य( श्च ? ) प्रज्ञापारमितामाश्रित्य विहरति चित्तावरणः । चित्तावरणनास्तित्वादत्रस्तो विपर्यासातिक्रान्तो निष्ठनिर्वाणः । त्र्यध्वव्यवस्थिताः सर्वबुद्धाः प्रज्ञापारमितामाश्रित्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः ॥

तस्माज्ज्ञातव्यः प्रज्ञापारमितामहामन्त्रो महाविद्यामन्त्रोऽनुत्तरमन्त्रोऽसमसममन्त्रः सर्वदुःखप्रशमनः सत्यममिथ्यत्वात् प्रज्ञापारमितायामुक्तो मन्त्रः । तद्यथा—गते गते पारगते पारसंगते बोधि स्वाहा ॥

इति प्रज्ञापारमिताहृदयसूत्रं समाप्तम् ॥



# ७ प्रज्ञापारमिताहृदयसूत्रम् ।

## [ विस्तरमातृका ]

॥ नम सर्वज्ञाय ॥

एव मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसघेन सार्धं महता च बोधिसत्त्वसघेन । तेन खलु समयेन भगवान् गम्भीरावसबोध नाम समाधिं समापन्न । तेन च समयेन आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो गम्भीराया प्रज्ञापारमिताया चर्यां चरमाण' एव व्यवलोकयति स्म । पञ्च स्कन्धास्ताश्च स्वभावशून्य व्यवलोकयति ॥

अथायुष्मान् शारिपुत्रो बुद्धानुभावेन आर्यावलोकितेश्वरं बोधिसत्त्वमेतदवोचत्—य' कश्चित् कुलपुत्रो [ वा कुलदुहिता वा अस्या ] गम्भीराया प्रज्ञापारमिताया चर्यां चर्तुकाम', कथ शिक्षितव्यः ? एवमुक्ते आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्व आयुष्मन्त शारिपुत्रमेतदवोचत्—य' कश्चिच्छारिपुत्र कुलपुत्रो वा कुलदुहिता वा [ अस्या ] गम्भीराया प्रज्ञापारमिताया चर्या चर्तुकाम , तेनैव व्यवलोकितव्यम्—पञ्च स्कन्धास्ताश्च स्वभावशून्यान् समनुपश्यति स्म । रूप शून्यता, शून्यतैव रूपम् । रूपान्न पृथक् शून्यता, शून्यताया न पृथग् रूपम् । यद्रूप सा शून्यता, या शून्यता तद्रूपम् । एव वेदनासज्ञासस्कारविज्ञानानि च शून्यता । एव शारिपुत्र सर्वधर्मा शून्यतालक्षणा अनुत्पन्ना अनिरुद्धा अमला विमला अनूना असपूर्णा. । तस्मात्तर्हि शारिपुत्र शून्यताया न रूपम् , न वेदना, न सज्ञा, न सस्कारा , न विज्ञानम् । न चक्षुर्न श्रोत्र न घ्राण न जिह्वा न कायो न मनो न रूप न शब्दो न गन्धो न रसो न स्प्रष्टव्य न धर्मा । न चक्षुर्धातुर्यावन्न मनोधातुर्न धर्मधातुर्न मनोविज्ञानधातु । न विद्या नाविद्या न क्षयो यावन्न जरामरण न जरामरणक्षय , न दुःखसमुदयनिरोधमार्गा न[१] ज्ञान न प्राप्तिर्नाप्राप्ति. । तस्माच्छारिपुत्र अप्राप्तित्वेन बोधिसत्त्वाना प्रज्ञापारमितामाश्रित्य

---

१ From here there is another version of the longer text which is given below –

न रूपं न ज्ञान न प्राप्तिर्नाप्राप्ति । तस्मात्तर्हि शारिपुत्र अप्राप्तिप्राप्तिर्यावत् प्रज्ञापारमितामाश्रित्य विहरंश्चित्तालम्बन नास्तित्वादत्रस्तो विपर्यासातिक्रान्तो निष्ठानिर्वाण प्राप्नोति । त्र्यध्वव्यवस्थितैरपि सम्यक्सबुद्धै प्रज्ञापारमितामाश्रित्य अनुत्तरा सम्यक्सबोधि प्राप्ता । एतस्माज्ज्ञातव्य प्रज्ञापारमितामन्त्रो विद्यामन्त्रोऽनुत्तरो मन्त्र , सर्वदु खप्रशमनो मन्त्र , सम्यक्त्व न मिथ्यात्वं प्रज्ञापारमितायुक्तो मन्त्र । तद्यथा—गते गते पारगते पारसगते बोधि स्वाहा । एव शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिताया शिक्षितव्यम् ॥

अथ खलु भगवास्तस्या वेलाया तस्मात्समाधेर्व्युत्थाय अवलोकितेश्वराय बोधिसत्त्वाय साधुकारमदात्—साधु साधु कुलपुत्र, एवमेतत् कुलपुत्र, एवमेतत् । एवमेवैषा प्रज्ञापारमिता यथा त्वया निर्दिष्टा । अनुमोद्यते सर्वतथागतैरर्हद्भिः सम्यक्सबुद्धै ॥

इदमवोचद्भगवान् । आत्तमना आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः, ते च भिक्षवस्ते च बोधिसत्त्वा महासत्त्वा , सा च सर्वावती पर्षत्, सदेवमानुषासुरगरुडगन्धर्वश्च लोक. भगवतो भाषितमभ्यनन्दन् ॥

॥ इति आर्यपञ्चविंशतिका भगवती प्रज्ञापारमिताहृदयम् ॥

विहरति चित्तावरणः। चित्तावरणनास्तित्वादत्रस्तो विपर्यासातिक्रान्तो निष्ठनिर्वाणः । त्र्यध्वव्यवस्थिताः सर्वबुद्धाः प्रज्ञापारमितामाश्रित्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः । तस्माद् ज्ञातव्यः प्रज्ञापारमितामहामन्त्रः अनुत्तरमन्त्रः असमसममन्त्रः सर्वदुःखप्रशमनमन्त्रः सत्यममिथ्यत्वात् प्रज्ञापारमितायामुक्तो मन्त्रः । तद्यथा—गते गते पारगते पारसंगते बोधि स्वाहा । एवं शारिपुत्र गम्भीरायां प्रज्ञापारमितायां चर्यायां शिक्षितव्यं बोधिसत्त्वेन ॥

अथ खलु भगवान् तस्मात्समाधेर्व्युत्थाय आर्यावलोकितेश्वरस्य बोधिसत्त्वस्य साधुकारमदात्—साधु साधु कुलपुत्र । एवमेतत् कुलपुत्र, एवमेतद् गम्भीरायां प्रज्ञापारमितायां चर्यं चर्तव्यं यथा त्वया निर्दिष्टम् । अनुमोद्यते तथागतैरर्हद्भिः ॥

इदमवोचद्भगवान् । आनन्दमना आयुष्मान् शारिपुत्रः आर्यावलोकितेश्वरश्च बोधिसत्त्वः सा च सर्वावती परिषत् सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन् ॥

इति प्रज्ञापारमिताहृदयसूत्रं समाप्तम् ॥



# ८ शालिस्तम्बसूत्रम् ।

A 1 एव मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसघेन सार्धमर्धत्रयोदशभिर्भिक्षुसहस्रै सबहुलैश्च बोधिसत्त्वमहासत्त्वै· । अथायुष्मान् शारिपुत्रो येन मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य चक्रमः, तेनोपसमक्रमीत्। उपसक्रम्य अन्योन्य समोदनीया कथा बहुविधा व्यतिसारयित्वा उभौ शिलातले उपाविशताम् ॥

अथायुष्मान् शारिपुत्रो मैत्रेय बोधिसत्त्व महासत्त्वमेतदवोचत्—अद्यात्र शालिस्तम्बमवलोक्य मैत्रेय भगवता भिक्षुभ्य· सूत्रमिदमुक्तम्—यो भिक्षव प्रतीत्यसमुत्पाद पश्यति, स धर्म पश्यति । यो धर्म पश्यति, स बुद्ध पश्यति । इत्युक्त्वा भगवास्तूष्णीं बभूव । अथ

A 2 मैत्रेय सुगतोक्तसूत्रान्तस्य अर्थ कतम ? प्रतीत्यसमुत्पाद कतम ? धर्म. कतम ? बुद्ध· कतम ? कथ प्रतीत्यसमुत्पाद पश्यन् धर्म पश्यति ? कथ धर्म पश्यन् बुद्ध पश्यति ?

एवमुक्ते मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्त शारद्वतीपुत्रमेतदवोचत्—अत्र यदुक्त भदन्त शारिपुत्र भगवता धर्मस्वामिना सर्वज्ञेन—यो भिक्षव. प्रतीत्यसमुत्पाद पश्यति, स धर्म पश्यति । यो धर्म पश्यति, स बुद्ध पश्यति इति, तत्र कतम· प्रतीत्यसमुत्पादो नाम ? प्रतीत्यसमुत्पादो नाम यदिदम्—अस्मिन् सति इद भवति, अस्योत्पादादिदमुत्पद्यते । यदुत अविद्याप्रत्यया. सस्कारा । सस्कारप्रत्यय विज्ञानम् । विज्ञानप्रत्यय नामरूपम् । नामरूपप्रत्यय षडायतनम् । षडायतनप्रत्यय. स्पर्श । स्पर्शप्रत्यया वेदना । वेदनाप्रत्यया तृष्णा । तृष्णाप्रत्ययमुपादानम् । उपादानप्रत्ययो भवः । भवप्रत्यया जाति । जातिप्रत्यया जरामरणशोकपरिदेवदु खदौर्मनस्योपायासा· सभवन्ति । एवमस्य केवलस्य महतो दु·ख-

A 3 स्कन्धस्य समुदयो भवति । तत्र अविद्यानिरोधात् सस्कारनिरोधः । सस्कारनिरोधाद्विज्ञाननिरोध. । विज्ञाननिरोधान्नामरूपनिरोधः । नामरूपनिरोधात् षडायतननिरोध· । षडायतननिरोधात् स्पर्शनिरोध । स्पर्शनिरोधात् वेदनानिरोध· । वेदनानिरोधात् तृष्णानिरोधः । तृष्णानिरोधादुपादाननिरोध. । उपादाननिरोधाद्भवनिरोधः । भवनिरोधाज्जातिनिरोधः । जातिनिरोधाज्जरामरणशोकपरिदेवदु खदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति । अयमुच्यते प्रतीत्यसमुत्पादो भगवता ॥

कतमो धर्म· ? आर्याष्टाङ्गिको मार्गः । तद्यथा—सम्यग्दृष्टि सम्यक्सकल्प· सम्यग्वाक् सम्यक्कर्मान्त सम्यगाजीव· सम्यग्व्यायाम सम्यक्स्मृति. सम्यक्समाधिः । अयमुक्तो भगवता आर्याष्टाङ्गिको मार्गः फललाभनिर्वाणैकसगृहीतो धर्म· ॥

तत्र कतमो बुद्धो भगवान् ? य. सर्वधर्मावबोधाद्बुद्ध उच्यते, स आर्यप्रज्ञानेत्र. धर्मकायसमन्वित शैक्षाशैक्षधर्मानिमान् पश्यति ॥

तत्र कथ प्रतीत्यसमुत्पाद पश्यति ? इहोक्त भगवता—य इम प्रतीत्यसमुत्पाद सततसमितम्, अजीव निर्जीव यथावदविपरीतमजातमभूतमकृतमसस्कृतमप्रतिघमनालम्बन शिवमभयमनाहार्यमव्ययमव्युपशमस्वभाव पश्यति, [ स धर्म पश्यति ] । यस्तु एव धर्म

सततसमितमजीव निर्जीव यथावदविपरीतमजातमभूतमकृतमसंस्कृतमप्रतिघमनालम्बनं शिवमनाहार्यमव्ययमव्युपशमस्वभाव पश्यति, सोऽनुत्तरधर्मशरीर बुद्ध पश्यति । आर्यधर्मा- A 4
भिसमये सम्यग्ज्ञानोपनयेनैव ॥

प्रतीत्यसमुत्पाद इति कस्मादुच्यते ? सहेतुकः सप्रत्ययो नाहेतुको नाप्रत्ययः, तस्मात् प्रतीत्यसमुत्पाद इत्युच्यते । तत्र भगवता प्रतीत्यसमुत्पादलक्षण सक्षेपेणोक्तमिदप्रत्ययताफलम् । उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणा धर्मता यावदेषा धर्मता धर्मस्थितिता धर्मनियामता प्रतीत्यसमुत्पादसमता तथता अविपरीततथता अनन्यतथता भूतता सत्यता अविपरीतता अविपर्ययता इति ॥

अथ च पुनरय प्रतीत्यसमुत्पादो द्वाभ्या कारणाभ्यामुत्पद्यते । कतमाभ्या द्वाभ्याम् ? यदिद हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । सोऽपि द्विविधो द्रष्टव्यः—बाह्यश्च आध्यात्मिकश्च । तत्र बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः ? यदिद बीजादङ्कुरः । अङ्कुरात्पत्रम् । पत्रात्काण्डम् । काण्डान्नालम् । नालाद्गण्डः । गण्डाद्गर्भम् । गर्भाच्छूकः । शूकात्पुष्पम् । पुष्पात् फलम् । असति बीजे अङ्कुरो न भवति, यावदसति पुष्पे फल न A 5
भवति । सति तु बीजे अङ्कुरस्याभिनिर्वृत्तिर्भवति, एवं यावत् सति पुष्पे फलस्याभिनिर्वृत्तिर्भवति । तत्र बीजस्य नैव भवति—अहमङ्कुरमभिनिर्वर्तयामीति । अङ्कुरस्यापि नैव भवति—अह बीजेनाभिनिर्वर्तित इति । एव यावत् पुष्पस्य नैव भवति—अह फलमभिनिर्वर्तयामीति । फलस्यापि नैव भवति—अह पुष्पेणाभिनिर्वर्तितमिति । अथ पुनः बीजे सति अङ्कुरस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः । एव यावत् पुष्पे सति फलस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः । एव बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः ॥

कथ बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ? षण्णा धातूना समुदायात् । कतमेषा षण्णा धातूना समवायात् ? यदिद पृथिव्यप्तेजोवाय्वाकाशऋतुधातुसमवायाद्बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः । तत्र पृथिवीधातुर्बीजस्य सधारणकृत्य करोति । अब्धातुर्बीज स्नेहयति । तेजोधातुर्बीज परिपाचयति । वायुधातुर्बीजमभिनिर्हरति । आकाशधातुर्बीजस्यानावरणकृत्य करोतीति । ऋतुरपि बीजस्य परिणामनाकृत्य करोति । असत्सु एषु प्रत्ययेषु बीजादङ्कुरस्याभिनिर्वृत्तिर्न भवति । यदा बाह्यश्च पृथिवीधातुरविकलो भवति, एवमप्तेजोवाय्वाकाशऋतुधातवश्चाविकला भवन्ति, ततः सर्वेषा समवायाद्बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति । तत्र पृथिवीधातोर्नैव भवति—अह बीजस्य सधारणकृत्य करोमीति । एवमब्धातोरपि नैव भवति-अह बीज स्नेहयामीति । तेजोधातोरपि नैव भवति—अह बीज परिपाचयामीति । वायुधातोरपि नैव भवति—अह बीजमभिनिर्हरामीति । आकाशधातोरपि नैव भवति—अह बीजस्यानावरणकृत्य करोमीति । ऋतोरपि नैव भवति—अह बीजस्य परिणामनाकृत्य करोमीति । बीजस्यापि नैव भवति—अह बीज [ अङ्कुर ? ] अभिनिर्वर्तयामीति । अङ्कुरस्यापि नैव भवति—अहमेभिः प्रत्ययैरभि- A 6

निर्वर्तित इति। अथ पुन' सत्सु एतेषु प्रत्ययेषु बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति। एव यावत् पुष्पे सति फलस्याभिनिर्वृत्तिर्भवति। स च अङ्कुरो न स्वयकृतो न परकृतो नोभयकृतो नेश्वरकृतो न कालपरिणामितो न प्रकृतिसभूतो [ न चैककारणाधीनो ] नाप्य-हेतुसमुत्पन्नः। अथ पुन पृथिव्यप्तेजोवाय्वाकाशऋतुधातुसमवायाद् बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति। एव बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः॥

तत्र बाह्यः प्रतीत्यसमुत्पाद. पञ्चभिराकारैर्द्रष्टव्यः। कतमै पञ्चभि. ? न शाश्वतत, नोच्छेदतः, न सक्रान्तित, परीत्तहेतुतो विपुलफलाभिनिर्वृत्तित, तत्सदृशानुप्रबन्धतश्च। कथ न शाश्वतत इति ? यस्मादन्योऽङ्कुर अन्यद्बीजम्। न च य एवाङ्कुर. तदेव बीजम्। न च निरुद्धाद्बीजादङ्कुर उत्पद्यते नाप्यनिरुद्धात्। बीज पुनर्निरुध्यते, तदैवाङ्कुरश्चोत्पद्यते। तस्मान्न शाश्वतत'॥ कथ नोच्छेदत ? न च पूर्वनिरुद्धाद् बीजादङ्कुरो निष्पद्यते। नाप्य-निरुद्धात्। अपि च बीज च निरुध्यते, तस्मिन्नेव समये अङ्कुर उत्पद्यते तुलादण्डोन्नामा-वनामवत्। अतो नोच्छेदत॥ कथ न सक्रान्तितः ? विसदृशो बीजादङ्कुर इति। अतो न

A 7 सक्रान्तितः॥ कथ परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः ? परीत्त बीजमुप्यते, विपुलफल-मभिनिर्वर्तयतीति। अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तित॥ कथ तत्सदृशानुप्रबन्धत' ? यादृश बीजमुप्यते, तादृश फलमभिनिर्वर्तयतीति। अतस्तत्सदृशानुप्रबन्धतश्चेति॥ एव बाह्य' प्रतीत्यसमुत्पादः पञ्चभिराकारैर्द्रष्टव्यः॥

एवमाध्यात्मिकोऽपि प्रतीत्यसमुत्पादो द्वाभ्या कारणाभ्यामुत्पद्यते। कतमाभ्या द्वाभ्याम् ? यदिद हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च। तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्ध. कतमः ? यदिदमविद्याप्रत्ययाः सस्काराः, यावज्जातिप्रत्यय जरामरण-मिति। अविद्या चेन्नाभविष्यत्, नैव सस्काराः प्रज्ञास्यन्ते। एव यावज्जातिश्चेन्नाभविष्यत्, जरामरणं न प्रज्ञास्यते। अथ सत्यामविद्याया सस्काराणामभिनिर्वृत्तिर्भवति। एव यावज्जात्या सत्या जरामरणस्याभिनिर्वृत्तिर्भवति। तत्र अविद्याया नैव भवति—अह सस्कारा-नभिनिर्वर्तयामीति। सस्काराणामपि नैव भवति—वयमविद्यया अभिनिर्वर्तिता इति। एव यावज्जातेरपि नैव भवति—अह जरामरणमभिनिर्वर्तयामीति। जरामरणस्यापि नैव

A 8 भवति—अह जात्याभिनिर्वर्तितमिति। अथ च सत्यामविद्याया सस्काराणामभिनिर्वृत्ति-र्भवति प्रादुर्भावः। एव यावज्जात्या सत्या जरामरणस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः। एव-माध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्य'॥

कथमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य' ? षण्णा धातूनां समवायात्। कतमेषां षण्णा धातूना समवायात् ? यदिद पृथिव्यप्तेजोवाय्वाकाशविज्ञान-धातूना समवायादाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः। तत्र आध्यात्मिकस्य प्रतीत्यसमुत्पादस्य पृथिवीधातुः कतमः ? योऽय कायस्य सश्लेषतः कठिनभावमभिनिर्वर्तयति, अयमुच्यते पृथिवीधातु'। य' कायस्य अनुपरिग्रहकृत्य करोति, अयमुच्यतेऽब्धातुः। यः कायस्य अशितपीतभक्षित परिपाचयति,

अयमुच्यते तेजोधातुः । य· कायस्य आश्वासप्रश्वासकृत्यं करोति, अयमुच्यते
वायुधातु· । य. कायस्यान्त·शौषिर्यमभिनिर्वर्त्यति, अयमुच्यते आकाशधातु· । य कायस्य
नामरूपाङ्कुरमभिनिर्वर्तयति, नडकलापयोगेन, पञ्चविज्ञानकायसयुक्त सास्रव च मनोविज्ञा-
नम्, अयमुच्यते विज्ञानधातुः । तत्र असतामेषां प्रत्ययाना कायस्योत्पत्तिर्न भवति । यदा
आध्यात्मिक· पृथिवीधातुरविकलो भवति, एवमप्तेजोवाय्वाकाशविज्ञानधातवश्च अविकला
भवन्ति, तत. सर्वेषा समवायात् कायस्याभिनिर्वृत्तिर्भवति । तत्र पृथिवीधातोर्नैवं भवति—
अह कायस्य सश्लेषत. कठिनभावमभिनिर्वर्तयामीति । अब्धातोर्नैव भवति—अह कायस्य
अनुपरिग्रहकृत्य करोमीति । तेजोधातोरपि नैव भवति—अह कायस्य अशितपीतभक्षित A 9
परिपाचयामीति । वायुधातोर्नैव भवति—अह कायस्य आश्वासप्रश्वासकृत्य करोमीति ।
आकाशधातोर्नैव भवति—अह कायस्यान्त.शौषिर्यमभिनिर्वर्तयामीति । विज्ञानधातोर्नैव भवति—
अह कायस्य नामरूपमभिनिर्वर्तयामीति । कायस्यापि नैव भवति—अहमेभि· प्रत्ययैर्जनित
इति । अथ च सत्सु एषु प्रत्ययेषु कायस्योत्पत्तिर्भवति ॥

तत्र पृथिवीधातुर्नात्मा न सत्त्वो न जीवो न जन्तु· न मनुजो न मानवो न स्त्री न
पुमान् न नपुसक न चाह न मम न चान्यस्य कस्यचित् । एवमब्धातुस्तेजोधातुर्वायु-
धातुराकाशधातुर्विज्ञानधातु नात्मा न सत्त्वो न जीवो न जन्तु. न मनुजो न मानवो न
स्त्री न पुमान् न नपुसक न चाह न मम न चान्यस्य कस्यचित् ॥

तत्र अविद्या कतमा? या एषामेव षण्णा धातूनामेकसञ्ज्ञा पिण्डसञ्ज्ञा नित्यसंज्ञा
ध्रुवसंज्ञा शाश्वतसञ्ज्ञा सुखसञ्ज्ञा आत्मसञ्ज्ञा सत्त्वजीवजन्तुपोषपुरुषपुद्गलसञ्ज्ञा मनुजमानव-
सञ्ज्ञा अहकारममकारसञ्ज्ञा, एवमादि विविधमज्ञानम् । इयमुच्यते अविद्येति । एवमविद्याया
सत्या विषयेषु रागद्वेषमोहा. प्रवर्तन्ते । तत्र ये रागद्वेषमोहा विषयेषु, अमी [अविद्याप्रत्यया.] A 10
सस्कारा इत्युच्यन्ते । वस्तुप्रतिविज्ञप्तिर्विज्ञानम् । विज्ञानसहभुवश्चत्वार स्कन्धा अरूपिण
उपादानाख्याः तन्नाम । रूप चत्वारि महाभूतानि तानि चोपादाय रूपम् । तच्च नाम तच्च
रूपमैकध्यमभिसक्षिप्य तन्नामरूपम् । नामरूपसंनिश्रितानि इन्द्रियाणि षडायतनम् ।
त्रयाणा धर्माणा सनिपात स्पर्श. । स्पर्शानुभवो वेदना । वेदनाध्यवसान तृष्णा ।
तृष्णावैपुल्यमुपादानम् । उपादाननिर्जात पुनर्भवजनक कर्म भव. । भवहेतुक स्कन्ध-
प्रादुर्भावो जातिः । जातस्य स्कन्धपरिपाको जरा । जीर्णस्य स्कन्धस्य विनाशो मरणम् ।
म्रियमाणस्य समूढस्य साभिष्वङ्गस्य अन्त.परिदाह. शोकः । शोकोत्थमालपन परिदेवः ।
पञ्चविज्ञानकायसयुक्तमसातमनुभवन दु खम् । मनसिकारसयुक्तं मानस दु.ख दौर्मनस्यम् ।
ये चापि अन्ये एवमादय. क्लेशाः, ते उपायासा इति ॥

तत्र महान्धकारार्थेन अविद्या । अभिसस्कारार्थेन सस्कारा· । विज्ञापनार्थेन विज्ञा- A 11
नम् । अन्योन्योपस्तम्भनार्थेन नामरूपम् । आयद्वारार्थेन षडायतनम् । स्पर्शनार्थेन
स्पर्शः । अनुभवनार्थेन वेदना । परितर्षणार्थेन तृष्णा । उपादानार्थेन उपादानम् ।
पुनर्भवजननार्थेन भव. । स्कन्धप्रादुर्भावार्थेन जातिः । स्कन्धपरिपाकार्थेन जरा । विनाशा-

र्थेन मरणम् । शोचनार्थेन शोकः । वचनपरिदेवनार्थेन परिदेवः । कायसपीडनार्थेन दुःखम् । चित्तसपीडनार्थेन दौर्मनस्यम् । उपक्लेशार्थेन उपायासाः ॥

पुनरपरम्–तत्त्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या । एवमविद्याया सत्या त्रिविधा सस्कारा अभिनिर्वर्तन्ते–पुण्योपगा अपुण्योपगा आनेञ्ज्योपगाः । तत्र पुण्योपगाना सस्काराणा पुण्योपगमेव विज्ञान भवति । अपुण्योपगाना सस्काराणामपुण्योपगमेव विज्ञान भवति । आनेञ्ज्योपगाना सस्काराणामानेञ्ज्योपगमेव विज्ञान भवति । इदमुच्यते सस्कार-
A 12 प्रत्यय विज्ञानमिति । विज्ञानसहभुवश्चत्वारोऽरूपिणः स्कन्धा नामरूपम् । तद्विज्ञानप्रत्यय नामरूपमुच्यते । नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्तन्ते । तन्नामरूपप्रत्यय षडायतनमित्युच्यते । षड्भ्यश्चायतनेभ्यः षट् स्पर्शकायाः प्रवर्तन्ते । अय षडायतनप्रत्यय स्पर्श इत्युच्यते । यज्जातीयः स्पर्शो भवति, तज्जातीया वेदना प्रवर्तते । इयमुच्यते स्पर्शप्रत्यया वेदनेति । यस्ता वेदना विशेषेणास्वादयति अभिनन्दति अध्यवस्यति अध्यवसाय तिष्ठति, सा वेदनाप्रत्यया तृष्णेत्युच्यते । आस्वादनाभिनन्दनाध्यवसानाध्यवसायस्थानादात्मप्रियरूपसातरूपैर्वियोगो मा भूदिति नित्यमपरित्यागाय यैव प्रार्थना, इदमुच्यते तृष्णाप्रत्ययमुपादानम् । एव प्रार्थयमानः पुनर्भवजनक कर्म समुत्थापयति कायेन
A 13 वाचा मनसा च, स उपादानप्रत्ययो भव इत्युच्यते । तत्कर्मनिर्जाताना पञ्चस्कन्धानामभिनिर्वृत्तिर्या, सा भवप्रत्यया जातिरित्युच्यते । जात्याभिनिर्वृत्ताना स्कन्धानामुपचयनपरिपाकाद्विनाशो भवति, तदिद जातिप्रत्यय जरामरणमित्युच्यते ॥

एवमय द्वादशाङ्गः प्रतीत्यसमुत्पादः अन्योन्यहेतुकः अन्योन्यप्रत्ययः । न नित्यो नानित्यो न सस्कृतो नासस्कृतो नाहेतुको नाप्रत्ययो न वेदयिता न क्षयधर्मो न विनाशधर्मो न निरोधधर्मोऽनादिकालप्रवृत्तोऽनुच्छिन्नोऽनुप्रवर्तते नदीस्रोतवत् ॥

यच्चय द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योन्यहेतुकोऽन्योन्यप्रत्ययः, न नित्यो नानित्यो न सस्कृतो नासस्कृतो नाहेतुको नाप्रत्ययो न वेदयिता न क्षयधर्मो न विनाशधर्मो न निरोधधर्मोऽनादिकालप्रवृत्तोऽनुच्छिन्नोऽनुप्रवर्तते नदीस्रोतवत्, अथ च इमान्यस्य द्वादशाङ्गस्य प्रतीत्यसमुत्पादस्य चत्वारि अङ्गानि सघातक्रियायै हेतुत्वेन प्रवर्तन्ते । कतमानि चत्वारि ? यदुत
A 14 अविद्या तृष्णा कर्म विज्ञान च । तत्र विज्ञान बीजस्वभावत्वेन हेतुः । कर्म क्षेत्रस्वभावेन हेतुः । अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः । तत्र कर्मक्लेशा विज्ञानबीज जनयन्ति । तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्य करोति । तृष्णा विज्ञानबीज स्नेहयति । अविद्या विज्ञानबीजमवकिरति । असतामेषा प्रत्ययाना विज्ञानबीजस्याभिनिर्वृत्तिर्न भवति । तत्र कर्मणो नैव भवति–अह विज्ञानबीजस्य क्षेत्रकार्यं करोमीति । तृष्णाया अपि नैव भवति–अह विज्ञानबीज स्नेहयामीति । अविद्याया अपि नैव भवति–अह विज्ञानबीजमवकिरामीति । विज्ञानबीजस्यापि नैव भवति–अहमेभिः प्रत्ययैर्जनितमिति । अथ च विज्ञानबीज कर्मक्षेत्रप्रतिष्ठित तृष्णास्नेहाभिष्यन्दितमविद्यया स्ववकीर्णं विरोहति । तत्रतत्र उपपत्त्यायतनप्रतिसधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति । स च नामरूपाङ्कुरो न स्वयकृतो न परकृतो नोभयकृतो

नेश्वरकृतो न कालपरिणामितो न प्रकृतिसंभूतो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः । अथ च मातापितृसंयोगादृतुसमवायादन्येषां च प्रत्ययानां समवायात् तत्र तत्र आस्वादविद्धं विज्ञानबीजमुपपत्त्यायतनप्रतिसंधौ मातु. कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु धर्मेषु अममेषु अपरिग्रहेषु आकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात् । तद्यथा—पञ्चभि. कारणै. चक्षुर्विज्ञानमुत्पद्यते । कतमैः पञ्चभि. ? यदुत चक्षु. प्रतीत्य रूपं A 10 च आलोकं च आकाशं च तज्जमनसिकारं च प्रतीत्य उत्पद्यते चक्षुर्विज्ञानम् । तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्यं करोति । रूपं चक्षुर्विज्ञानस्य आलम्बनकृत्यं करोति । आलोकः अवभासकृत्यं करोति । आकाशमनावरणकृत्यं करोति । तज्जमनसिकारः समन्वाहारकृत्यं करोति । असतामेषां प्रत्ययानां चक्षुर्विज्ञानं नोत्पद्यते । यदा तु चक्षुराध्यात्मिकमायतनमविकलं भवति, एवं रूपालोकाकाशतज्जमनसिकाराश्च अविकला भवन्ति, ततः सर्वेषां समवायाच्चक्षुर्विज्ञानमुत्पद्यते । तत्र चक्षुषो नैव भवति—अहं चक्षुर्विज्ञानस्याश्रयकृत्यं करोमीति । रूपस्यापि नैव भवति—अहं चक्षुर्विज्ञानस्य आलम्बनकृत्यं करोमीति । आलोकस्यापि नैव भवति—अहं चक्षुर्विज्ञानस्य अवभासकृत्यं करोमीति । आकाशस्यापि नैव भवति—अहं चक्षुर्विज्ञानस्य अनावरणकृत्यं करोमीति । तज्जमनसिकारस्यापि नैव भवति—अहं चक्षुर्विज्ञानस्य समन्वाहारकृत्यं करोमीति । चक्षुर्विज्ञानस्यापि नैव भवति—अहमेभिः प्रत्ययैर्जनितमिति । अथ च पुनः सत्सु एषु प्रत्ययेषु चक्षुर्विज्ञानस्योत्पत्तिर्भवति । एवं शेषाणामिन्द्रियाणां यथायोगं योज्यम् ॥

तत्र न कश्चिद्धर्मोऽस्माल्लोकात् परलोकं संक्रामति । अस्ति च कर्मफलप्रतिविज्ञप्ति., A 16 हेतुप्रत्ययानामवैकल्यात् । तद्यथा सुपरिशुद्धे आदर्शमण्डले मुखप्रतिबिम्बकं दृश्यते । न च तत्र आदर्शमण्डले मुखं संक्रामति । अस्ति च मुखप्रतिविज्ञप्तिः, हेतुप्रत्ययानामवैकल्यात् । एवमस्माल्लोकात् न कश्चित् च्युतः, नाप्यन्यत्रोपपन्नः । अस्ति च कर्मफलप्रतिविज्ञप्ति., हेतुप्रत्ययानामवैकल्यात् । तद्यथा चन्द्रमण्डलं चत्वारिंशद्योजनशतमूर्ध्वं व्रजति । अथ च पुनः परीत्तेऽप्युदकभाजने चन्द्रस्य प्रतिबिम्बं दृश्यते । न च चन्द्रमण्डलं तस्मात्स्थानाच्च्युतम्, परीत्ते उदकस्य भाजने संक्रान्तं भवति । अस्ति च चन्द्रमण्डलप्रतिविज्ञप्तिः, हेतुप्रत्ययानामवैकल्यात् । एवमस्माल्लोकान्न कश्चित् च्युत., नाप्यन्यत्रोपपन्नः । अस्ति च कर्मफलप्रतिविज्ञप्तिः, हेतुप्रत्ययानामवैकल्यात् ॥

तद्यथा अग्निरुपादानप्रत्यये सति ज्वलति, उपादानवैकल्यान्न ज्वलति, एवमेव कर्मक्लेशजनितं विज्ञानबीजं तत्र तत्र उपपत्त्यायतनप्रतिसंधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु धर्मेषु अममेषु अपरिग्रहेषु आकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात् । एवं आध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ॥ A 17

तत्र आध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिराकारैर्द्रष्टव्यः । कतमैः पञ्चभिः ? न शाश्वततः, नोच्छेदतः, न संक्रान्तितः, परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः, तत्सदृशानुप्रबन्धतश्चेति । कथं न शाश्वततः ? यस्मादन्ये मारणान्तिकाः स्कन्धाः, अन्ये औपपत्त्य-

शिका. स्कन्धाः, न तु य एव मारणान्तिकाः स्कन्धाः, त एव औपपत्त्यशिकाः । अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते, तस्मिन्नेव च समये औपपत्त्यशिका स्कन्धाः प्रादुर्भवन्ति । अतो न शाश्वतत ॥ कथ नोच्छेदत ? न च पूर्वनिरुद्धेषु मारणान्तिकेषु स्कन्धेषु औपपत्त्यशिका. स्कन्धा· प्रादुर्भवन्ति, नाप्यनिरुद्धेषु । अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते, तस्मिन्नेव च समये औपपत्त्यशिका स्कन्धाः प्रादुर्भवन्ति तुलादण्डोन्नामावनामवत् । A 18 अतो नोच्छेदतः ॥ कथ न सक्रान्तित. ? विसदृशाः सत्त्वनिकायाः सभागाया जात्या जातिमभिनिर्वर्तयन्ति । अतो न सक्रान्तितः ॥ कथ परीत्तहेतुतो विपुलफलाभिनिर्वृत्तित ? परीत्त कर्म क्रियते, विपुल. फलविपाकोऽनुभूयते । अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तित ॥ कथ तत्सदृशानुप्रबन्धत· ? यथावेदनीय कर्म क्रियते, तथावेदनीयो विपाकोऽनुभूयते । अतस्तत्सदृशानुप्रबन्धतश्च ॥ एवमाध्यात्मिकः प्रतीत्यसमुत्पाद. पञ्चभिराकारैर्द्रष्टव्य· ॥

य· कश्चिद् भदन्त शारिपुत्र इम प्रतीत्यसमुत्पाद भगवता सम्यक्प्रणीतमेवं यथाभूतं सम्यक्प्रज्ञया सततसमितमजीव निर्जीव यथावदविपरीतमजातमभूतमकृतमसस्कृतमप्रतिघमनालम्ब शिवमभयमनाहार्यमव्ययमव्युपशमस्वभाव पश्यति, असतः तुच्छत. रिक्तत. असारत. रोगतः गण्डत. शल्यत अघत अनित्यत· दुःखतः शून्यतः अनात्मतः समनुपश्यति, न स पूर्वान्त प्रतिसरति—किं न्वहमभूवमतीतेऽध्वनि, कथ न्वहमभूवमतीतेऽध्वनि इति । अपरान्त वा न पुन. प्रतिसरति—किं न्वह भविष्याम्यनागतेऽध्वनि, आहोस्विन्न भविष्याम्यनागतेऽध्वनि, को नु भविष्याम्यनागतेऽध्वनि, कथ नु भविष्याम्यनागतेऽध्वनि A 19 इति । प्रत्युत्पन्न· वा पुनर्न प्रतिसरति—किं न्विदम्, कथ न्विदम्, के सन्तः के भविष्याम., इमे सत्त्वाः कुत आगताः, इतश्च्युताः कुत्र गमिष्यन्तीति । यानि एकेषा श्रमणब्राह्मणाना पृथग् लोके दृष्टिगतानि भविष्यन्ति, तद्यथा—आत्मवादप्रतिसयुक्तानि सत्त्ववादप्रतिसयुक्तानि जीववादप्रतिसयुक्तानि पुद्गलवादप्रतिसयुक्तानि कौतुकमङ्गलवादप्रतिसयुक्तानि उन्मिञ्जितानि निमिञ्जितानि च, तान्यस्य तस्मिन् समये प्रहीणानि भवन्ति परिज्ञातानि समुच्छिन्नमूलानि तालमस्तकवदनाभासगतानि आयत्यामनुत्पादानिरोधधर्माणि ॥

यो भदन्त शारिपुत्र एवंविधधर्मक्षान्तिसमन्वित. प्रतीत्यसमुत्पाद सम्यगवगच्छति, तस्य तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसपन्नः सुगतो लोकवित् पुरुषदम्यसारथिरनुत्तरः शास्ता देवमनुष्याणा बुद्धो भगवान् सम्यक्सबोधिं व्याकरोति—सम्यक्सबुद्धो बुद्धो भविष्यसीति । मैत्रेयेण बोधिसत्त्वेन महासत्त्वेन एवमुक्तम् ॥

अथ खल्वायुष्मान् शारिपुत्रो मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य भाषितमभिनन्द्य अनुप्रमोद्य उत्थायासनात् प्रक्रान्तः । प्रक्रान्तास्ते च भिक्षवः ॥

आर्यशालिस्तम्ब नाम महायानसूत्र सपूर्णम् ॥

# १ [ मध्यमक-शालिस्तम्बसूत्रम् । ]

By Dr V. V Gokhale, Delhi University

**Prefatory Note** –The Skt Ms of the present text, written on Indian paper and presumably imported from Bengal in the 16th century A D, was kindly allowed to be inspected and copied out by Hutuktu Rimpoche Lobsang Jigme Gyaltsen, the Abbot of the Kundeling monastery of Lhasa, during my tenure there as an Officer on Special Duty of the Government of India (1948-50) The text begins with the salutation stanza of Nāgārjuna's Mūlamadhyamaka-kārikā and ends with a discussion based mainly on the first kārikā (I 1) of the same work (See note 49 below) The main central part of this text, however, is practically identical with the Śālistamba-sūtra, as reconstructed from its Tibetan version and quotations found in other Sanskrit works, like Prajnākaramati's Bodhicaryāvatāra-Pañjikā (BCA) Śiksāsamuccaya (ŚS), Candrakīrti's Madhymaka-vrtti (MV), Yaśomitra's Sphutārthā Abhidharmakośavyākhyā, etc by Louis de la Vallée Poussin in his *Théorie des douze Causes* (Gand, 1913) pp 68-108 (LVP) Another attempt at reconstruction of the Śālistamba was made by N Aiyaswami Sastri (Adyar, 1950), Sūtra No 8 in this volume, without reference to LVP's able reconstruction, which I have used here for purposes of comparison In our present Sanskrit Ms, which seems to be the only one so far discovered of the original text, and which, curiously enough, begins, as said above, with Nāgārjuna's salutation, the first seven introductory paragraphs of LVP's text are absent Thus, beginning with LVP's p 73 it continues only upto p 89, leaving out again over three concluding paragraphs of LVP's text Besides this, there are the following gaps in our text as compared with LVP's, viz, Para 2 on p 73, Para 4 on p 76, Para 5 on p 81, Para 4 on p 82, Paras 5–6 on p 83, and Paras 3-4 on p 86

A misleading Tibetan title in the U-me script appears on fol 1*a* of the Sanskrit Ms Śer phyin brgya lna bcu pa bźugs so, which corresponds to Adhyardhaśatikā Prajñāpāramitā, the available Chinese and Tibetan translations, as well as the mixed fragmentary Sanskrit texts of the latter, however, have nothing to do with the Śālistambasūtra as such LVP's recension of the Śālistamba has Bodhisattva Maitreya as its promulgator and is as such assigned to the presumably pre-Nāgārjunian "Mahāyāna" by the Tibetan and some later Chinese versions But the immense popu-

larity of this Sūtra (of which commentaries attributed to Nāgārjuna and Kamalaśīla are available in Tibetan) might have led some post-Nāgārjunian scholar to establish a special Madhyamaka version of it by suitably changing the beginning and end of this venerable old text, which is found here in this new garb  I have ventured, therefore, to suggest the provisional title Madhyamaka-Śālistambasūtra

In editing the Sanskrit Ms I have tried to retain as much as possible of the original irregular orthography, correcting and reforming only the interpunctuation so as to facilitate the understanding of the context  Phrases, which apparently crept into the original text from marginal glosses during the process of copying, have been put into round brackets, e g , at note 7 etc

(Fol 1*b*) नमो बुद्धाय ॥

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥
य प्रतीत्यसमुत्पाद प्रपञ्चोपशम शिवम् ।
देशयामास सबुद्धस्त वन्दे वदतां वरम् ॥

प्रतीत्यसमुत्पाद इति कस्मादुच्यते? सहेतुकः सप्रत्ययो नाहेतुको नाप्रत्यय इत्युच्यते। अथ च पुनरय प्रतीत्यसमुत्पादो द्वाभ्या कारणाभ्यामुत्पद्यते । कतमाभ्या द्वाभ्या कारणाभ्यामुत्पद्यते? हेतूपनिबन्धत. प्रत्ययोपनिबन्धतश्चेति । सोऽपि द्विविधो द्रष्टव्य —बाह्यश्च आध्यात्मिकश्च ॥

तत्र बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः? यदिद बीजादङ्कुरः, अङ्कुरात्प(Fol 2*a*)त्रम्, पत्रात्काण्डम्, काण्डान्नाडम, नाडाद्दण्ड., दण्डोद्गर्भः[1], गर्भाच्छूकः, शूकात्पुष्पम्, पुष्पात्फलमिति । असति बीजे अङ्कुरो न भवति, एव यावत् असति पुष्पे फल न भवति । सति तु बीजे अङ्कुरस्य अभिनिर्वृत्तिर्भवति, एव यावत् सति च पुष्पे फलस्याभिनिर्वृत्तिर्भवति । तत्र च पुनर्बीजस्य नैव भवति—अहमङ्कुर निर्वर्तयामीति । [2]एतेन निरीहत्वम्[2] । अङ्कुरस्यापि नैव भवति—अह बीजेनाभिनिर्वर्तित इति । एव यावत्पुष्पस्य नैव भवति—अह फलमभिनिर्वर्तयामीति । फलस्यापि नैवं भवति—अह पुष्पेणाभिनिर्वर्तित इति । अथ बीजे सति च कारणभूते अङ्कुरस्याभिनिर्वृत्तिः प्रादुर्भावो भवति, एव याव-(Fol. 2*b*)त्पुष्पे सति फलस्याभिनिर्वृत्तिः प्रादुर्भावो भवति । एव च बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः ॥

---

1) For °दण्ड , दण्डा° LVP °गण्डो गण्डा°

2–2) LVP omits this

पुनः कथ बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य ? षण्णा धातूना समवायात् । [3]स्वभावधारणाद्धातु [3] । कतमेषां षण्णा धातूना समवायात् ? यदिद पृथिव्यप्तेजोवाय्वाकाशधातुसमन्वयाद्बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः । तत्र पृथिवीधातुर्बीजस्य सधारणकृत्य करोति, अब्धातुर्बीज स्नेहयति, तेजोधातुर्बीज परिपाचयति, वायुधातुर्बीजमभिनिर्हरति, आकाशधातुर्बीजस्यानावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामकृत्य (Fol 3*a*) करोति । असत्सु प्रत्ययेषु बीजादङ्कुरस्याभिनिर्वृत्तिर्न भवति । यदा बाह्यश्च पृथिवीधातुरविकलो भवति, एवमप्तेजोवाय्वाकाशऋतुधातवश्चाविकला भवन्ति, ततस्तेषा सर्वेषा समवायाद्बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति । तत्र पृथिवीधातोर्नैव भवति–अह बीजस्य धारणाकृत्य करोमि इति । एव यावदृतोरपि नैव भवति–अह बीजस्य परिणामनाकृत्य करोमि इति । अङ्कुरस्यापि नैव भवति–अहमेभि. प्रत्ययैर्जनित इति । अथ पुन. सत्सु प्रत्ययेषु तेषु बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति । स चायमङ्कुरो न स्वयकृतो न परकृतो नोभयकृतो ने(Fol 3*b*)श्वरनिर्मितो[4] न कालपरिणामितो न प्रकृतिसभूतो नाकारणाधीनो नाप्यहेतुसमुत्पन्नश्च । पृथिव्यप्तेजोवाय्वाकाशधातुसमवायाद्बीजे निरुध्यमाने अङ्कुरस्याभिनिर्वृत्तिर्भवति । एव बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ॥

तत्र बाह्य' प्रतीत्यसमुत्पादः पञ्चभिः कारणै[5]र्द्रष्टव्य' । कतमैः पञ्चभि' ? न शाश्वततो नोच्छेदतो न सक्रान्तित. परीत्तहेतुतो विपुलफलाभिनिर्वृत्तित. तत्सदृशानुप्रबन्धतश्चेति । कथ न शाश्वतत इति ? यस्मादन्योऽङ्कुरोऽन्यद्बीजम्, न च यदेव बीज स एवाङ्कुर. । अथ च पुनर्बीज निरुध्यते, (Fol 4*a*) अङ्कुरश्चोत्पद्यते । अतो न शाश्वततः ॥ कथ पुनर्नोच्छेदत' ? न च पूर्वनिरुद्धाद्बीजादङ्कुरो निष्पद्यते, नाप्यनिरुद्धाद्बीजात् । अपि च बीज च निरुध्यते, तस्मिन्नेव समयेऽङ्कुर उत्पद्यते, तुलादण्डोन्नामावनामवत् । अतो नोच्छेदत' ॥ कथ न सक्रान्तितः ? [6]विसदृशो बीजादङ्कुर इत्य[6]तो न सक्रान्तित ॥ कथ परीत्तहेतुनो विपुलफलाभिनिर्वृत्तित'? परीत्त बीजमुप्यते (व्याप्तित्वात्–sic अव्या° ?) विपुल फलमभिनिर्वर्तयति, इत्यतः परीत्तहेतुनो विपुलफलाभिनिर्वृत्तित. ॥ कथ तत्सदृशानुबन्धत ? यादृश बीजमुप्यते तादृश फलमभिनिर्वर्तयति, इत्यतः तत्सदृशानुबन्धतश्चेति । (Fol 4*b*) एव बाह्यः प्रतीत्यसमुत्पादः पञ्चभि. कारणैर्द्रष्टव्यः ॥

---

3–3) LVP omits this It may be a marginal gloss

4) LVP °कृतो for °निर्मितो supported by BCA

5) Acc to LVP कारणै is supported by BCA, MŚ etc He reads आकारै instead, also see note 43 below

6–6) This accords with BCA LVP यस्मादन्योऽङ्कुरोऽन्यद्बीजम्, न च य एवाङ्कुरस्तदेव बीजम्

तत्र पुनश्चाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः ? यदिदमविद्याप्रत्ययाः संस्काराः, यावज्जातिप्रत्यय जरामरणमिति । अविद्या चेन्नाभविष्यत्, नैवं सस्काराः प्रज्ञास्यन्ते । एव यावद्यदि जातिर्नाभविष्यत् ([7]स्कन्धाना पञ्चाना प्रादुर्भावो जातिरिति)[7], तत्र जरामरण न प्रज्ञास्यते । अथ च सत्यामविद्याया सस्काराणामभिनिर्वृत्तिर्भवतीति । तत्राविद्याया नैव भवति—अह सस्कारानभिनिर्वर्तयामीति । पुनः सर्वसस्काराणामप्येव न भवति—वयमविद्यया अभिनिर्वर्तिता इति । एव यावज्जातेः ([8]स्कन्धप्रादुर्भावस्य)[8] (Fol 5*a*) नैव भवति—अह जरामरणमभिनिर्वर्तयामीति । जरामरणस्यापि नैव भवति—अह जात्याभिनिर्वर्तित इति । अथ च सत्यामविद्याया सस्काराणामभिनिर्वृत्तिर्भवति प्रादुर्भाव एव, एव यावत् जात्या सत्या जरामरणस्याभिनिर्वृत्ति प्रादुर्भावो भवति । एवमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः ॥

पुन कथमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य[9] ? यदिद पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूना समवायादाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य. । तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य पृथिवीधातु. कतम इति ? योऽय कायस्य सश्लेषत· ([10]सपर्कात्[10]) कठिनभावमभिनिर्वर्तयति,[10] अयमुच्यते पृ(Fol 5*b*)-थिवीधातुः ॥ य. पुनः कायस्य परिग्रह[11]कृत्य ([12]स्वीकारसचयकृत्य[12]) करोति, अयमुच्यते अब्धातुः ॥ यश्च पुनः कायस्य अशित पीत भक्षित परिपाचयति, अयमुच्यते तेजोधातु. ॥ यः कायस्य आश्वासप्रश्वासकृत्य ([13]वायोराकर्षणमाश्वास एतत्कृत्य[13]) करोति, अयमुच्यते वायुधातु· ॥ यः कायस्यान्त शौपिर्यभावमभिनिर्वर्तयति, अयमुच्यते आकाशधातु· ॥ यो नामरूपमभिनिर्वर्तयति नडकलापयोगेन[14] चक्षुरादिपञ्चविधविज्ञानकाय([15]विज्ञानसमूह)-[15] सयुक्त सास्रव ([16]सावरण[16]) मनोविज्ञानम्, अयमुच्यते विज्ञानधातु· ॥ असत्सु प्रत्ययेपु कायस्योत्पत्तिर्न भवति । यदा चाध्यात्मिक पृथिवीधातुरविकलो (Fol 6*b*) भवति, एवमप्तेजोवाय्वाकाशविज्ञानधातवश्चाविकला भवन्ति, ततस्तेषा सर्वेषा समवायात्कायस्योत्पत्तिर्भवति । तत्र पृथिवीधातोर्नैव भवति—अह कायस्य कठिनत्वमभिनिर्वर्तयामीति ।

---

7–7) A marginal gloss seems to have crept into the text here It is not found in LVP

8–8) Same as above in note 7

9) LVP adds षण्णा धातूना समवायात् । कतमेषा षण्णा धातूना समवायात् ।

10–10) Not found in LVP Further, it may be noted that Ms writes अभिनिवर्त° for अभिनिर्वर्त° almost invariably

11) LVP अनुपरिग्रह° This reading appears below on fol 6*a*

12–12) Same as above in note 7

13–13) Same as above in note 7

14) Ms नाडकालोपयोगेन (Sic)

15–15) Same as above in note 7

16–16) Same as above in note 7

अब्धातोर्नैव भवति–अहं कायस्यानुपरिग्रहं[17] करोमीति। तेजोधातोर्नैव भवति–अहं कायस्य अशितपीतखादितं परिपाचयामीति। वायुधातोर्नैव भवति–अहं कायस्याश्वासप्रश्वासकृत्यं करोमीति। आकाशधातोर्नैव भवति–अहं कायस्यान्तःशौषिर्यभावमभिनिर्वर्तयामीति। विज्ञानधातोर्नैव भवति–अहं कायमभिनिर्वर्तयामीति। कायस्यापि नैवं भवति–अहमेभिः प्रत्ययविशेषैर्जनित इति॥ (Fol 6b) अथ च सत्सु प्रत्ययेषु कायस्योत्पत्तिर्भवति॥

तत्र पृथिवीधातुर्नात्मा ([18]न मुक्तो न बद्धो[18]) न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुरुषो न नपुंसकं न चाहं न च मम, नाप्यन्यस्य कस्यचित्। [एवं अब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुर्नात्मा नाप्यन्यस्य कस्यचित्]॥[19]

तत्राविद्या कतमा? या एष्वेव षड्धातुषु एकसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा सत्त्वजीवजन्तुपोषपुरुषपुद्गलमनुजमानवसंज्ञा अहंकारममकारसंज्ञा, एवमादि विविधम[20]ज्ञानम्, इयमुच्यते अविद्येति। एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते। तत्र ये रागद्वेषमोहा विषयेषु, अमी उच्यन्ते संस्कारा इति॥ वस्तुप्रज्ञप्ति ([21]इन्द्रियविज्ञानचेतना[21]) विज्ञानम्। विज्ञानसह(Fol 7a)जाश्चत्वार उपादानस्कन्धाः, तन्नामरूपम्। नामरूपसंश्रितानीन्द्रियाणि षडायतनम्। त्रयाणां धर्माणां संनिपातः स्पर्शः ([22]विषयेन्द्रियविज्ञानसंनिपात इत्यर्थः[22])। स्पर्शानुभवो वेदना। वेदनाध्यवसानं तृष्णा ([23]अध्यवसानं काङ्क्षा सुखाद्यनुभवः[23])। तृष्णावैपुल्यमुपादानम्। उपादाननिर्जातं पुनर्भवजनकं कर्म भवः। भवहेतुकः स्कन्धप्रादुर्भावो जातिः। स्कन्धपरिपाको जरा ([24]स्कन्धजीर्णतेत्यर्थः[24])। स्कन्धविनाशो मरणम्। म्रियमाणस्य मूढस्य साभिष्वङ्गस्यान्तर्दाहः शोकः। शोकेनालपनं परिदेवनम्। चक्षुरादिपञ्चविज्ञानकायसंयुक्तं असातानु[25]शयनं दुःखपश्चात्ताप[25] दुःख[म्]। मनसिकार(Fol 7b)संप्रयुक्तं मानसं दुःख[म्] दौर्मनस्यम्। ये चाप्यन्ये एवमादयः क्लेशाः, उपक्लेशा उपायासाः ([26]मनोविकल्पजातमायाशाठ्यदैन्यकामरागादयस्ते सर्वे। पेयालम्)॥[26]

पुनरपरम्–तत्त्वेऽप्रतिपत्तिः मिथ्याप्रतिपत्तिरज्ञानम् ([27]संवृतिपरमार्थयोर्विभागाज्ञानं अज्ञानम्[27])। अविद्यायां सत्यां त्रिविधाः संस्कारा अभिनिर्वर्तन्ते–पुण्योपगा अपुण्योपगा आनिञ्ज्योपगाश्चेति समाख्यन्ते अविद्याप्रत्ययाः संस्कारा इति। पुण्योपगानां संस्काराणां पुण्योपगमेव विज्ञानं भवति, अपुण्योपगानां संस्काराणां अपुण्योपगमेव विज्ञानं

---

17) See note 11 above

18) LVP reads न सत्त्वो only instead of न मुक्तो न बद्धो

19) This is added here after LVP's reconstruction

20) Ms. विविधविज्ञान (Sic)

21-21, 22-22, 23-23, 24-24) Same as above in note 7

25-25) LVP reads °नुभवन only See note 7 above

26-26, 27-27) Same as above in note 7.

भवति, अनिञ्ज्योपगानां सस्काराणामनिञ्ज्यो(Fol 8a)पगमेव विज्ञान भवति। इदमुच्यते सस्कारप्रत्यय विज्ञानमिति ॥ [28]तदेव विज्ञानप्रत्यय नामरूपम् ॥ नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रिया[·] प्रवर्तन्ते, तन्नामरूपप्रत्यय षडायतनमुच्यते ॥ षड्भ्य आयतनेभ्यः षट् स्पर्शकायसमूहा· प्रवर्तन्ते, अय षडायतनप्रत्यय· स्पर्श उच्यते ॥ यज्जातीयः स्पर्शो भवति, तज्जातीया वेदना प्रवर्तते, इय स्पर्शप्रत्यया वेदना उच्यते ॥ यस्तां वेदना ([29]वेदयति[29]) विशेषेणास्वादयति अभिनन्दति अध्यवस(स्य ?)ति ([30]काङ्क्षति[30]) अधितिष्ठति, सा वेदनाप्रत्यया तृष्णेत्युच्यते ॥ आस्वादनाभिनन्दन आध्यवसायस्थानम्, न मे प्रियरूपसातरूपैः पञ्चभि· कामगुणैर्वियोगो भ(Fol 8b)वतु अपरित्याग, भूयोभूयश्च प्रार्थना, इदं तृष्णाप्रत्ययमुपादानमित्युच्यते ॥ एव प्रार्थयमान पुनर्भवजनक कर्म समुत्थापयति कायेन मनसा वाचा, स उपादानप्रत्ययो भव इत्युच्यते ॥ यत् कर्मनिर्जाताना स्कन्धानामभिनिर्वृत्तिः, सा भवप्रत्यया जातिरित्युच्यते ॥ यो जात्यभिनिर्वृत्ताना स्कन्धानामुपचयपरिपाकाद्विनाशो भवति, तदिद जातिप्रत्यय जरामरणमित्युच्यते। [31](पेयालम्, तत्र अविद्यादिषु शोकपरिदेवदु खदौर्मनस्योपायासाः पेयालार्थेन निर्दिशिताः[31]) ॥

तत्र विज्ञान बीजस्वभावत्वेन हेतु· । कर्म क्षेत्रस्वभावत्वेन हेतुः। अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः। कर्मक्लेशा विज्ञानबी(Fol 9a)ज जनयन्ति। तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति, तृष्णा विज्ञानबीज स्नेहयति, अविद्या विज्ञानबीजमवकिरति। सतामेषा प्रत्ययाना विज्ञानबीजस्य अभिनिर्वृत्तिर्भवति। तत्र कर्मणो नैवं भवति–अह विज्ञानबीजस्य क्षेत्रकार्यं करोमीति। तृष्णाया अपि नैवं भवति–अह विज्ञानबीज स्नेहयामीति। अविद्याया अपि नैव भवति–अह विज्ञानबीजमवकिरामीति। विज्ञानबीजस्यापि नैव भवति–अहमेभिः [32]प्रत्ययै(प्रतीत्योत्पादै)[32]र्जनित इति ॥ अपि तु विज्ञानबीज कर्मक्षेत्रप्रतिष्ठित तृष्णास्नेहाभिस्यन्दितमविद्यावकीर्णं विरोहति। [33]नामरूपाङ्कुरस्याभिनिर्वृत्तिर्भवति[33] ॥ स चासौ नामरूपाङ्कुरो न स्वयकृतो न (Fol 9b) परकृतो नोभयकृतो नेश्वरनिर्मितो न कालपरिणामितो न प्रकृतिसभूतो नाकारणाधीनो नाप्यहेतुसमुत्पन्नः। अथ च मातापितृसयोगात् ऋतुसमवायादन्येषा च प्रत्ययाना समवाया[34]दास्वादात्प्रबुद्ध

28) LVP adds विज्ञानसहजाश्चत्वारो रूपिण स्कन्धा यच्च रूपम् The present reading corresponds to BCA's

29–29, 30–30, 31–31) Same as above in note 7

32–32) LVP reads प्रत्ययै only See note 7 above

33–33) In lower margin the Ms adds प्रतिसधिमुपादाय यावत् षडायतन न स्यात्। अत्रान्तरीय नामरूपम्। LVP reads तत्रतत्रोपपत्त्यायतनप्रतिसधौ मातु कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति

34–34) Thus the Ms LVP reads आस्वादानुप्रबद्धम्, BCA आस्वादनानुप्रविद्धम्, ŚS आस्वादानुप्रविद्धम्, MŚ आस्वादानुविद्ध are readings reported by LVP & A N Śāstri, who reads आस्वादविद्धम् Tibetan does not translate the phrase

(sic!) विज्ञानबीजं तत्रतत्रोपपत्त्या मातु. कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु (धर्मनैरात्म्येन[35]) अधर्मेषु (पुद्गलनैरात्म्येन[36]) अममेषु अपरिग्रहेषु [37]अप्रत्यर्थिकेषु[37] आकाशसमेषु मायालम्बन[38]स्वभावेषु, हेतुप्रत्ययानामवैकल्यात् ।[39] (पेयालम्, पेयालशब्देन सावशेष निर्दिशति[39]) ॥

तद्यथा—पञ्चभिः कारणैश्चक्षुर्विज्ञानमुत्पद्यते । कतमै. पञ्चभिः? चक्षुश्च प्रतीत्य रूप च आलोक च आकाश च (Fol 10$a$) तज्जमनसिकारं च प्रतीत्य उत्पद्यते चक्षुर्विज्ञानम् । तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्य करोति, रूपमालम्बनकृत्य करोति, आलोकोऽवभासकृत्यं करोति, आकाशमनावरणकृत्यं करोति, तज्जमनसिकार· समन्वाहरणकृत्य करोति । असत्सु प्रत्ययेषु चक्षुर्विज्ञान नोत्पद्यते । यदा चक्षुराध्यात्मिकमायतनमविकलं भवति, एव रूपालोकाकाशतज्जमनसिकाराश्चाविकला भवन्ति, तत· सर्वेषा समवायाच्चक्षुर्विज्ञानस्योत्पत्तिर्भवति । तत्रापि चक्षुषो नैव भवति—(Fol 10$b$) अह चक्षुर्विज्ञानस्य आश्रयकृत्य करोमीति । रूपस्यापि नैव भवति—अह चक्षुर्विज्ञानस्य अवलम्बनकृत्य करोमीति । आलोकस्यापि नैव भवति—अह चक्षुर्विज्ञानस्य अवभासकृत्य करोमीति । आकाशस्यापि नैव भवति—अहं चक्षुर्विज्ञानस्य अनावरणकृत्य करोमीति । तज्जमनसिकारस्यापि नैव भवति—अह चक्षुर्विज्ञानस्य समन्वाहरणकृत्य करोमीति । चक्षुर्विज्ञानस्यापि नैव भवति—अहमेभि. प्रत्ययसमवायैर्जनित इति । अथ च सत्सु प्रत्ययेषु चक्षुर्विज्ञानस्योत्पत्ति प्रादुर्भावो भवति । एव शेषाणामिन्द्रियाणा यथायोग कर्तव्यम् ॥ तत्र प्रतीत्यसमुत्पादे न कश्चिद्धर्मो अस्मा(Fol 11$a$)ल्लोकात्परलोक सक्रामति, (इति शाश्वतान्तनिषेधः[40]), अस्ति च कर्मफलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात् । (पेयालम्) ।[41] यथा अग्निरुपादानवैकल्यान्न ज्वलति, उपादानावैकल्याच्च ज्वलति, एवमेव कर्मक्लेशजनित विज्ञानबीज तत्रतत्रोपपत्त्या आयतनप्रतिसधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु अधर्मेषु अममेषु अपरिग्रहेषु अप्रत्यर्थिकेषु आकाशसमेषु मायालक्षण[42]स्वभावेषु, हेतुप्रत्ययानामवैकल्यात् । एव आध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ॥

---

35, 36) Same as above in note 7

37–37) Found only in BCA, ŚS, both of which, it may be observed, generally confirm the readings of our Ms

38) LVP °लक्षण° (as also below in fol 11$a$) for °लम्बन° (Note 42)

39) Same as above in note 7

40) Same as above in note 7

41) Same as above in note 7, LVP adds two paragraphs hereafter, giving examples of a face reflected in a mirror, and the moon reflected in water

42) See note 38 above In this place, the marginal explanations noted in notes 35, 36 & 39 do not appear.

तत्र आध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभि [43]कारणैर्द्रष्टव्यः। कतमैः पञ्चभिः? यदुत (Fol 11b) न शाश्वततः, नोच्छेदतः, न सक्रान्तित, परीत्तहेतुतः विपुलफलाभिनिर्वृत्तितः, तत्सदृशानुबन्धतश्चेति। कथ न शाश्वततः? यस्मादन्ये मरणान्तिकाः स्कन्धाः, अन्ये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति। न तु य एव मरणान्तिकाः स्कन्धाः, त एव औपपत्त्यंशिकाः स्कन्धा प्रादुर्भवन्तीति न। अतो हेतोर्न शाश्वततः॥ कथ पुनर्नोच्छेदतः? न च पूर्वनिरुद्धेषु मरणान्तिकेषु स्कन्धेषु औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति, नाप्यनिरुद्धेषु। अपि तु मरणान्तिका स्कन्धा निरुध्यन्ते, तस्मिन्नेव समये औपपत्तिकाश्च स्कन्धाः पुनर्भवन्ति, प्रादुर्भवन्ति, तुलादण्डोन्नामावनामवत्। अतो नोच्छेदतः॥ (Fol 12a) कथ न सक्रान्तित इति? विसदृशात् सत्त्वनिकायात् विस[44]भागाः स्कन्धा जात्यन्तरेष्वभिनिर्वर्तन्ते, अतो न सक्रान्तितः॥ कथ परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः? परीत्त कर्म क्रियते, विपुलफलविपाकोऽनुभूयते, अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः॥ कथ तत्सदृशानुप्रबन्धतः? यथावेदनीय कर्म क्रियते, तथावेदनीयो विपाकोऽनुभूयते, अतस्तत्सदृशानुप्रबन्धतश्चेति॥

यः कश्चिद्भदन्त शारद्वतीपुत्र इम प्रतीत्यसमुत्पाद भगवता तथागतेन सम्यक्प्रणीत यथाभूत सम्यक्प्रज्ञया [45]संतत[45]संमित अजीव निर्जीव यथावद[वि]परी(Fol 12b)त अजात अभूत अकृत असस्कृत अप्रतिम (sic °घं?) अनावरण शिव अभय [46]अहार्य अव्यय अव्युपशमस्वभाव पश्यति, असत्यतोऽसक्ततः असारतो रोगतो गण्डतः शल्यतोऽनित्यतः दुःखतः शून्यतोऽनात्मत समनुपश्यति, स न पूर्वान्त प्रतिसरति—किमहमभूवमतीतेऽध्वनि आहोस्विन्नाभूवमतीतेऽध्वनि, को न्वहमभूवमतीतेऽध्वनि[47]। अपरान्त वा पुनर्न प्रतिसरति—किं नु भविष्याम्यहमनागतेऽध्वनि, आहोस्विन्न भविष्याम्यहमनागतेऽध्वनि, को न्वह भविष्यामीति। प्रत्युत्पन्न वा पुनर्न प्रतिसरति—किं न्विदम्,[48] कथस्विदिदम्, के सन्तः के भविष्याम इति॥ (Fol 13a)

[49]**आर्यदशभूमके**ऽप्युक्तम्—"तत्राविद्यातृष्णोपादान क्लेशवर्त्मनो व्यवच्छेदः, संस्कारा भवश्च कर्मवर्त्मनो व्यवच्छेदः, परिशेष दुःखवर्त्मनो व्यवच्छेदः। [अविद्याप्रत्यया] सस्कारा इत्येषा पूर्वान्तिकी अपेक्षा, विज्ञान यावद्वेदनेति एषा प्रत्युत्पन्नापेक्षा, तृष्णा यावद्भव इति एषा अपरान्तिकी अपेक्षा, अत ऊर्ध्वमस्य प्रवृत्तिरिति। पेयालम्॥" "तस्यैव

---

43) See note 5 above
44) LVP सभागा for विसभागा, which agrees with BCA & ŚS
45–45) Ms writes श° instead of स° in both places
46) LVP reads अनाहार्य for अहार्य
47) In LVP's version, along with 'किं' and 'क' the preceding question is asked also with 'कथं' in both places
48) MV also reads किन्विद instead of किस्विदिद of LVP
49) Beginning from here up to the end, we have a text, which

भवति–संयोगात् सस्कृतं प्रवर्तते, विसयोगान्न प्रवर्तते । सामग्र्या सस्कृत प्रवर्तते, विसामग्र्या न प्रवर्तते । हन्त, वयमेव बहुदोषदुष्ट सस्कृत विदित्वा अस्य सयोगस्य अस्याश्च सामग्र्या व्यवच्छेद करिष्यामः, न चात्यन्तोपशम सर्व-( Fol 13*b* )सस्काराणामधिगमिष्यामः सत्त्वपरिपाचनतायै" इति ॥ इद सक्षेपान्मोहशोधनम् ॥

तत्त्व अधरसंवृत्त्यक्षर ( sic ) सवृतिस्वभावसर्वधर्मानुत्पादज्ञानम् । तदाह–रूप तु द्विविधम्,–वर्णतः सस्थानत । ते च विंशतिधा, तत्र नीलादि नव, दीर्घादेकादश । एतत्सर्वं रूप पारमार्थिक नास्तीति प्रतिज्ञा, स्वरूपेण हेतु' । स्वहेतुना तथैव जनितो यथावत् परमार्थिक तु (sic) । यथा जलचन्द्रः इति दृष्टान्त । स्वरूपेण नास्ति रूपमित्यस्यायमभिप्राय. । "पररूपेण रूप नास्ति, स्वरूपेण वा उभयरूपेण वा अनुभयरूपेण वेति" **शास्त्रम्** ॥ उत्पादकहेतुपक्षो विकल्प' ॥

"न सत् नासत् न सदसत् न चाप्यनुभयात्मकम्" । इति **शास्त्रम्** ॥ ॥

( Fol 14*a* ) कर्तृपक्षो विकल्प', तत्र विलोम्ना निदर्शनम् ।

" न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतु कोटिविनिर्मुक्त तत्त्व **माध्यमिका** विदु' " ॥
" न स्वतो नापि परतो न द्वाभ्या नाप्यहेतुतः ।
उत्पन्ना जातु दृश्यन्ते भावा. क्वचन केचन "[50] ॥

तत्र सतो विद्यमानस्योत्पादायोगात् विद्यमानस्योत्पादे निरवधिजन्मप्रसङ्गेनानवस्था स्यात् । असदुत्पादे शशविषाणादीनामुत्पादप्रसङ्गाद्धेतो. प्राक् असदिति चेत्, तदेव चिन्त्यते–हेतोः किमुत्पद्यते सदसद्वा ? उभयात्मकस्योत्पादे विरुद्धधर्मयोरेकस्वभावताभ्युपगमः कथ स्यात् ? भवतु विरुद्धधर्मबन्धनस्वरूप च पररूपनिमित्तकम् । तच्च पररूप विरुद्धधर्माभ्या( Fol 14*b* )स., स च भेदकः । यत्र परप्रतिपत्तिस्तत्र किं स्वरूपप्रतिपत्तिरेव नास्ति ? प्रतीतिरस्ति, न स्वरूपप्रतिपत्तिः । इयमेव प्रतीतिरिति चेत्, तर्हि अप्रतीतिरेव प्रतीतिः । किं ब्रूमः ? अथ घटे पटाभावोऽस्ति । घट. पटो न भवतीति चेत्, मिश्रप्रतीतिरपि नास्ति । तस्मात् घटो भावाभावात्मक', अतः सिद्धा द्विरूपता ।

---

is not fonnd in LVP's version Evidently it is a later addition in the form of a somewhat unsystematic & partly obscure commentary on the first Kārikā of Nāgārjuna's Mūla-Madhyamaka-Śāstra ( I 1 ), and includes quotations from the Deśabhūmika-Śūtra VI (See LVP *ibid* pp 118–120 ) and Candrapradīpasūtra (cf Candrakīrti's Prasannapadā, p 239 etc in LVP's edition, where the quotation is said to be from Anavatapta–sūtra )

50 ) MŚ I 1 (LVP's ed p 12 etc ) The v l दृश्यन्ते for विद्यन्ते is significant.

सत्यम्, यदि व्यवहर्तव्यैकशरीरता त्यक्त्वा प्रसह्य रूपस्याभावस्य किंचिद्रूपं स्यात्, तत्र ह्यनन्यगतिकोभयाभावस्वरूपोपलम्भात् अभावो व्यवह्रियते घटस्येति । तस्मान्न द्विस्वभावस्य जन्म । अहेतुकोत्पन्न सर्वं सर्वस्मादुत्पद्यते । अथ हेतुशब्दो न नित्यैकहेतुरपेक्षितः, तस्योत्पादे सर्वदैव उ( Fol 15*a* )दयव्ययौ स्याताम्, नित्यैकहेतूत्पन्नापेक्षाया अयोगात् । परापेक्षाया सोऽपि अनित्य, अनित्य प्रति विकल्पे सर्वं पूर्ववदापद्यते ॥

अतः स्वस्मात् स्वयमुत्पद्यते, अन्यस्माद्वा ? नाद्यः, प्रागनुत्पन्नः स्वयमुत्पद्यते[51] । किमनुत्पन्नेन रूपेण उत्पन्नेन वा ? अनुत्पन्नेन रूपेण अनुत्पन्न एवोत्पन्न', अनुत्पादेन रूपेणोत्पादायोगात् । अथ प्रागभाव' अनुत्पन्नशब्दवाच्य, तत् किं प्रागभावः स्वेन रूपेणोत्पद्यते ? यद्येवम्, तदा अभावेन[52] (sic !) भाव', पश्चाद्भाव इति चेत्, तत्र किमभाव एव भावो भवति ? एव सति अभावस्य पुन पुनरुत्पादे न प्रयोजनमुत्पश्याम., अनवधिरुत्पादश्चेति ( Fol 15*b* ) पररूपेणोत्पादे च अपूर्वकोत्पाद एवाङ्गीकृतः स्यात् । न चैव सिद्धान्त', उत्पन्नेन उत्पादे वा संसारेषु उत्पादविरमाभावप्रसङ्गः प्रयोजनाभावश्च । द्वितीयोऽपि न, अन्यस्मादन्योत्पादात् । अथ वा—स्वयमेव अन्यरूपेण उत्पद्यते, स्वात्मनि कारित्रविरोध., स्वात्मनि क्रियाविरोधात् । न परत उत्पाद., कुतस्तत्र सिद्धस्य वा असिद्धस्य वा ? उक्तमत्रोत्तरम्—सिद्धस्य उत्पादेन किम्, असिद्धस्य उत्पाद एव नास्ति । इत्यादिनाऽपि उभयपक्षत प्रत्येक ये प्रसह्य(ज्य ?)न्ते, द्वयोर्भावे कथ न भवति ( sic ! ) इति न्यायात् ॥ नाप्यहेतुत', सर्वत्र सर्वदोत्पादप्रसङ्गात्, ( Fol 16*a* ) तथा अनुत्पादप्रसङ्गाच्च । कुत एतत् ? अस्मात्प्रमाणात् । तद्यथा—यत् स्वतन्त्र न तत् कादाचित्कम्[53], यथा अन्या सामग्री । स्वातन्त्र्य च विवादपदम् । तस्मात् कादाचित्कतया[53] परतन्त्रता व्याप्ता । यत् कादाचित्क[53] तत्परतन्त्रम्, यथा कुशूलतलनिमीलित बीजमङ्कुरजनन प्रति । कादाचित्काश्च[53] भावाः । इति विवादपदम् । यत् परतन्त्र तत्प्रतीत्यसमुत्पन्नम्, यथा तदेव बीजम् । परतन्त्राश्च भावा विवादपदम् । यत्प्रतीत्योत्पन्न तन्नोत्पन्न स्वभावतः । यथा जलचन्द्रः प्रतीत्योत्पन्नश्च । परतन्त्राश्च भावा विवादपदम् ॥

**आर्यचन्द्रप्रदीपसूत्रे—**

यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पाद सभावतो( Fol 16*b* )ऽस्ति ।
यः प्रत्ययाधीनु स शून्य उक्तः
यः शून्यता जानति सोऽप्रमत्तः ॥

इति वचन धार्यं मनसिकार्यं सर्वथा सर्वदा सर्वदर्शिभिः ॥

[ मध्यमक—शालिस्तम्बसूत्र समाप्तम् ॥ ]

---

51 ) स्वयम् is added as a correction in the upper margin of the Ms

52 ) The avagraha ( for अ° ) is not found in the Ms

53 ) Ms. reads कदाचि° everywhere

## १० प्रतीत्यसमुत्पादादिविभङ्गनिर्देशसूत्रम् ।

एव मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवने अनाथपिण्डदस्यारामे महता भिक्षुसघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतै· । तत्र भगवानामन्त्रयते स्म—प्रतीत्यसमुत्पादस्य वो भिक्षव. आर्दि वो देशयिष्यामि विभङ्ग च । तच्छृणुत, साधु च सुष्ठु च मनसिकुरुत, भाषिष्ये—

प्रतीत्यसमुत्पादस्य आदि. कतम. ? यदुत अस्मिन् सति इद भवति, अस्योत्पादादिदमुत्पद्यते । यदुत अविद्याप्रत्ययाः सस्कारा । सस्कारप्रत्यय विज्ञानम् । विज्ञानप्रत्यय नामरूपम् । नामरूपप्रत्यय षडायतनम् । पडायतनप्रत्यय. स्पर्श· । स्पर्शप्रत्यया वेदना । वेदनाप्रत्यया तृष्णा । तृष्णाप्रत्ययमुपादानम् । उपादानप्रत्ययो भव· । भवप्रत्यया जाति· । जातिप्रत्यया जरामरणशोकपरिदेवदु·खदौर्मनस्योपायासा सभवन्ति । एवमस्य केवलस्य महतो दु खस्कन्धस्य समुदयो भवति । अयमुच्यते प्रतीत्यसमुत्पादस्यादि. ॥

विभङ्ग· कतमः ? अविद्याप्रत्ययाः सस्कारा· इत्यविद्या कतमा ? यत् पूर्वान्तेऽज्ञानम्, अपरान्तेऽज्ञानम्, पूर्वान्तापरान्तेऽज्ञानम्, अध्यात्ममज्ञानम्, बहिर्धाज्ञानम्, अध्यात्मबहिर्धाज्ञानम्, कर्मण्यज्ञानम्, विपाकेऽज्ञानम्, कर्मविपाकेऽज्ञानम्, बुद्धेऽज्ञानम्, धर्मेऽज्ञानम्, सघेऽज्ञानम्, दु·खेऽज्ञानम्, समुदयेऽज्ञानम्, निरोधेऽज्ञानम्, मार्गेऽज्ञानम्, हेतावज्ञानम्, हेतुसमुत्पन्नेषु धर्मेष्वज्ञानम्, कुशलाकुशलेषु सावद्यानवद्येषु सेवितव्यासेवितव्येषु हीनप्रणीतकृष्णशुक्लसप्रतिभागप्रतीत्यसमुत्पन्नेषु धर्मेष्वज्ञानम्, षट्सु वा पुन. स्पर्शायतनेषु यथाभूत[ता ?]सप्रतिवेध इति । यदत्र तत्र यथाभूतस्याज्ञानम्, अदर्शनम्, अनभिसमय·, तम , समोह , अविद्यान्धकारम्, इयमुच्यतेऽविद्या ॥

अविद्याप्रत्ययाः सस्कारा कतमे ? त्रयः सस्कारा.—कायसस्काराः वाक्सस्काराः मनःसंस्कारा इति ॥

सस्कारप्रत्यय विज्ञानमिति विज्ञान कतमत् ? षड् विज्ञानकायाः—चक्षुर्विज्ञान श्रोत्रघ्राणजिह्वाकायमनोविज्ञानम् ॥

विज्ञानप्रत्यय नामरूपमिति नाम कतमत् ? चत्वार अरूपिणः स्कन्धाः । कतमे चत्वारः ? वेदनास्कन्धः सज्ञास्कन्धः सस्कारस्कन्धः विज्ञानस्कन्धः । रूप कतमत् ? यत् किंचिद्रूपम्, सर्वं तत् चत्वारि महाभूतानि । चत्वारि च महाभूतान्युपादाय इतीद च नाम, तदैकध्यमभिसक्षिप्य नामरूपमित्युच्यते ॥

नामरूपप्रत्यय षडायतनमिति षडायतन कतमत् ? षडाध्यात्मिकान्यायतनानि । चक्षुराध्यात्मिकमायतन श्रोत्रघ्राणजिह्वाकायमनआध्यात्मिकमायतनम् ॥

षडायतनप्रत्ययः स्पर्श इति स्पर्श· कतम. ? षट् स्पर्शकायाः । चक्षुःसस्पर्शः श्रोत्रघ्राणजिह्वाकायमन.सस्पर्श. ॥

स्पर्शप्रत्यया वेदनेति वेदना कतमा ? तिस्रो वेदना. । सुखा दु.खा अदुःखासुखा च ॥

वेदनाप्रत्यया तृष्णेति तृष्णा कतमा ? तिस्रस्तृष्णा. । कामतृष्णा रूपतृष्णा अरूप्यतृष्णा च ॥

तृष्णाप्रत्ययमुपादानमिति उपादान कतमत् ? चत्वार्युपादानानि । कामोपादान दृष्ट्युपादान शीलव्रतोपादानमात्मवादोपादानम् ॥

उपादानप्रत्ययो भव इति भव. कतमः ? त्रयो भवाः । कामभवः रूपभवः अरूप्यभव. ॥

भवप्रत्यया जातिरिति जाति. कतमा ? या तेषा तेषा सत्त्वाना तस्मिंस्तस्मिन् सत्त्वनिकाये जाति. सजातिरवक्रान्तिरभिनिर्वृत्तिः प्रादुर्भावः स्कन्धप्रतिलम्भो धातुप्रतिलम्भ· आयतनप्रतिलम्भ स्कन्धानामभिनिर्वृत्ति जीवितेन्द्रियस्य प्रादुर्भावः ॥

जातिप्रत्यय जरामरणमिति जरा कतमा ? यत्तत् खालत्य पालित्य वलीप्रचुरता जीर्णता भुग्नता कुब्जगोपानसीवङ्कता तिलकालकाचितगात्रता खुळखुळप्रश्वासकायता पुरतः प्राग्भारकायता दण्डविष्कम्भणता धन्धत्व मन्दत्व हानिः परिहाणि· इन्द्रियाणा परिपाकः परिभेदः सस्काराणा पुराणीभावः जर्जरीभावः । इयमुच्यते जरा ॥

मरण कतमत् ? या तेषा तेषा सत्त्वाना तस्मात्तस्मात् सत्त्वनिकायात् च्युतिः च्यवनतो भेदः अन्तरहाणि. आयुषो हाणि· उष्मणो हाणिः जीवितेन्द्रियस्य निरोध· स्कन्धानां निक्षेपः मरण कालक्रिया । इदमुच्यते मरणमिति । इद च मरण पूर्विका च जरा, तदुभयमैकध्यमभिसक्षिप्य जरामरणमित्युच्यते ॥

अयमुच्यत प्रतीत्यसमुत्पादस्य विभङ्गः । प्रतीत्यसमुत्पादस्यादिं वो देशयिष्यामि इति विभङ्गं च इति वो यदुक्तम्, तदेतत् प्रत्युक्तम् ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

प्रतीत्यसमुत्पादादिविभङ्गनिर्देशसूत्र समाप्तम् ॥

## ११ आर्यप्रतीत्यसमुत्पादो नाम महायानसूत्रम् ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् त्रायस्त्रिंशानां देवानां मध्ये विहरति स्म पाण्डुकम्बलकल्पे शिलातले जिताश्वादिमहाश्रावकैः आर्यमैत्रेयावलोकितेश्वरवज्रहस्तादिभिर्बोधिसत्त्वैर्महासत्त्वैः अप्रमेयगुणरत्नालंकृतैः महाब्रह्मसहापतिनारायणमहेश्वरादिभिर्देवैः शक्रेण देवानामिन्द्रेण गन्धर्वराजेन पञ्चशिखेन च सार्धम् । अथावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः उत्थायासनात् एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानु मेरुपृष्ठेऽवष्टभ्य येन भगवान् तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—एते हि भगवन् देवाः चैत्यनमस्क्रियामण्डनाः एतत्परिपन्मण्डलपतिताः कथमपि ब्रह्मचर्यपुण्यप्रसवाः सदेवके समारके सब्रह्मके लोके सश्रमणब्राह्मणप्रजासु भिक्षवो भिक्षुण्यः उपासकोपासिकाः सुबहुलपुण्यप्रसवाः भगवतो धर्मदेशनां याचन्ते इति । तदा भगवांस्तेषां प्रतीत्यसमुत्पादगाथामवोचत्—

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवं वादी महाश्रमणः ॥

यदिदमवलोकितेश्वर अयं प्रतीत्यसमुत्पादस्तथागतानां धर्मकायः । यः प्रतीत्यसमुत्पादं पश्यति, स तथागतं पश्यति । यश्च अवलोकितेश्वर कुलपुत्रः कुलदुहिता वा श्रद्धासमन्वितं अप्रतिष्ठिते पृथिवीप्रदेशे आमलकमात्रं चैत्यं सूचीमात्रं बोधिवृक्षं बकुलपुष्पमात्रं छत्रं कृत्वा प्रतीत्यसमुत्पादधर्मधातुगाथां पठति, स ब्राह्मं पुण्यं प्रसवति । इतः प्रच्याव्य मरणकालं कृत्वा ब्रह्मलोके उत्पद्यते । ततः प्रच्याव्य कालं कृत्वा शुद्धावासकायिकानां देवानां सभागतायामुत्पद्यते ॥

एवमवोचद्भगवान् । सर्वे च ते श्रावकाः, ते च बोधिसत्त्वा महासत्त्वाः, सर्वावती च सा पर्षत्, सदेवमनुष्यासुरगन्धर्वलोकश्च भगवतो भाषितमभ्यनन्दन् ॥

आर्यप्रतीत्यसमुत्पादो नाम महायानसूत्रम् ॥



# १२ राष्ट्रपालपरिपृच्छा ।

नमः सर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धेभ्यः ॥

## निदानपरिवर्तः प्रथमः ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः पञ्चभिश्च बोधिसत्त्वसहस्रैः, सर्वैरसङ्गप्रतिभानैः क्षान्तिप्रतिलब्धैर्निहतमारप्रत्यर्थिकैः सर्वबुद्धधर्माभ्यासन्नीभूतैरेकजातिप्रतिबद्धैर्धरणीप्रतिलब्धैः समाधिप्रतिलब्धैरनन्तप्रतिभानप्रतिलब्धैरसङ्गवैशारद्यप्रतिलब्धैर्ऋद्धिवशितापरमपारमिप्राप्तै-र्यावत्सर्वगुणवर्णपर्यादत्तैः । तद्यथा—समन्तभद्रेण च नाम बोधिसत्त्वेन महासत्त्वेन, समन्त-नेत्रेण च बोधिसत्त्वेन महासत्त्वेन, समन्तावलोकितेन च समन्तरश्मिना च समन्तप्रभेण F 2 च उत्तरमतिना च वर्धमानमतिना च अनन्तमतिना च विपुलमतिना च अक्षयमतिना च धरणीधरेण च जगतींधरेण च जयमतिना च विशेषमतिना च धारणीश्वरराजेन च बोधि-सत्त्वेन महासत्त्वेन । मञ्जुश्रीप्रमुखैश्च षष्टिभिरनुपमचित्तैः भद्रपालपूर्वंगमैश्च षोडशभिः सत्पुरुषैः ब्रह्मणा च सहापतिना शक्रेण च देवानामिन्द्रेण चतुर्भिश्च लोकपालैः सुसीमेन च देवपुत्रेण सुस्थितमतिना च देवपुत्रेण सर्वैश्च देवेन्द्रैर्नागेन्द्रैः किन्नरेन्द्रैर्गन्धर्वेन्द्रैर्यक्षेन्द्रै-रसुरेन्द्रैर्गरुडेन्द्रैः सर्वैरनेकजातिशतसहस्रपरिवारैस्तत्रैव पर्षदि संनिपतितैः संनिषण्णैः ॥

अथ खलु भगवान् श्रीगर्भसिंहासने संनिषण्णो मेरुरिवाभ्युद्गतः सर्वपर्षन्मण्डलात्, सूर्य इव सर्वलोकमवभासयन्, चन्द्र इव सर्वजगदवभासयन्, ब्रह्मेव प्रशान्तविहारी, शक्र इव दुरासदकायः, चक्रवर्तीव सप्तबोध्यङ्गरत्नसमन्वागतः, सिंह इवानात्मशून्यसर्वधर्मवादी, अग्नि-स्कन्ध इव सर्वजगदवभासकरः, सर्वदेवप्रभासमणिरत्नसमुच्चयमणिराजवद्देदीप्यमानः, सर्वं त्रिसाहस्रमहासाहस्रं लोकधातुमाभया स्फुरित्वा ब्रह्मस्वररुतरवितेन सर्वसत्त्वविज्ञापनानुगतेन घोषेणाशुविनिश्चितार्थः सर्वधर्मपरमपारमिप्राप्तः पर्षद्गतो धर्मं देशयति स्म आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणम्, स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति स्म ॥

अथ खलु प्रामोद्यराजो नाम बोधिसत्त्वो महासत्त्वस्तस्यामेव पर्षदि संनिपतितोऽभूत् संनिषण्णः । स भगवन्तं सिंहासनस्थं सूर्यसहस्रातिरेकया प्रभया सर्वपर्षन्मण्डलं जिह्मी-कुर्वन्तमतीव विरोचमानं दृष्ट्वा हृष्टतुष्टः प्रसादावर्जितहृदय उत्थायासनात्कृतकरपुटो भग-वन्तमाभिर्गाथाभिरभ्यष्टावीत्—

अभिभूय जिनो जगदेतान् देवगणासुरकिन्नरनागान् ।
श्रावकबुद्धसुतान् मेरुतेजा भासति हेमगिरिः स यथैव ॥ १ ॥

---

1 In the printed edition the following verse is found at the beginning:

भास्वत्सद्धर्मरत्नव्यतिकरघटितां स्पष्टमां विश्वकारां
त्रैलोक्योत्कृष्टसंपत्सुगतपदमहास्वर्गसोपानमालाम् ।
पौराणं पुण्यमार्यं चरितमविकलं यच्च यस्मिन् मुनीन्द्र-
स्तत्सूत्रं राष्ट्रपालं शृणुत भवसरित्संक्रमं गौरवेण ॥

मेरुरिवामरसद्मनिवासः सागरमध्यगतोऽपि विराजन् । F 3
रूपसागरमध्यगतोऽसौ मुञ्चति रश्मिसहस्रशतानि ॥ २ ॥
ब्रह्मविहारगत स च ब्रह्मा ब्रह्मपुरस्थ इवाभिरराज ।
ध्यानविमोक्षसमाधिविहारी भासति सर्वजगे वरसत्त्व. ॥ ३ ॥
शक्र इव त्रिदशेषु विराजन् देवतमध्यगत. पृथुतेजा. ।
भासति सर्वजगे मुनिराजा लक्षणचित्रित ज्ञानगुणाढ्य. ॥ ४ ॥
द्वीपचतुर्नृपतिर्ह्यवभासी शोभति लोकमिम त्वनुभासन् ।
आर्यपथे च नियोजयमान शोभति एष कृपाशयबुद्धिः ॥ ५ ॥
अग्निमणिप्रभध्यामकरोऽसौ भासति खे प्रतियन्निव सूर्यः ।
सूर्यसहस्रविशिष्टप्रभासो भासति बुद्धरविर्जगतीह ॥ ६ ॥
चन्द्र इवामल भाति निशीथे भासति सर्वजगेषु विशुद्ध. ।
पूर्णशशाङ्कनिभ जिनवक्त्र सर्वप्रभामभिभूय विभाति ॥ ७ ॥
पर्वतमूर्धनि अग्निर्यथैव रात्रिप्रशान्त प्रभासति सत्त्वान् ।
मोहतमो निखिल विनिहत्य भासति ज्ञानप्रभासु महर्षिः ॥ ८ ॥
पर्वतकन्दरधीरनिनादी त्रासयतीह मृगान् भुवि सिंहः ।
शून्यनिरात्मनिनादि नरेन्द्रः भासयते हि तथापरतीर्थ्यान् ॥ ९ ॥
सन्मणिराज इवोज्ज्वलतेजा भासति सर्वमणीनभिभूय । F 4
काञ्चनवर्णनिभो जिनकायो भासति सर्वजगत्यभिभूय ॥ १० ॥
न च तेऽस्ति समः क्वचि लोके उत्तरि नापि च विद्यति सत्त्व. ।
पुण्यतु ज्ञानतु वीर्यउपायैः सर्वगुणैश्च समो न तवास्ति ॥ ११ ॥
भासयते हि जगन्नरवीरो दृष्ट्व मया गुणसागर नाथः ।
गौरवजातविवर्धितप्रीतिः पादतले पतितोऽस्मि जिनाय ॥ १२ ॥
स्तुत्व मया रूपसागरबुद्धिं सर्वगुणाकर लोकप्रदीपम् ।
पुण्यमुपार्जितमत्र तेन सर्वजगत्स्पृशता वरबोधिम् ॥ १३ ॥

अथ खलु प्रामोद्यराजो बोधिसत्त्वो महासत्त्वो भगवन्तमाभिर्गाथाभिरभिष्टुत्य कृताञ्जलिपुटोऽनिमिषाभ्या नयनाभ्या तथागतकायमवलोकयन् धर्मधातुमेव विचारयमाणो गम्भीर दुरवगाह दुर्दृश दुरनुबोधमतर्क्यं तर्कापगत शान्तं सूक्ष्म चानुप्रविशन्, अचिन्त्य बुद्धगोचरमनुविचारयमाणः, सर्वधर्मधातुप्रसृतं तथागतज्ञानमनुचिन्तयमानः, असमसम बुद्धविषयं सपश्यमानः, अचिन्त्य तथागतोपायविषयगोचरमवतरन्, धर्मधातुनयस्वभावावतारता च बुद्धानां भगवतामवकल्पयमानः, अनालयगगनगोचरा हि बुद्धा भगवन्त इति सपश्यन्, भूतकोट्यकोटिस्वभावावतार सर्वधर्माणामित्यधिमुच्यमानः, अनावरणं च बुद्ध-

विमोक्षमभिलषमाणः, ध्रुव शिव शाश्वत च बुद्धाना भगवता कायमित्यवतरमाणः, सर्वबुद्धक्षेत्रप्रसरानुगता सर्वसत्त्वाभिमुखता च तथागतकायस्यावतरन्, अपरान्तकल्पकोटिभिरपि नास्ति बुद्धाना भगवता गुणपर्यन्त इत्यनुस्मरन्, ग्रामोघराजो बोधिसत्त्वो महासत्त्वस्तूष्णीव्यवस्थितोऽभूत् धर्मधातुमेव विचारयमाण. ॥

F 5 तेन खलु पुनः समयेन आयुष्मान् राष्ट्रपालः श्रावस्त्या त्रैमास्य वर्षमुपगतः। त्रैमास्यात्ययेन कृतचीवरो निष्ठितचीवर. स पात्रचीवरमादाय भिक्षुसघेन सार्ध नवकैरादिकर्मिकैरचिरप्रव्रजितैरनुपूर्वेण जनपदचारिका चरन् येन राजगृह महानगर येन च गृध्रकूटः पर्वतराजस्तेनोपसक्रान्त ॥

अथ खल्वायुष्मान् राष्ट्रपालो येन भगवास्तेनोपसक्रामत्। उपसक्रम्य भगवतः पादौ शिरसाभिवन्द्य भगवन्त त्रि प्रदक्षिणीकृत्यैकान्तेऽतिष्ठत्। एकान्तस्थितश्चायुष्मान् राष्ट्रपाल· कृताञ्जलिपुटो भगवन्तमाभिर्गाथाभिरभ्यष्टवीत्—

वन्दमो नरवर प्रभकर वन्दमो गगनतुल्यमानसम्।
वन्दमो विमतिछेदक जिन वन्दमो त्रिभवपारग मुनिम् ॥ १४ ॥
कीर्तयन्ति तव वर्ण नायका. क्षेत्रकोटिप्रसरात्समन्ततः।
श्रुत्व बुद्धसुत एन्ति हर्षिता. पूजनाय गुणसागर मुनिम् ॥ १५ ॥
पूज कृत्व सुगतानुरूपतो धर्म श्रुत्व विरज महामुनेः।
यान्ति क्षेत्र स्वक हृष्टमानसा वर्णमाल तव ता प्रभाषतः ॥ १६ ॥
कल्पकोटिनयुतानचिन्तियान् सत्त्वकारणमचारचारिकाम्।
नो च अस्ति तव खिन्न मानस एपमाण वरबोधिमुत्तमाम् ॥ १७ ॥
दानशीलचरितोऽसि नायका क्षान्तिवीर्य अपि ध्यानशिक्षित·।
प्रज्ञपाय सद पारमिं गता तेन वन्दसि महाविनायकम् ॥ १८ ॥
ऋद्धिपादवरभिज्ञकोविदम् इन्द्रियैर्बलविमोक्षशिक्षितम्।
सर्वसत्त्वचरिते गतिं गत वन्दमो असमज्ञानपारगम् ॥ १९ ॥
F 6 चित्तचार जगतः प्रजानसे या चरिर्यथ च कर्मसभवः।
येन वा नयमुखेन मुच्यते त च वेत्सि भगवन्नरोत्तमा ॥ २० ॥
रागदोष जहि मोहसभव येन सत्त्व त्रिरपायगामिनः।
येन यान्ति सुगति च कर्मणा जानसे सुकृतदुष्कृत जगे ॥ २१ ॥
ये जगद्धितकरा अतीतकाः साप्रत च नरदेवपूजिताः।
ये अनागत गुणाग्रपारगास्ता च सर्वसुगतान् प्रजानसे ॥ २२ ॥
क्षेत्रशुद्धिरपि चापि सभवो बोधिसत्त्वगणाः श्रावकास्तथा।
यावदायुरथ वा महर्षिणा सर्वथा ह्यखिलतो विजानसि ॥ २३ ॥

निर्वृतौ च स्थिति धर्म यादृशी यादृशी च जिनधातुपूजना।
धर्मकोशवर तत्र यादृशा तान् प्रजानसि नरोत्तमाखिलान्॥ २४॥
ज्ञान दशबलस्य विद्यते ह्यनावृत वर्तते सततमध्वसु त्रिषु।
सर्वधर्मनययुक्तमानसा ज्ञानसागर जिना नमोऽस्तु ते॥ २५॥
नास्ति ते समसम कुतोत्तरो लक्षणैश्च प्रतिमण्डिताश्रय।
तारकाभिरिव ख विचित्रित वन्दमो मुनिवर नरोत्तमम॥ २६॥
रूपमप्यसमक मनोरम जिह्म कुर्वति जगत्सदेवकम्।
ब्रह्म शक्र अकनिष्ठदेवता अग्रतस्तव न ते विराजिते॥ २७॥
काञ्चनाचल इवासि निर्मल स्निग्ध केश मृदु दक्षिणोत्थिता।
मेरुराज इव उष्णिषोद्गतो भासते विपुलपुण्यसभवः॥ २८॥
रश्मिकोटिनियुतान् प्रमुञ्चतो राजतोर्ण तव च भ्रुवोस्तटे।
नेत्र उत्पलनिभ मनोरम येन वीक्ष्यसि जगत्कृपाशयः॥ २९॥
पूर्णचन्द्र इव निर्मले नभे भासते तव मुख विनायक।
तृप्यते न हि निरीक्षको जनो वन्दमो सुवदन नरोत्तमम्॥ ३०॥
हसबर्हिमृगराजविक्रमा मत्तवारणविलम्बगामिन।
कम्पयन् व्रजसि मेदिनीतल वन्दमो दशबल दृढव्रतम्॥ ३१॥
दीर्घवृत्तरुचिरा कराङ्गुली शुद्धताम्र नखजालचित्रितम्।
उत्थितः स्पृशति जानुमण्डले वन्दमो कनकवर्णसनिभम्॥ ३२॥
चित्रयन् व्रजसि मेदिनीतल चक्रजालचितपादविक्रमैः।
पादरश्मिपरिपाचिताश्च्युता देवलोकमुपयान्ति मानवाः॥ ३३॥
धर्मराज धनसप्तदायका धर्मदानपति दान्तमानसा।
शासमानु जग धर्मचर्यया धर्मस्वामि प्रणमामि नायकम्॥ ३४॥
मैत्र वर्म स्मृति खड्गमुत्तम शील चापमिषु प्रज्ञुपायतः।
येन क्लेशरिपवो विघातिता जातिमृत्युभवतृष्णवर्धका॥ ३५॥
तीर्ण तारयसि सत्त्वकोटियो मुक्त मोचयसि बन्धनाज्जगत्।
मार्ग दर्शयसि क्षेम निर्ज्वर येन यान्ति सुगता शिव पदम्॥ ३६॥
यत्र जातिमरणा न विद्यते विप्रयोग न च दुःखसभवः।
त शिव पदवरं ह्यसस्कृत देशितासि करुणामुपेत्य हि॥ ३७॥
स्तुत्य लोकप्रवर महामुनिं सर्वधर्मवशिपारगं जिनम्।
पुण्यमत्र यदुपार्जित मया तेन बोधिमभिबुध्यता जगत्॥ ३८॥

अथ खल्वायुष्मान् राष्ट्रपालो भगवन्तमाभिर्गाथाभिरभिष्टुत्य कृताञ्जलिपुट उत्थाया- F 8
सनादेकांसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं

प्रणम्य भगवन्तमेतदवोचत्—पृच्छेयमहं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं कंचिदेव प्रदेशम्, सचेन्मे भगवानवकाशं कुर्यात्पृष्ट' प्रश्नव्याकरणाय । एवमुक्ते भगवानायुष्मन्तं राष्ट्रपालमेतदवोचत्—पृच्छ त्वं राष्ट्रपाल यद्यदेवाकाङ्क्षसि । अहं ते तस्यैव प्रश्नस्य पृष्टस्य व्याकरणेन चित्तमाराधयिष्यामि ॥

एवमुक्ते आयुष्मान् राष्ट्रपालो भगवन्तमेतदवोचत्—कतमैर्भगवन् धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः सत्त्वधर्मगुणविशेषतामनुप्राप्नोति, अपराधीनज्ञानतां च प्रतिलभते, आशुप्रज्ञतां चानुप्राप्नोति, विनिश्चयप्रतिभानतां च प्रतिलभते, आलोकतां च प्रतिलभते, सर्वज्ञताप्रवेशं सत्त्वपरिपाकं विमतिप्रहाणं काङ्क्षाप्रहाणं सर्वज्ञताविनिश्चयं प्रतिलभते, सत्त्वावतारकौशल्यं यथावादितथाकारितां च भूतसंधायवचनं सत्त्वकौशल्यतां च, बुद्धानुस्मृतिप्रतिलाभं सर्वप्रश्नपरिपृच्छनतां च, सर्वधर्मधारणतां च क्षिप्रं च सर्वज्ञतामनुप्राप्नोति ? अथ खल्वायुष्मान् राष्ट्रपालस्तस्यां वेलायामिमा गाथा अभाषत—

बोधिसत्त्वचर्या सुनिश्चिता तत्त्वतो भवति योऽस्य संभवः ।
ज्ञानसागरकथाविनिश्चयं भाषतां मम जिनो नरोत्तमा ॥ ३९ ॥
उत्तप्तचामिकरविग्रहोपमा अग्रसत्त्ववर पुण्यसंचया ।
त्वं हि त्राणं लयनं परायणं अग्रचर्यममलं वदाद्य मे ॥ ४० ॥
ज्ञानलोतु[ पु ? ] भवते क्षयः कथं धारणी अमृत बोधि उद्गतम् ।
प्रज्ञासागर कथं विशुध्यते येन छिन्दति जनेऽस्य संशयम् ॥ ४१ ॥
F 9 संसरन् सुबहुकल्पकोटियः खेदबुद्धि न च जातु जायते ।
वीक्ष्य लोकमपि दुःखपीडितं तेषमर्थकुशलं निषेवते ॥ ४२ ॥
क्षेत्रशुद्धिपरिवारसंपद आयुरग्र्यमथ क्षेत्रसंपदम् ।
सत्त्वकारणकथा निरुत्तरा बोधिचर्यममला प्रकाशय ॥ ४३ ॥
मारभञ्जन कुदृष्टिशोधना तृष्णशोषण विमुक्तिस्पर्शना ।
धर्मनेत्रि रयिन प्रमुह्यत सत्त्वरत्न निगदोत्तमा चरिम् ॥ ४४ ॥
रूप भोग प्रतिभानसंपद स्निग्धवाक्पर्षदश्च तोषणी ।
मेघवत्सुगत तर्पयञ्जगत् देशयस्यपि च बुद्धगोचरम् ॥ ४५ ॥
मञ्जुघोष कलविङ्कसुस्वरा ब्रह्मघोष कुमतिप्रणाशना ।
धर्मकाम पर्षत्समागता तर्पयामृतरसेन ता प्रभो ॥ ४६ ॥
अस्ति छन्द प्रवराग्रबोधये धर्मछन्द विहितो न युज्यते ।
देशनासमय एष नायका काल एष वररत्नश्रावणे ॥ ४७ ॥
बोधिकाङ्क्ष मम विद्यते मुने आशयं मम जिन प्रजानसे ।
प्रार्थयामि न जिनस्य हेठना साधु उत्तमचरिं प्रकाशय ॥ ४८ ॥

एवमुक्ते भगवानायुष्मन्तं राष्ट्रपालमेतदवोचत्–साधु साधु राष्ट्रपाल । साधु खलु F 10 पुनस्त्वं राष्ट्रपाल यस्त्वं तथागतमेतमर्थं परिप्रष्टव्यं मन्यसे। बहुजनहिताय त्वं राष्ट्रपाल प्रतिपन्नो बहुजनसुखाय अर्थाय हिताय देवानां च मनुष्याणां च, एतर्हि चानागतानां च बोधिसत्त्वानां महासत्त्वानां संपरिग्रहाय । तेन हि राष्ट्रपाल शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्ये। साधु भगवन्नित्यायुष्मान् राष्ट्रपालो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्–

चतुर्भी राष्ट्रपाल धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व एतां परिशुद्धिं प्रतिलभते। कतमैश्चतुर्भिः ? यदुत आशयाध्याशयप्रतिपत्त्या सर्वसत्त्वसमचित्ततया शून्यताभावनतया यथावादितथाकारितया । एभी राष्ट्रपाल चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व एतां परिशुद्धिं प्रतिलभते । इयमत्र धर्मता ॥

तत्रेदमुच्यते–

आशयेन हि सदाभियुक्तका बोधिमार्ग अविवर्त्यमानसाः ।
नो च शाठ्य न खिल न मायता तेषु विद्यति अनन्तज्ञानिनाम् ॥ ४९ ॥
दृष्ट्व सत्त्व दुखिताननायकान् जातिव्याधिजरमृत्युमर्दितान् ।
तारणार्थ भवतो * * जगत् धर्मनाव समुदानयन्ति ते ॥ ५० ॥
सर्वसत्त्वसमचित्त सूरता एकपुत्रकवदीक्षते जगत् ।
सर्वमेतदपि मोचयाम्यहम् एवमाशय तथाग्रपुद्गलाः ॥ ५१ ॥
शून्यतासु सतत गतिं गत नैव चात्म न च सत्त्व विद्यते ।
स्वप्नमायसदृश हि संस्कृतम् अत्र बाल अबुधो विमोहिता ॥ ५२ ॥
वाचया यथ वदन्ति ते बुधास्तत्र चैव प्रतिपत्तिया स्थिताः । F 11
दान्त शान्त सद दोषवर्जिता बोधिमार्गनिरता जिनात्मजा ॥ ५३ ॥

चत्वार इमे राष्ट्रपाल बोधिसत्त्वानामाश्वासप्रतिलाभा धर्माः । कतमे चत्वारः ? धारणीप्रतिलाभः कल्याणमित्रप्रतिलाभः गम्भीरधर्मक्षान्तिप्रतिलाभः परिशुद्धशीलसमाचारता । इमे राष्ट्रपाल चत्वारो बोधिसत्त्वानामाश्वासप्रतिलाभा धर्माः । इयमत्र धर्मता ॥

तत्रेदमुच्यते–

लाभिनो भवन्ति धारणीषु ते सदा महायशा
धारयन्ति येन धर्म श्रेष्ठ सर्वबुद्धभाषितम् ।
न च प्रणाशयन्ति जातु भूयु वर्धते रति
असङ्गमेव तेषु ज्ञान सर्वधर्मपारगाः ॥ ५४ ॥
कल्याणमित्रमाप्नुवन्ति बोधिअङ्गवर्धका
देशयन्ति श्रेष्ठ मार्ग तस्य येन यान्ति नायकाः ।
न कश्चिच्च ते भवन्ति पापमित्रसेवका
दूरतो विवर्जयन्ति तेऽग्निवच्च दाहनात्मकान् ॥ ५५ ॥

गम्भीर धर्म श्रुत्व धीर शून्यतोपसंहित
न चात्मसत्त्वजीवदृष्टि तेषु भोन्ति सर्वशः ।
अच्छिद्रशील ते भवन्ति शान्तदान्तमानसा
अनुत्तरे च बुद्धशीलि स त्व ना नियोजयेत् ॥ ५६ ॥

F 12 चत्वार इमे राष्ट्रपाल बोधिसत्त्वानां संसारप्राप्तानां प्रीतिकरणा धर्माः । कतमे चत्वार ? बुद्धदर्शनं राष्ट्रपाल बोधिसत्त्वानां प्रीतिकरणो धर्मः । अनुलोमधर्मश्रवणं राष्ट्रपाल बोधिसत्त्वानां प्रीतिकरणो धर्मः । सर्वस्वपरित्यागः । अनुपलम्भधर्मक्षान्तिः । इमे राष्ट्रपाल बोधिसत्त्वानां संसारप्राप्तानां चत्वारः प्रीतिकरणा धर्माः । इयमत्र धर्मता ॥

तत्रेदमुच्यते—

पश्यन्ति ते नरोत्तमं स्वबुद्ध सर्वजातिषु
सर्वलोक भासयन्त तेजसा समन्ततः ।
पूजयन्तथा नरेन्द्रराज प्रेमगौरवस्थिता
वराग्रबोधिमेपमाण सत्त्वमोक्षकारणात् ॥ ५७ ॥
शृणोति धर्म नायकान शान्तमानुलोमिकम्
आशयेन श्रुत्व धीर योनिशः प्रयुज्यते ।
अनोपलम्भधर्म श्रुत्व काङ्क्ष नास्य जायते
निःसत्त्व एति सत्त्वधर्म नात्र आत्म विद्यते ॥ ५८ ॥
सर्वस्वपरित्यागि सो भवेत नित्यमग्रहो
प्रहृष्टचित्त दृष्ट्व चैव याचकमुपागतम् ।
ग्रामराष्ट्रमेदिनीं च पुत्र दार जीवित
त्यजन्ति सर्व नास्य जायते च चित्तइञ्जना ॥ ५९ ॥

चतुर्षु राष्ट्रपाल धर्मेषु बोधिसत्त्वेनानपेक्षेण भवितव्यम् । कतमेषु चतुर्षु ? गृहवासा-
F 13 द्राष्ट्रपाल बोधिसत्त्वेनानपेक्षेण भवितव्यम् । प्रव्रजित्वा राष्ट्रपाल बोधिसत्त्वेन लाभसत्कारादनपेक्षेण भवितव्यम् । कुलसंस्तवाद्राष्ट्रपाल बोधिसत्त्वेनानपेक्षेण भवितव्यम् । कायजीविताद्राष्ट्रपाल बोधिसत्त्वेनानपेक्षेण भवितव्यम् । एषु चतुर्षु राष्ट्रपाल धर्मेषु बोधिसत्त्वेनानपेक्षेण भवितव्यम् । इयमत्र धर्मता ॥

तत्रेदमुच्यते—

त्यक्त्वा गेहमनन्तदोषगहनं चिन्तानपेक्षा सदा
तेऽरण्ये रतिमाप्नुवन्ति गुणिनः शान्तेन्द्रियाः सूरताः ।
न स्त्रीसंस्तवु नैव चापि पुरुषैस्तेषां क्वचिद्विद्यते
एकाकी विहरन्ति खड्गविमलाः शुद्धाशया निर्मलाः ॥ ६० ॥

लाभैर्नापि च तेषु हर्षित मनो लीयन्त्यलाभैर्न च
    अल्पेच्छा इतरेतरैरभिरता मायाकुहावर्जिताः।
सत्त्वार्थाय च वीर्ययुक्तमनसो दाने दमेऽवस्थिता
    ध्याने वीर्यगुणे च पारमिगताः सबुद्धज्ञानार्थिनः॥ ६१॥
काये चाप्यनपेक्ष्य जीवित तथा त्यक्त्वा प्रियान् बान्धवान्
    युज्यन्ते सद बोधिमार्ग सुदृढा वज्रोपमाध्याशयाः।
कायश्छिद्यति खण्डशश्च न भवेत्तेषा च चित्तेञ्जना
    भूयो वीर्यमिहारभन्ति सुदृढ सर्वज्ञताकाङ्क्षिणः॥ ६२॥

चत्वार इमे राष्ट्रपाल बोधिसत्त्वानामननुतापकरणा धर्माः। कतमे चत्वारः? शीलाखण्डनता राष्ट्रपाल बोधिसत्त्वानामननुतापकरणो धर्मः, अरण्यवासाकुल्यजनता, चतुर्णामार्यवशानामनुवर्तनता, बाहुश्रुत्यप्रतिलाभो राष्ट्रपाल बोधिसत्त्वानामननुतापकरणो F 14
धर्मः। इमे राष्ट्रपाल चत्वारो बोधिसत्त्वानामननुतापकरणा धर्माः। इयमत्र धर्मता॥

तत्रेदमुच्यते—

रक्षन्ति शीलममल मणिरत्नतुल्य
    न च तेषु भोति अनुशील सुसयतो वा।
तत्रैव शीलि सद सत्त्व नियोजयन्ति
    आकाङ्क्षमाणमिममुत्तमबुद्धशीलम्॥ ६३॥
शून्ये च ते हि निवसन्ति शुभे अरण्ये
    नैवात्मसज्ञ भवतेऽपि न जीवसज्ञा।
तृणकाष्ठकोथसम पश्यति सत्त्वरूप
    स्त्री नेह नास्ति च पुमान्न च आत्मनीयम्॥ ६४॥
चतुरार्यवशनिरता अकुहा अशाठ्या
    अध्याशयेन च प्रयुज्यति सोऽप्रमत्त.।
कुर्वन्ति च श्रुतिगुणेषु सदाभियोग
    सप्रार्थयन् सुगतज्ञानमहानुभावम्॥ ६५॥
भवचारके जगदवेक्ष्य इद ह्यनाथ
    जातीजरामरणशोकहत रुजार्तम्।
समुदानयित्व प्रवरा शिवधर्मनाव
    सतारयन्ति जनता भवसागरौघात्॥ ६६॥
न त्राणमन्य शरण हि परायण वा
    लोकस्य सस्कृतगतो भ्रमतोऽस्ति कश्चित्।
मयि सर्व एव परिमोचयितव्य सत्त्वा
    इत्यर्थमेव प्रणिधिर्मम अग्रबोधौ॥ ६७॥

चतस्र इमा राष्ट्रपाल आजानेयगतयो, बोधिसत्त्वेनानुगन्तव्या । कतमाश्चतस्र[1] सुगतिप्रतिलाभ, स च बुद्धोत्पादसमवधानतया । गुरुशुश्रूषणा, सा च निरामिषसेवनतया । प्रान्तशय्यासनाभिरति, सा च लाभसत्कारानपेक्षतया । प्रतिभानप्रतिलाभ, स च गम्भीर-धर्मक्षान्तिसमन्वागततया । इमा राष्ट्रपाल चतस्र आजानेयगतयोऽनुगन्तव्या । इयमत्र धर्मता ॥

तत्रेदमुच्यते–

F 15 वनकन्दरेषु सतत निवसन्ति धीरा
लाभेन ते सद अनर्थिक भोन्ति नित्यम् ।
प्रतिभानवान् सद भवन्ति असङ्गबुद्धी
गम्भीरधर्मकुशला विगतप्रपञ्चा ॥ ६८ ॥

शुश्रूषकाः सद भवन्ति गुरुषु नित्य
यथ ते वदन्ति हि तथैव च ते प्रयुक्ता ।
आरागयन्ति सुगतान् बहवोऽप्रमेयान्
कुर्वन्ति पूज विपुला जिनज्ञानहेतोः ॥ ६९ ॥

श्रेष्ठा गतिर्भवति चापि महाशयाना
देवेषु चैव मनुजेषु च मूर्ध्नप्राप्ताः ।
सबोधिमार्ग सद सत्त्व समादयन्ति
सयोजयन्ति कुशलेषु दशस्वथापि ॥ ७० ॥

श्रुत्वा च बुद्धगुण ते च भवन्ति तुष्टा
आसन्न ते तु नचिराद्भविता हि मह्यम् ।
सबुध्यतेऽपि च शिवा विरजाग्रबोधिं
मोचिष्य सत्त्वनियुतानि अनन्तदुःखात् ॥ ७१ ॥

चत्वार इमे राष्ट्रपाल बोधिसत्त्वाना बोधिचर्यापरिशोधका धर्मा । कतमे चत्वार[2] अप्रतिहतविज्ञानविरहितस्य बोधिसत्त्वचर्या, कुहनलपननिष्पेषणपरिवर्जितस्यारण्यवास, सर्वस्वपरित्यागिनो विपाकाप्रतिकाङ्क्षता, रात्रिंदिव धर्मकामता धर्मभाणकाना च स्खलिता-गवेषणता । इमे राष्ट्रपाल बोधिसत्त्वाना चत्वारो बोधिसत्त्वचर्यापरिशोधका धर्मा ॥

अथ खलु भगवांस्तस्या वेलायामिमा गाथा अभाषत–

न खिल मल न चापि रोषचित्त
न च पुनरेषति कस्यचित् सदोषम् ।
अशठ अकुह निष्प्रपञ्चचित्तो
भवति अनुत्तरबोधिमीप्समानः ॥ ७२ ॥

गृहमतिविषमं च शोकमूलं F 16
कुजनसमागमयोनिमस्य दूरम्।
त्यजति तदनपेक्ष्य प्रव्रजित्वा
गिरिगहने विचरन्ति मोक्षकामाः ॥ ७३ ॥

अरण्य विविध प्रान्त सेवमानो
भवति अनिश्रित सर्वज्ञात्रलाभे।
काय अपि च जीवितेऽनपेक्षो
विहरति सिंह इवोत्रसन् जितारिम् ॥ ७४ ॥

भवति च इतरेतरेण तुष्टः
शकुनिसम' सद सचय विहाय।
न च भवति निकेतु सर्वलोके
ज्ञान गवेषति नित्य बोधिमार्गे ॥ ७५ ॥

एक विहरति यथैव खड्गो
न च पुन स त्रसते यथैव सिंह.।
न च भुवि विश्वसते मृगेव त्रस्तो H 4
न च पुनरुन्नमते स पूजनेन ॥ ७६ ॥

जगदिदमभिवीक्ष्य च प्रपाते
प्रपतितमुद्यमते प्रमोक्षहेतो.।
अहमपि जगतोऽस्य त्राणभूतो
यदि कुशलेषु चरेयमप्रमत्तः ॥ ७७ ॥

सुमधुरवचनः स्मिताभिलाषी
अकलुषचित्त प्रियाप्रियेषु नित्यम्।
विहरति न च सज्जतेऽनिलो वा
नरवरचर्यमिमामभीप्समानः ॥ ७८ ॥

शून्यतमधिमुक्तमानिमित्त
विचरति सस्कृत सर्वमायभूतम्।
शमदमनिरतो विशालबुद्धि'
अमृतरसेन च सर्वदा स तुष्टः ॥ ७९ ॥

प्रतिवदसि यथा [ °वसपथा ² ] च बोधिमार्गे
स तु परिशोधयते सदाशय च।
धारणीप्रतिलाभमेषमाणः
सहति च दुःख सता गुणाभिकाङ्क्षी ॥ ८० ॥

F 17 इमु चरिमभिवीक्ष्य बोधिसत्त्वो
यो भवतेऽर्थिकु सो भवेत तुष्टः ।
य इह भवति बोधये असक्तो
जनयति दोषशतानि सोऽल्पबुद्धिः ॥ ८१ ॥

चत्वार इमे राष्ट्रपाल बोधिसत्त्वाना प्रपाताः । कतमे चत्वारः ? अगौरवता राष्ट्रपाल बोधिसत्त्वाना प्रपात· । अकृतज्ञता शाठ्यसेवनता राष्ट्रपाल बोधिसत्त्वाना प्रपातः । लाभसत्काराध्यवसान राष्ट्रपाल बोधिसत्त्वाना प्रपातः । कुहनलपनतया लाभसत्कारनिष्पादन राष्ट्रपाल बोधिसत्त्वाना प्रपात. । इमे राष्ट्रपाल बोधिसत्त्वाना चत्वारः प्रपाता. ॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत–

नित्यमगौरव ते हि भवन्ति आर्यगुरुष्वपि मातृपितृषु ।
अकृतज्ञ शठाश्च भवन्ति नित्यमसंयतचारिण मूढाः ॥ ८२ ॥
अध्यवसानपरा. सद लाभे ते कुहशाठ्यप्रयोगरताश्च ।
कश्चिदपीह समो मम नास्ति वक्ष्यति शीलगुणेषु कथंचित् ॥ ८३ ॥
ते च परस्परमेव च द्विष्टा छिद्रगवेषणनित्यप्रयुक्ता· ।
कृषिकर्मवणिज्यरताश्च श्रवणा ( श्रमणा ) हि सुदूरत तेषाम् ॥ ८४ ॥
एवमसंयत पश्चिमकाले भिक्षव शीलगुणेषु सुदूरे ।
तेऽन्तर हापयिष्यन्ति मधर्मं [ मद्धर्मं ? ] भण्डनविग्रहईर्ष्यवशेन ॥ ८५ ॥
बोधिपथादपि नित्य सुदूरे आर्यधनादपि ते च सुदूरे ।
मोक्षपथ च विहाय प्रणीत पञ्चसु ते गतिषु भ्रमिष्यन्ति ॥ ८६ ॥

F 18 चत्वार इमे राष्ट्रपाल बोधिसत्त्वाना बोधिपरिपन्थकारका धर्मा· । कतमे चत्वारः ? अश्रद्दधानता राष्ट्रपाल बोधिसत्त्वाना बोधिपरिपन्थकारको धर्म । कौसीद्य राष्ट्रपाल बोधिसत्त्वाना बोधिपरिपन्थकारको धर्म. । मानो राष्ट्रपाल बोधिसत्त्वाना बोधिपरिपन्थकारको धर्मः । परपूजेर्ष्यामात्सर्यचित्त राष्ट्रपाल बोधिसत्त्वाना बोधिपरिपन्थकारको धर्म. । इमे राष्ट्रपाल बोधिसत्त्वाना चत्वारो बोधिपरिपन्थकारका धर्माः ॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत–

अश्रद्धाः कुसीदाः सद मूढचित्ता
अभिमानिनस्तेऽपि सदा च क्रोधनाः ।
क्षमिणश्च दृष्ट्वा सद भिक्षु युक्त
दास्यन्ति दण्ड व्रजतो विहारात् ॥ ८७ ॥
परस्य पूजार्थमिहेर्ष्य जाता
अवस्थानु चित्तस्य च तेषु नास्ति ।

अवतारप्रेक्षी स्खलिता गवेषी
कोऽस्यापराधोऽस्तिह चोदयिष्ये ॥ ८८ ॥
दूरे इतस्ते मम शासनस्य
गुणद्वेषिणस्ते हि अपायनिम्ना ।
त्यक्त्वा जिनस्यापि च शासन ते
यास्यन्त्यपाय ज्वलित प्रचण्डम् ॥ ८९ ॥
श्रुत्वा च तेषामिह पापचर्याम्
अधर्मयुक्ता च गतिं सुदारुणाम् ।
युज्यध्व नित्य सद बोधिमार्गे
मा तप्स्यथा दुर्गतिषूपपन्नाः ॥ ९० ॥
बहुकल्पकोटीभि कदाचि बुद्धो
उत्पद्यते लोकहितो महर्षिः ।
लब्धोऽधुना स प्रवरः क्षणोऽद्य
त्यज प्रमाद यदि मोक्षकामः ॥ ९१ ॥

चत्वार इमे राष्ट्रपाल पुद्गला बोधिसत्त्वेन न सेवितव्याः। कतमे चत्वारः [2] पापमित्र राष्ट्रपाल पुद्गलो बोधिसत्त्वेन न सेवितव्यः। उपलम्भदृष्टिको राष्ट्रपाल पुद्गलो बोधिसत्त्वेन न सेवितव्यः। सद्धर्मप्रतिक्षेपकः पुद्गलो राष्ट्रपाल बोधिसत्त्वेन न सेवितव्यः। आमिषलोलुपः F 19 पुद्गलो राष्ट्रपाल बोधिसत्त्वेन न सेवितव्यः। इमे राष्ट्रपाल चत्वारः पुद्गला बोधिसत्त्वेन न सेवितव्याः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

ये पापमित्राणि विवर्जयन्ति कल्याणमित्राणि सदा भजन्ति ।
वर्धन्ति ते बोधिपथेषु नित्य यथ शुक्लपक्षे दिवि चन्द्रमण्डलम् ॥ ९२ ॥
उपलम्भदृष्ट्या च सदा निविष्टा आत्मे निविष्टास्तथ जीवपोषे ।
विषकुम्भवत्ते सद वर्जयन्ति ये बुद्धज्ञानेन भवन्ति अर्थिकाः ॥ ९३ ॥
क्षिपन्ति ये धर्म नरोत्तमाना शान्त विरागममृतानुकूलम् ।
तान् वर्जयेन्मीढघटा यथैव य इच्छते बुध्यितुमग्रबोधिम् ॥ ९४ ॥
अध्योषिता आमिष पात्रचीवरे कुलसस्तवे चैव सदाभियुक्ता ।
कुर्वीत सार्धं न हि तेषु सस्तव तान् वर्जयेदग्निखदा [खदा] यथैव ॥ ९५ ॥
यस्येप्सित धर्षयितु हि मार प्रवर्तितु चक्रवर ह्यनुत्तरम् ।
सत्त्वार्थमेव विपुल च कर्तुं वर्ज्याश्च तेनापि च पापमित्राः ॥ ९६ ॥
विवर्जयित्वा च प्रियाप्रियाणि लाभं यशो भण्डनमानमीर्ष्याम् ।
एषेत नित्य सद बुद्धज्ञानं य इच्छते बुध्यितुमग्रबोधिम् ॥ ९७ ॥

चत्वार इमे राष्ट्रपाल बोधिसत्त्वाना दुःखविपाका धर्माः। कतमे चत्वार.? ज्ञानेनाभिमन्यनता राष्ट्रपाल बोधिसत्त्वाना दुःखविपाको धर्मः। ईर्ष्यामात्सर्यचित्त राष्ट्रपाल बोधिसत्त्वाना दु.खविपाको धर्मः। अनधिमुक्ती राष्ट्रपाल बोधिसत्त्वाना दुःखविपाको धर्म·। अपरिशुद्धज्ञानक्षान्तिसभोगपर्येष्टी राष्ट्रपाल बोधिसत्त्वाना दुःखविपाको धर्मः। इमे राष्ट्रपाल बोधिसत्त्वाना दुःखविपाका धर्माः॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत—

F 20 धर्मधरा भुवि ये तु भवन्ति पूजित सर्वजगेषु भवन्ति।
अवमन्यति तानि आज्ञ (?) तेन स विन्दति दुःखमनन्तम्॥ ९८॥
विषमेण स देशति भोगान् छन्दरुचि· सद ज्ञानि अशुद्धे।
मानोन्नत यश्च हि नित्यं नो नमते गुरुआर्यजनेषु॥ ९९॥
अधिमुक्ति न विद्यति बुद्धे धर्मगणे च न तस्यधिमुक्ति·।
शिक्ष धुतेषु न तस्यधिमुक्ति पापमतेस्त्विरपायमुखस्य॥ १००॥
स इतश्च्युतो हि मनुजेषु कर्मवशादबुधो हि विमूढः।
नरकेष्वथ तिर्यग्गतिषु प्रेतगतिषु च विन्दति दुःखम्॥ १०१॥
यस्य मतिर्भुवि लोकप्रदीपो दु खक्षयान्तकरो नरवीरः।
तेन अपायपथ प्रविहाय बोधिपथः सतत हि निषेव्यः॥ १०२॥

चत्वारीमानि राष्ट्रपाल बोधिसत्त्वाना बन्धनानि। कतमानि चत्वारि? परावमन्यनता बोधिसत्त्वाना बन्धनम्। लौकिकेनोपायेन भावनताप्रयोगनिमित्तसञ्ज्ञा बोधिसत्त्वाना बन्धनम्। अनिगृहीतचित्तस्य ज्ञानविरहितस्य प्रमादसेवनता राष्ट्रपाल बोधिसत्त्वस्य बन्धनम्। प्रतिबद्धचित्तस्य कुलसस्तवो राष्ट्रपाल बोधिसत्त्वस्य बन्धनम्। इमानि राष्ट्रपाल बोधिसत्त्वाना चत्वारि बन्धनानि॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत—

अवमन्यति नित्य परस्य भावयते सद लौकिकध्यानम्।
बध्यति तेभि स दृष्टिशतेभि· पङ्कि गजो यथ दुर्बलकायः॥ १०३॥
F 21 कुलसस्तवबन्धनयुक्तो यस्तु प्रमत्त सदा ग्रहचित्तः।
ज्ञानविवर्जित मूढमतिश्च बध्यति एभि अयुक्तचरीभि.॥ १०४॥
यो ह्यत इच्छति दु खभयेभ्यो जातिजरामरणादिविमोक्षम्।
सो अवमन्यन मन्यन त्यक्त्वा युज्यति बोधिपथे सततं च॥ १०५॥
दुःखमनन्त सहित्वमशेष सर्वसुखादनपेक्षि भवित्वा।
त्यक्त्व प्रियाप्रियज्ञात्रमशेष बुद्ध भवन्ति विकल्मष धीराः॥ १०६॥
षट्सु प्रयुज्यत पारमितासु भूमिगुणेषु बलेन्द्रियज्ञाने।
सर्वगुणैश्च सदा समुपेता बुद्ध भवेज्जरपञ्जरमुक्तः॥ १०७॥

कल्प अचिन्तिय पूर्व चरन्त' सत्त्वहिताय चरन् वरबोधौ।
दानदमे नियमेऽपि च नित्य सुस्थित आसि त्यजित्व च ज्ञातीन् ॥१०८॥
प्रान्तवने सद नित्य रतोऽह शोषित आश्रयु बोधिनिदानम्।
न च स्रसतु वीर्य कदाचिदेपत ज्ञान महापुरुषाणाम् ॥ १०९॥
भवचारके जगति दृष्ट्वा पञ्चगतिभ्रमभ्रामित सत्त्वान्।
कृत्व कृपा विपुलामिह पूर्वे आर्जित बोधि बलाज्जगदर्थे ॥ ११० ॥
दुहितृस्वसुता प्रियभार्या' त्यक्त पुरा धनधान्य प्रभूता'।
जीवित इष्ट मही सुसमृद्धा एषत बोधिवरा बहुकल्पान् ॥ १११ ॥
फलपुष्पजलाढ्य सुरम्य आसि वने मुनि क्षान्तिरतोऽहम्।
छिन्न करौ चरणौ कलिराज्ञा नैव मनोऽपि तदा मम दुष्टम् ॥ ११२ ॥
वनकन्दरि श्यामकु नाम आसि मुनिर्भरतो गुरुजीर्णो। F 22
दृढबाणहतेन नृपेण नैव मनः परिदूषितमासीत् ॥ ११३ ॥
शैलतटादनपेक्ष्य शरीरं प्रोत्सृजतश्च सुभाषितहेतोः।
काये न च मे न च जीवे बोधिनिमित्तमवेक्ष्य बभूव ॥ ११४ ॥
व्याघ्रिसुतानपि जीवितहेतोस्त्यज्य तनु परितर्पित व्याघ्री।
गगनेऽभ्यनदन् सुरसघाः साधु महापुरुष स्थिरवीर्य ॥ ११५ ॥
अतिदानरतश्च यदासीत् माणव पूर्वभवेषु चरश्च।
शोषितु रत्ननिदान समुद्रः प्राप्य मणिं सुखिता. कृत सत्त्वाः ॥ ११६ ॥
सुतसोम महीपतिरासीत् विश्रुतकीर्ति चरश्च यदाहम्।
वध्यगत कृतकृत्यनयैर्मे राजशत परिमोचितमाशु ॥ ११७ ॥
दुःखित वीक्ष्य नर च दरिद्र त्यक्त मया प्रियमेव शरीरम्।
प्राप्य धन स कृतश्च मयाढ्य' सर्वददेन नृपेण सता मे ॥ ११८ ॥
शरणागत वीक्ष्य कपोत स्वं पिशित विनिकृत्य शरीरात्।
दत्तमपि स्वतनुर्न भयार्तस्त्यक्त इहापि नृपेण सता मे ॥ ११९ ॥
कृत्स्नमुपार्जितमाप्य भिषग्भिर्भैषजमप्रतिम मम पूर्वम्।
जीवित त्यज्य परस्य ददौ त केसरिराज बभूव यदाहम् ॥ १२० ॥

---

**112.** J. 313, MV III 357 ff, JM 28, AK 38. **113** J 540, MV II 210 ff, CP III 13, AK 101 **114.** AK 53 **115.** JM 1, DA 32, AK 51 & 95, SP 19 **117.** J 537, CP 32, Bhadrakalpāvadāna 34 **118.** AK 55 **119.** JM 2, J 499, CP 8 **120** Vessantara, J. 547, JM 9, CP 9, AK 23.

चरता च पुरा जगदर्थे मद्रि [illegible]नित्रत त्यक्त सपुत्रा ।
दुहिताप्यनपेक्ष्यदसघ आसि नृपात्मजो यद सुदष्ट्र: ॥ १२१ ॥
वर्षसहस्र मया परिपूर्णा मर्पित दुष्कराश्चतुरशीति ।
उत्तसवीर्यु यद आसीत् अर्थधनश्रियोऽपि च पुरा मे ॥ १२२ ॥
F 23 जिनधातुस्तूपपुरतो मे ज्वलित आश्रय. परमभक्त्या ।
पूजा कृता दशवलानाम् आसि नृपात्मजो विमलतेजा ॥ १२३ ॥
रौद्राक्ष एव च रुषित्वा याचितवान् स चापि मन शीर्षम् ।
दत्त निकुल च मया तद् राज यदा च चन्द्रप्रभ आसीत ॥ १२४ ॥
सर्वत्र ग्रामनगरेषु वीथिमुखेषु भैषजसुदारम् ।
सत्त्वार्थ स्थापित मया ते पुण्यसमो बभूव च यदाहम ॥ १२५ ॥
स्त्रीणा सहस्रमभिरूपा' काञ्चनमुक्तिभूपितशरीरा ।
त्यक्ता पूर्वभवेषु चरता मे आसि यदा शुभो नृपति पूर्वे ॥ १२६ ॥
पुष्पैर्वरैरपि च गन्धै' काञ्चनमुक्तिकाप्रवर श्रीमान् ।
त्यक्तश्च मे मकुट पूर्व आसि नृपो यदा रतनचूड' ॥ १२७ ॥
मृदुतूलपिचूपमसृक्ष्मौ कोमलपद्मपत्रसुकुमारौ ।
त्यक्तौ करौ सचरणौ मे पूर्व नृपेण धृतिमता च ॥ १२८ ॥
विनिगृह्य राक्षसिशतानि निर्घृणदारुणप्रबलचण्डा ।
कृत मानुषा बदरद्वीपे सिंहल सार्थवाह यद आसीत् ॥ १२९ ॥
कामेषु मूर्च्छितमना मे बालि स राक्षसी प्रमदसज्ञा ।
पञ्चशतानि वणिजाना मोक्षित ते यदा भवे सुनेत्रः ॥ १३० ॥
चत्वारि कोटि प्रमदानाम् अप्सरतुल्यरूपिणा विहाय ।
प्रव्रज्य निर्गतु जिनस्य शासने पुण्यरश्मि यद आसीत् ॥ १३१ ॥
F 24 मयि त्यक्तमङ्गुलि उदारा सत्त्वहितार्थमेव चरता मे ।
जालार्चिता विमलशुद्धा काञ्चनवर्ण पार्थिव यद आसीत् ॥ १३२ ॥
शुभ नीलपद्मसमवर्णा नेत्र मनोरमा हृदयकान्ता ।
त्यक्ता मया च जगदर्थे उत्पलनेत्र पार्थिव यदासीत् ॥ १३३ ॥
प्रियविप्रयोगहत दृष्ट्वा स्त्री च प्रनष्टरूपमतिवेषा ।
परिमोचिता करुणया मे केशव वैद्यराज यद आसीत् ॥ १३४ ॥
व्याध्यातुर च नरमीक्ष्य स्व रुधिर प्रदत्तमपि मेऽभूत् ।
निर्व्याधित. स च कृतो मे प्राग्भव सर्वदर्शि यदभूवम् ॥ १३५ ॥

---

**124** DA 32 **127.** AK 3 **129.** J 195, DA 36 **131.** RP 2
**132.** Kanakavarna, 42

हित्वा स्वमस्थि च शरीराद् व्याधिकृशस्य मज्ज मया दत्तम् ।
न च सत्त्व त्यक्त मय जातु आसि नृपो यदा कुसुम नाम ॥ १३६ ॥

सर्वस्वकोशमपि त्यक्त्व जीवित त्यक्त मे प्रिय मनापम् ।
नरु मोक्षितो व्यसनप्राप्त आसि नृपोऽर्थसिद्धि यद पूर्वम् ॥ १३७ ॥

चक्राङ्कित कमलतुल्य पणियुग प्रदत्तमनपेक्षम् ।
नृप आशुकेतु यद आसीद बोधिमभीप्समान जगदर्थे ॥ १३८ ॥

नृप सर्वदर्शि यद आसीत् कारुणिको जनार्थहितकामः ।
त्यक्ता मया चतुरोऽपि च द्वीपा स्फीतनरैर्वरनरीशतैश्च ॥ १३९ ॥

मृदु कोमल विमलगौरं ऊरु तच्छित्त्व हृष्टमुदिताया ।
दत्त स्वमास रुधिर मे ज्ञानवती यदासि नृपपुत्री ॥ १४० ॥

कनकाभपीनसुकुमारं त्यक्त स्तनद्वय हृदयकान्तम् । F 25
स्त्री प्रेक्ष्य मे क्षुधतृषार्तं सा रूप्य(प?)वतीति वनिता यदाभूत् ॥ १४१ ॥

वरभूषणानपि सुरम्यान् रत्नमनेकवस्त्ररथयानान् ।
सत्यक्त दुस्त्यजमनेक विश्रुतश्रीनृपेण च मयाभूत् ॥ १४२ ॥

राज्ञः सुतो तु विकृतज्ञ' तारित सागराद्यद कृतज्ञः ।
रत्नार्थ नेत्र मम तेन उद्धृत नैव मे रुपित चित्तम् ॥ १४३ ॥

मा भूत्पिपीलिकवधो मे त्यक्त वराश्रयोऽपि चनपेक्ष्य ।
न च चित्त कम्पित तदा मे पूर्वभवेषु गोध यद आसीत् ॥ १४४ ॥

उपस्थानगौरवरतोऽहं वृद्धचरीषु नित्य रत आसीत् ।
न च मानवानपि च स्तब्ध आसि कपिंजलो विचरमाण ॥ १४५ ॥

शरणागतस्य च मयार्थे त्यक्त समुच्छ्रय कृप जनित्वा ।
न च त्यक्त वानरगतेन व्याधनरः शराभिनिहतेन ॥ १४६ ॥

गजवशगतेन शोषितो मे तनुरपि वृद्धगुरु जगत्स्मरित्वा ।
सुरुचिरमशन मया न भुक्त मोक्षित आत्म गजा यदा तदासीत् ॥ १४७ ॥

ऋक्षपतिरभूव शैलदुर्गे हिमहत सप्त दिनानि रक्षितो मे ।
पुरुष वधकु तेन मे प्रयुक्तो न च प्रतिघात कृतश्च मे तदास्मिन् ॥ १४८ ॥

आसि गजो हिमकुन्दनिकाशो बोधिवराश्रित बुद्धगुणार्थी ।
स विषेण शरेण च विद्धो दष्ट्रवरास्त्यजमान न द्विष्टः ॥ १४९ ॥

---

**140.** SR 34. **141.** DA 32, AK 51 **143.** Kalpadrumavādāmalā, 34, AK 45 **145.** J 37, AK 86 **146.** J 516 **147.** J 455, Bhadrakalpāvadāna, 32 **148.** J 516 **149.** J 514, AK. 49.

F 26 वनगोचरि खड्गकद्वीपे तित्तिरिपोतक मैत्रविहारी ।
महद्दर्शनेन शमितोऽग्निं देवगणा कुसुमानि क्षिपन्ति ॥ १५० ॥
गङ्गतरङ्गजलैर्ह्रियमाणः तारित मे यद आसि मृगत्वे ।
वधका मम तेनुपनीता नैव मनो मम तत्र प्रदुष्टम् ॥ १५१ ॥
तारित पञ्चशत वणिजाना सागरमध्यगताश्च अनाथाः ।
तैश्च हतः क्षुधितैश्च तदाह कच्छपयोनिगतोऽपि च मैत्र' ॥ १५२ ॥
वोविचरिं चरमाणहु पूर्वं मत्स्य बभूव यदा जलचारी ।
त्यक्त मयाश्रय सत्त्वहिताय भक्षित प्राणिसहस्रशतेभिः ॥ १५३ ॥
व्याधिशताभिहत जगदीक्ष्य भैषजभूत समुच्छ्रय कृत्वा ।
सत्त्व कृताः सुखिता निरुजाश्च प्राणकु सौम्य तदा च यदासीत् ॥१५४॥
सिंह बभूव यदा मृगराजा स्थामबलान्वित कारुणिकश्च ।
विद्ध शरेण न दूषित चित्तं मैत्रि तदा वधकेऽपि तदा मे ॥ १५५ ॥
शङ्खतुषारनिभो हयराजा आसि पुरा च समुद्रतटेऽहम् ।
राक्षसिमध्यगता वणिजो मे तारित कृत्व कृपा करुणा च ॥ १५६ ॥
बोविचरि चरमाण जनार्थे आसि कुणाल अह यद पक्षी ।
वर्जित कामगुणा बहुदोषा नो च वश प्रमदान गतोऽहम् ॥ १५७ ॥
आसि शशो वनगुल्मनिवासी शासति त सुकृते शशवर्गम् ।
मुनिराश्रमवासि क्षुधार्तस्तस्य कृतेन मयाश्रयु त्यक्तः ॥ १५८ ॥
आसि शुको द्रुमपुष्पफलाढ्ये शुष्कद्रुमो न च मे स हि त्यक्तः ।
दृष्ट कृतज्ञ तदा मम शक्रस्त कृतवास्तरु पत्रफलाढ्यम् ॥ १५९ ॥
F 27 वानरसघमुपद्रुत दृष्ट्वा नागनृपेण विवर्जितदेशम् ।
राजभयात्तु विमोक्षित ते मे वानरराज अह यद आसीत् ॥ १६० ॥
शुक भूत पुरा गुरुहेतोः शालि हरश्च नरेण गृहीत' ।
किं तु शुका हरसे मम शालि नाशयतेऽपि च पक्षि मशस्यम्
[मत्सस्यम्] ॥ १६१ ॥
शुक सोऽब्रवीद्भद्र शृणुष्व चौर्य हरामि न ते अहु शालिम् ।
जीर्णगुरुद्वयपोषणहेतोः शालि हरामि कृपार्थ तु तेषाम् ॥ १६२ ॥

---

**150.** J 35, CP 29, JM 16. **151.** J. 482, CP 16, JM 26 **152.** AK. 97 **153.** AŚ 31, AK. 99 **155.** MV I 131–32. **156.** MV III 67–90 **157.** J 536 **158.** J. 316, JM 6, CP 10, AŚ 37, AK 104 **159.** J 429, 430. **160.** J. 404, 407, JM. 27; CP 27. **161.** J 484

बीज प्रकीर्ण यदा प्रथम ते-भाग ददामि सर्वजनस्य ।
तच्च गिर वदतो मम श्रुत्वा तेनापि चौर्य भवेन्न कदाचित् ॥ १६३ ॥
साधु शुका हर शालि यथेष्ट दुर्लभ मानुष यस्मिमु भक्ति. ।
मानुष त्व मय तीर्यगतेहा साधु दम शम सयम तुभ्यम् ॥ १६४ ॥
इत्येवमादि चरितानि पूर्वे चरन्त दुष्कर कृतानि ।
न च मे मनसि तत्र भवि खेद एषत उत्तमा विरज बोधिम् ॥ १६५ ॥
आध्यात्मिक ह्यथ च बाह्य नास्ति हि वस्तु यन्मया न दत्तम् ।
शीले च क्षान्ति तथ वीर्य ध्यान उपाय प्रज्ञ चरितोऽहम् ॥ १६६ ॥
मास त्वच तथपि च मज्ज शोणितमेव दत्त स्वशरीरात् ।
प्रान्ते गुहासु च यदा मे शोषित आश्रयोऽपि चरता मे ॥ १६७ ॥
धुतयान देशित जिनेभि. यत्र प्रयुज्यतो जिन भवन्ति ।
तत्र धुते सतत च प्रयुक्तो आसि चरन्त पुरे अह्न नित्यम् ॥ १६८ ॥
एतादृशा व्रत उदारा ये च निषेविता चरता मे । F 28
श्रुत्वा च तेषमिमाश्चर्यमेकपदे न भविष्यति छन्द. ॥ १६९ ॥
हास्यु भविष्यति इम श्रुणित्वा शासनमेतदेव च तदानीम् ।
आहारमैथुनपरास्ते मिद्धसदाभिभूत शतकाङ्क्षाः ॥ १७० ॥
धर्मद्विष. सद अनार्या. शासनदूषका गुणविहीना ।
श्रुत्वा च धर्ममिम शान्त नैष जिनोक्त इत्यभिवदन्ति ॥ १७१ ॥
आचार्यो मे श्रुतसमुद्रो आसि बहुश्रुत. कथिकश्रेष्ठः ।
तेनापि चैष प्रतिषिद्धो बुद्धवचो हि नैष तु कथचित् ॥ १७२ ॥
परतोऽप्यभूदपि च वृद्ध. तस्य गुरु. स शामितगुणौघ. ।
तेनापि नैष हि गृहीतो मात्र प्रयुज्यथ वितथमेतत् ॥ १७३ ॥
यत्रात्म नास्ति न च जीवो देशित पुद्गलोऽपि न कथचित् ।
व्यर्थ. श्रमोऽत्र घटते यः शीलप्रयोग सवरक्रिया च ॥ १७४ ॥
यद्यस्ति चैव महायान नात्र हि आत्म सत्त्व मनुजो वा ।
व्यर्थः श्रमोऽत्र हि कृतो मे यत्र न चात्मसत्त्वउपलब्धिः ॥ १७५ ॥
कवितानि हैव स्वमतानि पापमतैः कुतीर्थिकमतैश्च ।
भाषेत नो जिन कदाचित् वाचमिमां हि भिक्षुपरिभाषाम् ॥ १७६ ॥
ह्रीरपत्रापशीलरहिताश्च ध्वाङ्क्ष प्रगल्भ उद्धतप्रचण्डाः ।
भविता हि भिक्षव ममेह शासनि ईर्ष्यमानमददग्धाः ॥ १७७ ॥
विध्यन्त हस्त तथा पादाश्चीवरकर्णका निधुनन्तः । F 29
काषायकण्ठ विचरन्ता ग्रामकुलेषु मद्यमदमत्ता. ॥ १७८ ॥

बुद्धस्य ते ध्वज गृहीत्वा सेवङ्करा गृहस्थजनतायाम् ।
लेख वहन्ति सतत ते शासनद विहाय गुणराशिम् ॥ १७९ ॥

गोगर्दभाश्वपशुदानात्सभवते हि दास्य पि तेषाम् ।
कृषिकर्मवाणिज्यप्रयोगा युक्तमनाश्च तेऽनिशमार्याः ॥ १८० ॥

नैषामनार्यमपि वाच्य नैव च किंचिदस्ति यदकार्यम् ।
स्तौपिक साघिक ह्यपि च वित्त पौद्गलिक च तच्च सममेषाम् ॥ १८१ ॥

भिक्षुण वीक्ष्य च गुणाढ्य तेष्वपि चाप्यवर्ण कथयन्ति ।
दुःशील वञ्चक प्रविश्य कुहास्ते स्त्री च विनाशयन्ति हि सुघोराः ॥ १८२ ॥

गृद्धो गृहीण तथा कामैर्यादृशो प्रव्रजित्व ते गृद्धाः ।
भार्याः सुता दुहितरश्च तेषु भविष्य गृहिसमानम् ॥ १८३ ॥

यत्रैव सत्कृत कुले ते चीवरपिण्डपातपरिभोगैः ।
तस्यैव दारपरिगृद्धा क्लेशवशानुगाः सद अनार्या ॥ १८४ ॥

कामा इमे खलु न सेव्या· पातन तिर्यक्प्रेतनिरयेषु ।
वक्ष्यन्ति ते सद गृहीणा ते च स्वयमदान्त अनुपशान्ताः ॥ १८५ ॥

F 30 स्वयमेव ते यथ अदान्ता· शिष्यगणोऽपि तेष न सुदान्तः ।
आहारमैथुनकथाया रात्रिदिवानि तेषु गमिष्यन्ति ॥ १८६ ॥

सेवार्थमेव न गुणार्थं ते खलु सग्रह ददति तेषाम् ।
शिष्यगणैः स्वकै· परिवृतोऽह पूज जने सदात्र चल सिध्य ॥ १८७ ॥

कथयन्ति तेऽपि च जनस्य सग्रह एष मे करुणयैषाम् ।
उपस्थान प्रार्थयामि तेभ्य शिष्यगणेभ्य एव न कदाचित् ॥ १८८ ॥

रोगाभिभूत बहु तत्र कुष्ठिलाश्वित्रगात्रसुविरूपाः ।
प्रव्रजिष्यन्ति नरकेषु आगता आगता सद अनार्याः ॥ १८९ ॥

उद्देशसंवरविहीना भिक्षुगुणेषु ते सद वियुक्ताः ।
गृहिणो न तेऽपि न च भिक्षू वर्जित ते यथा श्मशान इव दारुः ॥१९०॥

शिक्षासु चादर न तेषा स्यान्न च प्रातिमोक्षविनये वा ।
उद्दामगा· स्ववशगास्ते अङ्कुशमुक्तका इव गजेन्द्राः ॥ १९१ ॥

वनवासिनामपि हि तेषा ग्रामगत भविष्यति हि चित्तम् ।
क्लेशाग्निना प्रपतिताना चित्तमवस्थित हि न च तेषाम् ॥ १९२ ॥

विस्मृत्य बुद्धगुण सर्वान् शिक्षधुताश्च तेऽपि च उपायान ।
मदमानदर्पपरिपूर्णा ते प्रपतन्ति दारुणमवीचीम् ॥ १९३ ॥

राजकथारताश्च सतत ते चेरकथाभिकीर्तनरताश्च ।
ज्ञातिनिषेवने च निरतास्ते चिन्तयमान रात्रिंदिवसानि ॥ १९४ ॥

ध्यान तथाध्ययन त्यक्त्वा नित्य विहारकर्मणि नियुक्ता । F 31
आवासगृध्रभृकुटीकास्ते च अदान्तशिष्यपरिवारा. ॥ १९५ ॥

न च कर्मिको ह्यह विहारे आत्मन हेतुरेप हि कृतो मे ।
ये भिक्षवो ममानुकूलास्तेष्ववकाशमस्ति हि विहारे ॥ १९६ ॥

ये शीलवन्त गुणवन्तो धर्मधरा जनार्थमभियुक्ता ।
दमसयमे सततयुक्ताः सग्रह तेषु ते न कुरुते च ॥ १९७ ॥

लयन ममैतदुद्दिष्ट सार्धविहारिणोऽपि च ममेदम् ।
समोदिकस्य च ममेद गच्छ न तेऽस्ति वास इह कश्चित् ॥ १९८ ॥

शय्यासन निखिल दत्त भिक्षव स्थापिता इह प्रभूता. ।
न च लाभसभव इहास्ति किं परिभोक्ष्यसेऽत्र व्रज भिक्षो ॥ १९९ ॥

शय्यासनोद्दिशन तेषां नैव भविष्यतेऽपि च कदाचित् ।
गृहिसचयाश्च भवितारस्ते च प्रभूतभाण्डपरिवारा ॥ २०० ॥

निर्भर्त्सिता पि च समन्तात्ते हि ममौरसाश्चरिमकाले ।
वचन न चैते मम हि स्मृत्वा प्रान्तवने तदाभिनिवसन्ति ॥ २०१ ॥

हा शासन जिनवरस्य नाशमुपेक्ष्य हि नचिरेण ।
लाभाभिभूत गुणद्विष्टा भिक्षवः प्रादुर्भूत बहु यत्र ॥ २०२ ॥

परिभूतकाश्च सततं ते पश्चिमकालि शीलगुणयुक्ताः ।
ते चाप्यरण्यवनवासी ग्राम विहाय राष्ट्रनगराणि ॥ २०३ ॥

सद सत्कृता गुणविहीना भेदक मूचका. कलहकामा ।
ते शास्तृसमत जनस्य ते च भविष्यन्ति मानमददग्धा ॥ २०४ ॥

इम शासन गुणनिधान सर्वगुणाकर परमरम्यम् । F 32
नाश प्रयास्यति ममेह शीलविपत्तिरीर्ष्यमददोषैः ॥ २०५ ॥

रत्नाकरो यथ विलुप्तः स्यास्यति पद्मिनीव परिशुष्का ।
यूप वररत्नमयं भग्न नश्यति शासन चरिमकाले ॥ २०६ ॥

एतादृशश्चरिमकाले धर्मविलोप वर्तति सुघोरः ।
ते चापि भिक्षव अदान्ता नाशयितारः शासन ममेदम् ॥ २०७ ॥

.म चर्यसेवनिरताना दूरत सगतिः कचन तेषाम् ।
.ेतगतिर्नरकेऽपि च वास. तिर्यगतिश्च इतो हि च्युतानाम् ॥ २०८ ॥

अनुभूय तीव्रकटुकानि दु·खमनन्त वर्षशतमनेकै· ।
लब्ध्वा स मानुषभव वा जायति दु·खितः सतत शोच्य· ॥ २०९ ॥
अन्धोऽथ वा बधिर काणो जायति चित्रगात्र सुविरूपा ।
बीभत्सरूपभयदर्शी पापचरीमिमा सतत सेवी ॥ २१० ॥
विश्रम्भतेऽस्य न च कश्चित् श्रद्दधतेऽस्य चापि न च वाक्यम् ।
निर्भर्त्सितो भवति नित्य योऽभिनिषेवते विषमचर्याम् ॥ २११ ॥
ते रोगदु·खशततप्तास्ताडित लोष्टकाष्ठप्रहरेभि· ।
क्षुत्तृष्ण येन परितप्तास्ते च भवन्ति सदा सुपरिभूताः ॥ २१२ ॥
दु·खा अनन्त इति ज्ञात्वा दूर पापचर्यं विजहित्वा ।
सेवेथ साधुचरि नित्य मा भवितानुताप इह पश्चात् ॥ २१३ ॥
F 33 यस्य प्रियो भवति बुद्धो आर्यगणश्च शिक्ष धुतधर्मा· ।
अभियुज्यथा सततमेव त्यक्त्व च ज्ञात्रलाभयशकीर्ति ॥ २१४ ॥
मायोपम हि[ भि ? ]दुरमेतत्स्वप्नसम च सस्कृतमवीक्ष्यम् ।
नचिराद्भविष्यति वियोग सर्वप्रियैर्न नित्यमिह कश्चित् ॥ २१५ ॥
उद्युज्यता घटत नित्य पारमितासु भूमिषु बलेषु ।
मा जातु संशयत वीर्यं यावन्न बुध्यथा प्रवरबोधिम् ॥ २१६ ॥

निदानपरिवर्त· प्रथम ॥

---

## द्वितीयः परिवर्तः ।

F 34 यद्भूयसा राष्ट्रपाल बोधिसत्त्वयानीयाना पुद्गलानामिमे दोषा भविष्यन्ति—अनभियुक्ता अनभियुक्तान् पूजयिष्यन्ति, शठा शठान् पूजयिष्यन्ति, अज्ञा अज्ञान् सत्कर्तव्यान् मन्यन्ते, आमिषप्रियाश्च भविष्यन्ति । अध्यवसाने बहुला कुलमत्सराः शठा ध्वाङ्क्षा मुखरा· कुहकाः क्षात्रगुरुकाः । अन्योन्यवर्णभाषणतया लाभ निष्पादयिष्यन्ति । लाभपर्येष्ट्यर्थं च ते ग्रामं प्रवेक्ष्यन्ति, न सत्त्वपरिपाकार्थं न सत्त्वानुकम्पार्थम् । ते अज्ञानिनो ज्ञाननिमित्तमात्मानं प्रतिज्ञास्यन्ति—कथ मा परे विजानीयु· ? बहुश्रुतः कल्याणधर्म इति । अगौरवाश्च भविष्यन्ति यथात्रानभियुक्ताः । भिन्नभाजनीभूता भविष्यन्ति अन्योन्यस्खलितगवेषिण· । नष्टप्रयोगा अज्ञा· कुसीदाज्ञाना नवकल्पनबहुलाः । अन्योन्यभिन्नधर्मसगायनतया स्वच्छन्दा दृढवैरा आकीर्णव्यापादा अयुक्तपरिभाषाञ्जनसज्ञस्या इह शासने चरिष्यन्ति आपरिपृच्छनशीला· । धर्मश्रवणेनानर्थिकाः । अयुक्तचर्यया दरिद्रकुलेषूपपत्तिं परिगृहीष्यन्ति । ते दरिद्रकुले प्रव्रजिताः समाना लाभमात्रकेनेह शासने तुष्टिमुत्पादयिष्यन्ति । तेषामल्पयदेशनापि न भविष्यति किं पुनर्ज्ञानाभिसमय· । ते बुद्धगुणान् रिचित्वा ज्ञात्रलाभमात्रकेन श्रव[म]णा· स्म इत्यात्मान प्रतिज्ञास्यन्ति । नाह राष्ट्रपाल तेषा तथारूपाणा

पुद्गलानामानुलोमिकामपि क्षान्तिं वदामि कुत. पुनर्बुद्धज्ञानम्। सुगतिस्तेषा दूरे, किं पुनर्बोधि·। तेषा पुना राष्ट्रपाल तथारूपाणा पुद्गलानामष्टौ बोधे. परिपन्थकरान् धर्मान् वदामि। कतमानष्टौ ? अपायोपपत्ति दरिद्रकुलोपपत्ति प्रत्यन्तजनपदोपपत्ति· नीचकुलोपपत्तिर्दुर्वर्णतान्धत्वगतिका पापमित्रसमवधान बहुमान्यता विषमापरिहारेण कालक्रियाः। इमान् राष्ट्रपाल अष्टौ धर्मान् बोधे· परिपन्थकरान् वदामि। तत्कस्य हेतो ? नाह राष्ट्रपाल F 35
वचनप्रतिज्ञस्य बोधिमिति वदामि। न कुहकस्य चर्यापरिशुद्धिं वदामि। न शठस्य बोधिचर्यां वदामि। नामिषगुरुकस्य बुद्धपूजा वदामि। नाभिमानिन प्रज्ञापरिशुद्धिं वदामि। नाह दुष्प्रज्ञसमन्वागतस्य सशयच्छेदन वदामि। नाह मत्सरिण आशयपरिशुद्धिं वदामि। नाहमनधिमुक्तिबहुलस्य धारणीप्रतिलाभ वदामि। नाहमसद्गुणपर्येषकस्य सुगतिप्रतिलाभ वदामि। न कुलमत्सरस्य कायपरिशुद्धिं वदामि। नाहमकल्पितार्यपथस्य बुद्धसमवधान वदामि। न कुलाध्यवसितस्य वाक्परिशुद्धिं वदामि। न गौरवस्य चित्तपरिशुद्धिं वदामि। नाहममात्रज्ञस्य धर्मकामना वदामि। न कायजीवितसापेक्षस्य धर्मवेष्टिं वदामि। नाह राष्ट्रपाल षट्शास्तॄंस्तथा विगर्हामि यथा तान् मोहपुरुषान् विगर्हामि। तत्कस्य हेतोः ? अन्यथावादिनस्ते अन्यथाकारिण., विसवादका सदेवकस्य लोकस्य ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

असयता उद्धत उन्नताश्च अगौरवा मानिन लाभउत्सदा।
क्लेशाभिभूता. सखिला· सकिंचना सुदूर ते तादृश अग्रबोधये ॥ २१७ ॥
लाभाभिभूतस्य कुसीद वर्धते कुसीदभूतस्य प्रनष्ट श्रद्धा।
श्रद्धाविपन्नस्य प्रनष्ट शील दुःशीलभूतस्य प्रनष्ट सगति· ॥ २१८ ॥
दरिद्रभूताश्च हि प्रव्रजित्वा दारिद्र्यमुक्ता समवाप्य पूजाम्।
तैः काञ्चनो भारमिवापविद्धः स सस्यभारः पुनरुद्गृहीतः ॥ २१९ ॥
लाभार्थिकोऽरण्यमुपैति वस्तुं गवेषते तत्र गतश्च ज्ञातीन्।
अभिज्ञाविद्याप्रतिभानसपदो विहाय गृह्णाति स चापि ज्ञातीन् ॥ २२० ॥
अपायभूमिं गतिमक्षणेषु दरिद्रता नीचकुलोपपत्तिम्।
जात्यन्धदौर्बल्यमथाल्पस्थामता गृह्णन्ति ते मानवशेन मूढा. ॥ २२१ ॥
ते वृत्तिचर्यापरिहीनभावा प्रमादलाभेन स्मृतिप्रनष्टाः। F 36
घोर प्रयास्यन्ति महाप्रपात यतो न मोक्षोऽस्त्यपि कल्पकोटिभिः ॥ २२२ ॥
यदीह लाभेन भवेत बोधिस्तद्देवदत्तोऽपि लभेत बोधिम्।
वैरम्भवातेन यथैव पक्षी क्षिप्यन्ति लाभेन तथा अयुक्ता ॥ २२३ ॥
पुण्यैर्विहीनाः परदारगृद्धा अशुद्धशीलाः कुशलेषु बोद्धरः।
ते शासनेऽनर्थश्मशानदारुवत् ये बोधिचित्तेन अलब्धज्ञाना. ॥ २२४ ॥
बोध्यर्थिकोऽन्वेषति बुद्धधर्मान् न तिष्ठते चापि यथा समोक्ष.।
दृढ. स लेपेन कृतः कपिर्वा मानाभिभूतस्य तथैव बोधि. ॥ २२५ ॥

बोध्यर्थिकेनापि मया स्वजीव त्यक्त प्रिय धर्मपदस्य हेतोः ।
त्यक्त्वा च धर्मांस्त अयुक्तयोगा' निरर्थभूता निपतन्ति शासनम् ॥ २२६ ॥
महाप्रपात ज्वलित हुताशन सुभाषितार्थे पतितोऽस्मि पूर्वे ।
श्रुत्वा च तस्मिन् प्रतिपत्तिये स्थितो विहाय सर्वाणि प्रियाप्रियाणि ॥ २२७ ॥
श्रुत्वा गुणाढ्य च विचित्रशासन तेषा स्पृहा नैकपदेऽपि जायते ।
अधर्मकामस्य कुतोऽस्ति बोधि. यथैव चान्धस्य पथि प्रकाशनम् ॥ २२८ ॥

इति ॥

भूतपूर्वं राष्ट्रपाल अतीतेऽध्वन्यसख्येयै. कल्पैरसख्येयतरैरचिन्त्यैरतुल्यैरप्रमाणैर्विपुलैरप्रमेयैर्यदासीत् । तेन कालेन तेन समयेन सिद्धार्थबुद्धिर्नाम तथागतोऽर्हन् सम्यक्सबुद्धो लोक उदपादि विद्याचरणसपन्नः सुगतो लोकविदनुत्तर. पुरुषदम्यसारथि' शास्ता देवमनुष्याणा च बुद्धो भगवान् । तेन च समयेन अर्चिष्मान्नाम राजाभूत् । अर्चिष्मतः पुना राष्ट्रपाल राज्ञो जम्बूद्वीपे राज्यमभूत्षोडशयोजनसहस्राणि । तेन च राष्ट्रपाल कालेन
F 37 तस्मिन् जम्बूद्वीपे विंशतिनगरसहस्राण्यभूवन् सर्वाणि कुलकोटिसहस्रिकाणि । तस्य खलु पुना राष्ट्रपाल राज्ञोऽर्चिष्मतो रत्नप्रभास नाम नगरमभूद्राजधानी, यत्र स राजा अर्चिष्मान् प्रतिवसति द्वादशयोजनान्यायामेन पूर्वेण पश्चिमेन च, सप्त योजनानि विस्तरेण दक्षिणेनोत्तरेण च, सप्ताना रत्नाना च सप्तप्राकारमष्टापदसुकृतम् । तेन च समयेन दशवर्षकोटिनियुतानि सत्त्वानामायु प्रमाणमभूत् । राज्ञः पुना राष्ट्रपाल अर्चिष्मत पुण्यरश्मिर्नाम पुत्रोऽभूदभिरूप. प्रासादिको दर्शनीयः परमशुभवर्णपुष्कलतया समन्वागत । तस्य जातमात्रस्यैव निधानसहस्र प्रादुर्भूतम् । सप्ताना रत्नानामेक चात्र निधान राज्ञ प्रासादे प्रादुर्भूत दशपौरुषप्रमाण सप्ताना रत्नानाम् । तस्य खलु पुना राष्ट्रपाल पुण्यरश्मे राजकुमारस्य जातमात्रस्यैव सर्वे जाम्बूद्वीपका. सत्त्वा आत्तमनसोऽभूवन् । ये च सत्त्वा बन्धनगतास्तेषा बन्धनमोक्षोऽभूत् । तेन खलु पुना राष्ट्रपाल पुण्यरश्मिना राजकुमारेण सप्तभिर्दिवसैः सर्वशिल्पान्यधिगतानि यावन्ति लौकिकानि ॥

अथ खलु राष्ट्रपाल पुण्यरश्मे राजकुमारस्य शुद्धावासकायिका देवता अर्धरात्रकालसमये सचोदयन्ति स्म—अप्रमत्तेन ते कुमार सदा भवितव्यम् । अनित्यताप्रत्यवेक्षणकुशलेन भवितव्यम् । अल्प हि कुमार जीवित मनुष्याणाम् । गमनीयः सपरायः । परलोकभयदर्शिना च ते भवितव्य न कर्मक्रियोद्धुरेण । तस्या वेलायामिमा गाथा अभाषत—

मा कुमार भव सुप्रमत्तको मा प्रमादवशमभ्युपेष्यसे ।
अप्रमाद सुगतेन वर्णितो निन्दिता हि सुगतैः प्रमत्तकाः ॥ २२९ ॥
अप्रमत्त इह ये च सूरता दानसयमरता अमत्सरा. ।
सर्वसत्त्वकृपमैत्रमानसा ते भवन्ति नचिरान्नरोत्तमा' ॥ २३० ॥
येऽप्रमेय सुगता अतीता' साप्रत च हि येऽप्यनागताः ।
सर्व एव कुशलैस्त उद्गता अप्रमादपथ एव सुस्थिताः ॥ २३१ ॥

अन्नपानमथ वस्त्रभोजन हेमरूप्यमणिमुक्तिभूपणम् । F 38
दत्त तैरपि च कल्पकोटिय प्रार्थयद्भिरिह बोधिमुत्तमाम् ॥ २३२ ॥
हस्तपादमथ कर्णनासिका याचिता ददति सप्रहर्षिता· ।
सर्वबोधिगुणपूरिताशयाः ते भवन्ति नचिरान्नरोत्तमा· ॥ २३३ ॥
राज्यसौख्यविभवाश्च सर्वशो विप्रहाय दयिता· स्त्रियोऽपि च ।
रङ्गमायसदृश हि संस्कृत संश्रयस्व वनमेव नि.स्पृहः ॥ २३४ ॥
जीवित चपलमध्रुव सदा मृत्तिकाघटक एव भेदि च ।
याचितोपममशाश्वत सदा नात्र नित्यमशुभ कुमारक ॥ २३५ ॥
नेह मात्र न पिता न बान्धवा धारयन्ति यतमान दुर्गतिम् ।
यत्कृत हि मनुजै शुभाशुभ तत्प्रयान्तमनुयाति पृष्ठतः ॥ २३६ ॥
कामहेतु बहुकल्पसागरा अन्यमन्यवधिता निरर्थका· ।
कस्यचिन्न च कृत त्वया हित व्यर्थ एव च निवेशित· श्रमः ॥ २३७ ॥
अद्य ते जगत एषतो हित बोधिशान्तमतुल पदोत्तमम् ।
मज्जमासमपि चर्म शुष्यते यद्यपि त्वमपि मा कृथा श्रमम् ॥ २३८ ॥
दुर्लभो हि सुगतस्य सभव. शान्तधर्मश्रवण सुदुर्लभम् ।
मारपक्षमवधूय यत्नतो बुद्धज्ञान नचिरेण लप्स्यसे ॥ २३९ ॥
भद्रमित्रपरिसेवक. सदा पापमित्रपरिवर्जको भव ।
सत्पथे उपनयन्ति ते सदा दुष्पथा च सतत निवारका· ॥ २४० ॥
साधु वीर्यमपि कृत्व सुस्थिर कायजीवितस्पृहा विहाय च । F 39
वज्रकल्पहृदया दृढाश्रया बुद्धमार्गमिममेव सुश्रुतम् ॥ २४१ ॥
दुर्लभ पदवरं ह्यनुत्तर सर्व एव पुरिमा नरोत्तमा ।
अरण्यगोचररताः प्रभकरा. तेष त्व चर पथेऽनुवर्तक. ॥ २४२ ॥
अरण्यवासनिरत सदा भव मातृपुत्रपितृबान्धवान् प्रियान् ।
विप्रहाय सकल सुहृज्जन कायजीवितकृतामपि तृष्णाम् ।
एषताद्य विपुलं सुगतज्ञानसचयम् एषता पदवर ह्यनुत्तरम् ॥ २४३ ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तत उपादाय दशभिर्वर्षैर्न जातु स्त्यानमिद्धमवक्रामितवान्, न जातु हसितवान्, न क्रीडितो न रमित., न परिचारितो न जातूद्यानभूमिं गतो न जातु सखायान् दृष्ट्वा विस्मितः । न जातु गीताभिलाष्यभूत् । न राज्यधनगृहनगरेषु स्पृहामुत्पादितवान् । एव सर्ववस्तुषु अनपेक्षोऽभूत् । एकः प्रध्यायमानः स्थितोऽभूत् प्रतिसलीनः परमदौर्बल्यभाव विचिन्तयन् । असारमित्वर च लोकमनाश्वसन् । अप्रियसमवधान प्रियविनाभाव बालोल्लापन समाररतिनिरास्वाद राज्यसुख विमोघधर्मं

भवाभीष्ट शमतृतं पृथग्जनत्व सदा विरुद्धम्। बालायुक्तजनमध्यगतोऽस्मि यन्वहं तूष्णीभावेनातिनामयेयम् । स एकान्ते तूष्णीभूतः अप्रमाद विचिन्तयन् प्रियविनाभावमेकाकी विहरति स्म ॥

अथ खलु राष्ट्रपाल राज्ञार्चिष्मता अन्यतरस्मिन् पृथिवीप्रदेशे रतिप्रधान नाम नगर मापितमभूत् कुमारस्य परिभोगार्थम् । दक्षिणेनोत्तरेण च सप्त वीथीशतानि, सप्तभिः प्राकारै समन्ततोऽनुपरिक्षिप्तमभूत्सप्तरत्नमयै· किङ्किणीजालसमुच्छ्रितैर्मुक्ताजालरत्नयष्टिवितानै । सर्वेषु च वीथीमुखेषु अशीतिरत्नयष्टिसहस्राणि स्थापितान्यभूवन् । सर्वस्या च F 40 रत्नयष्ट्या यष्टिरत्नसूत्रसहस्राणि निबद्धान्यभूवन् । सर्वत्र च रत्नसूत्रे चतुर्दश तालपङ्क्तिकोट्यो निबद्धान्यभूवन्, यासा वातेनेरिताना वातसघट्टिताना तद्यथापि नाम तूर्यशतसहस्रस्य घोषशब्दः स्यात् । सर्वेषु च वीथीमुखेषु पञ्च पञ्च कन्याशतानि स्थापितान्यभूवन् गीतकुशलानि नृत्तकुशलानि प्रथमयौवनप्राप्तानि सर्वजगत्परिभोग्यानि । तासा च राज्ञार्चिष्मता आज्ञा दत्ताभूत्–रात्रिंदिव भवन्तीभिर्नान्या कथा कार्या अन्यत्र नृत्तगीतवादितेन । सर्वे रञ्जयितव्या ये केचिच्चतुर्षु दिक्ष्वागच्छन्ति । अप्येव नाम कुमारस्य रतिचित्तमुत्पद्येत । न च कस्यचित् सत्त्वस्यापनाय वक्तव्यम् । तेषु च पुन· सर्ववीथीमुखेषु अन्नमन्नार्थिकेभ्यो दीयते, पान पानार्थिकेभ्यः, यान यानार्थिकेभ्यो यावद्वस्त्रगन्धमाल्यविलेपनशय्योपाश्रयजीवितपरिष्कारं सुवर्णरूप्यमणिमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतहस्त्यश्वशोधन सर्वाभरण रत्नराशयश्च स्थापिता अभूवन् सर्वजनपरिभोगार्थम् । तेन च समयेन मध्ये नगरस्य समन्ततो योजन गृह कुमारस्य मापितमभूत्परिभोगाय सप्ताना रत्नानामष्टापदनिबद्ध तोरणशतप्रतिमण्डितम् । तत्र चैकः प्रासादः कारितोऽभूत्, यत्र चतस्रः शयनकोट्य· प्रज्ञप्तमभूत्कुमारस्य परिभोगार्थम् । तत्र च मध्ये उद्यान मापितमभूत्सर्वपुष्पवृक्षसर्वफलवृक्षसर्वरत्नवृक्षप्रतिस्फुट संछादितमभूत् । तस्य खलु पुना राष्ट्रपाल उद्यानस्य मध्ये पुष्करिणी कारिताभूत् सप्तरत्नमयी चतूरत्नसोपानी, तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य । अष्टोत्तरं च सिंहमुखशत येन गन्धोदक प्रविशति तस्याः खलु पुनः पुष्करिण्या.। अष्टशतमेव सिंहमुखाना येन पुनरेव तद्वारि निर्वहति । उत्पलपद्मकुमुदपुण्डरीकैः सततसमित सपुष्पिता समन्ततश्च रत्नवृक्षपरिवारिता सर्वकालिकैश्च पुष्पफलवृक्षै· परिस्फुटा । तस्याः पुष्करिण्याः तीरे अष्टशत रत्नवृक्षाणा मापितमभूत् । सर्वस्मिन् रत्नवृक्षे षष्टिषष्टि रत्नसूत्राणि निबद्धानि । सर्वत्र च तालपङ्क्तिकोट्यो निबद्धाः । तासा च वातेनेरिताना वातसघट्टिताना शब्दो निश्चरति तद्यथापि नाम तूर्यशतसहस्रस्य सप्रवादितस्य । सा च पुष्करिणी उपरि रत्नजालसंछादिताभूत्, मा कुमारस्य रजो पांशुर्वा शरीरे निपतिष्यतीति ॥

F 41 तेन च समयेन तस्मिन् प्रासादे चतस्र आसनकोट्यः प्रज्ञप्ता अभूवन् सप्तरत्नमय्य.। सर्वस्मिंश्चासने पञ्च पञ्च दूष्यशतानि प्रज्ञप्तान्यभूवन् । तत्र च मध्ये आसन प्रज्ञप्त सप्तरत्नमय सप्तपौरुषमुच्चत्वेन अशीतिदूष्यकोटिभि· प्रज्ञप्तम्, यत्र पुण्यरश्मी राजकुमारो

निषेत्स्यत इति । सर्वत्र चासनमूले अगरुगन्धघटिका धूप्यते । त्रिष्कृत्वो दिवसस्य त्रिष्कृत्वो रात्रेः पुष्पसस्तरः क्रियते । सुवर्णछदनाच्छादित सुवर्णपद्मप्रलम्बित मुक्ताजालविनत मणिरत्नप्रभावभासितमशीतिसहस्रप्रलम्बितम् । सर्वत्र च रत्नवृक्षे पताकाशतानि प्रलम्बितान्यभूवन् । सर्वत्र चोद्याने नवतिर्मणिरत्नशतसहस्राणि योजनप्रमाणि स्थापितान्यभूवन्, तेषा च प्रभया सर्वलोकोऽवभासितोऽभूत् । तस्मिन् पुना राष्ट्रपाल उद्याने शुकसारिकक्रौञ्चकोकिलमयूरहसचक्रवाककुनालकलविङ्कजीवजीवका मनुष्यप्रलापिन पक्षिगणोऽभूवन् । येषा निकूजितानि नदता नन्दने देवानामिव मदनीय शब्दो निश्चरति । कुमारस्य च परिभोगार्थं पञ्चरसशतप्रकाराणि भोजनानि सततसमितमभिसस्कृतान्यभूवन् सर्वाकारसपन्नानि ॥

तेन च पुनः समयेन विंशवर्षा समाना षोडशवर्षातिक्रान्ताः कुमारकाः सर्वनगरेभ्य समुदानीय तत्र च नगरे प्रवेशिता अभूवन् सर्वशिल्पस्थानकर्मस्थानविधिज्ञाः । सर्वलौकिकरत्युपकरणविधिज्ञानामशीतिकोट्यः तस्मिन्नगरे प्रवेशिता अभूवन् । तस्य मातापितृभ्या कोटिः कन्याना दत्ता, ज्ञातिसघेन कोटिः, नैगमज्ञानपदैः कोटिः, सर्वराजेन कोटि कन्याना दत्ता अभूवन् । ताश्च सर्वा अभिरूपाः प्रासादिका दर्शनीयाः सर्वाः षोडशवर्षप्रमाणा जात्या गीतकुशला वाद्यकुशला नृत्तकुशला हसितकुशला पुरुषोपसक्रमणकुशला आर्जवाः शिशवा मधुरा वृद्धयः पूर्वाभिलापिन्यः स्मितमुखाश्चोपचारकुशला. सर्वकलासु विधिज्ञा नातिदीर्घा नातिह्रस्वा नातिकृशा नातिस्थूला नातिगौर्यो नातिश्यामाः । यासामुत्पलगन्धो मुखात प्रवाति, चन्दनगन्धो गात्रेभ्य. प्रवाति । व्यक्ता इव देवकन्यका, एकान्तमनामयचारिण्य. । तासा मध्यगतः पुण्यरश्मी राजकुमार सगीतिसप्रभाणितेन तत्र च सगीतिशब्दे वाद्यशब्दे चैव चित्तमुत्पादयति–महानमित्रसघो वताय मम प्रादुर्भूतः कुशलधर्मपरिमोषकः । हन्त F 42 अनपेक्षो भविष्यामि । स तस्मिन् समये स्याद्यथापि नाम वध्य. पुरुषो दृष्ट्वा न विस्मयचित्तमुत्पादयति, एवमेव पुण्यरश्मी राजकुमारः ता प्रमदा दृष्ट्वा न विस्मयति, नापि तत्र नगरे, न च सखीभिर्विस्मयति स्म । तैश्च दशभिर्वर्षैर्न जातु रूपनिमित्तमुद्गृहीतवान्, न शब्दनिमित्त न गन्धनिमित्त न रसनिमित्त न स्पर्शनिमित्तमुद्गृहीतवान् । अन्यत्रैवरूपं चित्त प्रवर्तयते स्म–कदा तावदेवरूपादमित्रसघमध्यान्मम मोक्षो भविष्यति ? कदाहमप्रमादचर्यां चरिष्यामि येन मे मोक्षो भविष्यति ? अथ खलु ता. कन्यका. राज्ञोऽर्चिष्मत आरोचयन्ति स्म–न देव कुमारः क्रीडति, न रमते, न परिचारयति ? अथ खलु राष्ट्रपाल राजा अर्चिष्मानशीतिभी राजसहस्रै. सार्धं येन पुण्यरश्मी राजकुमारस्तेनोपसक्रामत् । उपसक्रम्याश्रुमुखः प्रवेपमानेन कायेन शोचमानो धरणितले प्रपतितः । स उत्थाय धरणितलात्पुण्यरश्मिं राजकुमार गाथाभिरध्यभाषत–

प्रेक्षस्व पुत्रवररत्न मम प्रलाप
शोकार्दितो निपतितोऽस्मि भुवि क्षपान्ते ।
केनाप्रियं तव कृत मम तद्ब्रवीहि
ज्येष्ठ ददामि यदिहास्य क्षणेन दण्डम् ॥ २४४ ॥

प्रेक्षस्व मेऽद्य नगर सुरसद्मरम्य
मनसा मयाभिरचित यदिद त्वदर्थे ।
किमिहाङ्गमद्य विकल मम तद्वदाशु
शक्रस्य वाद्य विभव तव दर्शयामि ॥ २४५ ॥
शोकार्दित कमललोचनचारुनेत्र
स्त्रीसंघमप्सरसम विलपन्तमीक्ष ।
एताभिरन्यैश्च रमस्व विनीय शोक
किं शल्यविद्ध इव ध्यायसि दीनवक्त्र' ॥ २४६ ॥
एता. स्वरङ्गरुचिरा' सुरतेर्विधिज्ञा'
संगीतितालसमये च विनिश्चयज्ञाः ।
कालस्तवाद्य सुरतस्य न शोचितस्य
म्लान सरोरुहमिवासि किमद्य दीनः ॥ २४७ ॥
उद्यानपुष्पफलपत्रविकीर्णशाखा
उद्विद्धचित्रमिव चित्ररथ सुराणाम् ।
सचिन्तयस्व प्रथम हि वयस्तवेद
कालो रते रम इहाद्य सुत प्रसीद ॥ २४८ ॥
F 43 तुल्या तवेयमपि पुष्करिणी सुराणा
स्नानार्थमुत्पलसरोजवनाभिकीर्णा ।
पद्मानि मत्तवरषट्पदभूषितानि
सचिन्त्य ता क इह नाभिरमेत पुत्र ॥ २४९ ॥
हसा मयूरशुकसारिककोकिलाश्च
कोणालजीवकलविङ्क मनोज्ञघोषाः ।
गन्धर्वमादन इवा हिमवत्समीपे
श्रुत्वा नरः क इह नात्र रतिं लभेत ॥ २५० ॥
एता विमानमणिचूडसमुक्तजाला
वैडूर्यकाञ्चनचिता इव वैजयन्ते ।
रत्नासनानि च वराणि वरास्तृतानि
चारुस्वरा कनककङ्कणतालपङ्क्तयः ॥ २५१ ॥
गम्भीरधीरवरतूर्यनिनादघुष्टा
वीथीषु दानविसरास्तव चापि हेतोः ।
कन्याः सहस्रबहुगीतरुताः क्रियन्ते
श्रूयन्ति नन्दनवनेऽप्सरसा यथैव ।

कस्मात्त्रिविष्टपसमे भवने मनोज्ञे
विक्षिप्तचित्त इह किं न रतिं करोषि ॥ २५२ ॥
एते कुमार तव देवसमानगर्भाः
क्रीडासखाय सह पुत्र रमस्व चैभिः ।
माता पिता च तव सस्थित साश्रुकण्ठाः
किं दुःख नास्ति करुणा च जने तवास्मिन् ॥ २५३ ॥
सोऽथाब्रवीद्गुणचितो भवदोषदर्शी
निर्विण्ण सस्कृतमनर्थिक कामभोगैः ।
ससारपञ्जरगत जगदीक्ष्य चेद
मोक्षार्थिकः पितरमाह शृणुष्व देव ॥ २५४ ॥
देवाप्रिय मम कृत न हि केनचिन्मे
किं त्वस्ति मेऽद्य न हि कामगुणेषु छन्दः ।
सर्वे प्रिया रिपुसमा हि निरानुरक्ता
ये क्लेशदुर्गतिप्रपात प्रपातयन्ति ॥ २५५ ॥
एता. स्त्रियो ह्यबुधबालजनाभिरामा
मारस्य पाशगुणबद्ध महाप्रपाताः ।
नित्य तथा विगर्हित आर्यजनेन चैताः
सेवामि किं नरकदुर्गतिशोकमूलाः ॥ २५६ ॥
एताः स्त्रियो हि छविमात्रकरूपरम्याः
स्नाय्वस्थियन्त्रमशुचीभि निरर्थकोऽहम् ।
प्रस्राविणी रुधिरमूत्रशकृन्मलाना
व्यक्त श्मशानसदृशीषु कथ रमेयम् ॥ २५७ ॥
गीत न श्रोष्यमपि वाद्यरुत न श्राव्य F 44
स्वप्नाय माभिरतयोऽध्रुवमोहनाश्च ।
सकल्पलालस गता अबुधा तु नाश
किं क्लेशदास इव बालजनो भविष्ये ॥ २५८ ॥
सर्वे इमे द्रुमलता शिशिरे प्रवृत्ते
कान्तारवृक्षसदृशा हि भवन्त्यरम्या. ।
सर्वश्रियो विधमनी हि अनित्यतेय
मोहात्प्रमादमुपयामि चले तु जीवे ॥ २५९ ॥
चित्त समुद्र इव तर्पयितुं न शक्य
तृष्णाप्रवृत्तिनिरतः पुनरेव काङ्क्षं ।

अन्योन्यघाति जगदीक्ष्य हि कामहेतोः
मेरुर्यथैव पवनैरहमप्रकम्प्यः ॥ २६० ॥

न त्व पिता न सहजा मम नापि भार्याः
त्राता न बान्धवजना नृपते ह्यपायात्।
सर्वे वय तृणगता इव बिन्दुलेखा
मा तात चित्तवशगा भवता प्रमत्ताः ॥ २६१ ॥

धिग्यौवनेन मनुजेश्वर यन्न नित्यं
धिग्जीवितस्य गमन गिरितोयशीघ्रम्।
धिक्संस्कृत क्षयमिद तडिदभ्रलोल
धिक्कण्डितस्य त्रिभवे नृप कामराग. ॥ २६२ ॥

संचोदितोऽस्मि विबुधैर्भव अप्रमत्तो
नो बोधिसत्त्व भवते विषयाभिलग्नः।
बुद्धो भवेयमिह लोकहितानुकम्पी
नास्ति प्रमादचरितस्य नरेन्द्र बोधिः ॥ २६३ ॥

कामातुरो भवति यो नृप चित्तदास·
स हि पुण्यनाशनिरतो विनिवृत्तस्वर्गः।
हिंसासमिद्धमपि नाभिचरेत जातु
पक्षीव पञ्जरगत· कथमाश्वसेत ॥ २६४ ॥

धातूश्च सर्पसदृशा वधकाश्च स्कन्धाः
चित्त च सास्रवमनर्थक शून्य ग्रामः।
विषस्तम्बपुष्पित इवेह नरेन्द्र कायः
ओघेऽतिरुह्यति कथ नु रतिर्ममात्र ॥ २६५ ॥

सप्रेक्षसे जगदिद कुगतिप्रपन्न
व्यक्त पद गगनतुल्यमपि ज्वलन्तम्।
तेषां प्रमोक्षणनिमित्तमिहाद्य राजन्
शिवधर्मनाव समुदानयितास्मि शीघ्रम् ॥ २६६ ॥

F 45 सुप्तान् विबोधयितुमातुर जीवितार्थं
शल्य निमूलयितुमुत्पथगान् विनेतुम्।
प्रोद्घुष्य बन्धनविमोक्ष महासहस्रे
सतर्पयिश्चिरदरिद्र सुभाषितेन ॥ २६७ ॥

सीदन्त दुर्गतिपथादपि चोद्धरिष्ये
अन्धे चक्षुरपि तृष्णलताविशोषी।

प्रज्ञार्चिरुत्तमविमुक्तिकृतप्रदीपो
द्रक्ष्यन्ति येन त्रिभव नटरङ्गकल्पम् ॥ २६८ ॥
मेघ कृपाकरुणपारमिताभ्रकूट
सत्त्वार्थगर्जित विपश्यनविद्युमाली।
बोध्यङ्गधारसुखशीतलवृष्टिजालैः
शीतीकरोमि च जगच्चिरकालतप्तम् ॥ २६९ ॥
एतत्स्मरन्नहमिह क्षितिशोपविष्टो
नास्तीह मे प्रणिधि संस्कृतसर्वकामै.।
बोध्यर्थिको हि विचरामिह सत्त्वहेतोः
एकांशिको न हि भवाभिरतौ ममेच्छा ॥ २७० ॥
जानन् वसेत्क इह पार्थिव शत्रुमध्ये
को बुद्धिमान् सभयमार्गपथ व्रजेत।
को वा सचक्षुरिह तात पतेत्प्रपाते
को बोधिमार्गमधिगम्य भवेत्प्रमत्तः ॥ २७१ ॥
अनुस्रोत सर्वजगती प्रतिस्रोता सोऽह
वाचा न शक्यमिह पार्थिव बोधि प्राप्तुम्।
मेरुप्रयातमपि सागरमुत्सहेय
न त्वेव मे मन इहाभिरमेत कामैः ॥ २७२ ॥
गच्छाशु पार्थिव वरस्वजनेन सार्धं
सर्वां हि राष्ट्ररतिमुत्सृज सर्वलोके।
आदाय गच्छतु यथाभिमत हि यस्य
गृह्याप्रमाद मम तात न राज्यकोट्या ॥ २७३ ॥
शक्या न नारिगणमध्यगतेन बोधि
प्राप्तु शिव पदमनुत्तरयोगक्षेमम्।
गच्छाम्यह गिरिवनान्तरमाश्रयामि
प्राप्ता ह्यरण्यनिरतेन जिनेन बोधि' ॥ २७४ ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमार. प्रासादतलगत एव ताभिः प्रमदाभिः सार्धं चक्रमन्नुद्विग्नमनाः सन्त्रिभिरीर्यापथैर्विहरति। कतमैस्त्रिभिः? स्थानेन चक्रमेण निषद्यया। स्त्यानमिद्धपरिवर्जितः उपरिप्रासादतलगतोऽष्टम्या भूमौ स्थितः। सोऽर्धरात्रकालसमये अश्रोषीत्—अन्तरीक्षाच्छुद्धावासकायिका देवता बुद्धस्य वर्णं भाषमाणा गच्छन्ति, विस्तरेण धर्मस्य सघस्य वर्णं भाषमाणा गच्छन्ति। श्रुत्वा च राष्ट्रपाल पुण्यरश्मी राजकुमारः F 46 सहृष्टरोमकूपजातः अश्रु निपातयति। स सवेगजातोऽञ्जलिं कृत्वा तां देवता गाथाभिरध्यभाषत—

मयि करुण जनित्वा देवता दुःखितेऽस्मिन्
यदि न कुरुत मन्यु किंचिदेवाभिपृच्छे।
कस्य गुण वदन्तो गच्छेतात्रान्तरीक्षे
सुखितमिह मनो मे वाक्यमेत निशाम्य ॥ २७५ ॥

अथ खलु राष्ट्रपाल ता देवताः पुण्यरश्मिराजकुमारं गाथाभिरध्यभाषन्त—

श्रवणमुपगतस्ते किं न बुद्धः कुमार
शरणमशरणाना नाम सिद्धार्थबुद्धिः।
परचरिकुशलोऽसौ पुण्यप्रज्ञागुणाढ्यो
दशनियुतसहस्राध्यायिना तस्य सवः ॥ २७६ ॥

पुण्यरश्मिराह—

अहमपि जिन द्रक्ष्ये कीदृश तस्य रूप
वदत अपि च सर्वे कीदृशो चास्य वर्णः।
अहमपि परिपृच्छे कीदृशी बोधिचर्या
भवति यथ चरन् वै सर्वसत्त्वैकनाथः ॥ २७७ ॥

अथ खलु ता देवताः पुण्यरश्मिं राजकुमार गाथाभिरध्यभाषन्त—

स्निग्धरुचिरकेशा दक्षिणावर्तजाता
गिरितटमिव हैम शोभते चास्य चोष्णि।
गगन इव च शून्यो भासते चास्य ऊर्णा
स्फटिकमणिविशुद्धा दक्षिणा नाभि जाता ॥ २७८ ॥

भ्रमरगणविशुद्धा नेत्र नीलोत्पलाभा
सिंहहनु नरेन्द्रो बिम्बओष्ठः स्वयंभूः।
सृजति च सहस्र वै रश्मिकोटीरनन्तान्
स्फुरति च त्रिसहस्रान् दुर्गती. शोषयंश्च ॥ २७९ ॥

समसहितसुवृत्ता दन्त चित्र सुशुक्ला
हिमरजतविशुद्धा विंशति द्वेगुणास्य।
जिनवरप्रवरस्य तस्य दंष्ट्राश्चतस्रः
स्वकमुखप्रतिच्छादा तस्य जिह्वा प्रभूता ॥ २८० ॥

F 47 गिरि वरसहितार्था तस्य प्रह्लादनीया
सहित अकुटिला च ब्रह्मघोषा सुयुक्ता।
तूर्यशतसहस्रैर्वाग्जिनस्यार्हतुल्या
विमतिशमकरी सा तोषणी अर्थिकानाम् ॥ २८१ ॥

अविकलगुणचित्रा बोधिअङ्गानुकूला
हारशतसहस्रा गुम्फिता धर्ममाला।
तूर्यरतिविघुष्टा देवतागीतरम्या
अमररुचिखरा वै ह्लादनी वाग्जिनस्य ॥ २८२ ॥

किन्नरकलविङ्काकोकिलाचक्रवाका
बर्हिणकलहसाघोष कोनालकानाम्।
ब्रह्मरुतनिर्घोषा किन्नराणा स्वराङ्गा
अखलितमनवद्या सर्वअर्थानुबोधा ॥ २८३ ॥

चित्रस्फटिकश्लक्ष्णा पण्डिताना मनापा
चोदनी विनयनीया बोधनी प्रेमणीया।
परचरिमनुकूला तोषणी पृच्छमाना
इमगुण वचना चैतस्य धर्मेश्वरस्य ॥ २८४ ॥

कम्बुरुचिर ग्रीवा शान्तसवृत्तस्कन्धः
दीर्घपरिघ बाहू तस्य सप्तोत्सदाङ्गम्।
कर रुचिरसुवृत्ता दीर्घवृत्ताङ्गुलीकाः
तपितकनकवर्णं तस्य गात्र जिनस्य ॥ २८५ ॥

रोम परिणताश्च दक्षिणो चैकजाता
नाभि निखिल दुर्गा गुह्यकोशो हयो वा।
ऊरु गजकरो वा एणजङ्घः स्वयभूः
करतल सुविचित्रा स्वस्तिकाश्चक्रचित्राः ॥ २८६ ॥

गजपतिगतिगामी सिंहविक्रान्तगामी
वृषभललितगामी इन्द्रयष्टिप्रवृद्धः।
गगनकुसुमवृष्टिः पुष्पछत्रा भवन्ति
व्रजतिमनुव्रजन्ति धर्म एतेऽद्भुतस्य ॥ २८७ ॥

लाभ अथ अलाभे सौख्यदुःखे जिनस्य
अयशसि यश एव निन्दशसासु चैवम्।
जलरुहमिव तोयै. सर्वतो नोपलिप्तः
एवमिह नृसिंहो नास्ति सत्त्वः समोऽस्य ॥ २८८ ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारः बुद्धस्य वर्णं श्रुत्वा, विस्तरेण धर्मस्य सघस्य वर्णं श्रुत्वा, तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातोऽभूत्। अथ खलु राष्ट्रपाल पुष्परश्मे राजकुमारस्यैतदभवत्–यादृशः सबुद्धो भगवान्, यादृशी चास्य सघसपत्, यादृशश्च तेन धर्मः साक्षात्कृतः, यादृशी चास्य शिष्यसपत्, यथा विषयसमवधानश्च

ससारः, यथाकृतज्ञश्च ससारः, यथाकृतज्ञाश्च बालपृथग्जनाः, यथा विषमा च सत्कायदृष्टिः, यथा बह्वादीनवश्च गृहावास॰, यथा बहुदोषाश्च कामाः, यथा गर्हितश्च पण्डितैः प्रमादः, यथा समोह चाविद्यान्धकारम्, यथा दु प्रतिवेधाश्च सस्काराः, यथा दुर्दम चित्रम्, यथा गम्भीर नामरूपम्, यथानास्वाद षडायतनम्, यथा दु खविपाकश्चापरिज्ञातः स्पर्शः, यथा बह्वादीनवा वेदनाः, यथा गाढबन्धना तृष्णा, यथा दु.प्रतिनिःसरण चोपादानम्, यथानार्या भवतृष्णा, भवे सति यथा दु खसमुच्छेद्या च जातिः, यथा विकारकरी च जरा, यथा विलोपकारकश्च व्याधिः, यथा निरनुरक्त च मरणम्, यथाल्पास्वादा च प्रवृत्तिः, यथा बह्वादीनवा च भवाभिनिर्वृत्तिः, यथा रमणीय च तथागतशासनम्, नेद शक्य कामदासेन क्लेशसमोहितेन चित्तखिलेन प्रमादाभिरतेन बालमध्यगतेनायोनिशश्चित्तेन ससाररक्तचित्तेन दुर्जनमध्यगतेन न शक्य सुगतिपन्थानमपि विशोधयितु कुतः पुनरनुत्तरा सम्यक्सबोधिमभिसबोद्धुम्। तस्यैतदभूत्—यन्न्वहमित एव प्रासादात्प्राङ्मुखः प्रपतेयम्, मा मे द्वारेण निष्क्रमतो ज्ञातिसघोऽन्तराय कुर्यात्॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारो येन भगवान् सिद्धार्थबुद्धिस्तथागतस्तन्मुखस्ततः प्रासादादात्मानमुत्सृष्टवान्, एव च भाषते स्म—सचेत्स तथागतः सर्वं जानाति सर्वं पश्यति, समन्वाहरतु मा तथागतः। अथ खलु राष्ट्रपाल सिद्धार्थबुद्धिस्तथागतोऽर्हन् सम्यक्सबुद्धो दक्षिणपाणिं प्रसार्य प्रभा प्रामुञ्चत्, यया पुण्यरश्मी राजकुमारः स्पृष्टोऽभूत्। तस्याश्च प्रभायाः शतसहस्रपत्र पद्म शकटचक्रप्रमाणमात्र प्रादुर्भूतम्। तस्माच्च पद्मात् रश्मिशतसहस्राणि निश्चरन्ति स्म, महाश्चावभासोऽभूत्, येनावभासेन पुण्यरश्मी राजकुमार॰ स्फुटोऽभूत्। अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तस्मिन् पद्मे स्थित्वा येन स भगवान् सिद्धार्थबुद्धिस्तथागतोऽर्हन् सम्यक्सबुद्धः, तेनाञ्जलिं प्रणम्य नमो बुद्धायेत्युदानमुदानयति स्म॥

F 49 अथ खलु राष्ट्रपाल तेन सिद्धार्थबुद्धिना तथागतेन सा प्रभा प्रतिसहृता। स च कुमारस्तस्य भगवत. पादमूले छिन्नपादप इव प्रपतितः शतसहस्रकृत्वस्तथागत वन्दते स्म॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्त भगवन्त गाथाभिरध्यभाषत—

मया चिरादद्य हि वैद्यराज. कृच्छ्रादवाप्तोऽद्य चिरातुरेण।
आचक्ष्व॰मे नाथ कथ स्थितोऽह लाभी भवेय सुगतस्य शासने॥ २८९॥
श्रुतो मया नायक अप्रमादो निशाम्य रात्रौ दिवि देवताभ्यः।
श्रुत्वा च सविग्न हि आगतोऽह कथ नराणा भवते प्रमादः॥ २९०॥
प्रनष्टमार्गस्य भवाद्य देशिको जात्यन्धभूतस्य भवाद्य चक्षुः।
महाप्रपातादिह मा समुद्धर श्रद्धाकरा कारुणिका चिकित्सका॥ २९१॥
दरिद्रभूतस्य कुरुष्व सग्रह बद्धस्य मोक्ष कुरु मेऽद्य नाथ।
ससशयेभ्यो विमतिं च छिन्द चर्यां च मे व्याकुरु बोधिमार्गे॥ २९२॥

तीर्थं च संदर्शय उद्यतो मे दीप कुरुष्वापि ममान्धकारे ।
व्रणीकृत मा हि कुरुष्व निर्व्रण शल्य च मे उद्धर वैद्यराज ॥ २९३ ॥
विमोच्य मा दुर्गतिसंकटात्त्व भवोपलम्भग्रहण निकृन्त ।
संतार मा शोकमहौघपारम् अष्टाङ्गमार्गेण महापथेन ॥ २९४ ॥
परीत्तमायुः क्षयधर्मि जीवित बह्वन्तराय कुशल भवत्स्वपि ।
पुण्यस्य सिध्यत्यचिराद्विपाक लब्धक्षणो मेऽद्य वदैकनिश्चयम् ॥ २९५ ॥
एतद्धि मे व्याकुरु लोकनाथ स्याद्बोधिसत्त्वो हि यथाप्रमत्त. । F 50
यथा चरन्नुत्तमबोधिचारिका प्रमोचयेय भवबन्धनाज्जगत् ॥ २९६ ॥

अथ खलु राष्ट्रपाल सिद्धार्थबुद्धिस्तथागत पुण्यरश्मे राजकुमारस्याध्याशय विदित्वा विस्तरेण बोधिचर्यां संप्रकाशयति, य श्रुत्वा पुण्यरश्मिना राजकुमारेण विमोक्षा नाम धारणी प्रतिलब्धा, पञ्चाभिज्ञाः प्रतिलब्धाः । स वैहायसे स्थित्वा पुष्पाण्यभिनिर्माय त तथागतमभ्यवकिरति स्म, अभिप्रकिरति स्म ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तस्मादन्तरीक्षादवतीर्य त भगवन्त सिद्धार्थबुद्धिं तथागतं गाथाभिरभ्यष्टावीत्–

वन्दामि ते कनकवर्णनिभा वरलक्षणा विमलचन्द्रमुखा ।
वन्दामि ते असमज्ञानधरा सदृशो न तेऽस्ति त्रिभवे विरज. ॥ २९७ ॥
मृदु चारु स्निग्ध शुभ केश जिना गिरिराजतुल्य तव चोष्णिरिह ।
नोष्णीषमीक्षितु तवास्ति समो विभ्राजते भ्रुवि वरेऽपि तवोर्णं मुने ॥ २९८ ॥
कुन्देन्दुशङ्खहिमशुभ्रनिभा नीलोत्पलाभशुभनेत्रवरा ।
कृपयेक्षसे जगदिद हि यया वन्दामि ते विमलनेत्र जिना ॥ २९९ ॥
जिह्वा प्रभूत तनु ताम्रनि[भा] वदन च छादयसि येन स्वकम् ।
धर्मं वदन् विनयसे च जगत् वन्दामि ते मधुरस्निग्धगिरम् ॥ ३०० ॥
दशना शुभाः सुदृढ वज्रनिभाः त्रिंशद्दशाप्यविरला. सहिताः ।
कुर्वन् स्मित विनयसे च जगत् वन्दामि ते मधुरसत्यकथा ॥ ३०१ ॥
रूपेण चाप्रतिसमोऽसि जिना प्रभया च भासयसि क्षेत्रशतान् । F 51
ब्रह्मेन्द्रपाल जगतो भगवन् जिह्मीभवन्ति तव ते प्रभया ॥ ३०२ ॥
एणेयजङ्घ भगवन्न समा गजराजबर्हिमृगराजगतेः ।
ईक्षन् व्रजस्यपि युग भगवन् सकम्पयन् धरणिशैलतटम् ॥ ३०३ ॥
कायश्च लक्षणचितो भगवन् श्लक्ष्ण च्छवी कनकवर्ण तव ।
नेक्षन् जगद् व्रजति तृप्तिमिद रूप तवाप्रतिमरूपधर ॥ ३०४ ॥
त्व पूर्व कल्पशतचीर्णतपा त्व सर्वत्यागदमदानरत. ।
त्व सर्वसत्त्वकृपमैत्रमना वन्दामि ते परमकारुणिक ॥ ३०५ ॥

त्व दानशीलनिरत. सतत त्व क्षान्तिवीर्यनिरतः सुदृढम्।
त्व ध्यानप्रज्ञप्रभतेजधरो वन्दामि ते असमज्ञानधर ॥ ३०६ ॥
त्व वादिशूर कुगणिप्रमथि त्व सिंहवन्नदसि पर्षदि च।
त्व वैद्यराज त्रिमलान्तकरो वन्दामि ते परमप्रीतिकर ॥ ३०७ ॥
वाक्कायमानसविशुद्ध मुने त्रिभवेष्वलिप्त जलपद्ममिव।
त्व ब्रह्मघोष कलविङ्करवा वन्दामि ते त्रिभवपारगतम् ॥ ३०८ ॥
मायोपम जगदिद भवता नटरङ्गस्वप्नसदृश विदितम्।
नात्मा न सत्त्व न च जीवगति धर्मा मरीचिदकचन्द्रसमाः ॥ ३०९ ॥
शून्याश्च शान्त अनुत्पादनय अविजानदेव जगदुद्भ्रमति।
तेषामुपायनययुक्तिशतैरवतारयस्यपि कृपालुतया ॥ ३१० ॥
F 52 रागादिभिश्च बहुरोगशतैः सतापित सततमीक्ष्य जगद्।
वैद्योत्तमो विचरसेऽप्रतिम परिमोचय सुगत सत्त्वशतान् ॥ ३११ ॥
जातीजरामरणशोकहत प्रियविप्रयोगपरिदेवशतैः।
सततातुर च जगदीक्ष्य मुने परिमोचयन् विचरसे कृपया ॥ ३१२ ॥
रथचक्रवद्भ्रमति सर्वजगत् तिर्यक्षु प्रेतनिरये सुगतौ।
मूढा अदेशिक अनाथगता. तेषा प्रदर्शयसि मार्गम् ॥ ३१३ ॥
ये ते बभूव पुरिमाश्च जिना धर्मेश्वरा जगति चार्थकरा.।
अयमेव तैः प्रकथितोऽर्यपथो य देशयस्यपि विभोऽप्रतिम ॥ ३१४ ॥
स्निग्ध ह्यकर्षय मनोज्ञ वर ब्रह्माधिक परमप्रीतिकरम्।
गन्धर्वकिन्नरवराप्सरसामभिभूय ता गिरमुदाहरसे ॥ ३१५ ॥
सत्यार्जवक्षयमुपायनयैः परिशोधिता गिरमनन्तगुणाम्।
श्रुत्वा हि या नियुतसत्त्वशता यानत्रयेण जिन यान्ति शमम् ॥ ३१६ ॥
तव पूजया सुखमनेकविध दिव्य लभन्ति मनुजेषु तथा।
आढ्यो महाधन महाविभवो भवते जगद्धितकरो नृपति ॥ ३१७ ॥
बलचक्रवर्त्यपि च द्वीपपति. जगदावृणोति दशभिः कुशलैः।
रत्नानि सप्त लभत सुशुभा त्वयि सप्रसादजनकोऽप्रतिम ॥ ३१८ ॥
ब्रह्मापि शक्र अपि लोकपतिः भवते च सतुषितदेवपतिः।
परिनिर्मितोऽपि च सुयामपतिः त्वत्पूजया भवति चापि जिनः ॥ ३१९ ॥
F 53 एवं ह्यमोघ तव पूज कृता सदर्शन श्रवणमप्यसमम्।
भवते जगद्विविधदुःखहर. स्पृशते पर पदवर ह्यजरम् ॥ ३२० ॥
मार्गज्ञ मार्गकुशला भगवन् कुपथान्निवारयसि लोकमिमम्।
क्षेमे शिवे विरज आर्यपथे प्रतिष्ठापयस्यपि जगद्भगवन् ॥ ३२१ ॥

पुण्याधिकस्य तव पुण्यनिधेः सततारक्षया भवति पुण्यक्रिया ।
बहुकल्पकोटिषु न याति क्षयं यावन्न संस्पृशति बोधिवराम् ॥ ३२२ ॥
परिशुद्ध क्षेत्र लभते रुचिरं परनिर्मिताभ सद प्रीतिकरम् ।
शुद्धाश्च कायवचसा मनसा सत्त्वा भवन्त्यपि च क्षेत्रवरे ॥ ३२३ ॥
इत्येवमादिगुण नैकविधान् लभते जिनार्चनकृतान् मनुजः ।
स्वर्गापवर्ग मनुजेषु सुखं भवते च पुण्यनिधि सर्वजगे ॥ ३२४ ॥
कीर्तिर्यशश्च प्रसृत विपुल तव सर्वदिक्षु बहुक्षेत्रशतान् ।
संकीर्तयन्ति सुगता सततं तव वर्णमाल्य पर्षत्सु जिना ॥ ३२५ ॥
विगतज्वरा जगति मोक्षकरा प्रियदर्शना परमकारुणिका ।
शान्तेन्द्रिया शमरता भगवन् वन्दामि ते नरवरप्रवरा ॥ ३२६ ॥
लब्ध्वा अभिज्ञ जिन पञ्च मया गगने स्थितस्तव निशाम्य गिरम् ।
भवितास्मि वीर सुगतो प्रतिमः विभजिष्य धर्मममलं जगतः ॥ ३२७ ॥
स्तुत्वाद्य सर्वगुणपारगतं नरदेवनागमहित सुगतम् ।
पुण्यं यदर्जितमिदं विपुलं जगदाप्नुयादपि च बुद्धपदम् ॥ ३२८ ॥

अथ खलु राष्ट्रपाल राजा अर्चिष्मांस्तस्या रात्र्या अत्ययेनाश्रौषीत्कुमारस्यान्तःपुरे रुदितशब्दम् । श्रुत्वा च शीघ्रं त्वरमाणरूपो येन रतिप्रधानं नगरं तेनोपसंक्रामत् । उपसंक्रम्यैतदवोचत्-किं भवन्तो रुदन्ति? ता अवोचन्-पुण्यरश्मी राजकुमारो न दृश्यते । अथ खलु राष्ट्रपाल राजा अर्चिष्मान् कुमारस्यार्थे छिन्नपादप इव धरणीतले प्रपतितः । स उत्थाय धरणीतलात् सहस्रशश्च तन्नगरं परिचरति रुदमानः । अथ खलु राष्ट्रपाल या तस्मिन्नगरे नगरदेवता सा राजानमर्चिष्मन्तमेतदवोचत्-गतो महाराज कुमारः पूर्वस्मिन् दिग्भागे सिद्धार्थबुद्धिं तथागतं दर्शनाय वन्दनाय पर्युपासनाय ॥ F 54

अथ खलु राष्ट्रपाल राजा अर्चिष्मान् कुमारस्यान्तःपुरेण सार्धं चतुरशीतिभिः प्राणकोटिनियुतशतसहस्रैर्येन पूर्वो दिग्भागस्तेनोपजगाम । येन सिद्धार्थबुद्धिस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रान्तः । उपसंक्रम्य तस्य भगवतः पादौ शिरसाभिवन्दित्वा एकान्तेऽतिष्ठत् । एकान्तस्थितश्च राजा अर्चिष्मान् भगवन्तमाभिर्गाथाभिरभ्यष्टावीत्-

वन्दामि गुणज्ञानसागर नरवीर
यस्य नास्ति समः कुतोऽधिकस्त्रिभवेऽस्मिन् ।
देवेन्द्रासुरराजसत्कृत वरसत्त्व
तृप्तिं नैति जनो निरीक्षतस्तव रूपम् ॥ ३२९ ॥
द्वात्रिंशत्तव कायलक्षणा सुविशुद्धा
मेरुर्वा वररत्नचित्रितः परिशुद्धः ।
श्लक्ष्णं काञ्चनवर्णसंनिभं जिनकान्तं
वन्दामि प्रियरूपदर्शन मुनिकायम् ॥ ३३० ॥

कल्पानचिन्त्य शताश्च कोटियो
    व्रत चीर्णा बुद्धकोटिशताश्च सत्कृता बहुकल्पान् ।
यष्टा यज्ञशता अचिन्तियापरिमाणा
    कायस्तेन तवाभिराजते अभिरूप· ॥ ३३१ ॥
दानशीलसमाधिप्रज्ञयापि च क्षान्त्या
    वीर्यध्यानमुपायशोधित तव रूपम् ।
चन्द्रार्कमणिविद्युतप्रभा न विराजि
    शक्रब्रह्मप्रभा न भासते पुरतस्ते ॥ ३३२ ॥
रूप दर्शयते मनोरम जगदर्थे
    प्रतिभासोदकचन्द्रसंनिभ यथ माया ।
सर्वासु च दिक्षु दृश्यते जिनकायो
    नो चा रूपप्रमाणु दृश्यते सुगतानाम् ॥ ३३३ ॥
F 55 तुषितेषु कचिदेव दृश्यसे निवसन्त्व
    व्यूढमानश्च पुन सुपाण्डरगजभूत ।
मातु कुक्षिगतश्च दृश्यसेऽपि च वीर·
    सर्वत्रानुगतो महामुने नभतुल्य ॥ ३३४ ॥
जातिं संदर्शयसे कचिद्भवान् दिशतासु
    गच्छन् सप्त पदानि दृश्यसे कचिदुर्व्याम् ।
ज्येष्ठोऽहं सनरामरे जगे अतिदेवो
    मोचिष्ये जग दुःखसागराद्गिर मुञ्चन् ॥ ३३५ ॥
धर्मसंशयु नास्ति ते मुने कचिदेव
    शिक्षा चापि च लोक दृश्यते लिपिज्ञाने ।
शान्त ध्यानसमाधिगोचरमनुप्राप्त
    स्त्रीणा मध्यगतश्च दृश्यसे कचिदेव ॥ ३३६ ॥
त्यक्त्वा मातपिता महीतले प्रमदाश्च
    ज्ञातीन् शोकहतान् विमूर्च्छितान् विरुवन्त· ।
निष्क्रान्तो वनवासमीक्ष्यसे पदमेक
    देवाकोटिशतैः परिवृतो वरसत्त्वः ॥ ३३७ ॥
मारास्ते चतुरोऽपि निर्जिताश्चिरकाल
    मारान् धर्षयमाण दृश्यतेऽपि च क्षेत्रे ।
चक्र वर्तयसेऽप्यचिन्तिय पुरिमेण
    चक्र वर्तयमान दृश्यसे कृपया त्वम् ॥ ३३८ ॥

नित्य शाश्वतदृष्टिसज्जित जगदीक्ष्य
निर्वाण्य इति वाच भाषसे परिपन्मु ।
संसाराभिरत जगत्सततमीक्ष्य
शान्ता शीतगतिं च निर्वृतिं वदसि त्वम् ॥ ३३९ ॥
पुण्यज्ञानमुपायप्रज्ञतो न समस्ते
स्फुरसे कायप्रभाय त्व मुने बहुक्षेत्रान् ।
भाषन्ते तव वर्ण नायका दिशतासु
वन्दे त्वामसमन्तगोचर मुनिराजम् ॥ ३४० ॥
वन्दामोऽपि च धर्मतामखिलप्राप्त
सर्वसत्त्वक्रियासु दृश्यसे यथ माया ।
न च तेऽस्त्यागमनं क्वचिद्गमनं वा
मायाधर्म गति प्रतिष्ठित अभिवन्दे ॥ ३४१ ॥
साधु त्व नरवीर भाषसे वरमार्गं
बोधिर्येन वरा ह्यवाप्यते जगदर्थे ।
एतामप्यहमाशु धर्मतामनुबुद्ध्वा
देशेय नरवीर धर्मता जगदर्थे ॥ ३४२ ॥
सर्वज्ञ विगतज्वर नरवीर
यस्य नास्ति समः कुतोऽधिकस्त्रिभवेऽस्मिन् । 8 56
स्तुत्वा पुण्यमुपार्जितं मया यदिह तेन
शान्ता बोधिवरामनुत्तरां स्पृशतु लोकः ॥ ३४३ ॥

अथ खलु राष्ट्रपाल स तथागतः सिद्धार्थबुद्धिः राज्ञोऽर्चिष्मतोऽध्याशयं विदित्वा तथा धर्मं देशयामास यथा सर्वे अवैवर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तं भगवन्तं सिद्धार्थबुद्धिं तथागतमेतदवोचत्–अधिवासयतु भगवानस्माकं नगरं क्षोभक्तेन । अधिवासयति च भगवान् पुण्यरश्मे राजकुमारस्य तूष्णीभावेनानुकम्पामुपादाय ॥

अथ खलु पुण्यरश्मी राजकुमारस्तौ मातापितरौ ताश्च प्रमदा आमन्त्रयति स्म–अनुमोदयन्तु भवन्तः सर्वे सहिताः सर्वे समग्राः । यथालंकृतं रतिप्रधानं नगरं तथागतस्य निर्यातयाम्यनपेक्षः । तैरेकस्वरेणानुमोदितम् ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारो यथालंकृतं रतिप्रधानं नगरं तथागताय निर्यातयति स्म अनपेक्षः । पञ्चरससशतव्यूहेन च भोजनेन तं तथागतं प्रतिपादयति स्म सार्धं भिक्षुसंघेन । सर्वेषां तेषां भिक्षूणां सप्तरत्नचितान् विहारान् कारयामास मणिचक्रमान् प्रज्ञप्तानुपरि च रत्नजालवितानविततान् वामदक्षिणेन पुष्पवृक्षसुपरिनिष्ठितान् । पुण्डरीक-

पुष्करिण्युपशोभितान्युभयतो मुखनिर्मलदूष्यशतसहस्रप्रज्ञप्तानि शय्यासनानि । एकैकस्य च भिक्षोरभिवन्द्य चीवरो दीयते स्म एकैक । अन्योन्यानि चीवराण्यनुप्रदीयन्ते दिवसे दिवसे । स त्रिभिर्वर्षकोटिभि॰ स्त्यानमिद्ध नावक्रामितवान्, नात्मप्रेम कृतवान्, बुद्धपूजा प्रति नान्यमनसिकार॰ । एतस्मिन्नन्तरे न कामवितर्कं वितर्कितवान्, न व्यापादवितर्कं न विहिंसावितर्कं न राज्यतृष्णाम् । सर्वथानपेक्षोऽभूत्काये जीविते च, प्रागेवान्यतरस्मिन् बाह्यवस्तुनि॰ । एतस्मिन्नन्तरे यद्भगवता भाषित तत्सर्वमवधारितम्, न च द्विरपि स तथागत॰ पृष्ट । एतस्मिन्नन्तरे न स्नातो न सर्पितैलेन वा गात्र म्रक्षितम्, न पादधावन कृतम्, न क्लान्तसञ्ज्ञोत्पादिता, न जातु निपण्णोऽन्यत्र भक्तपरिभोगार्थमुच्चारप्रस्रावणार्थं च । यस्मिंश्च समये स तथागतः परिनिर्वृतस्तस्मिन् समये लोहितचन्दनस्य चिता कारिता । यत्र स तथागतो ध्मापितस्तस्मिन्नेव च पृथिवीप्रदेशे वर्षशतसहस्र धातूना पूजा कृतवान् । सर्व जम्बूद्वीप सर्वपुष्पै सर्वमाल्यै सर्वगन्धै सर्ववाद्यैर्यावत् सर्वपूजासत्कारान् कृत्वा पश्चाच्चतुर्नवति स्तूपकोट्य॰ प्रतिष्ठापितवान् । ते च स्तूपा सप्तरत्नमय॰ रत्नजालसछन्ना मुक्ताजालवितानविनता॰ । सप्ताना रत्नाना पञ्च पञ्च छत्रशतान्येकैकस्मिन् स्तूपे आरोपितवान् । सर्वत्र च स्तूपे तूर्यशतसहस्राणि निश्चारितवान् । समन्ततश्च जम्बूद्वीपे पुष्पवृक्षान् रोपितवान् । एकैकत्र च स्तूपे दीपस्थालिकाशतसहस्राण्यादीपितवान् । एकैकस्या च दीपस्थाल्या वर्तिसहस्र दीप्यते सर्वगन्धतैलस्य । सर्वगन्धमाल्यविलेपनैश्च पूजामकरोत् । अनेनोपायेन वर्षकोटिं पूजा कृत्वा तत॰ प्रव्रजित । स प्रव्रजित्वा त्रैचीवरिकोऽभवत् । नित्य पिण्डपातचारिकोऽनैषद्यिकः । न जातु पार्श्वं दत्तवान्, न स्त्यानमिद्धमवक्रामितवान् । तेन निरामिषचित्तेन चतस्रो वर्षकोट्यो धर्मदान दत्तम् । न चानेनान्तश साधुकारोऽपि परस्यान्तिकात्प्रतिकाङ्क्षित॰, कुत॰ पुनर्लाभसत्कार । नापि क्लान्तोऽभूद्धर्मश्रवणेन धर्मदेशनया च । तस्य देवता॰ परिचर्या कुर्वन्ति स्म । तस्य चानुशिक्षित्वा सर्वजनपदोऽन्त पुर सर्वपादमूल सर्वसहायाश्च प्रव्रजिता ॥

अथ खलु राष्ट्रपाल शुद्धावासकायिकाना देवपुत्राणामेतदभवत्—पुण्यरश्मेरनुशिक्षमाण॰ सर्वराज्यजनपद॰ प्रव्रजित । अस्माभिस्तस्योपस्थानपरिचर्या कर्तव्या । त्रयाणा रत्नानामुपस्थान कृत भविष्यति । तस्य पुनस्तथागतस्य परिनिर्वृतस्य चतु षष्टिवर्षकोट्य सद्धर्मस्तस्थौ । सर्वस्य पुण्यरश्मिना भिक्षुणा बुद्धसहस्रस्य चैवरूपा पूजा कृताभूत् ॥

स्यात्खलु पुनस्ते राष्ट्रपाल एतर्हि काङ्क्षा वा विमतिर्वा विचिकित्सा वा—अन्य स तेन कालेन तेन समयेनार्चिष्मान् नाम राजाभूत् । न खलु पुनस्त्वयैव द्रष्टव्यम् । तत्कस्य हेतोः ? अमितायु॰ स तथागतस्तेन कालेन तेन समयेनार्चिष्मान्नाम राजाभूत् । स्यात्खलु पुनस्ते राष्ट्रपाल—अन्यः स तेन कालेन तेन समयेन पुण्यरश्मिर्नाम राजकुमारोऽभूत् । न खलु पुनस्त्वयैव द्रष्टव्यम् । तत्कस्य हेतो॰ ? अह स तेन कालेन तेन समयेन पुण्यरश्मिर्नाम राजकुमारोऽभूत् । यापि सा नगरदेवता, अक्षोभ्यस्तथागतोऽभूत् ।

तस्मात्तर्हि राष्ट्रपाल बोधिसत्त्वेन महासत्त्वेनानुत्तरां सम्यक्सबोधिमभिसंबोद्धुकामेन तस्य पुण्यरश्मिराजकुमारस्यानुशिक्षितव्यमध्याशयप्रतिपत्त्या प्रियाप्रियपरित्यागितया अप्रमाद-चर्यया–एवं दुःखाभिसंस्कारप्रतिलब्धा मेऽनुत्तरा सम्यक्संबोधिरिति । तत्तेऽनभियुक्ता लाभसत्कारश्लोकगुरुका ज्ञात्यध्यवसिता मानहता लाभहतास्तपस्विनो विहन्यन्ते, लाभहेतो. शासनाद्दूरीभवन्ति, निरर्थकं प्रव्रजिता श्रमणदूषका बोधिसत्त्वखटुका. कायवाक्चित्तवङ्का· नैमित्तिका वितथप्रतिज्ञा स्वप्रतिज्ञातश्च्युता चीवरपिण्डपातशय्यासनग्लानप्रत्ययभैषज्य-परिष्कारनिमित्तमध्यवसिता. । अह्रीका अनपत्रपा अचारित्रा असद्धर्मप्रसृता गोचरविरहिता बुद्धगोचराद्दूरीभूता बुद्धज्ञानविरहिता मोक्षचित्तविरहिता· बोधिचित्तविरहिता. । तस्मा-त्तर्हि राष्ट्रपाल इममेवरूपं धर्मं श्रुत्वा बोद्धव्यम्–पापमित्राण्युद्युक्तानि न सेवितव्यानि लाभार्थिकानाम् ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

अप्रमेये दशबलचलिते लाभे ज्ञातौ परिगतहृदया ।
हित्वा बोधिं गुणशतनिचितां लाभार्थं ते परकुलनिरता. ॥ ३४४ ॥

ध्वाङ्क्षा दुष्टा ह्रीधृतिरहिता क्षेत्रार्थं ते नमुचिवशगता ।
क्लेशाधीना भवगतिप्रणता भाषन्त्येव वयमपि गुणिन. ॥ ३४५ ॥

कायोऽरण्ये स्मृतिरपि नगरे लाभार्थं ते चरितविकल्पे ।
दूरे मोक्षो नभ इव धरणी दूरं जाह्व भुजगवदेतान् ॥ ३४६ ॥

बुद्धो धर्मो न च प्रियवदता तद्वत्सङ्घो गुणशतभरित. ।
हित्वा स्वर्गं कुपथप्रयाता अष्टविघातैर्भवशतविहता. ॥ ३४७ ॥

श्रुत्वैना मम चारिका समुपदिष्टां F 59
भूताध्याशयतोऽत्र युज्यथा प्रतिपत्त्या ।
दुष्प्राप्य बहुकल्पकोटिभिः क्षणप्राप्ता
तस्मादत्र यथोक्तधर्मतामभियुज्येत् ॥ ३४८ ॥

यो ह्रीच्छेद्वरबोधि बुध्यितु वरयाने
स्मार्यास्तेन महीपते गुणास्तस्य ।
सचिन्त्य यथाभूत योनिश· स्थानव्यमेव
बोधि असङ्ग रिध्यते सुगतानाम् ॥ ३४९ ॥

आर्यं वश निषेवते गुणप्रेक्षी
ज्ञान तत्र उत्पादयेच्छु इवात्र ।
मा एव प्रविजह्य शासन गुणमण्ड
सर्वास्वितगतीषु पञ्चसू यथ बालाः ॥ ३५० ॥

शैलारण्यगुहानिवासिनो भवतेह
तत्रस्थाश्च म आत्म मन्यथा पटपसी ।
आत्मान परिभाषथा सततनित्य-
मनुस्मरन्तो बुद्धकोटि विरागिता पुरिमा ये ॥ ३५१ ॥
काये जीवित तृष्ण उत्सृज अनपेक्षा
धर्मे युज्यत तीव्र गौरव जनयित्वा ।
प्रतिपत्तिश्च मयापि भाषिता इह सूत्रे
पश्चा वोधि न तेषु दुर्लभा इह स्थित्वा ॥ ३५२ ॥
ये युक्ताश्च इहापि हर्षिता जिनयाने
श्रुत्वा युक्त सुदुर्मना भवितारः ।
तस्माद्वै जनयेत शासने अधिमुक्तिं
मा पश्चादनुताप भेष्यथा विचरमाणा. ॥ ३५३ ॥

यश्च पुना राष्ट्रपाल बोधिसत्त्व पञ्चपारमितासु चरेत्, यश्चेह धर्मपर्यायप्रतिपत्त्या सपादयेत्—अहमत्र शिक्षिष्येऽहमत्र सवरे स्थास्यामि । एष पुण्यस्कन्धोऽस्य पुण्यस्कन्धस्य पुरत शततमामपि कला नोपैति सहस्रतमामपि शतसहस्रतमामपि कोटिशतसहस्रतमामपि, सख्यामपि कलामपि गणनामपि उपमामपि उपनिसामपि धृतिपदमपि नोपैति । अस्मिन् खलु पुनर्धर्मपर्याये भाष्यमाणे त्रिंशता नियुताना सदेवमानुषासुरायाश्च प्रजाया अनुत्पदन्तपूर्वाण्यनुत्तरस्या सम्यक्सबोधौ चित्तान्युत्पन्नानि । अवैवर्त्याश्चाभूवन्ननुत्तरस्याः सम्यक्सबोधेः । सप्ताना च भिक्षुसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि ॥

अथ खलु आयुष्मान् राष्ट्रपालो भगवन्तमेतदवोचत्—किंनामाय भगवन् धर्मपर्याय, कथ चैन धारयामि? एवमुक्ते भगवानायुष्मन्त राष्ट्रपालमेतदवोचत्—अमोघप्रतिज्ञाविशुद्ध-
F 60 मिति नाम धारय । सत्पुरुषविक्रीडित बोधिसत्त्वचर्याविनिश्चय नाम धारय । अर्थपारिपूरी च नाम धारय ॥

इदमवोचद्भगवान् । आत्तमना आयुष्मान् राष्ट्रपाल सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन् ॥

इति पुण्यरश्मेः सत्पुरुषस्य पूर्वयोगसूत्ररत्नराज समाप्तम् ॥

आर्यराष्ट्रपालपरिपृच्छा नाम महायानसूत्र समाप्तम् ॥

# श्लोकसूची।

——:०.——

# १३ भैषज्यगुरुवैदूर्यप्रभराजसूत्रम् ।

ओ नम· सर्वज्ञाय । नमो भगवते भैषज्यगुरुवैदूर्यप्रभराजाय तथागताय ॥ G 1

एव मया श्रुतम् । एकस्मिन् समये भगवान् जनपदचर्यां चरमाणोऽनुपूर्वेण येन
वैशालीं(ली) महानगरीं(री) तेनानुप्राप्तोऽभूत् । तत्र खलु भगवान् वैशाल्या विहरति स्म
वाद्यस्वरवृक्षमूले महता भिक्षुसघेन सार्धमष्टभिर्भिक्षुसहस्रै षट्त्रिंशद्भिश्च बोधिसत्त्वसहस्रैः
सार्धं राजामात्यब्राह्मणगृहपतिसहल्या देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्य-
पर्षदा च परिवृत. पुरस्कृतो धर्मं देशयति स्म । अथ खलु मञ्जुश्रीर्धर्मराजपुत्रो
बुद्धानुभावेनोत्थायासनादेकासमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन
भगवास्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्–देशयतु भगवस्तेषा तथागताना नामानि, तेषां
पूर्वप्रणिधानविस्तरविभङ्गम् । वय श्रुत्वा सर्वकर्मावरणानि विशोधयेम पश्चिमे काले पश्चिमे G 2
समये सद्धर्मप्रतिरूपके वर्तमाने सत्त्वानामनुग्रहमुपादाय । अथ भगवान् मञ्जुश्रिये कुमार-
भूताय साधुकारमदात्–साधु साधु मञ्जुश्रीः, महाकारुणिकस्त्व मञ्जुश्री· । त्वमप्रमेया
करुणा जनयित्वा समाधेससे(?) नानाकर्मावरणेनावृताना सत्त्वानामर्थाय हिताय सुखाय देव-
मनुष्याणा च हितार्थाय । तेन हि त्व मञ्जुश्रीः शृणु, साधु च सुष्ठु च मनसि कुरु, भाषिष्ये ।
एव भगवन्, इति मञ्जुश्रीः कुमारभूतो भगवतः प्रत्यश्रौषीत् । भगवास्तस्यैतदवोचत्–

अस्ति मञ्जुश्रीः पूर्वस्मिन् दिग्भागे इतो बुद्धक्षेत्राद् दशगङ्गानदीवालुकासमानि
बुद्धक्षेत्राण्यतिक्रम्य वैदूर्यनिर्भासा नाम लोकधातु· । तत्र भैषज्यगुरुवैदूर्यप्रभो नाम
तथागतोऽर्हन् सम्यक्सबुद्धो विहरति विद्याचरणसपन्न· सुगतो लोकविदनुत्तर· पुरुषदम्य-
सारथिश्च शास्ता देवाना मनुष्याणा च बुद्धो भगवान् । तस्य खलु पुनर्मञ्जुश्रीः भगवतो
भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वं बोधिसत्त्वचारिका चरत इमानि द्वादश महाप्रणि- G 3
धानान्यभूवन् । कतमानि द्वादश महाप्रणिधानानि ? प्रथम तस्य महाप्रणिधानमभूत्–
यदाहमनागतेऽध्वनि अनुत्तरा सम्यक्सबोधिमभिसबुध्येयम्, तदा मम शरीरप्रभया अप्रमेया-
सख्येयापरिमाणा लोकधातवो भ्राजेरंस्तप्येरन् विरोचेरन् । यथा चाह द्वात्रिंशद्भिर्महा-
पुरुषलक्षणै. समन्वागत·, अशीतिभिश्चानुव्यञ्जनैरलकृतदेह., तथैव सर्वसत्त्वा भवेयु· ॥
[ द्वितीय तस्य महाप्रणिधानमभूत्–यदाहमनागतेऽध्वनि अनुत्तरा सम्यक्सबोधिमभिसबु-
ध्येयम्, तदा बोधिप्राप्तस्य च मे काय. अनर्घवैदूर्यमणिरिव अन्तर्बहिरत्यन्तपरिशुद्धो
विमलप्रभासपन्नः स्यात् । विपुलकायस्तदुपमेन श्रिया तेजसा च प्रत्युपस्थितः स्यात् ।
तस्यांशुजालानि रविशशिकरानतिक्रमेयु. । ते च ये केचित् सत्त्वा लोकधातौ जाताश्च, G 4
ये चापि पुरुषाः, ते तमिस्राया रात्रावन्धकारे नानादिश गच्छेयु· । सर्वदिक्षु मम
आभया स्पृष्टाः कुशलानि च ] कर्माणि कुर्वीरन् ॥ तृतीय तस्य महाप्रणिधानमभूत्–

---

1 Text from Gilgit Mss. Vol I

यदाहमनागते तदा बोधिप्राप्तस्य च मे ये सत्त्वा अप्रमेयप्रज्ञोपायबलाधानेन अपरि-
माणस्य सत्त्वधातोरक्षयायोपभोगाय परिभोगाय स्यु.। कस्यचि[त्] सत्त्वस्य केनचिद्
वैकल्य न स्यात् ॥ चतुर्थं तस्य महाप्रणिधानमभूत्—यदाहमनागते.. तदा बोधिप्राप्तोऽह
ये कुमार्गप्रतिपन्नाः सत्त्वाः श्रावकमार्गप्रतिपन्ना प्रत्येकबुद्धमार्गप्रतिपन्नाश्च, ते सत्त्वा अनुत्तरे
बोधिमार्गे महायाने नियोजयेरन् ॥ पञ्चम तस्य महाप्रणिधानमभूत्—यदाहमनागते
तदा बोधिप्राप्तस्य च मे ये सत्त्वा मम शासने ब्रह्मचर्यं चरेयुः, ते सर्वे अखण्ड-
शीला. स्युः सुसंवृता । मा च कस्यचि[त्] शीलविपन्नस्य मम नामधेय श्रुत्वा
कचिद् दुर्गतिगमन स्यात् ॥ षष्ठ तस्य महाप्रणिधानमभूत्—यदाहमनागते...तदा
G 5 बोधिप्राप्तस्य च मे ये सत्त्वा हीनकाया विकलेन्द्रिया दुर्वर्णा जडैडमूका लगा. कुब्जा
श्वित्रा. कुण्डा[1] अन्धा बधिरा उन्मत्ता ये चान्ये शरीरस्थव्याधयः, ते मम नामधेय श्रुत्वा
सर्वे सकलेन्द्रिया. सुपरिपूर्णगात्रा भवेयु ॥ सप्तम तस्य महाप्रणिधानमभूत्—यदाहमनागते
तदा बोधिप्राप्तस्य च मे ये नानाव्याधिपरिपीडिताः सत्त्वा अत्राणा अशरणा भैषज्यो-
पकरणविरहिता अनाथा दरिद्रा दुःखिताः, सचे(त्) तेषा मम नामधेय कर्णपुटे निपतेत्,
तेषा सर्वव्याधय प्रशमेयु, नीरोगाश्च निरुपद्रवाश्च ते स्युर्याव बोधिपर्यवसानम् ॥ अष्टम
G 6 तस्य महाप्रणिधानमभूत्—यदाहमनागते . तदा यः कश्चिन्मातृग्रामो नानास्त्रीदोषशतै
सक्लिष्ट स्त्रीभाव विजुगुप्सित मातृग्रामयोनिं च परिमोक्तुकामो मम नामधेय धारयेत्, तस्य
मातृग्रामस्य न स्त्रीभावो भवेत् याव बोधिपर्यवसानम् ॥ नवम तस्य महाप्रणिधानमभूत्—
यदाहमनागते तदा बोधिप्राप्तोऽह सर्वसत्त्वान् मारपाशबन्धनबद्धान् नानादृष्टिगहन-
सकटप्राप्तान् सर्वमारपाशदृष्टिगतिभ्यो विनिवर्त्य सम्यग्दृष्टौ नियोज्य आनुपूर्व्येण बोधिसत्त्व-
चारिका सदर्शयेयम् ॥ दशम तस्य महाप्रणिधानमभूत्—यदाहमनागते तदा बोधि-
प्राप्तस्य च मे ये केचित् सत्त्वा राजाधिभयभीता, ये वा बन्धनबद्धावरुद्धा. वधार्हा
अनेकमायाभिरुपद्रुता विमानिताश्च कायिकवाचिकचैतसिकदुःखैरभ्याहताः, ते मम नाम-
धेयस्य श्रवणेन मदीयेन पुण्यानुभावेन च सर्वभयोपद्रवेभ्य परिमुच्येरन् ॥ एकादशम
तस्य महाप्रणिधानमभूत्—यदाहमनागते तदा बोधिप्राप्तस्य च मे ये सत्त्वा. क्षुधाग्निना
प्रज्वलिता. आहारपानपर्येष्ट्यभियुक्ता तन्निदान पाप कुर्वन्ति, सचे(त्) ते मम नामधेय
G 7 धारयेयुः, अह तेषा वर्णगन्धरसोपेतेन आहारेण शरीरं सतर्पयेयम् ॥ द्वादशम तस्य महा-
प्रणिधानमभूत्—यदाहमनागते तदा बोधिप्राप्तस्य च मे ये केचित् सत्त्वा वसनविरहिता
दरिद्रा. शीतोष्णदंशमशकैरुपद्रुता रात्रिंदिव दुःखमनुभवन्ति, सचे(त्) ते मम नामधेय
धारयेयु, अह तेषा च वस्त्रपरिभोगमुपसहरेयम्, नानारङ्गै रक्ताश्च कामानुपनामयेयम्,

---

१ The words लग and कुण्ड are so far unknown in Sanskrit lexicons The Chinese source indicates that they mean crooked or hump backed, and lepers

विविधैश्च रत्नाभरणगन्धमाल्यविलेपनवाद्यतूर्यतालावचरैः सर्वसत्त्वाना सर्वाभिप्रायान् परिपूर-
येयम् ॥ इमानि द्वादश महाप्रणिधानानि मञ्जुश्री· भगवान् भैषज्यगुरुवैदूर्यप्रभस्तथागतोऽर्हन्
सम्यक्संबुद्ध· पूर्वं बोधिचारिका चरन् कृतवान् ॥

तस्य खलु पुनर्मञ्जुश्रीः भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य यत् प्रणिधान
यच्च बुद्धक्षेत्रगुणव्यूह तन्न शक्य कल्पेन वा कल्पावशेषेण वा क्षपयितुम्। सुविशुद्ध
तद् बुद्धक्षेत्र व्यपगतशिलाशर्करकठल्यमपगतकामदोषमपगतापायदु·खशब्दमपगतमातृ- G 8
ग्रामम्। वैदूर्यमयी च सा महापृथिवी कुड्यप्राकारप्रासादतोरणगवाक्षजा·लनिर्यूहसतरत्नमयी,
यादृशी सुखावती लोकधातुस्तादृशी। तत्र वैदूर्यनिर्भासाया लोकधातौ द्वौ बोधिसत्त्वौ
महासत्त्वौ तेषामप्रमेयाणामसख्येयाना बोधिसत्त्वाना महासत्त्वाना प्रमुखौ, एकक सूर्यवैरो-
चनो नाम, द्वितीयश्चन्द्रवैरोचनः, यौ तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य
सद्धर्मकोश धारयत·। तस्मात् तर्हि मञ्जुश्री· श्राद्धेन कुलपुत्रेण वा कुलदुहित्रा वा तत्र
बुद्धक्षेत्रोपपत्तये प्रणिधान करणीयम् ॥

पुनरपर भगवान् मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म–सन्ति मञ्जुश्री पृथग्जना·
सत्त्वा·, ये न जानन्ति कुशलाकुशल कर्म। ते लोभाभिभूता अजानन्तो दान दानस्य च
महाविपाकम्, बालाप्रमूर्खा श्रद्धेन्द्रियविकला धनसचयरक्षणाभियुक्ता। न च दान-
सविभागे तेषा चित्त क्रमते। दानकाले उपस्थिते स्वशरीरमासच्छेदने इव वा मनसो G 9
[ दुःख ] भवति। अनेके च सत्त्वाः ये स्वयमेव न परिभुञ्जन्ति, प्रागेव मातापितृभार्या-
दुहितॄणा दास्यन्ति, प्रागेव दासदासीकर्मकराणाम्, प्रागेवान्येषा याचकानाम्, ते
तादृशा· सत्त्वा इतश्च्युत्वा प्रेतलोके उपपत्स्यन्ते तिर्यग्योनौ वा। यैः पूर्वं मनुष्यभूतैः श्रुत
भविष्यति तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयम्, तत्र तेषा यमलोक-
स्थिताना तिर्यग्योनिस्थिताना वा तस्य तथागतस्य नाम सु(स ?)मुखीभविष्यति। सह स्मरण-
मात्रेण अतश्च्युत्वा पुनरपि मनुष्यलोके उपपत्स्यन्ते, जातिस्मराश्च भविष्यन्ति। ते ते
दुर्गतिभयभीता न भूय कामगुणैभिरर्थिका भविष्यन्ति, दानाभिरताश्च भविष्यन्ति दानस्य
च वर्णवादिनः। सर्वमपि परित्यागेनानुपूर्वेण करचरणशीर्षनयन च मासशोणित [ च ]
याचकानामनुप्रदास्यन्ति, प्रागेव अन्य धनस्कन्धम् ॥

पुनरपर मञ्जुश्रीः सन्ति सत्त्वाः ये तथागतानुद्दिश्य शिक्षापदानि धारयन्ति, ते G 10
शीलविपत्तिमापद्यन्ते, दृष्टिविपत्तिमाचारविपत्तिं वा कदाचिदापद्यन्ते। शीलविपन्ना ये
पुनः शीलवन्तो भवन्ति, शील रक्षन्ति, न पुनर्बहुश्रुत पर्येष्यन्ति, न च
तथागतभाषिताना गम्भीरमर्थमाजानन्ति। ये च पुनर्बहुश्रुताः, ते आधिमानिका भविष्यन्ति
मानस्तब्धाः, परेषामीर्ष्यापरायणा सद्धर्ममवमन्यन्ते प्रतिक्षिपन्ति। मारपक्षिकास्ते तादृशा
मोहपुरुषाः स्वय कुमार्गप्रतिपन्नाः। अन्यानि चानेकानि सत्त्वकोटिनियुतशतसहस्राणि
महाप्रपाते प्रपातयन्ति। तेषामेवरूपाणा सत्त्वाना भूयिष्ठेन नरकवासगतिर्भविष्यति। तत्र

यैस्तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयं श्रुत भविष्यति, तेषा तत्र नरके
G 11 स्थिताना बुद्धानुभावेन तस्य तथागतस्य नामधेय सुमुखीभविष्यति । ते ततश्च्युत्वा पुनरपि
मनुष्यलोके उपपत्स्यन्ते सम्यग्दृष्टिसपन्ना वीर्यवन्त कल्याणाशयाः। ते गृहानुत्सृज्य तथागत-
शासने प्रव्रजित्वा आनुपूर्वेण बोधिसत्त्वचारिका परिपूरयिष्यन्ति ॥

पुनरपर मञ्जुश्री· सन्ति सत्त्वा· ये आत्मनो वर्णं भाषन्ते मत्सरिण , परेषामवर्णमुच्चार-
यन्ति । आत्मोत्कर्षकपरपसका सत्त्वा परस्परसत्कृता त्र्यपायेषु बहूनि वर्षसहस्राणि
दु खमनुभविष्यन्ति । ते अनेकवर्षसहस्राणामत्ययेन ततश्च्युत्वा गवाश्वोष्ट्रगर्दभादिषु तिर्य-
G 12 ग्योनिषु उपपद्यन्ते । कशादण्डप्रहारेण ताडिता· क्षुत्तर्षपीडितशरीरा महान्त भार वहमाना
मार्ग गच्छन्ति । यदि कदाचित् मनुष्यजन्मप्रतिलाभ प्रतिलप्स्यन्ते, ते नित्यकाल नीच-
कुलेषु उपपत्स्यन्ते, दासत्वे च परवशगता भविष्यन्ति । यै· पूर्वं मनुष्यभूतैस्तस्य भगवतो
भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेय श्रुत भविष्यति, ते तेन कुशलमूलेन सर्व-
दुःखेभ्यः परिमोक्ष्यन्ते, तीक्ष्णेन्द्रियाश्च भविष्यन्ति पण्डिता व्यक्ता मेधाविनश्च । कुशल-
पर्येष्ट्यभियुक्ता नित्य च कल्याणमित्रसमवधान लप्स्यन्ते, मारपाशमुच्छिद्य अविद्याण्ड-
G 13 कोश भिन्दन्ति, क्लेशनदीमुच्छोषयन्ति, जातिजराव्याधिमरणभयशोकपरिदेवदुःखदौर्मनस्यो-
पायासेभ्यः परिमुच्यन्ति ॥

पुनरपर मञ्जुश्रीः सन्ति सत्त्वाः ये पैशुन्याभिरताः सत्त्वाना परस्पर कलहविग्रह-
विवादान् कारापयन्ति । ते परस्पर विग्रहचित्ता सत्त्वा नानाविधमकुशलमभिसंस्कुर्वन्ति
कायेन वाचा मनसा, अन्योन्यमहितकामा नित्य परस्परमनर्थाय पराक्रामन्ति । ते च
वनदेवतामावाहयन्ति वृक्षदेवता गिरिदेवता च । श्मशानेषु पृथग् भूतानावाहयन्ति ।
तिर्यग्योनिगताश्च प्राणिनो जीविताद् व्यवरोपयन्ति । मासरुधिरभक्षान् यक्षराक्षसान्
पूजयन्ति । तस्य शत्रोर्नाम वा शरीरप्रतिमा वा कृत्वा तत्र घोरविद्या साधयन्ति काखोर्द-
G 14 वेतालानुप्रयोगेण जीवितान्तराय वा शरीरविनाश वा कर्तुकामाः । यै· पुनस्तस्य भगवतो
भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेय श्रुत भविष्यति, तेषा न शक्य केनान्तराय
कर्तुम् । सर्वे च ते परस्परं मैत्रचित्ता हितचित्ता अव्यापन्नचित्ताश्च विहरन्ति स्वकस्वकेन
परिग्रहेण सतुष्टा· ॥

पुनरपर मञ्जुश्री· एताश्चतस्रः पर्षदो भिक्षुभिक्षुण्युपासकोपासिकाः, ये चान्ये
श्राद्धाः कुलपुत्रा वा कुलदुहितरो वा आर्याष्टाङ्गैः समन्वागता उपवासमुपवसन्ति, एक-
वार्षिक वा त्रैमासिकं वा शिक्षापद धारयिष्यन्ति, येषामेवप्रणिधानमेवमभिप्रायम्—अनेन
वय कुशलमूलेन पश्चिमाया दिशि सुखावत्यां लोकधातौ उपपद्येम यत्रामितायुस्तथागतः ।
यै· पुनस्तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेय श्रुत भविष्यति, तेषा
मरणकालसमये अष्टौ बोधिसत्त्वा ऋद्ध्यागता उपदर्शयन्ति, ते तत्र नानारङ्गेषु पद्मेषूप-
पादुका· प्रादुर्भविष्यन्ति । केचित् पुनर्देवलोके उपपद्यन्ते । तेषा तत्रोपपन्नाना पूर्वकं

कुशलमूल न क्षीयते, न च दुर्गतिगमन भविष्यति। ते ततश्च्युत्वा इह मनुष्यलोके G 15
उपपत्स्यन्ते। राजानो भविष्यन्ति चतुर्द्वीपेश्वराश्चक्रवर्तिनः। ते अनेकानि सत्त्वकोटीनियुत-
शतसहस्राणि दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयिष्यन्ति। अपरे पुन क्षत्रियमहाशाल-
कुलेषु ब्राह्मणमहाशालकुलेषु प्रभूतधनधान्यकोशकोष्ठागारसमृद्धेषु च कुलेषु उपपत्स्यन्ते।
ते रूपसपन्नाश्च भविष्यन्ति, ऐश्वर्यसपन्नाश्च भविष्यन्ति, परिवारमपन्नाश्च भविष्यन्ति। यश्च
मातृग्राम. तस्य भगवतो भैपज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेय श्रुत्वा च उद्ग्रहीष्यति,
तस्य स एव पश्चिमः स्त्रीभावः प्रतिकाङ्क्षितव्यः॥

अथ खलु मञ्जुश्री कुमारभूतो भगवन्तमेतदवोचत्—अह भगवन् पश्चिमे काले
पश्चिमे समये तेषा श्राद्धाना कुलपुत्राणा कुलदुहितॄणा च तस्य भगवतो भैपज्यगुरुवैदूर्य-
प्रभस्य तथागतस्य नामधेय श्रावयिष्यामि, अन्तशः स्वप्नान्तरमपि बुद्धनामक कर्णपुटेषु G 16
उपसहारयिष्यामि। ये इद सूत्ररत्नं धारयिष्यन्ति वाचयिष्यन्ति देशयिष्यन्ति पर्यवाप्स्यन्ति,
परेभ्यो विस्तरेण सप्रकाशयिष्यन्ति, लिखिष्यन्ति लिखापयिष्यन्ति, पुस्तकगत वा कृत्वा
सत्करिष्यन्ति नानापुष्पधूपगन्धमाल्यविलेपनछत्रध्वजपताकाभिः, तत् पञ्चरङ्गिकवस्त्रै
परिवेष्टय शुचौ प्रदेशे स्थापयितव्यम्। यत्रैव इद सूत्रान्त स्थापित भवति, तत्र चत्वारो
महाराजानः सपरिवाराः, अन्यानि च अनेकानि देवकोटिनियुतशतसहस्राणि उपसक्रमि-
ष्यन्ति। तत्रेद सूत्र प्रचरिष्यति। ते च भगवन् इद सूत्ररत्न प्रकाशयिष्यन्ति। तस्य
भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरविभाग च तस्य तथा-
गतस्य नामधेय धारयिष्यन्ति, तेपा नाकालमरण भविष्यति। न तेषा केनचित् शक्य- G 17
मोजोऽपहर्तुम्, ह्रत वा ओज. पुनरपि प्रतिसहरति। भगवानाह—एवमेतद् मञ्जुश्रीः,
एवमेतत्, यथा वदसि। यश्च मञ्जुश्रीः श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्य तथागतस्य
पूजा कर्तुकामः, तेन तस्य तथागतस्य प्रतिमा कारापयितव्या, सप्त रात्रिंदिवमार्याष्टाङ्गमार्ग-
समन्वागतेन उपवासमुपवसितव्यम्। शुचिना शुचिमाहार कृत्वा शुचौ प्रदेशे [नानापुष्पाणि
संस्तार्य नानागन्धप्रधूपिते नानावस्त्रच्छत्रध्वजपताकासमलकृते तस्मिन् पृथिवीप्रदेशे
सुस्नातगात्रेण शुचिविमलवसनधारिणा निर्मलचित्तेन अकलुषचित्तेन अव्यापादचित्तेन
सर्वसत्त्वेषु मैत्रचित्तेन [उपेक्षाचित्तेन] सर्वसत्त्वानामन्तिके समचित्तेन भवितव्यम्। G 18
नानातूर्यसगीतिप्रवादितेन सा तथागतप्रतिमा प्रदक्षिणीकर्तव्या। तस्य तथागतस्य पूर्वप्रणि-
धानानि मनसि कर्तव्यानि। इद सूत्र प्रवर्तयितव्यम्। य चेतयति, य प्रार्थयति, त
सर्वाभिप्राय परिपूरयति। यदि दीर्घमायुः कामयते, दीर्घायुष्को भवति। यदि भोग
प्रार्थयते, भोगसमृद्धो भवति। यदि ऐश्वर्यमभिप्रार्थयते, तदल्पकृच्छ्रेण प्राप्नोति। यदि
पुत्राभिलाषी भवति, पुत्र प्रतिलभते। ये इह पापक स्वप्न पश्यन्ति, यत्र वायसः स्थितो
भवति दुर्निमित्त वा, यत्र अमङ्गलशत वा स्थित भवति, तैस्तस्य भगवतो भैषज्यगुरुवैदूर्य-
प्रभस्य तथागतस्य पूजा कर्तव्या। सर्वदुःस्वप्नदुर्निमित्तामाङ्गल्याश्च भावाः प्रशमिष्यन्ति। G 19

येषामग्न्युदकविषशस्त्रप्रतापचण्डहस्तिसिंहव्याघ्रऋक्षतरक्षुद्वीपिकाशीविषवृश्चिकशतपददंश-
मशकादिभयं भवति, तैस्तस्य तथागतस्य पूजा कर्तव्या । ते सर्वभयेभ्यः परिमोक्ष्यन्ते ।
येषां चोरभयं तस्करभयम्, तैस्तस्य तथागतस्य पूजा कर्तव्या ॥

पुनरपरं मञ्जुश्रीः ये श्राद्धाः कुलपुत्रा वा कुलदुहितरो वा ये यावज्जीवं त्रिशरण-
मुपगृह्णन्ति, अनन्यदेवताश्च भवन्ति, ये पञ्च शिक्षापदानि धारयन्ति, ये च बोधिसत्त्व-
संवरं चतुर्वर्गशिक्षापदशतं धारयन्ति, ये पुनरपि निष्क्रान्तगृहवासा भिक्षवः, पञ्चाधिके
द्वे शिक्षापदशते धारयन्ति, या भिक्षुण्यः पञ्चशतशिक्षापदानि धारयन्ति, ये च यथापरि-
G 20 गृहीताच्छिक्षासंवरादन्यतराच्छिक्षापदात् भ्रष्टा भवन्ति सचेद् दुर्गतिभयभीताः, तस्य भगवतो
भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयं धारयेयुः, न भूयस्तेषां त्र्यपायगमनदुःखं
प्रतिकाङ्क्षितव्यम् । यश्च मातृग्रामः प्रसवनकाले तीव्रां दुःखां खरां कटुकां वेदनां वेदयति,
या तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयमनुस्मरेत्, पूजां च कुर्यात्,
सा सुखं च प्रसूयते, सर्वाङ्गपरिपूर्णं पुत्रं [च] जनयिष्यति अभिरूपः प्रासादिको
दर्शनीयस्तीक्ष्णेन्द्रियो बुद्धिमान् । स आरोग्यस्वल्पाबाधो भविष्यति, न च शक्यते अमनुष्यै-
स्तस्य ओजोऽपहर्तुम् ॥

अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म—श्रद्दधासि त्वमानन्द पत्तीयसि
G 21 यदहं तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य गुणान् वर्णयि-
ष्यामि ? अथवा ते काङ्क्षा वा विमतिर्वा विचिकित्सा वा अत्र गम्भीरे बुद्धगोचरे ?
अथायुष्मानानन्दो भगवन्तमेतदवोचत्—न मे भदन्त भगवन् अत्र काङ्क्षा वा विमतिर्वा
विचिकित्सा वा तथागतभाषितेषु सूत्रान्तेषु । तत् कस्य हेतोः ? नास्ति तथागतानामपरि-
शुद्धकायवाङ्मनःसमुदाचारता । इमौ भगवन् चन्द्रसूर्यौ एवं महर्द्धिकौ एवं महानुभावौ
पृथिव्यां प्रपतेताम्, स सुमेरुर्वा पर्वतराजः स्थानाच्चलेत्, न तु बुद्धानां वचनमन्यथा
भवेत् । किं तु भदन्त सन्ति सत्त्वाः श्रद्धेन्द्रियविकलाः । इदं बुद्धगोचरं श्रुत्वा एवं वक्ष्यन्ति—
G 22 कथमेतन्नामधेयस्मरणमात्रेण तस्य तथागतस्य तावन्तो गुणानुशंसा भवन्ति ? ते न श्रद्दधन्ति
न पत्तीयन्ति, प्रतिक्षिपन्ति । तेषां दीर्घरात्रमनर्थाय न हिताय न सुखाय विनिपाताय
भविष्यति । भगवानाह—अस्थानमानन्द अनवकाशः, येन तस्य तथागतस्य नामधेयं
श्रुतम्, तस्य सत्त्वस्य दुर्गत्यपायगमनं भवेत्, नेदं स्थानं विद्यते । दुःश्रद्धानीयं
च आनन्द बुद्धानां बुद्धगोचरम् । यत् त्वमानन्द श्रद्दधासि पत्तीयसि, तथागतस्यैषोनु-
भावो द्रष्टव्यः । अभूमिरत्र सर्वश्रावकप्रत्येकबुद्धानां स्थापयित्वा एकजातिप्रतिबद्धान्
बोधिसत्त्वान् महासत्त्वानिति । दुर्लभः आनन्द मनुष्यप्रतिलाभः, दुर्लभं त्रिरत्ने श्रद्धा-
G 23 गौरवम्, सुदुर्लभं तथागतस्य नामधेयश्रवणम् । तस्य भगवतस्तथागतस्य भैषज्यगुरुवैदूर्य-
प्रभस्य आनन्द बोधिसत्त्वचर्याम[र्या अ]प्रमाणम्, उपायकौशल्यमप्यप्रमाणम्,
अप्रमाणं चास्य प्रणिधानविशेषविस्तरम् । आकाङ्क्षमाणोऽहं तस्य तथागतस्य कल्पं वा

कल्पावशेष वा बोधिसत्त्वचारिकाया विस्तरविभङ्ग निर्दिशेयम् । क्षीयेत आनन्द अल्पम्, न त्वेव शक्य तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरान्तमधिगन्तुम् ॥

तेन खलु पुनः समयेन तस्यामेव पर्षदि त्राणमुक्तो नाम बोधिसत्त्वो महासत्त्व संनिपतितोऽभूत् सनिषण्णः । उत्थायासनादेकांसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल G 24 पृथिव्या प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलि प्रणम्य भगवन्तमेतदवोचत्—भविष्यन्ति भदन्त भगवन् सत्त्वा. पश्चिमे काले पश्चिमे समये नानाव्याधिपरिपीडिता दीर्घव्याधिना [ क्षीणगात्रा ] क्षुत्तर्षाभ्या शुष्ककण्ठोष्ठा मरणाभिमुखा रोरुयमाणैर्मित्रज्ञातिसालोहितै परिवारिता अन्धकारा दिश पश्यन्तो यमपुरुषैराकर्ष्यमाणाश्च । तस्य कलेवरे मञ्चशयिते विज्ञान यमस्य धर्मराजस्याग्रतामुपनीयते । यच्च तस्य सत्त्वस्य सहजानुबद्धमेव यत्किंचित तेन पुरुषेण कुशलमकुशल वा कृत भवति, तत् सर्वं सुलिखित कृत्वा यमस्य धर्मराजस्य उपनाम्यते । तदा यमोऽपि धर्मराजस्त पृच्छति, गणयति यथाकृत चास्य कुशलमकुशल वा तथाज्ञामाज्ञापयति । तत्र ये ते मित्रज्ञातिसालोहितास्तस्यातुरस्यार्थाय त भगवन्त भैषज्यगुरुवैदूर्यप्रभ तथागत शरणं गच्छेयु., तस्य च तथागतस्य पूजा कुर्यु., स्थानमेतद् विद्यते यत् तस्य तद्विज्ञान पुनरपि प्रतिनिवर्तेत, स्वप्नान्तरगत इवात्मान सजानीते । यदि वा सप्तमे दिवसे यदि वा [ एकविंशतिमे ] दिवसे यदि वा पञ्चत्रिंशतिमे दिवसे यदि वा एकोनपञ्चाशतिमे दिवसे तस्य विज्ञान पुनरपि निवर्तेत, स्मृतिमुपलभेत । तस्य कुशलमकुशल वा कर्मविपाक स्वयमेव प्रत्यक्ष भवति । ज्ञात्वा स जीवितहेतौ न कदापि पापमकुशल कर्म करिष्यति । तस्माच्छ्राद्धेन कुलपुत्रेण वा कुलदुहित्रा वा तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूजा कर्तव्या ॥

अथायुष्मानानन्दस्त्राणमुक्तं नाम बोधिसत्त्वमेतदवोचत्—कथ कुलपुत्र तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य पूजा कर्तव्या ? त्राणमुक्तो बोधिसत्त्व आह—ये भदन्त आनन्द G 26 महतो व्याधितः परिमोचितुकामाः, तैस्तस्यातुरस्यार्थाय सप्त दिवसानि आर्याष्टाङ्गसमन्वागतमुपवासमुपवसितव्यम्, भिक्षुसघस्य च आहारपानैः सर्वोपकरणैर्यथाशक्ति पूजोपस्थान कर्तव्यम् । भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेय त्रिष्कृत्वा रात्र्या त्रिष्कृत्वा दिवसे मनसि कर्तव्यम् । नवचत्वारिंशद्वारे इद सूत्रमुच्चारयितव्यम् । एकोनपञ्चाशद् दीपा· प्रज्वालयितव्याः । सप्त प्रतिमा· कर्तव्या. । एकैकया प्रतिमया सप्त सप्त दीपाः प्रज्वालयितव्याः । एकैको दीप. शकटचक्रप्रमाणः कर्तव्यः । यदि एकोनचत्वारिंशतिमे दिवसे आलोको न क्षीयते, वेदितव्य सर्वसपदिति । पञ्चरङ्गिकाः पताका. एकोनपञ्चाशदधिका. कर्तव्या· ॥

पुनरपरं भदन्त आनन्द येषां राज्ञां क्षत्रियाणां मूर्धाभिषिक्तानामुपद्रवा वा उपसर्गा G 27 वा प्रत्युपस्थिता भवेयु., व्याधिपीडा वा स्वचक्रपीडा वा परचक्रपीडा वा नक्षत्रपीडा

वा चन्द्रग्रहसूर्यग्रहपीडा वा अकालवातवृष्टिपीडा वा अवग्रहपीडा वा समुत्थिता, अमाङ्गल्या
वा सङ्क्रामकव्याधिर्वा विपद् वा समुपस्थिता, तेन राज्ञा क्षत्रियेण मूर्धाभिषिक्तेन सर्वसत्त्वेषु
मैत्रचित्तेन भवितव्यम्, बन्धनगताश्च सत्त्वा मोचयितव्याः। तस्य च भगवतो भैषज्य-
गुरुवैदूर्यप्रभस्य तथागतस्य यथापूर्वोक्तपूजा करणीया। तदा तस्य राज्ञः क्षत्रियस्य मूर्धाभि-
षिक्तस्य एतेन कुशलमूलेन च तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वप्रणि-
G 28 धानविशेषविस्तरेण तत्र विषये क्षेम भविष्यति सुभिक्षम्। कालेन वातवृष्टिशस्यसंपदो
भविष्यन्ति, सर्वे च विषयनिवासिन सत्त्वा अरोगा सुखिता' प्रामोद्यबहुला'। न च
तत्र विषये दुष्टयक्षराक्षसभूतपिशाचा सत्त्वाना विहेठयन्ति। सर्वदुर्निमित्तानि च न
पश्यन्ति। तस्य च राज्ञ क्षत्रियस्य मूर्धाभिषिक्तस्य आयुर्वर्णबलारोग्यैश्वर्याभिवृद्धि-
भविष्यति॥

अथायुष्मानानन्दस्त्राणमुक्त बोधिसत्त्वमेवमवोचत्—कथ कुलपुत्र परिक्षीणायुः
पुनरेवाभिविवर्धते? त्राणमुक्तो बोधिसत्त्व आह—ननु त्वया भदन्त आनन्द तथागतस्या-
न्तिकाच्छ्रुतम्—सन्ति अकालमरणानि। तेषा प्रतिक्षेपेण मन्त्रौषधिप्रयोगा उपदिष्टाः।
सन्ति सत्त्वा व्याधिता.। न च गुरुको व्याधि' भैषज्योपस्थापकविरहितः। यदि वा वैद्या
G 29 [ भैषज्य ] कुर्वन्ति। इद प्रथममकालमरणम्। द्वितीयमकालमरण यस्य राजदण्डेन
कालक्रिया। तृतीयमकालमरण येऽतीव प्रमत्ता' प्रमादविहारिणः, तेषां मनुष्या ओजोऽप-
हरन्ति। चतुर्थमकालमरण ये अग्निदाहेन काल कुर्वन्ति। पञ्चम चाकालमरण ये च
उदकेन म्रियन्ते। षष्ठमकालमरण ये [ सिंह ]व्याघ्रव्यालचण्डमृगमध्यगता वास कल्पयन्ति
म्रियन्ते च। सप्तममकालमरण ये गिरितटात् प्रपतन्ति। अष्टममकालमरण ये विषकाखोर्द-
वेतालानुप्रयोगेण म्रियन्ते। नवममकालमरण ये क्षुत्तृषोपहता आहारपानमलभमाना आर्ताः
काल कुर्वन्ति। एतानि संक्षेपतोऽकालमरणानि तथागतेन निर्दिष्टानि। अन्यानि च
अप्रमेयाण्यकालमरणानि॥

अथ खलु तत्र पर्षदि द्वादश महायक्षसेनापतय. सनिपतिता अभूवन् यदुत
G 30 किंभीरो नाम महायक्षसेनापति., वज्रश्च नाम महायक्षसेनापति', मेखिलो नाम महायक्ष-
सेनापतिः, अन्तिलो नाम महायक्षसेनापतिः, अनिलो नाम महायक्षसेनापति., सण्ठिलो
नाम महायक्षसेनापति', इन्दलो नाम महायक्षसेनापतिः, पायिलो नाम महायक्षसेनापतिः,
महालो नाम महायक्षसेनापति., चिदालो नाम महायक्षसेनापतिः, चौन्धुलो नाम महा-
यक्षसेनापतिः, विकलो नाम महायक्षसेनापति.। एते द्वादश महाक्षयसेनापतयः एकैकानु-
चरपरिवारिता एककण्ठेन भगवन्तमेवमाहुः—श्रुतमस्माभिश्च भगवता बुद्धानुभावेन तस्य
भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयम्। न भूयोऽस्माक दुर्गतिभयम्। ते
G 31 वयं सहिताः समग्रा यावज्जीवं बुद्धं शरण गच्छामः, धर्मं शरणं गच्छामः, सघं शरणं
गच्छामः। सर्वसत्त्वानामर्थाय हिताय सुखाय औत्सुक्य करिष्यामः। यो विशेषेण ग्रामे वा

नगरे वा जनपदे वा अरण्यायतने वा इद सूत्र प्रचारयिष्यन्ति, यो वा तस्य भगवतो भैषज्यगुरुवैडूर्यप्रभस्य नामधेय धारयिष्यति, पूजोपस्थान करिष्यति, तावत् त सत्त्व रक्षिष्यामः, परिपालयिष्यामः, सर्वामाङ्गल्याच्च परिमोचयिष्यामः, सर्वेषामाशा परिपूरयिष्यामः । अथ खलु भगवास्तेषा यक्षसेनापतीना साधुकारमदात्—साधु साधु महायक्षसेनापतय, यद् यूय तस्य भगवतो भैषज्यगुरुवैडूर्यप्रभस्य तथागतस्य कृतज्ञतामनुस्मरमाणाना सर्वसत्त्वाना हिताय प्रतिपन्नाः ॥

अथायुष्मानानन्दो भगवन्तमेतदवोचत्—को नामाय भगवन् धर्मपर्यायः ? कथं चैन धारयामि ? भगवानाह—तेन हि आनन्द धर्मपर्यायमिम भैषज्यगुरुवैडूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरमिति धारय, द्वादशाना महायक्षसेनापतीना प्रणिधानमिति G 32 धारय ॥

इदमवोचद्भगवान् । आत्तमना मञ्जुश्रीः कुमारभूतः, आयुष्माश्च आनन्दः, त्राणमुक्तो बोधिसत्त्वः, ते च बोधिसत्त्वाः, ते च महाश्रावकाः, ते च राजामात्यब्राह्मणगृहपतयः, सर्वावती पर्षत्, सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन् ॥

॥ आर्यभैषज्यगुरुवैडूर्यप्रभराजं नाम महायानसूत्रम् ॥



# १४ नैरात्म्यपरिपृच्छा नाम महायानसूत्रम् ।

अथ ते तीर्थिका उपलम्भदृष्टय सविकल्पा' सवितर्का महायानिकमुपसृत्य सादर-कृताञ्जलिपुटा नैरात्म्यप्रश्न परिपृच्छन्ति स्म—नैरात्मक शरीरमिति कुलपुत्र सर्वज्ञेन निर्दिश्यते । यदि शरीरं नैरात्मकम्, परमात्मा न विद्यते । तत् कस्मात्सकाशादेते हसित-रुदितक्रीडितक्रोधमानेर्ष्यापैशुन्यादय. समुत्पद्यन्ते ? तदस्माक सदेह मोचयितुमर्हन्ति भगवान्—किमस्ति शरीरे परमात्मा, किं वा नास्ति ?

महायानिका. प्राहु —मार्षा', शरीरे परमात्मा अस्तीत्युच्यते, न हि नास्तीति । द्वयमत्र नोच्यते । अस्ति परमात्मेत्युच्यमाने मार्षा मिथ्याप्रलाप । यद्यस्ति, तत्कथ मार्षा केशनख-दन्तचर्मरोमसिरामासास्थिमेदमज्जास्नायुप्लीहान्त्रनालशिर करचरणाङ्गसकलशरीरे स बाह्या-भ्यन्तरे विचार्यमाणे न दृश्यते परमात्मा ?

तीर्थिका' प्राहु'—न दृश्यते कुलपुत्र परमात्मा । मासचक्षुपा वय न पश्याम' । कदाचिद्दिव्यचक्षुप' पश्यन्ति ।

महायानिकाः प्राहु —न मार्षा दिव्यचक्षुषोऽपि पश्यन्ति । यस्य न वर्णो न रूप न सस्कार', तत्कथ दृश्यते ?

तीर्थिका. प्राहुः—किं नास्ति ?

महायानिका. प्राहु'—नास्तीत्युच्यमाने मार्षा मिथ्याप्रलाप' । यदि नास्ति, तत्कथ-मस्य एते हसितरुदितक्रीडितक्रोधमानेर्ष्यापैशुन्यादय सभवन्ति ? तेन नास्तीति वक्तुं न पार्यते । उभावेतौ द्वौ नोच्येते ।

तीर्थिकाः प्राहु.—यदि कुलपुत्र नोच्यते अस्तीति वा नास्तीति वा, तत्किमत्रा-लम्बनं भवतु ?

महायानिकाः प्राहुः—न मार्षा किंचिदालम्बनं भवति ।

तीर्थिकाः प्राहु —किं शून्यमाकाशमिव ?

महायानिका' प्राहुः—एवमेतन्मार्षा', एवमेतद् । शून्यमाकाशमिव ।

तीर्थिका. प्राहु —यद्येव कुलपुत्र, तदेते हसितरुदितक्रीडितक्रोधमानेर्ष्यापैशुन्यादय कथ द्रष्टव्या ?

महायानिका प्राहु —स्वप्नमायेन्द्रजालसदृशा द्रष्टव्याः ।

तीर्थिका. प्राहु —कीदृशी माया, कीदृश स्वप्न., कीदृश इन्द्रजाल इति ?

महायानिका. प्राहु —उपलक्षणमात्र माया अग्राह्या, प्रतिभासमात्र स्वप्नः प्रकृति-शून्यतास्वरूप', इन्द्रजालः कृत्रिमप्रयोगः । एव मार्षाः सर्वे स्वप्नमायेन्द्रजालसदृशा द्रष्टव्याः । पुनरपर द्वौ भेदौ विनिर्दिष्टौ यदुत सवृतिः परमार्थश्च । तत्र सवृतिर्नाम अयमात्मा, अय

[J A Oct Dec 1928, Viśvabhāratī Studies No 4]

परः। एव जीवः पुरुष· पुद्गल. कारकः वेदक·। धनपुत्रकलत्रादिकल्पना या, सा सवृतिर्नाम। यत्र नात्मा न परः, एव न जीवो न पुद्गल. न पुरुषः न कारक. न वेदक. न धन······सा मध्यमा प्रतिपत्तिर्धर्माणाम्। तत्रेदमुच्यते—

सवृति. परमार्थश्च द्वौ भेदौ सप्रकाशितौ।
सवृतिर्लौकिको धर्म परमार्थश्च लोकोत्तर ॥ १ ॥
सवृतिधर्ममापन्ना. सत्त्वा· क्लेशवशानुगाः।
चिर भ्रमन्ति ससारे परमार्थमजानकाः॥ २ ॥
सवृतिर्लौकिको धर्मस्त कल्पयन्त्यपण्डिता.।
अभूतपरिकल्पनाद्दुःखान्यनुभवन्ति ते ॥ ३ ॥
मुक्तिमार्गं न पश्यन्ति अन्धा बालाः पृथग्जना ।
उत्पद्यन्ते निरुध्यन्ते अजस्र गतिपञ्चसु ॥ ४ ॥
भ्रमन्ति चक्रवन्मूढा लोकधर्मसमावृता.।
परमार्थं न जानन्ति भवो यत्र निरुध्यते।
वेष्टिता भवजालेन ससरन्ति पुनः पुन ॥ ५ ॥
यथा चन्द्रश्च सूर्यश्च प्रत्यागच्छति गच्छति।
भव च्युतिं तथा लोके पुनरायान्ति यान्ति च ॥ ६ ॥
अनित्याः सर्वसस्कारा अध्रुवा क्षणभङ्गुरा.।
अतश्च परमार्थज्ञो वर्जयेत्सवृते· पदम्॥ ७ ॥
स्वर्गस्थाने तु ये देवा गन्धर्वाप्सरसादय ।
च्युतिरस्ति च सर्वेषा तत्सर्वं सवृतेः फलम्॥ ८ ॥
सिद्धा विद्याधरा यक्षाः किन्नराश्च महोरगाः।
पुनस्ते नरक यान्ति तत्सर्वं सवृतेः फलम्॥ ९ ॥
शक्रत्व चक्रवर्तित्व सप्राप्य चोत्तम पदम्।
तिर्यग्योनौ पुनर्जन्म तत्सर्वं सवृते. फलम्॥ १० ॥
अत. सर्वमिद त्यक्त्वा दिव्य स्वर्गमहासुखम्।
भावयेत्सतत प्राज्ञो बोधिचित्त प्रभास्वरम्॥ ११ ॥
नि.स्वभावं निरालम्ब सर्वशून्य निरालयम्।
प्रपञ्चसमतिक्रान्त बोधिचित्तस्य लक्षणम्॥ १२ ॥
न काठिन्य न च मृदुत्व न चोष्ण नैव शीतलम्।
न सस्पर्श न च ग्राह्य बोधिचित्तस्य लक्षणम्॥ १३ ॥
न दीर्घं नापि वा ह्रस्व न पिण्ड न त्रिकोणकम्।
न कृश नापि च स्थूल बोधिचित्तस्य लक्षणम्॥ १४ ॥

न[1] श्वेत नापि रक्त च न कृष्णं न च पीतकम् ।
अवर्णं च निराकार बोधिचित्तस्य लक्षणम् ॥ १५ ॥
निर्विकार निराभास निरूहं निर्विबन्धकम् ।
अरूप व्योमसकाश बोधिचित्तस्य लक्षणम् ॥ १६ ॥
भावनासमतिक्रान्त तीर्थिकानामगोचरम् ।
प्रज्ञापारमितारूप बोधिचित्तस्य लक्षणम् ॥ १७ ॥
अनौपम्यमनाभास अदर्श शान्तमेव च ।
प्रकृतिशुद्धमद्रव्य बोधिचित्तस्य लक्षणम् ॥ १८ ॥
सर्वं च तेन सादृश्य नि.सार बुद्बुदोपमम् ।
अशाश्वत च नैरात्म्य मायामरीचिसनिभम् ॥ १९ ॥
मृत्पिण्डवद् घटीभूत बहुप्रपञ्चपूरितम् ।
रागद्वेषादिसयुक्त स्वप्नमाया तु केवलम् ॥ २० ॥
अभ्रान्तरे यथा विद्युत् क्षणादपि न दृश्यते ।
प्रज्ञापारमितादृष्ट्या भावयेत्परम पदम् ॥ २१ ॥
क्रीडित हसित नित्य जल्पितं रुदित तथा ।
नृत्य गीत तथा वाद्य सर्वं स्वप्नोपम हि तत् ॥ २२ ॥
मायास्वप्नोपम सर्वं सस्कारं सर्वदेहिनाम् ।
स्वप्न च चित्तसकल्प चित्त च गगनोपमम् ॥ २३ ॥
भावयेद्य इम नित्य प्रज्ञापारमितानयम् ।
स सर्वपापनिर्मुक्तः प्राप्नोति परम पदम् ॥ २४ ॥
इयं सानुत्तरा बोधिः सर्वबुद्धैः प्रकाशिता ।
भावना भावयित्वेह निर्वाण लभते शिवम् ॥ २५ ॥
यावन्तः सवृतेर्दोषास्तावन्तो निर्वृतेर्गुणाः ।
निर्वृतिः स्यादनुत्पत्तिः सर्वदोषैर्न लिप्यते ॥ २६ ॥

अथ ते तीर्थिकास्तुष्टा विकल्परहितास्तदा भावनां समाधाय महायानयज्ञलाभिनोऽभूवन्निति ॥

महायाननिर्देशे नैरात्म्यपरिपृच्छा समाप्ता ॥

---

[1] Ślokas 15 and 16 are missing in T

## १५ महाकर्मविभङ्गः ।

ॐ नमो भगवते मञ्जुश्रिये कुमारभूताय ॥

शङ्खक्षीरेन्दुकुन्दस्फटिकहिमदलक्षौमशुभ्राभ्रगौरै- L 21
श्चञ्चत्स्पष्टाट्टहासैर्गगनतलगतैश्छत्रपङ्क्त्यातपत्रैः ।
स्तव्यैर्भूर्भाति यस्य त्रिदशनरगरुत्सिद्धगन्धर्वजुष्टैः
प्रह्वास्त सर्व एव प्रणमत सतत बुद्धमादित्यबन्धुम ॥ १ ॥
दिव्यैश्चन्दनचूर्णमिश्रनिकरैर्मन्दानिलोद्धासितै-
र्वीणावेणुमृदङ्गदुन्दुभिरवैर्गन्धर्वगीतिस्वरैः ।
यो जात क्षितिपालक· प्रचलयन् कृत्स्न त्रिलोकालय
सर्वज्ञाय निरुद्धसर्वगतये बुद्धाय तस्मै नम. ॥ २ ॥

भगवता सूत्र भाषितम्—

एव मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवने अनाथपिण्डदस्यारामे । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्त्या पिण्डाय प्राविक्षत् । [ सावदान श्रावस्त्यां पिण्डोपचरणम् । ] येन शुकस्य माणवस्य तौदेयपुत्रस्य निवेशन तेनोपसंक्रान्तः । तेन खलु पुनः समयेन शुकस्य माणवस्य तौदेयपुत्रस्य निवेशने L 22
शङ्खकुञ्जरो गोणिकास्तृते पर्यङ्के निषण्णः । अश्मन्तकोपधानाया कास्यपात्र्या शालिमासौदन भुङ्क्ते । भगवानद्राक्षीत् शङ्खकुञ्जर गोणिकास्तृते पर्यङ्के निषण्ण अश्मन्तकोपधानाया कास्यपात्र्या परिभुञ्जानम् । अद्राक्षीत् शङ्खकुञ्जरो भगवन्तम् । द्वारमूले गत्वा च पुनर्बुक्कति । अथ भगवान् शङ्खकुञ्जरमेतदवोचत्—एतदपि ते शङ्ख [ चित्तं ] न दमयति, यदसि भोकाराद् बुक्कारमागतः । एवमुक्ते शङ्खकुञ्जरोऽतिशयितरोपश्चण्डीभूतोऽनात्तमना गोणिकास्तृतात् पर्यङ्कादवतीर्य अधस्तात्पर्यङ्कस्य दारुस्यन्दनिकाया निषण्णः । तेन खलु पुनः समयेन शुको माणवस्तौदेयपुत्रो बहिर्गतोऽभूत् केनचिदेव करणीयेन । अथागच्छ- L 23
च्छुको माणवस्तौदेयपुत्र. । अद्राक्षीत् शुको माणवस्तौदेयपुत्र शङ्खकुञ्जरमधस्ताद्दारुस्यन्द- L 24
निकाया प्रपतितम् । दृष्ट्वा जनमामन्त्रयते—केन वो युष्माक शङ्खकुञ्जर. किंचिदुक्त. ? कोऽस्माक मध्ये मदीयपुत्र शङ्खकुञ्जर किंचिद्वक्ष्यति ? अपि तु आगतोऽभूत् श्रमणो गौतमः । द्वारमूले- L 25
ऽवस्थित तमित्थ बुक्कति । तमेन श्रमणो गौतम एवमाह—एतदपि ते शङ्ख न दमयति L 26
यदसि भोकाराद् बुक्कारमागतः ? एवमुक्ते शङ्खकुञ्जरोऽतिशयितकुपितश्चण्डीभूतोऽनात्तमना गोणिकास्तृतात्पर्यङ्कादवतीर्य अधस्तात्पर्यङ्कस्य दारुस्यन्दनिकाया निषण्णः । अथ शुक (क्रो)धाभिषक्त· कुपितश्चण्डीभूतोऽनात्तमना गोणिकान्निष्क्रम्य येन जेतवनमनाथपिण्डदस्यारामस्तेनोपसक्रान्तः । तेन खलु पुनः समयेन भगवाननेकशताया भिक्षुपर्षदि पुरस्तान्निषण्णो धर्मं देशयति । अद्राक्षीद्भगवान् शुक माणवक तौदेयपुत्र दूरादेवागच्छन्तम् । दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म—पश्यत यूयं भिक्षवः शुकं माणव तौदेयपुत्रमित

एवागच्छन्तम् ? एव भदन्त। सचेच्छुको माणवस्तौदेयपुत्रोऽस्मिन् समये काल कुर्यात्, यथा भल्लो निक्षिप्तः, एव कायस्य भेदात्पर मरणादपायदुर्गतिविनिपातेऽवीचौ नरकेषूपपद्येत। तथा ह्यनेन ममान्तिके चित्तं प्रदूषितम्। चित्तप्रदूषणाद्धेतोरेवमिह [एके] सत्त्वाः कायस्य भेदात् पर मरणादपायदुर्गत्यवीचौ नरकेषूपपद्यन्ते। अथान्यतमो भिक्षुस्तस्या वेलाया गाथां भाषते स्म—

प्रदुष्टचित्तं दृष्ट्वैव एकत्यमिह पुद्गलम्।
एतमर्थं व्याकार्षीच्छास्ता भिक्षुगणान्तिके ॥ १ ॥
इदानी बताविक्षेप काल कुर्वीत माणवः।
नरकेषूपपद्येत चित्त ह्येतेन दूषितम् ॥ २ ॥
यथा हि चित्त निक्षिप्तमेवमेव तथागते।
चित्तप्रदूषणाद्धेतोः सत्त्वा गच्छन्ति दुर्गतिम् ॥ ३ ॥

L 27 अधिक्षेप्य माणवस्तौदेयपुत्रो येन भगवान् तेनोपसक्रान्तः। उपसक्रम्य भगवता सार्धं सुखसभावनीया सरञ्जनीया विविधा कथा व्यतिसार्य एकान्ते निषण्णः। शुको माणवस्तौदेयपुत्रो भगवन्तमिदमेवावोचत्—आगतो भगवान् गौतमोऽस्माक निवेशनम् ? आगमने भगवता गौतमेन शङ्खकुञ्जर' किंचिदुक्तः ? इहाह माणव पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्त्या पिण्डाय प्राविक्षत्। [सावदान श्रावस्त्या पिण्डोपचरणम्।] येन भवतोऽत्र निवेशन तेनोपसक्रान्तः। उपसंक्रम्य द्वारमूलेऽवस्थितः। तेन खलु पुनः समयेन शङ्खकुञ्जरो गोणिकास्तृतमञ्चकेऽधिरूढोऽश्मन्तकोपधानाया कास्यपात्र्या शालिमासौदन परिभुङ्क्ते। अद्राक्षीत् शङ्खकुञ्जरो मा द्वारमूलेऽवस्थितम्। दृष्ट्वा च पुनर्बुक्कति। तमेनमेव वदामि—एतदपि ते शङ्ख न दमयति यदसि भोक्काराद् बुक्कारमागतः। एवमुक्ते शङ्खकुञ्जरोऽभिषक्तः कुपितश्चण्डीभूतोऽनात्तमना गोणिकास्तृतात् पर्यङ्कादवतीर्य अधस्ताव् पर्यङ्कस्य दारुस्यन्दनिकाया निषण्णः। किं पुनर्भगवान् गौतमः शङ्खकुञ्जरस्य अस्माक पूर्वस्या जातं जानीते ? अल माणव, तिष्ठ। मा एतमर्थं परिप्राक्षीत्। मा ते भविष्यति आघातश्च अक्षान्तिश्च चेतसो दौर्मनस्यम्। द्विरपि त्रिरपि शुको माणवस्तौदेयपुत्रो भगवन्तमेतदवोचत्—किं पुनर्भगवान् गौतमोऽस्माक शङ्खकुञ्जरं पूर्विकाया जात सजानीते ? अल माणव, तिष्ठ। मा मामेतमर्थ परिप्राक्षीत्। मा इहैव च ते भविष्यत्याघातश्च अक्षान्तिश्च चेतसो दौर्मनस्यम्। अनाथ त्व माणव यावद्विरपि त्रिरप्येतमर्थं ना माणव शृणु, साधु च सुष्ठु च मनसि कुरु। भाषिष्ये। यस्ते माणव पिता तौदेयः, स एप कायस्य भेदाद्धीनाया श्वयोनावुपपन्नः। तद्भो गौतम एव भविष्यति—अस्माक पिता य इष्टयज्ञ आहिताग्निरुच्छ्रितयूपः सनीयते। कायस्य भेदात् शुभ्रे ब्रह्मलोके उपपन्नो भविष्यति। अनेनैव ते माणव मानाभिमानेन पिता तौदेयो महादानपतिः श्वयोनावुपपन्नः। पितुर्माणव यदि मे भाषित
L 28 न श्रद्दधासि, तेन हि त्वं माणव येन ते निवेशन तेनोपसंक्रम। उपसंक्रम्य शङ्खकुञ्जरमेवं

वद—सचेद्भवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जातः पिताभूत् तौदेयः, अधिरोह गोणिकास्तृत पर्यङ्कम् । अधिरोक्ष्यति । अधिरूढ चैव वद—सचेद्भगवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जात. पिताभूत् तौदेय , परिभुञ्जीत भवान् । अश्मन्तकोपधानाया कास्यपात्र्या शालिमासौदन परिभोक्ष्यते । भुक्तवन्तमेन वद—सचेद् भवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जात· पिताभूत् तौदेय., यत्तेऽस्माक मरणसमये मम सन्त स्वापतेय नोपदर्शित तदुपदर्शय । उपदर्शयिष्यति ॥

अथ शुको माणवस्तौदेयपुत्रो भगवता भाषितमुद्गृह्य पर्यवाप्य येन स्वक निवेशन तेनोपसक्रान्तः । उपसक्रम्य शङ्खकुञ्जरमेतदवोचत्—सचेद्भवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जातः पिताभूत् तौदेयः, अधिरोह । गोणिकास्तृतपर्यङ्के अधिरूढ चैनमेवमाह—सचेद्भवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जातः पिताऽभूत् तौदेयः, परिभुञ्जीत भवानश्मन्तकोपधानाया कास्यपात्र्या शालिमांसौदनम् । परिभुक्तवान् । भुक्तवन्त चैनमेवमाह—सचेद् भवान् शङ्खकुञ्जरोऽस्माक पूर्विकाया जात. पिताऽभूत् तौदेय , यत्तेऽस्माक मरणसमये मम सन्त स्वापतेय नोपदर्शितम्, तदुपदर्शय । अथ शङ्खकुञ्जरो गोणिकास्तृनपर्यङ्कादवतीर्य येनान्यतमपुराणवासगृह तेनोपसक्रान्तः । उपसक्रम्य चतुरः पर्यङ्कपादुकान् पादनखरिकाभिरवलिखितमध्य च मुखतुण्डकेनोपजिघ्रति, यतः स शुको माणवस्तौदेयपुत्र. कृताकृतस्य हिरण्यसुवर्णस्य चतुरो लोहसघाटानधिगतवान्, मध्याच्च सौवर्णकमण्डलुम् । अथ शुको माणवस्तौदेयपुत्रस्तत्सुवर्णं गोपयित्वा हृष्टतुष्टोदग्रप्रीतिसौमनस्यजात श्रावस्त्या निष्क्रम्य येन भगवास्तेनोपसक्रान्तः । तेन खलु पुन. समयेन भगवाननेकशताया भिक्षुपर्षदि पुरस्तान्निषण्णो धर्मं देशयति । अद्राक्षीद्भगवान् शुक माणव तौदेयपुत्र दूरत L 29
एवागच्छन्तम् । दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म—पश्यथ यूय भिक्षव· शुक माणव तौदेयपुत्र दूरत एवागच्छन्तम्? एव भदन्त । सचेच्छुको माणवस्तौदेयपुत्रोऽस्मिन् समये काल कुर्याद्यथा भक्तो निक्षिप्तः, एव कायस्य भेदात्सुगतौ स्वर्गलोकेषूपपद्येत । तथा ह्यनेन ममान्तिके चित्त प्रसादितम् । चित्तप्रसादनहेतोर्भिक्षव. एवमिहैके सत्त्वा कायस्य भेदात्सुगतौ स्वर्गलोकेषूपपद्यन्ते । अथान्यतमो भिक्षुस्तस्या वेलाया गाथा भाषते—

प्रसन्नचित्त दृष्ट्वैव एकत्यमिह पुद्गलम् ।
एतमर्थं व्याकार्षीच्छास्ता भिक्षुगणान्तिके ॥ ४ ॥
इदानीं गतदोषोऽय काल कुर्वीत मानवः ।
उपपद्येत देवेषु चित्तमस्य प्रसादितम् ॥ ५ ॥
यथा दुरित निक्षिप्तमेवमेव तथागते ।
चित्तप्रसादनाद्धेतो. सत्त्वा गच्छन्ति सद्गतिम् ॥ ६ ॥

अथ शुको माणवस्तौदेयपुत्रो येन भगवान् तेनोपसक्रान्तः । उपसंक्रम्य भगवता सार्धं संमुख समोदनीं संरञ्जनीं विविधां कथा व्यतिसार्य एकान्ते निषण्णः । एव निषण्णं

शुकं माणव तौदेयपुत्र भगवानिदमवोचत्–कच्चिन्माणव तथैव यथा मया शङ्खकुञ्जरो व्याकृत ? भो गौतम तत्तथैव यथा भगवता गौतमेन शङ्खकुञ्जरो व्याकृत.। अन्यदपि तावद्वय भगवन्त गौतम पृच्छेम कचिदेव प्रदेशम्, सचेदवकाश कुर्यात् प्रश्नव्याकरणाय। पृच्छ माणव यद्येव काङ्क्षसि। को भो गौतम हेतुः, कः प्रत्ययः, येन इहैके सत्त्वा अल्पायुषोऽपि, दीर्घायुषोऽपि, बह्वाबाधा अपि, अल्पाबाधा अपि, दुर्वर्णा अपि, सुवर्णा अपि, अल्पेशाख्या अपि, महेशाख्या अपि, नीचकुलीना अपि, उच्चकुलीना अपि, अनादेयवाक्या अपि, आदेयवाक्या अपि, अल्पभोगा अपि, महाभोगा अपि, दुष्प्रज्ञा अपि, महाप्रज्ञा अपि ? कस्य नु भो गौतम कर्मणो विपाकेनेद सत्त्वाना नानात्व प्रज्ञायते ?

अथ भगवान् शुक माणवक तौदेयपुत्रमिदमवोचत्–कर्मविभङ्ग ते माणवक धर्मपर्याय
L 30 देशयिष्यामि। तेन हि शृणु, साधु सुष्ठु च मनसि कुरु। भाषिष्ये। एव भगवन्निति शुको माणवकस्तौदेयपुत्रो भगवत प्रत्यश्रौषीत्। भगवानिदमवोचत्–कर्मस्वकानह माणव सत्त्वान् वदामि, कर्मदायादान् कर्मयोनीन् कर्मप्रतिशरणान्। कर्म माणव सत्त्वान् विभजति यदिद हीनोत्कृष्टमध्यमतायाम्। तद्यथा। अस्ति कर्म अल्पायु सवर्तनीयम्। अस्ति कर्म दीर्घायु सवर्तनीयम्। अस्ति कर्म बह्वाबाधासंवर्तनीयम्। अस्ति कर्म अल्पाबाधासवर्तनीयम्। अस्ति कर्म दुर्वर्णसवर्तनीयम्। अस्ति कर्म प्रासादिकसवर्तनीयम्। अस्ति कर्म अल्पेशाख्यसवर्तनीयम्। अस्ति कर्म महेशाख्यसवर्तनीयम्। अस्ति कर्म नीचकुलोपपत्तिसवर्तनीयम्। अस्ति कर्म उच्चकुलोपपत्तिसवर्तनीयम्। अस्ति कर्म अल्पभोगसवर्तनीयम्। अस्ति कर्म महाभोगसवर्तनीयम्। अस्ति कर्म दुष्प्रज्ञसवर्तनीयम्। अस्ति कर्म महाप्रज्ञसवर्तनीयम्। अस्ति कर्म नरकोपपत्तिसवर्तनीयम्। अस्ति कर्म तिर्यग्योन्युपपत्तिसवर्तनीयम्। अस्ति कर्म प्रेतलोकोपपत्तिसवर्तनीयम्। अस्ति कर्म असुरलोकोपपत्तिसवर्तनीयम्। अस्ति कर्म मनुष्यलोकोपपत्तिसवर्तनीयम्। अस्ति कर्म कामावचरदेवोपपत्तिसवर्तनीयम्। अस्ति कर्म रूपावचर देवोपपत्तिसवर्तनीयम्। अस्ति कर्म आरूप्यावचरदेवोपपत्तिसंवर्तनीयम्। अस्ति कर्म कृत नोपचितम्। अस्ति कर्म उपचित न कृतम्। अस्ति कर्म कृतमुपचित च। अस्ति कर्म नैव कृत नोपचितम्। अस्ति कर्म येन समन्वागत· पुद्गलो नरकेषूपपन्नः परिपूर्णं नैरयिकमायु. क्षपयित्वा च्यवति। अस्ति कर्म येन समन्वागत. पुद्गलो नरकेषूपपन्नः सार्धनैरयिकमायुः क्षपयित्वा च्यवति। अस्ति कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नमात्र एव च्यवति। अस्ति कर्म नियतोपपत्तिसमन्वागतः। अस्ति कर्म अनियतोपपत्तिसमन्वागतः। अस्ति कर्म देशान्तरविपक्षम्। अस्ति कर्म येन समन्वागतः पुद्गलो पूर्वं सुखितो भूत्वा पश्चाद् दुःखितो भवति। अस्ति कर्म येन समन्वागतः पुद्गलः पूर्वं दुःखितो भूत्वा पश्चादपि सुखितो
L 31 भवति। अस्ति कर्म येन समन्वागत पुद्गल. पूर्वं सुखितो भूत्वा पश्चात् सुखितो भवति। अस्ति कर्म येन समन्वागत. पुद्गलः पूर्वं दु.खितो भूत्वा पश्चादपि दुःखितो भवति। अस्ति कर्म येन समन्वागतः पुद्गलः आढ्यो भवति मत्सरी। अस्ति कर्म येन समन्वागतः पुद्गलः

दरिद्रो भवति त्यागवान्। अस्ति कर्म येन समन्वागतः पुद्गलः आढ्यो भवति त्यागवान्। अस्ति कर्म येन समन्वागतः पुद्गलः (ы10)। अस्ति पुद्गलो यस्य कर्म क्षीणं भवति नायुः। अस्ति पुद्गलो यस्यायुः क्षीणं न कर्म। अस्ति पुद्गलो यस्यायुः आयुः कर्माणि च क्षीणानि। अस्ति पुद्गलो यस्यायुः क्षीणं पुण्यानि च। अस्ति पुद्गलो यस्य नायुः क्षीणं भवति न कर्म, अपि तु क्लेशाः क्षीणाः। अस्ति पुद्गलः कायेन सुखी न चित्तेन। अस्ति पुद्गलः चित्तेन सुखी न कायेन। अस्ति पुद्गलः कायेन च सुखी चित्तेन च। अस्ति पुद्गलो नैव कायेन सुखी न चित्तेन। अस्ति कर्म येन समन्वागतः पुद्गलोऽपायेषूपपन्नोऽभिरूपो भवति स्निग्धकायः स्निग्धच्छविर्नयनाभिरामो दर्शनीयः। अस्ति कर्म येन समन्वागतः पुद्गलोऽपायेषूपपन्नो दुर्वर्णो भवति रूक्षकायो घोरदर्शनः प्रतिकूलदर्शनः। अस्ति कर्म येन समन्वागतः पुद्गलः अपायेषूपपन्नो दुर्गन्धो भवति, जिह्मेन्द्रियो भवत्यव्यक्तेन्द्रियः। दशानामकुशलानां कर्मपथानां विपाकेन दशानां बाह्यानां भावानामभिवृद्धिः प्रज्ञायते। दशानां कुशलानां कर्मपथानां विपाकेन दशानां बाह्यानां भावानां विपत्तिः प्रज्ञायते। दशानुशंसास्तथागतचैत्याञ्जलिकर्मणः। दशानुशंसास्तथागतचैत्यवन्दनायाः। दशानुशंसाश्छत्रप्रदानस्य। दशानुशंसा घण्टाप्रदानस्य। दशानुशंसा वस्त्रप्रदानस्य। दशानुशंसा आसनप्रदानस्य। दशानुशंसा भाजनप्रदानस्य। दशानुशंसा भोजनप्रदानस्य। दशानुशंसा यानप्रदाने। दशानुशंसाः प्रतिश्रयप्रदानस्य। दशानुशंसाः पानकप्रदाने। दशानुशंसाः फलप्रदाने। दशानुशंसा मालाप्रदानस्य। दशानुशंसा मुक्तपुष्पप्रदानस्य। दशानुशंसाः प्रदीपप्रदानस्य। दशानुशंसा गन्धप्रदानस्य। दशानुशंसाः प्रव्रज्यायाः। दशानुशंसा L 32
अरण्यवासे। दशानुशंसाः पैण्डपातिकत्वे। दश वैशारद्यानि॥

उद्देशः कर्मविभङ्गस्य धर्मपर्यायस्य॥

१. तत्र कतमत् कर्म अल्पायुःसंवर्तनीयम्[2] उच्यते। प्राणातिपातः। प्राणातिपातस्य अनुमोदनम्। प्राणातिपातस्य वर्णवादिता। अमित्रमरणाभिनन्दनम्। अमित्रमरणस्य समादापनम्। अमित्रमरणस्य वर्णवादिता। गर्भशातनम्। गर्भशातनस्य वर्णवादिता। स्थण्डिलप्रतिष्ठापनं यत्र बहवः प्राणिनो घात्यन्ते महिषपशुसूकरकुक्कुटादयः। तस्य यज्ञप्रवर्तकस्य पुत्राः पौत्राश्चान्ये च जनाः फलार्थिनो भयभीताश्च अनुवृत्तिं कुर्वाणाः सत्त्वान् निर्घातयन्ति॥

a) यथा काश्मीराया महानगर्यां भिक्षुः किलार्हन् अन्यतरस्मिन् गृहद्वारे तिष्ठति। तस्य गृहस्य पार्श्वेन राजपथः। तेन पशू रवमाणो नीयते। स भिक्षुस्तं दृष्ट्वा हा हा धिक् कष्टमिति वदति। पुरुषास्तं पृच्छन्ति—आर्य, किमयं हा धिक्कष्टमिति शब्दः[2] स आह—न वक्तव्यमेतदश्राद्धानाम्। कार्यार्थं तु ब्रवीमि—य एष पशू रवमाणो नीयते, अनेन पुरा वणिगीश्वरेण भूत्वा स्थण्डिलं प्रतिष्ठापितम्, सांवत्सरिकश्च पशुयज्ञः प्रवर्तितः। तत्र अनेन बहवः पशवो घातिताः। मरणकाले च पुत्रानाहूय प्राह—पुत्राः, यद्यस्ति मयि

स्नेहः, य एष मया सांवत्सरिकः पशुयज्ञः प्रवर्तितः, एष मयि कालगतेऽनुप्रवर्तयितव्य इति। पुत्रैस्तथास्त्विति प्रतिश्रुतम्। स कालगतस्तेन मोहजेन प्राणातिपातेन समन्वागतः
L 33 स्वगृहे पशुः प्रत्याजातः। स तत्र जातौ जातौ घात्यते। अधुना एकषष्टितम वार नीयते। अथ स भिक्षुस्त पशु करुणायमाण आह–स्वयमेव ते स्थण्डिल कृतम्। स्वयमेव यज्ञः प्रवर्तितः। बह्वः पशवश्च घातिताः। किं रवसे [2] सर्वमिद निरर्थकम्॥

b) यथैवविध स्थण्डिलप्रतिष्ठापनम्, तथा युद्धदर्शनम्, यत्र बह्वः सत्त्वा घात्यन्ते हस्त्यश्वमनुष्यादयः। युद्धप्रतियुद्धानां च शास्त्राणामभिनन्दनम्॥

c) यथा चोक्त भगवता वैशाल्या कालिकसूत्रे–प्राणातिपात आनन्द सेवितो बहुलीकृतो निरयसवर्तनीयो भवति। तिर्यग्योनिसवर्तनीयोऽपि भवति। प्रेतविषयसंवर्तनीयोऽपि भवति। यस्मादल्पप्राणातिपातस्य विपाको मनुष्यभूतस्य सतः अल्पायुःसवर्तनीयोऽपि भवति॥

d) तथा दशादीनवा नन्दिकसूत्रे उक्ताः प्राणातिपातस्य। इद कर्म अल्पायुःसवर्तनीयम्॥

२. तत्र कतमत्कर्म दीर्घायुःसवर्तनीयम् [2] उच्यते। प्राणातिपातान्निवृत्तिः। प्राणातिपातनिवृत्तौ वर्णवादिता। तत्र समादापनम्। तद्वर्णवादिता। वध्यप्राप्तानां मनुष्यपशुसूकरकुक्कुटादीना परिमोचनम्। भीताना सत्त्वानामभयप्रदानम्। अनाथाना सत्त्वाना
L 34 मध्ये कारुण्यचित्तता। ग्लानाना सत्त्वाना मध्ये मैत्रचित्तता, अन्येषा च बालवृद्धानाम्। तेषामेव भोजनप्रदानम्। प्रतिग्राहकेषु च मैत्रचित्तता। यत्पूर्वोक्त कुशलपक्षेण युद्धदर्शनादि। तथा स्तूपचैत्यविहाराणा शीर्णाना प्रतिसस्करणम्। अत एवोक्तम्–

अकालमृत्युर्न भवेत्तस्य
यो भग्नशीर्ण प्रतिसंस्करोति॥ ७॥

a) तथा बकप्रत्येकब्रह्मसूत्र वर्णयन्ति स्म–तेन किल ऋषिभूतेन पञ्चाभिज्ञेन तृष्णार्तस्य सार्थस्य पथभ्रष्टस्योपरि ऋद्ध्या वर्ष पातितम्। तदर्थं च भगवता गाथा भाषिता–

तत्ते पुराणं व्रतशीलवृत्त
स्वमाद्विबुद्धोऽहमिह स्मरामि।

तत्र च सार्थे बोधिसत्त्वः सार्थवाहोऽभूत्।

य एणीकूले जनतां गृहीताम्।

L 35 एणीनाम नदी, यस्या अनुकूले राजा कश्चिद्गृहीतः प्रत्यमित्रेण हिमवन्तमनुप्रविश्य। स नीयमान एव वध्य प्राप्तः सबलवाहन.। तेन ऋषिभूतेन ऋद्ध्या वातवर्षं मुक्तम्। स चोपायेन प्रत्यमित्रजनकायो विभ्रामितः। स राजा मोक्षितः।

तत्ते द्वितीयं व्रतशीलवृत्त
स्वमाद्विबुद्धोऽहमनुस्मरामि॥ ८॥

स च राजा बोधिसत्त्वो बभूव ।

गङ्गास्रोतसि नावा गृहीता
नागेन घोरेण ऋद्धिकेन ।

स च तदा ऋषिर्गङ्गाकूले महर्द्धिकः पञ्चाभिज्ञः प्रतिसरति । तेन च कायः क्रन्दमानो जीवितेन निराशस्ततो मोक्षितः ।

तत्ते तृतीय व्रतशीलवृत्तं
स्वप्नाद्विबुद्धोऽहमनुस्मरामि ॥ ९ ॥

तस्या च नावायां नौस्वामी बोधिसत्त्वस्तेन कालेनाभूत् । एवंविधं ते त्रिविध कर्म कृतम् । ततोऽतीव दीर्घायुः ॥

b) यथा केचिदाचार्याः कथयन्ति । भगवानाह—भूतपूर्वं भिक्षवो जम्बुद्वीपे सर्वजनपदमारी वर्तते स्म । अथान्यतरेण सत्त्वेनान्यलोकधातौ स्थितेन ऋद्धिमतः सकाशा- L 36
च्छ्रुतम्—यथा जम्बुद्वीपे सर्वमारी पतितेति । तेन कृतपुण्येन प्रणिधानं कृतम्—जम्बुद्वीपे उपपद्य अहं सर्वसत्त्वाना व्याधिप्रणाशाय जायेयेति । स तत्रोपपन्नः । ये च सत्त्वास्तृषितास्तेषा पानीयेन व्याधिं नाशयति । ये च बुभुक्षितास्तेषां भक्तेन व्याधिं नाशयति । एव येन यस्यार्थस्तेनैव तस्य व्याधिं नाशयति । न नाम तस्य किंचिदप्यनौषधम् । यद्यदेव गृह्य प्रयच्छति, तत्तदेवौषधम् । तस्य जम्बुद्वीपकैर्मनुष्यैः सर्वौषधिरेकनाम कृतम् । अथ भिक्षवः सर्वौषधिवैद्यराजो बहूना सत्त्वसहस्राणा जीवितानि दत्त्वा कालगतः । कालान्तरेण मिथिलायां राजकुले उपपन्नः । ततोऽपि तेन महादेवभूतेन अशीतिक्षत्रियसहस्राणि धर्मदेशनया प्रव्राजितानि । जम्बुद्वीपेऽशीतिवर्षसहस्राणि मनुष्याणामायुर्न परिक्षीणम् । ततश्च्युतः कालान्तरेण कुशीनगर्यां माधाता सवृत्तः । भूयश्च सप्तसूर्योपदेशे सुनेत्रो नाम L 37
मानवो विज्ञेयः । अह स भिक्षवस्तेन कालेन सर्वौषधिवैद्यराजोऽभूत् । तस्य कर्मणो विपाकेन महादेवस्यायुःप्रमाणं योजयितव्यम् । माधातृसुनेत्राभ्यामप्येवमायुःप्रमाणं योजयितव्यम् । इद कर्म दीर्घायुःसंवर्तनीयम् ॥

३. कतमत्कर्म बह्वाबाधासवर्तनीयम्[2] उच्यते । खटचपेटप्रदानम् । खटचपेटप्रदानस्यानुमोदनम् । खटचपेटप्रदानस्य वर्णवादिता । तेषा प्रदानेन तुष्टिः । मातापित्रोश्चित्तशरीरे पीडाकरणम् । तथान्येषां प्रव्रजितानां शीलवता चित्तसक्लेशः । अमित्रव्याधिना तुष्टिः । अमित्रव्याधिव्युत्थानेनातुष्टिः । व्याधितानामभैषज्यप्रदानम् । तथा परिजीर्णभोजनम् । इदं कर्म बह्वाबाधासंवर्तनीयम् ॥

४ कतमत्कर्म अल्पाबाधासंवर्तनीयम्[2] उच्यते । खटचपेटप्रदानान्निवृत्तिः । तत्र समादापनम् । तद्वर्णवादिता । तदभ्यनुमोदनम् । ग्लानाना मातापितॄणामुपस्थानकरणम् । तदप्यन्येषा गृहस्थप्रव्रजितानाम् । अमित्रव्याधिना अनात्तमनस्कता । तस्य व्युत्थानेन च आत्तमनस्कता । भैषज्यप्रदानम् । परिजीर्णभोजन च । इदं कर्म अल्पाबाधासंवर्तनीयम् ॥

५. कतमत्कर्म दुर्वर्णसवर्तनीयम्[१] उच्यते। क्रोधः। उपनाहः। म्रक्षः। प्रदाशः।
L 38 मातापित्रोरवर्णवादिता, अन्येषा च गृहस्थप्रव्रजितानां बालवृद्धानाम्। स्तूपाङ्गणचैत्यगृह-
विहाराणा च भूमेरविशोधनम्। स्तूपानां प्रतिमानां च दीपव्युच्छेदः। दुर्वर्णानां
सत्त्वानामवहसनम्। तथा अचौक्षसमुदाचारता। इदं कर्म दुर्वर्णसवर्तनीयम्॥

६. कतमत्कर्म प्रासादिकसंवर्तनीयम्[१] उच्यते। अक्रोधः। अनुपनाहः। अम्रक्षः। वस्त्रप्रदानम्। स्तूपचैत्यगृहेषु च सुधादानम्। सुवर्णपात्रदानम्। गन्धलेपप्रदानम्। अलङ्कारप्रदानम्। मातापित्रोर्वर्णवादिता। आर्याणा शीलवतां वर्णवादिता। स्तूपाङ्गण-विहाराणां संमार्जनम्। सतत गृहसमार्जनम्। विरूपाणा सत्त्वानामनवहसनम्, तथा अन्येषा बालवृद्धानाम्। तथा चौक्षसमुदाचारता॥

a) यथा आर्यसुन्दरनन्देन किल क्रकुच्छन्दे सम्यक्सबुद्धे भिक्षुसंघे जेन्ताकस्नान कृतम्। ताश्च दृष्ट्वा चित्त प्रसादितम्। भूयश्च सुवर्णेन हरितालेन प्रत्येकबुद्धस्तूपे लेपो दत्तः। इदमपि दृष्ट्वा चित्त प्रसादितम्, अभिरूपताया च परिणामितम्। भूयश्च स्तूपे क्रियमाणे प्रथमं छत्र कारितम्। यथा पश्चिमभवे स एव व्याकरोति—

जेन्ताकस्य च स्नानेन हरितालस्य लेपनेन च।
एकच्छत्रप्रदानाच्च प्राप्ता मे सुवर्णवर्णता॥ १०॥

तथैवायं शोभितवान्। इद कर्म प्रासादिकसवर्तनीयम्॥

७ कतमत्कर्म अल्पेशाख्यसंवर्तनीयम्[१] उच्यते। ईर्ष्या। मात्सर्यम्। परस्य लाभेना-
L 39 तुष्टिः। परस्य वर्णवादिताया अतुष्टिः। मातापित्रोः परिभवः। आर्याणां शीलवता परिभवः,
तथा अन्येषा व्याधितबालवृद्धानाम्। हीने धर्महीनेऽकुशलमूले वर्णवादिता। बोधिचित्तो-
त्पादस्य निवारणम्। तदभ्यनुमोदनम्। इद कर्म अल्पेशाख्यसवर्तनीयम्॥

८. कतमत्कर्म महेशाख्यसंवर्तनीयम्[१] उच्यते। अनीर्ष्या। अमात्सर्यम्। परलाभेन तुष्टिः। परस्य यशोवर्णशब्दश्लोकश्रवणेन तुष्टिः। परस्य वर्णवादिताया आत्तमनस्कता। भगवतश्चैत्यस्तूपकारापणम्। हीने धर्महीनेऽकुशलमूले निवारणम्। महेशाख्यकुशलमूले समादापनम्। बोधिचित्तोत्पादनम्। सर्वमहेशाख्यकुशलमूले बोधिचित्तोत्पादनम्॥

L 40 a) यथोक्त भगवता वाराणस्या पूर्वापरान्तके सूत्रे अजितस्य बोधिसत्त्वस्य समुत्ते-
जन कृतम्—महते खलु ते अजित औत्सुक्याय चित्तं दमयति यदिद संघपरिहापणाय। वक्ष्यते हि—

मैत्रेयस्तुषितसुरालयाधिवासी
प्राप्तव्या दिवि भुवि चेह येन पूजा।
स श्रीमान् दशबलतामवाप्य शीघ्रं
लोकाना भवतु शशीव नित्यपूज्यः॥ ११॥

इदं कर्म महेशाख्यसवर्तनीयम्॥

९ कतमत्कर्म नीचकुलसवर्तनीयम्? उच्यते । स्तब्धता अभिमानिता च । अमातापितृज्ञता । अश्रामण्यता । अब्राह्मण्यता । अकुलज्येष्ठापचायिता । मातापित्रोरप्रत्युपस्थानम् । आर्याणां शीलवतामप्रत्युपस्थानम् । अन्येषां च गुरुस्थानीयानामाचार्योपाध्यायानामप्रत्युपस्थानम् । नीचकुलानां सत्त्वाना परिभवः । इदं कर्म नीचकुलसवर्तनीयम् ॥

१०. कतमत्कर्म उच्चकुलसंवर्तनीयम्? उच्यते । अस्तब्धता । अनभिमानिता । मातापितृज्ञता । श्रामण्यता । ब्राह्मण्यता । कुलज्येष्ठापचायिता । मातापित्रोः प्रत्युपस्थानम् । आर्याणा शीलवता प्रत्युपस्थानम् । अन्येषा च गुरुस्थानीयानामाचार्योपाध्यायाना प्रत्युपस्थानम् । नीचकुलाना सत्त्वानामपरिभवः ॥

a) यथा च भगवता सूत्र उक्तम्—यतो भिक्षवः कुशलशीलवन्तो ब्रह्मचारिणः कल्याणधर्माणः प्रव्रजिता उपसक्रमन्ति, पञ्च तस्मिन् कुलेऽनुशसा. प्रत्यनुशसितव्याः । कतमे पञ्च? इह भिक्षव. उपसक्रान्तेषु शीलवत्सु चित्तानि प्रसादयन्ति । स्वर्गसवर्तनीय तद्भिक्षवः कुल तस्मिन् समये प्रतिपदं प्रतिपन्न भवति । पुनरपरं भिक्षवः उपसक्रान्तेषु L 41
शीलवत्सु अभिवादयन्ति प्रत्युत्तिष्ठन्ति । उच्चकुलसंवर्तनीयं भिक्षव· तस्मिन् समये प्रतिपद प्रतिपन्न भवति । एव सर्वसूत्र योज्यम् । इदं कर्म उच्चकुलसवर्तनीयम् ॥

११. कतमत्कर्म अल्पभोगसंवर्तनीयम्? उच्यते । अदत्तादानम् । अदत्तादानसमादापनम् । चौर्यवर्णवादिता । तदभ्यनुमोदनम् । मातापित्रोर्वृत्त्युपच्छेद. । तथा अन्येषा व्याधितबालवृद्धकृपणाना वृत्त्युपच्छेदः । परस्य लाभेनातुष्टिः । परलाभान्तरायक्रिया दुर्भिक्षाभिनन्दन च । इद कर्म अल्पभोगसंवर्तनीयम् ॥

१२ तत्र कतमत्कर्म महाभोगसवर्तनीयम्? उच्यते । अदत्तादानान्निवृत्तिः, परेषा च अदत्तादानान्निवारणम् । परेषामदत्तादाननिवृत्ताना समनुमोदनम् । मातापित्रोर्वृत्तिप्रदानम् । आर्याणा च शीलवतां वृत्तिप्रदानम् । तथा अन्येषा व्याधितबालवृद्धकृपणानां वृत्तिप्रदानम् । परलाभेन तुष्टिः । परस्यालाभेनातुष्टिः । परलाभसमनुमोदनम् । सुभिक्षाभिनन्दनम् ॥

a) तदेव सूत्रं योज्यम्—पुनरपर भिक्षव. उपसंक्रान्तेषु शीलवत्सु दानानि ददन्ति पुण्यानि च कुर्वन्ति । महाभोगसंवर्तनीय भिक्षवस्तत्कुलं तस्मिन् समये प्रतिपदं प्रतिपन्न भवति । इद कर्म महाभोगसवर्तनीयम् ॥

१३ तत्र कतमत्कर्म दुष्प्रज्ञसंवर्तनीयम्? उच्यते । इहैकत्यो न परान् पृच्छति पण्डितान् श्रमणान् ब्राह्मणान्—को धर्मः? किं धर्मं कुर्वतः श्रेयस्करमिति? अपि तु दुष्प्रज्ञान् सेवति, पण्डितान् परिवर्जयति । असद्धर्मं दीपयति । सद्धर्मं विगर्हति । सद्धर्मभाणकाना वैशारद्योपच्छेदं करोति । सद्धर्मभाणकानामभिनिवेशेन न साधुकारं ददाति । असद्धर्मभाणकानां साधुकार ददाति । मिथ्यादृष्टिं वर्णयति । सम्यग्दृष्टिं विगर्हति । तथा पुस्तक- L 42
लेखकवाचकाना वृत्त्युपच्छेदं करोति ॥

a) सूत्रे चोक्तम्—उन्मत्तकसवर्तनीयम् करोति। समूढकश्च काल करोति। दुष्प्रज्ञश्च भवति। यथोक्त नन्दिकसूत्रे—पञ्चत्रिंशदादीनवा सुरामैरेयमद्यप्रमादस्थाने योजयितव्याः। बुद्धे च अगौरवो भवति, धर्मे सघे चागौरवो भवति। अतः शाक्यसूत्र योजयितव्यम्। यदा च भगवान् कपिलवस्तुमागतः, स मद्यपानदोषान्न कदाचिद्भगवन्तमुपसक्रान्तः। चतुर्भिः स्थविरैर्भगवता प्रेषितैर्गत्वा विनीतः कालगतश्च। शाक्यः पृच्छति—भगवन्, तस्य का गतिरिति। भगवानाह—इमेऽपि च मे शाक्य भाषितस्यार्थमाजानीयुरिति

L 43 सूत्र योजयितव्यम्। यथा चूडापन्थको नाम भिक्षुः। तस्य राजगृहे प्रतिवसतो भगवता गाथोद्दिष्टा। सा च वर्षाल्पयेन न शकिता ग्रहीतुम्। भिक्षवो विस्मयं प्राप्ताः पृच्छन्ति—भगवन्, कस्यैष कर्मणो विपाकेन दुष्प्रज्ञः? भगवानाह—काश्यपे सम्यक्सबुद्धे परिनिर्वृते एष आरण्यको भिक्षुस्त्रिपिटकस्तत्कालमभूत्। भिक्षूणा च बुद्धपूजामकुर्वता बुद्धवचनमन्तर्हितम्। ते भिक्षवस्तस्य समीप गताः—अस्माक बुद्धवचनमन्तर्हितम्। अस्माकमप्युपदेश कुरुष्व। इत्यनेन मात्सर्यदोषात्तेषामुपदेशो न कृत.। एव तच्छासनमन्तर्हितम्। तस्य कर्मणो विपाकेनैष दुष्प्रज्ञः। इद कर्म दुष्प्रज्ञसवर्तनीयम्॥

L 44 १४ तत्र कतमत्कर्म महाप्रज्ञसवर्तनीयम्? उच्यते। इहैकत्यः परिपृच्छकजातीयो भवति। पण्डितान् श्रमणान् ब्राह्मणान् सेवते, दुष्प्रज्ञान् परिवर्जयति। सद्धर्मं दीपयति। असद्धर्मं विगर्हति। धर्मभाणकाना वैशारद्य वर्णयति। सहितभाषिणां साधुकार ददाति। अहितभाषिण परिहरति। सम्यग्दृष्टिं वर्णयति। मिथ्यादृष्टिं विगर्हति। मसीपुस्तकलेखनीप्रदानानि ददाति। न च मद्य पिबति। यथोक्त च नन्दिकसूत्रे—पञ्चत्रिंशद् मद्यपानदोषा अकुशलपक्षेण योजयितव्याः। इद कर्म महाप्रज्ञसंवर्तनीयम्॥

१५ तत्र कतमत्कर्म नरकोपपत्तिसवर्तनीयम्? उच्यते। तीव्र प्रदुष्टचित्तस्य कायवाङ्मनोदुश्चरितम्। उच्छेददृष्टिः। शाश्वतदृष्टि.। नास्तिकदृष्टिः। अक्रियादृष्टि। मत्सरिवादः। अकृतज्ञता। आनन्तर्यम्। आर्याणा शीलवतामभूताभ्याख्यानदानम्। इद कर्म नरकोपपत्तिसंवर्तनीयम्॥

१६. तत्र कतमत्कर्म तिर्यग्योन्युपपत्तिसंवर्तनीयम्? उच्यते। मध्यम कायवाङ्मनोदुश्चरित विचित्र रागसमुत्थितं कर्म, विचित्र द्वेषसमुत्थित कर्म, विचित्र मोहसमुत्थित कर्म। मातापित्रोः प्रव्रजिताना च अकल्पिकप्रदानम्। तिर्यग्योनिगताना सत्त्वानामवहसनम्। तथा प्रणिधानकर्म यथा गोव्रतिककुक्कुरव्रतिकप्रभृतीना प्रणिधानमत्रोपपद्येयमिति॥

a) यथा च बोधिसत्त्वस्य सिहजातकेऽवदानं वक्तव्यम्। यथा च वर्षाकारस्य

L 45 ब्राह्मणस्य मर्कटोपपत्तिः। तद्यथा वर्षाकारेण ब्राह्मणेन स्थविरमहाकाश्यपो भिक्षू राजगृहस्योपरिमेण गृध्रकूटात्पर्वताद् ऋषिगिरिपार्श्वं विहायसा गच्छन् दृष्टः। तेन प्रदुष्टचित्तेन देवदत्ताजातशत्रुसंसर्गाद् वाग्दुश्चरितं कृतम्—एष श्रमणो विहायसा गच्छन् पर्वतात्पर्वत गच्छति। तद्यथा मर्कटो वृक्षाद्वृक्षमेवम्। भगवतः कथितम्—वर्षाकारेण ब्राह्मणेन क्रोध-

जातेन वाग्दुश्चरित कृतम्। तस्य को विपाकः? भगवानाह—अस्य वाग्दुश्चरितस्य विपाकतो वर्षाकारो ब्राह्मणः पञ्चजन्मान्तरशतानि मर्कटो भविष्यतीति। ततस्तेन वर्षाकारेण श्रुत भगवता निर्दिष्टम्—त्व किल पञ्च जन्मान्तरशतानि मर्कटो भविष्यसीति। स संविग्नचित्त प्रसादितवान्। तेन भगवान् परिनिर्वाणकाले पृष्टः—तस्य कर्मण. कदा परीक्षय इति। भगवानाह—तान्येव पञ्च जन्मान्तरशतानि। किं तु राजगृहे उत्पत्स्यसे यथा जम्ब्वा जम्बुद्वीपे जायते। यत्रोल्लिकामात्राणि फलानि। यथा क्षौद्रमध्वनेडकमेवमास्वादानि। तत्रोपपत्तिर्भविष्यति। ततो व्युत्थितस्य ते सुगतिर्भविष्यति। यथा चित्तप्रदूषणेन L 46
सिंहेषूपपन्नः। तदर्थं च भगवता गाथा भाषिता—

दीर्घा जागरतो रात्रिर्दीर्घं श्रान्तस्य योजनम्।
दीर्घो बालस्य ससारः सद्धर्ममविजानतः॥ १२॥

इद कर्म तिर्यग्योन्युपपत्तिसवर्तनीयम्॥

१७. तत्र कतमत्कर्म यमलोकोपपत्तिसवर्तनीयम्? उच्यते। क्रुद्धस्य प्रतिहतचित्तस्य कायवाङ्मनोदुश्चरितम्। लोभो विषमलोभो मिथ्याजीवो जिघासितपिपासितस्य क्रुद्धस्य कालक्रिया। वस्तुष्वभिषक्तचित्तस्य कालक्रिया॥

a) यथा चोक्त भगवता शतवर्गे आगमे कर्मविभङ्गसूत्रे—तस्य खलु पुनरानन्द L 47
पुद्गलस्य अन्यजातिकृत वा कर्म प्रत्युपस्थितं भवति, मरणकाले वा मिथ्यादृष्टि॰। इद कर्म यमलोकोपपत्तिसवर्तनीयम्॥

१८ तत्र कतमत्कर्मासुरलोकोपपत्तिसंवर्तनीयम्? उच्यते। सर्वमृदुकायवाङ्मनोदुश्चरितम्। मानः। अभिमान॰। अधिमानः। अस्मिमानः। मिथ्यामानः। सुकृतकुशलमूलमसुरलोकोपपत्तिपरिणामितम्। सर्वोत्कृष्टरागसमुत्थित दौःशील्य प्रज्ञामुखेन। इद कर्म असुरलोकोपपत्तिसवर्तनीयम्॥

१९. तत्र कतमत्कर्म मनुष्यलोकोपपत्तिसवर्तनीयम्? उच्यते—सुभाविता मन्दभाविताश्च दश कुशलाः कर्मपथाः। कतमे दश? त्रिविध कायकर्म। चतुर्विधं वाक्कर्म। त्रिविधं मनःकर्म। इद कर्म मनुष्यलोकोपपत्तिसवर्तनीयम्॥

२०. तत्र कतमत्कर्म कामावचरदेवोपपत्तिसवर्तनीयम्? उच्यते। सुसमाप्ता दश कुशलाः कर्मपथाः। इदं कर्म कामावचरदेवोपपत्तिसवर्तनीयम्॥

२१. तत्र कतमत्कर्म रूपावचरदेवोपपत्तिसंवर्तनीयम्? उच्यते। सुसमाप्ताः सुसमाहितास्ततो विशिष्टतराः परिपूर्णा दश कुशलाः कर्मपथाः। इदं कर्म रूपावचरदेवोपपत्तिसवर्तनीयम्॥

२२. तत्र कतमत्कर्म आरूप्यावचरदेवोपपत्तिसंवर्तनीयम्? उच्यते। चतस्र आरूप्यसमापत्तयः। आकाशानन्त्यायतनम्। विज्ञानानन्त्यायतनम्। आकिंचन्यानन्त्या-

यतनम्। नैवसञ्ज्ञानासंज्ञायतनम्। एताः समापत्तयो भाविता बहुलीकृताश्च भवन्ति। इदं कर्म आरूप्यावचरदेवोपपत्तिसवर्तनीयम्॥

२३ तत्र कतमत्कर्म कृत नोपचितम्? उच्यते। यत्कृत्वा कर्म आर्त्तीयति जिह्रेति
L 48 विगर्हति विजुगुप्सति देशयति आचष्टे व्यक्तीकरोति। आयत्यां संवरमापद्यते। न पुनः करोति। इद कर्म कृत नोपचितम्॥

२४. तत्र कतमत्कर्मोपचितं न कृतम्? उच्यते। यत्कर्म कायेन परिपूरयितव्यम्, तत्र प्रदुष्टचित्ते वाच भाषते—एव ते करिष्यामीति। इदं कर्मोपचित न कृतम्॥

२५. तत्र कतमत्कर्म कृत चोपचित च? उच्यते। यत्कर्म साचेतनिकम्। यथोक्तं भगवता—

मनःपूर्वंगमा धर्मा मनःश्रेष्ठा मनोजवाः।
मनसा चेत्प्रदुष्टेन भाषते वा करोति वा।
ततस्तं दुःखमन्वेति चक्र वा वहतः पदम्॥ १३॥
मनःपूर्वंगमा धर्मा मनःश्रेष्ठा मनोजवाः।
मनसा चेत्प्रसन्नेन भाषते वा करोति वा।
ततस्त सुखमन्वेति छाया वा अनुयायिनी॥ १४॥

इद कर्म कृतं चोपचितं च॥

२६. तत्र कतमत्कर्म नैव कृत नैवोपचितम्? उच्यते। यत्कर्म साचेतनिक स्वप्नान्तरे कृत कारितं वा। इद कर्म नैव कृत नैवोपचितम्॥

२७. तत्र कतमत्कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नः परिपूर्ण नैरयिकमायुः
L 49 क्षपयित्वा च्यवति? उच्यते। इहैकत्येन नरकीय कर्म कृत भवत्युपचितम्। स तत्कर्म कृत्वा नार्त्तीयति। न जिह्रीयति। न विगर्हति। न जुगुप्सति। न देशयति। नाचष्टे। न व्यक्तीकरोति। नायत्यां सवरमापद्यते। भूयस्या मात्रया हृष्यति। प्रीतिमुत्पादयति। यथा देवदत्तकोकालिकादयः। इद कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नः परिपूर्णं नैरयिकमायुः क्षपयित्वा च्यवति॥

२८. तत्र कतमत्कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नोऽर्धनैरयिकमायुः क्षपयित्वा च्यवति? उच्यते। इहैकत्येन नारकीयं कर्म कृत भवत्युपचितम्। स तत्कृत्वा नार्त्तीयति। न जिह्रीयति। न विगर्हति। न जुगुप्सते। न देशयति। नाचष्टे। न व्यक्तीकरोति, नायत्या सवरमापद्यते। अपि तु न भूयस्या मात्रया हृष्यति, न प्रीतिमुत्पादयति। इद कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नोऽर्धनैरयिकमायुः क्षपयित्वा च्यवति॥

२९. तत्र कतमत्कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नमात्र एव च्यवति? उच्यते। इहैकत्येन नारकीय कर्म कृतं भवत्युपचितं च। स तत्कृत्वा आर्त्तीयति।

जिह्रीयति । विगर्हति । विजुगुप्सति । आचष्टे । देशयति । व्यक्तीकरोति । आयत्यां संवरमापद्यते । न पुनः कुरुते । सचेन्नरकेषूपपद्यते, उपपन्नमात्र एव च्यवति ॥

a) यथा राजा अजातशत्रुः । तेन देवदत्तसहायेन आनन्तर्यं कर्म कृतम् । पितृवधः । संघभेदः । धनपालमोक्षणम् । शिलायन्त्रमोक्षणं देवदत्तस्यादेशेन । तस्मादवीचिनरकगमनं श्रुत्वा तेन संविग्नेन भगवति चित्तं प्रसादितम् । श्रामण्यफलसूत्रेऽत्ययदेशनं कृतम् । प्रतिसंदधाति कुशलमूलानि । तेन मरणकाले चित्तं प्रसादितम् । अस्थिभिरपि बुद्धं भगवन्तं शरणं गच्छामि । स उपपन्नमात्र एव च्यवति । इदं कर्म येन समन्वागतः पुद्गलो नरकेषूपपन्नमात्र एव च्यवति ॥ L 50

३० तत्र कतमत्कर्म नियतोपपत्तिसंवर्तनीयम्[1] उच्यते । यत्कृत्वा क्वचिदुपपत्तौ परिणामयति—अमुत्रोपपद्येयमिति, स तत्रोपपद्यते । यथा भगवतो जातके श्यामाकजातकप्रभृतिषु प्रणिधानवशादुपपत्तिर्वर्ण्यते । इदं कर्म नियतोपपत्तिसंवर्तनीयम् ॥

३१. तत्र कतमत्कर्म अनियतोपपत्तिसंवर्तनीयम्[1] उच्यते । यत्कृत्वा न क्वचिदुपपत्तौ परिणामयति—अमुत्रोपपद्येयमिति, यथा सत्त्वाः कर्मवशादुपपद्यन्ते । इदं कर्म अनियतोपपत्तिसंवर्तनीयम् ॥

३२ तत्र कतमत्कर्म देशान्तरविपाकम्[1] उच्यते । यत्कर्म तस्मिन्नेव जन्मान्तरे वा देशान्तरगतस्य विपच्यते शुभमशुभं वा, तत्कर्म देशान्तरविपाकम् । यथा भगवान् कथयति—भूतपूर्वं भिक्षवो जम्बुद्वीपे मनुष्याणामपरिमाणमायुर्भवति, यथा राज्ञो माधातुः । अथान्यतरस्मिन्नगरे मैत्रायज्ञो नाम सार्थवाहपुत्रो बभूव । स पञ्चशतसहायपरिवृत उद्यानं L 51
गतः । तैश्च सहायैरुक्तः—अस्मिन्नगरे वणिजस्तव पितरं पूर्वंगमं कृत्वा महासमुद्रमवतीर्य सुवर्णभूमिप्रभृतीनि देशान्तराणि गत्वा द्वीपान्तराणि च पश्यन्ति । द्रव्योपार्जनं च कुर्वन्ति । वयमपि त्वा पूर्वंगमं कृत्वा समुद्रमवतीर्य द्रव्योपार्जनं करिष्यामो द्वीपान्तराणि च द्रक्ष्यामः । ततस्तेन एवमिति प्रतिश्रुतम् । स रात्रौ गत्वा मातरमापृच्छति—अम्ब सुवर्णभूमिं गमिष्यामः । तस्य माता आह—अपरिमाणं पुत्र द्रव्यं गृहे तिष्ठति । न गन्तव्यमिति । स मातुर्वचनेन निवृत्तः । स भूय उद्यानं गतः सहायैरुक्तः । तमर्थं विज्ञापयामः । तेन तथास्त्विति प्रतिश्रुतम् । स भूयो मातरं गत्वा पृच्छति । भूयश्च मात्रा पादपतनान्निवर्तितः । एवं तृतीयमपि । स कालान्तरेण भूय उद्यानं गत्वा सहायैरुक्तः । तव दोषाद्वयमपि न L 52
गच्छामः । पृच्छामो वयम् । त्रयोदश्या गमिष्याम इति । तेन मातुरविदितमेव बहिर्बहुभाण्डं निर्गमितम् । तस्य गमनकाले प्रस्थितस्य माता द्वारे पादपतनं कृत्वा स्थित्वा पुत्र न गन्तव्यमिति । स क्रुद्धो मातुः पादं मस्तके दत्त्वातिक्रान्तः, समुद्रकूलं च गतः । तेन सहाया उक्ताः—समुद्रमवतरतां न ज्ञायते जीवितं मरणं च । वयं सर्व एवाष्टाङ्गसमन्वागतं पोषधं गृह्णीमः । तैस्तथास्त्विति प्रतिपन्नम्, पोषधं च गृहीतम् । ते समुद्रमवतीर्णाः । समुद्रमध्यगतानां च तेषां विषमवाताद्याहतः पोतो विनष्टः । तेन सर्वे कालगताः । मैत्रायज्ञश्च

म प्रटमुख्यानवबुद्धं ताम्रघटं च गृह्य समुद्रकूल उत्तीर्णः । स पर्यटमानः सौवर्णप्राकारं नगर पश्यति आरामसपन्नम् । वनसंपन्नम् । पुष्करिणीसपन्नम् । धूपितधूपनम् । मुक्तपुष्पावकीर्णम् । अवसक्तपट्टदामकलापम् । ततश्चतस्रोऽप्सरसो निर्गताः । स ताभिर्गृह्य नगर प्रवेशित । स ताभि. सार्धं बहूनि वर्षाणि क्रीडितवान् । बहूनि वर्षशतानि । बहूनि वर्षसहस्राणि । बहूनि वर्षशतसहस्राणि क्रीडितवान् । स ताभिरुक्तः—आर्यपुत्र, तवाय पृथिवीप्रदेशोऽपूर्वः । अस्माकमविदित न निर्गन्तव्यम् । यदि निर्गच्छसि, सर्वथा उत्तराभिमुखेन न गन्तव्यम् इति । स तस्मात्कालान्तरेण निर्गतः । स भूयो गच्छन्नगर पश्यति रूप्यमयेन प्राकारेण आरामसपन्न वनसपन्नम् । पूर्ववद्यावत् । तस्मादप्यष्टौ अप्सरसो निर्गताः । ताभिरप्यसौ गृह्य प्रवेशितः । स ताभि सार्ध बहूनि वर्षाणि क्रीडितवान् । बहूनि वर्षशतानि बहूनि वर्षसहस्राणि बहूनि वर्षशतसहस्राणि क्रीडितवान् । पूर्ववत् । ततोऽपि कालान्तरेण निर्गत । भूयश्च पर्यटन् नगर पश्यति वैदूर्यमयेन प्राकारेण आरामसपन्न वनसपन्न पुष्करिणीसंपन्नम् । धूपितधूपन मुक्तपुष्पावकीर्णमवसक्तपट्टदामकलापम् । तस्मादपि षोडश अप्सरसो निर्गताः । ताभिरपि सार्धं बहूनि वर्षाणि क्रीडितवान् । पूर्ववत् । स ताभिरुक्तः—आर्यपुत्र, तवायं पृथिवीप्रदेशोऽपूर्व । अस्माद्विहारात् तेन न निर्गन्तव्यम् । अथ निर्गच्छसि, सर्वथा
L 53 उत्तरामुखेन न गन्तव्यमिति । स तस्मात्कालान्तरेण निर्गतः । भूयः पर्यटमानः स्फटिकप्राकारेण नगरम् । तथैवारामसपन्न वनसपन्न पुष्करिणीसपन्न धूपितधूपनं मुक्तपुष्पावकीर्णमवसक्तपट्टदामकलापम् । तस्मादपि द्वात्रिंशदप्सरसो निर्गताः । ताभिरपि सार्ध बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि वर्षशतसहस्राणि क्रीडितवान् । स ताभिरप्युक्त—आर्यपुत्र, तवाय पृथिवीप्रदेशोऽपूर्व. । अस्माद्विहारात्तेन न निर्गन्तव्यम् । अथ निर्गच्छसि, उत्तरामुखेन न गन्तव्यमिति । स तासा प्रमादाद् रतिखिन्नो निर्गत । उत्तराभिमुखेन गच्छन् कण्टकाटवीं प्रपन्नः । अथ कृष्णायसेन प्राकारेण नगर पश्यति । स तत्र प्रविष्ट । प्रविष्टमात्रस्य च नगरद्वार पिहितम् । उर्ध्वं पश्यति—प्राकारो वर्वते, भैरव च शब्द शृणोति । तत्रस्थश्च चिन्तयति—किमेतदिति । स तत्र गतः । अथ पश्यति पुरुषस्यासिधार चक्र शिरश्छिनत्ति । स भीतः पृच्छति—किमतद्भो पुरुष । नैरयिकपुरुषः प्राह—एष प्रत्येकनरकः । मैत्रायज्ञ आह—किं त्वया पापकर्म कृतमिति ? स कथयति—अस्मिन् जम्बुद्वीपे महाकोशली नाम नगरम् । तत्राह महासार्थवाहपुत्रोऽभूवम् । स पञ्चभिः सहायशतै. सहोद्यान गतः । ते कथयन्ति—तव पिता सार्थवाहोऽस्माक पूर्वपुरुषोऽस्ति । पूर्वगम कृत्वा देशान्तराणि गत्वा द्रव्योपार्जनानि कुर्वन्ति । सुवर्णभूमिं सिंहलद्वीप च प्रभृतीनि च द्वीपान्तराणि पश्यन्ति । वयमपि त्वया पूर्वंगमेन देशान्तर पश्याम इति । वयमपि गच्छाम इति प्रतिश्रुतम् । सोऽहं गृह गत्वा मातरमापृष्टवान्—अहमेव देशान्तर गमिष्यामीति । माता मे आह—पुत्र, तव पिता समुद्रमवतीर्णो देशान्तर गत एव कालगतः । त्वमेकपुत्रकः । प्रभूत गृहे द्रव्य तिष्ठति । न गन्तव्यम् । इति ।

मया न गच्छामीति प्रतिश्रुतम्। एव द्वितीय तृतीय चतुर्थमप्यापादपतन निवर्तितः। कालान्तरेणाह भूयोऽप्युद्यान गतः। सहायैरुक्त.–अवश्य गन्तव्यमिति। गमिष्यामीति मया प्रतिश्रुतम्। अथ मम प्रस्थितस्य माता द्वारे पादपतन कृत्वा स्थिता–पुत्र नार्हसि मा परित्यक्तुमिति। तस्या अह मस्तके पाद दत्त्वा प्रक्रान्त.। सोऽह पञ्चभि सहायशतैः सार्धं समुद्रकूलं गतः। अष्टाङ्गसमन्वागत पोषधं गृह्य समुद्रमवतीर्णः। सुवर्णभूमिप्रस्थितानामस्माक विषमवाताद्याहत. पोतो विनष्टः। ते सर्वे कालगता.। अह तु बहुभिर्दिवसै. कथचन समुद्रादुत्तीर्णः। अथ प्रपीड्यमानः सौवर्णेन प्राकारेण नगरम् आरामसपन्न वनसंपन्न पुष्करिणीसपन्न धूपितधूपन मुक्तपुष्पावकीर्णम् अवसक्तापट्टदामकलापम्। तस्माच्चतस्रोऽप्सरसो निर्गताः। ताभि. प्रवेशितोऽस्मि। यावत्ताभिरपि सार्धं बहूनि वर्षाणि, L 54 बहूनि वर्षशतानि, बहूनि वर्षशतसहस्राणि क्रीडितम्। तत कालान्तरेण निर्गच्छन् प ··पूर्ववत्। तस्मादप्सरसो निर्गताः। ताभिः प्रवेशितोऽस्मि। यावत्ताभिरपि सार्धं बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि वर्षशतसहस्राणि क्रीडितम्। एवं वैडूर्यमयम्। तस्मादपि षोडशाप्सरसो निर्गता ··· तस्मादपि निर्गतः। स्फटिकमय नगरं पश्यामि। पूर्ववत्। तस्माद् द्वात्रिंशदप्सरसो निर्गताः। ताभिरपि सह तथैव क्रीडितम्··· · कण्टकाटवी प्रपन्नः। यावद्। आयसनगर पश्यामि। सोऽहमत्र प्रविष्ट·। प्रविष्टस्य मे द्वारं पिहितम्। अत्र च पूर्ववत् असिधारं चक्रं शिरसि परिवर्तमान पश्यामि। तत्र च ममावस्थितस्य शिरसि असिधार चक्र सक्रान्तम्। यदह मातु निवृत्तः। अष्टाङ्गसमन्वागत च पोषधं गृहीतम्, तस्य कर्मणो विपाकेन चतुर्षु महानगरेषु प्रत्येकस्वर्गस्य। मातुः शिरसि पाद दत्त्वा गतः, तस्य कर्मणो विपाकेन ममासिधार चक्र शिरश्छिनत्ति। मैत्रायज्ञश्चिन्तयति–मयाप्येतदेव कर्म कृतम्। उपस्थितो ममापि कर्मविपाक इति। नैरयिकपुरुषः प्राह–कुतस्त्वम्? मैत्रायज्ञः कथयति–अस्ति जम्बूद्वीपे तामलिप्त नाम महानगरम्। ततोऽहम्। मयापि चैतत्सर्वमनुष्ठेयम्? नैरयिकपुरुषः प्राह–अस्ति मया अद्यान्तरिक्षे घोषः श्रुतः–क्षीणस्तव कर्मविपाकः। मैत्रायज्ञो नाम सार्थवाहपुत्रः अद्यागमिष्यति एतदेव कर्म कृत्वेति। मैत्रायज्ञ आह–किं भोजनम्? स आह–अत एव मस्तकाच्छिद्यमानाद्यत्पूयशोणित स्रवति। एवमुक्त्वा स पुरुष. कालगतः पतितः। मैत्रायज्ञो भीत. सविग्नः। सर्वेण भावेन मातापित्रो. प्रणिपात कृत्वाह–

ऊर्ध्वं भवाग्रविततानधरादवीचि
तिर्यक्पथानगणितानपि लोकधातून्॥
आत्मन् सुरासुरनरोरगभूतकाये
सत्त्वानि यान्युपगतानि सुखिनो भवन्तु॥ १५॥

एवं चिन्तयित्वा सर्वेण भावेन मातापित्रोर्नमस्कार कृत्वा प्रणिपात च, प्रणिधान L 55 च कृतवान्–यत्र यत्रोपपद्यामि, मातापित्रोः शुश्रूषा कुर्यामहमिति। ये च केचन सत्त्वाः

प्रत्येकनरके उपपद्यन्ते, तेषा सर्वेषामर्थाय अहमत्रावस्थितः । ये च केचन लोके युक्ताश्च मुक्ताश्च तेषां नम॰ । ते मां पालयन्तु । इदमुक्त्वा तस्मिन्नैरयिकपुरुषः काले स्थितः । पुनश्च प्रणिधानं कृत्वा पुनरप्याह–

कृत्वादौ नरकमवीचिमा भवाग्राद्
ये सत्त्वाश्च्युतिगतिबन्धनावबद्धाः ।
ते सर्वे सुखमतिनाम्य धर्मयुक्त
निर्वाण यदजरमच्युतं स्पृशन्तु ॥ १६ ॥

अथ तच्चक्रमस्पृशमान शिरसि नित्यकालमेवोपरि विहायसि स्थितम् । नित्यं च किल तस्य माता आशिष प्रयुङ्क्ते–यद्यस्ति मम किंचित्पुण्यफलं प्रदानेन वा शीलेन वा ब्रह्मचर्येण वा पतिव्रतत्वेन वा, तेन पुण्यफलेन मम पुत्रस्य यत्र तत्र स्थितस्य मा किंचित्पापं भवतु । तेन च तस्य शिवमासीत् ॥

b) यथा श्यामजातके सविषेण शरेण श्यामकुमारस्य मातापित्रोराशीर्वचनेन शल्यश्च निर्गतो विप च नष्ट मृतश्च सजीवितः, तद्वत् तस्यापि शिवमासीत् । यथा वज्रराजगृहे धनंजयसूत्रे आर्यशारद्वतीपुत्रेणोक्तम् । तमेन ब्राह्मण मातापितरौ सम L 56 मानितौ सम्यक्पूजितौ कल्याणेन मनसा अनुकम्पेते । अधोसी(?) बत न पुत्रो धार्मिकेण कर्मगुणेन न च किंचित्पाप कर्म करोति । सर्वं सूत्र योज्यम् । यथा च शिवालकसूत्रे भगवतोक्तम्–तमेवं गृहपतिपुत्र मातापितरौ पञ्चसु स्थानेषु प्रत्युपस्थितौ पञ्चसु स्थानेषु प्रतिष्ठापयतः । तस्य पुनर्गृहपतिपुत्र मातापितृभ्यामनुकम्पितस्य पुरुषपुद्गलस्य वृद्धिरेव प्रत्याशासितव्या ॥

c) स तत्र प्रीत्याहारः स्थित्वा परिपूर्णेषु षष्टिवर्षसहस्रेषु कालगतः ॥

d) यथा राजा अजातशत्रुरपरिपूर्ण एव नैरयिकायुःप्रमाणे च्युतः । अवन्ध्यत्वात्कर्मणा कदाचिदतीव शिरोरुजा भवति ॥

e) अत्र कृतप्रणिधानस्य मैत्रायज्ञस्य मातापितृशुश्रूषा वक्तव्या । यथा श्यामजातके अन्धौ मातापितरौ हस्तिभूतेन परिपालितौ । अन्येषु जातकशतेषु च ॥

f) अथ भगवान् प्रातकाल भिक्षूनामन्त्रयते–स्यादेवं भिक्षवो युष्माकम्–अन्यः स तेन कालेन तेन समयेन मैत्रायज्ञो नाम सार्थवाहपुत्रो बभूवेति ? नैवं द्रष्टव्यम् । अहं स तेन कालेन तेन समयेन मैत्रायज्ञो नाम सार्थवाहपुत्र आसीत् । तस्मात्तर्हि भिक्षवो मम वचनं श्रद्दधानैर्बुद्धे सगौरवैर्भवितव्यम्, धर्मे संघे सगौरवैर्भवितव्यम् । मातापितृषु आचार्योपाध्यायेषु सगौरवैर्भवितव्यम् । एव वो भिक्षवः शिक्षितव्यम् । य एवं देशान्तर- L 57 गतः सुखं दुःख प्रत्यनुभवति । यथा मैत्रायज्ञेन देशान्तरगतेन तस्मिन्नेव जन्मनि प्रत्येकस्वर्गं प्रत्येकनरक चानुभूतम्, य एवं देशान्तरगतः सुख दुःख प्रत्यनुभवति । इदं कर्म देशान्तरविपाकम् ॥

g) एतद्दर्शयति भगवान् । यथा मयि तथा मातापितृषु आचार्योपाध्यायेषु वचनकारिणां समो विपाकः इहलोके परलोके च । कथमिहलोके सम· कर्मविपाको भवति ? यथा श्रावस्त्या दरिद्रपुरुषो भगवन्त सश्रावकसघ भुञ्जान दृष्ट्वा चित्तं प्रसादितवान् । तेन महापुण्यसंभार उपार्जितः, राज्यसवर्तनीय कर्म कृतम् । तदेव च मोक्षबीजम् । तच्च ज्ञात्वा भगवता गाथा भाषिता—

ये तत्राभ्यनुमोदन्ते वैयावृत्यकराश्च ये ।
अनूना दक्षिणा तेषा तेऽपि पुण्यस्य भागिनः ॥ १७ ॥

एतदेव गाथासमुत्थानम्—

मनःपूर्वंगमा धर्मा मनःश्रेष्ठा मनोजवाः ।
मनसा चेत्प्रसन्नेन भाषते वा करोति वा ।
ततस्त सुखमन्वेति छाया वा अनुयायिनी ॥ १८ ॥

ततश्च्युतश्च देवेषूपपन्नः । यथा च तगरशिखी नाम प्रत्येकबुद्धः । दुर्भिक्षे दरिद्रपुरुषेण सूपः प्रतिपादित. । स च तदहरेव तस्मिन्नगरे राजाभिषिक्तः । ततः कालान्तरेण प्रत्येकबुद्धः संवृत्तः । य एष सूत्रान्तरे परिपठितः प्रत्येकबुद्धस्तगरशिखी नाम । एव तावद्भगवति L 58 सांदृष्टिकश्चित्तप्रसादस्य फलविपाकः ॥

h) कथं मातापितृषु ? यथा मैत्रायज्ञः सार्थवाहपुत्रः आचतुर्थं प्रतिनिवृत्तो मातुर्वचनेन चतुर्षु महानगरेषु प्रत्येकस्वर्गसुखमनुभूतवान् । तत्तु तस्य मोक्षबीजम् । एवं मातापितृष्वपि सांदृष्टिकः फलविपाकः ॥

i) कथ भगवति मातापितृषु च चित्तप्रदोषेण नरकगमन भवति ? उच्यते । देवदत्तो भगवति चित्त प्र[दुष्य त]तोऽवीचौ महानरके पतितः । तथा सिन्धुविषये रौरुक नाम नगरम् । तत्र शिखण्डी राजपुत्रः पितर घातयित्वा नरके पतितः । एव भगवति मातापितृषु च चित्तप्रदूषणेन नरकगमन भवति ॥

j) तेन कारणेन किं नास्ति नानाकरणम् ? उच्यते । महान्त नानाकरणम् । भगवाननेककल्पशतसहस्रोपार्जितकुशलमूलसभृतसभारः अनुत्पन्नस्य मार्गस्योत्पादयिता बुद्धो बोधाय मार्गं देशयति । तस्मिन् कृत· प्रसादोऽप्रमेयफलविपाक., अन्ते च निर्वाणम् । मातापित्रोर्मोक्षमार्गोऽविदितः । अपि च न सर्वं मातापित्रोर्वचन कार्यम् । सन्ति केचिन्मिथ्यादर्शनोपहतचित्ताः पुत्रान् ब्रुवन्ति—एहि मामवसन नय । तव च भविष्यति हिताय सुखाय मम च । [प्रपाते मा पा]तय अग्नौ वा प्रवेशयेति । L 59 तन्नैव कर्तव्यम् । कि कारणम् ? मातापितरौ घातयित्वा अवश्य नरकगमनम् । अत एव भगवता प्रतिषिद्धः—न मातापितृघातकः प्रव्राजयितव्य· । नास्ति तस्य प्रव्रज्या, नोपसपदा । नास्ति फलप्राप्तिः । एवविध वर्जयित्वा अन्यथा समसमा मातापितर आचार्योपाध्यायाः । कथं च समसमाः ? ननु भगवतोक्तम्—मातापित्रोः पुत्रस्नेहो यावदस्थिमज्जमाश्रित्य तिष्ठति

अत एव मातापितृभ्यामननुज्ञातस्य नास्ति प्रव्रज्या। यथा आर्यराष्ट्रपालशोणप्रभृतयो
भगवता मातापितरावननुज्ञाप्य न प्रव्राजिताः। अद्यापिताननुज्ञातान्न प्रव्राजयन्ति।
यथा च भगवति प्रव्रजिते शुद्धोदनस्य पुत्रशोकेन चक्षुषी अन्तर्हिते। उच्यते। माता-
पितरः पञ्च स्थानानि प्रत्याशसमानाः पुत्रमिच्छन्ति। सवर्धितो नो वृद्धभूतान् पाल-
यिष्यति, कार्यं च करिष्यति, द्रव्यस्वामी च भविष्यति, कालगतानां च पितृपिण्डं दास्यति,
कुलवंशश्च चिरस्थितिको भविष्यति। इमानि पञ्च स्थानानि प्रत्याशसमाना मातापितरः
पुत्रमिच्छन्ति। नैवमाचार्योपाध्यायाः। केवलमेव कारुण्यं पुरस्कृत्य कथमस्यानादिकाल-
प्रवृत्तस्य ससारचक्रस्य पर्यन्तं कुर्यादिति। यथा भगवता विनय उक्तम्—उपाध्यायस्य
शिष्ये पुत्रसज्ञा भवति। शिष्यस्याप्युपाध्याये पितृसज्ञा भवति। एवमन्योन्यनिश्रिता
सुखिनो भविष्यन्ति। एवमाचार्योपाध्यायाः समसमा मातापितृभिः। यथा चक्रवर्तिसूत्रे
L 60 उक्तं भगवता—कस्य कर्मणो विपाकेन राजा चक्रवर्ती हस्तिरत्नान्यश्वरत्नानि च प्रतिलभते?
दीर्घरात्रं राजा चक्रवर्ती मातरं पितरं वा स्वयं वा स्कन्धे वहति वा रथादिभिर्वाहयति
वा। आचार्योपाध्यायान् स्वयं वहति वाहयति वा। तस्य कर्मणो विपाकेन राजा चक्रवर्ती
हस्त्यश्वरत्नानि प्रतिलभते। अनेनापि कारणेन समसमा मातापितर आचार्योपाध्यायाश्च।
अपि त्वस्त्यन्यन्नानाकरणम्। गृहस्थानां मातापितृप्रव्रजिताः पूज्याः। प्रव्रजितानामाचार्यो-
पाध्याया एव पूजनीयाः। यथा महीशासका गोत्रान्तरीया विनयेऽर्थोत्पत्तिं धारयन्ति।
यथाह भगवान्—न भिक्षवः आचार्योपाध्यायाननापृष्ट्वा देशान्तरं गन्तव्यम्। कस्मात्?
भवति भिक्षवो जीवितान्तरायः, भवति ब्रह्मचर्यान्तरायः, भवति पात्रचीवरान्तरायः। भूत-
पूर्वं भिक्षवो मैत्रायज्ञो नाम सार्थवाहपुत्र आसीदिति। एतदेवावदानं यथावस्थितं वक्तव्यम्।
एवमेव समसमा आचार्योपाध्याया मातापितरश्च। यथा चोक्तं भगवता—यो भिक्षवो
L 61 मातापितरौ स्कन्धेन गृह्य जम्बुद्वीपं पर्यटेत, योगोद्वहनं च कुर्यात्, चतुर्षु द्वीपेषु हिरण्य-
सुवर्णं च दद्यात्, एवमपि मातापित्रोः प्रत्युपकारो न कृतो भवति। यश्च पुनर्बुद्धे
प्रसादयेत्, धर्मे सघे, पञ्चसु शिक्षापदेषु आर्यकान्तेषु शीलेषु प्रतिष्ठापयेत्, एवं माता-
पितॄणां पुत्रैः प्रत्युपकारः कृतो भवति। तच्च सर्वमाचार्योपाध्यायाः कुर्वन्ति। यथाह
भगवान् दक्षिणाविभङ्गसूत्रे यथा—आनन्द पुद्गलः पुद्गलमागम्य बुद्धं शरणं गच्छति, धर्मं
सघं शरणं गच्छति। यथोक्तानि च शिक्षापदानि वक्तव्यानि। तेन आनन्द पुद्गलेन तस्य
पुद्गलस्य न शक्यं प्रतिकर्तुम् यदिदमभिवादनप्रत्युत्थानमात्रेण। एवमपि प्रतिविशिष्टतरा
आचार्योपाध्याया मातापितृभ्याम्। यथा च महाकात्यायनेन अवन्तिप्रभृतयः पश्चिमजन-
पदा अभिप्रसादिताः। यथा च आर्यमध्यदिनेन कश्मीरायां पञ्च नागशतानि विनीय
L 62 देशोऽभिप्रसादितः। अनवतप्तसरसश्च कुङ्कुममानीय कश्मीरायां प्रतिष्ठापितम्। तच्च अद्यापि
लोकोपभुक्तम्। विहारश्च कारितः—अद्यापि च तत्रैव प्रतिवसन्ति। यथा आर्यगवांपतिना
सुवर्णभूम्यां योजनशतं जनपदोऽभिप्रसादितः। यथा च पूर्वविदेहा आर्यपिण्डोलभारद्वाजे-

नाभिप्रसादिताः, ( विहारश्च कारित., अद्यापि तत्रैव प्रतिवसन्ति )। यथा आचार्यमहेन्द्रेण L 63
सिहलद्वीपे विभीषणप्रभृतयो राक्षसाः समये स्थापिता', देशश्चाभिप्रसादित'। यथा च
अध्यर्धशतके सूत्रे आर्यपूर्णेन शूर्पारके नगरे पञ्चोपासकशतानि अभिप्रसादितानि। L 64
चन्दनमालश्च विहारः कारितः। यथा च भगवान् पञ्चभिर्भिक्षुशतै. सार्ध विहायसा तत्र गतः, जनकायश्चाभिप्रसादित.। अपि च किमेकैकस्य भिक्षोर्नामग्रहणेन कृतेन? यतो भगवान् परिनिर्व ...न्तर् य' कश्चिद्विनीतो भिक्षुर्वा भिक्षुणी वा उपासको वा उपासिका वा सर्वे ते भिक्षुभिरेव विनीता.। यश्च येनाभिप्रसादित' स तस्याचार्योपाध्यायश्च। एत . भगवान्—मातापितर' पञ्च स्थानानि प्रत्यनुशासमाना' पुत्रमिच्छन्ति। आचार्योपाध्यायास्तु कारुण्यान्निर्वाण धर्म देशयन्ति। अनेनापि कारणेन मातापितृभ्य आचार्योपाध्यायाः प्रतिविशिष्टतरा इति। अत एवमाह भगवान्—मम भिक्षवो वचन श्रद्दधानैर्भगवति पर' प्रसाद कार्य, वर्मे सघे मातापितृष्वाचार्योपाध्यायेषु पर. प्रसादः कार्य.। तद्वो भविष्यति दीर्घरात्र हिताय सुखायेति। इद कर्म देशान्तरविपाकम्॥

३३. कतमत्कर्म येन समन्वागतः पुद्गल' पूर्व सुखितो भूत्वा पश्चाद्दु'खितो भवति? L 65
उच्यते। इहैकत्यो दान याचित समानः पूर्वं प्रहृष्ट प्रतिजानीते। प्रमुदितो ददाति। दत्त्वा च खलु [वि]प्रतिसारी भवति। स यदा मनुष्येषूपपद्यते, आढ्येषु महाधनेषु महाभोगेषु कुलेषूपपद्यते। पश्चात्तस्य ते भोगा परिक्षय पर्यादान गच्छन्ति। स पश्चाद्दरिद्रो भवति। यथा आर्यगोपकः। तेन किल ऋकुच्छन्दे सम्यक्सबुद्धे भिक्षुसघस्य गोधेनुर्दत्ता। स पश्चात्परैर्गर्हित'—न साधुकृतेय दत्तेति। तेन चित्त प्रदूषितम्। स यत्र यत्रोपपद्यते, तत्र तत्र
महाधनो भवति, पश्चात्तेन चित्तप्रदोषेण दरिद्रो भवति। पश्चिमे भवेऽपि राजगृहे नगरे L 66
अन्यतरस्मिन् गृहे प्रत्याजातः। तस्य जायमानस्य माता कालगता। अनेन माता मारिता जायमानेन। मूलनक्षत्रे जातोऽयम्। मा निर्मूल कुल करिष्यति। अमङ्गलोऽयमिति मात्रा सार्धं श्मशाने उत्सृष्ट.। तत्रापि च मातुरेकस्तनात् क्षीरं प्रवरति तेनैव पुण्यानुभावेन। विवृद्धश्च भगवता आगत्य, प्रव्राजित'। एतच्च सर्वमनुपूर्वेण भगवता भिक्षूणा कथितम्। एवमनेन पूर्व क्षीरधेनुः प्रसादजातेन दत्ता, पश्चाद्विप्रतिसारी सवृत्तः। तस्येद कर्मफलम्। यस्त्वसौ पूर्वकश्चित्तप्रसाद., तदेवास्य मोक्षबीजम्। यथा च चम्पाया महानगर्यामीश्वरो गृहपतिपुत्रः। तेन भृत्याना हस्ते सर्व धन चतुर्दिश वाणिज्याय प्रेषितम्। तच्च सर्व देशान्तरगत विनष्टम्। स च परकर्मकरः सवृत्तः। इद कर्म येन समन्वागतः पुद्गलः पूर्वं सुखितो भूत्वा पश्चाद्दु.खितो भवति॥

३४ कतमत्कर्म येन समन्वागतः पुद्गल. पूर्वं दु.खितो भूत्वा पश्चात्सुखितो भवति? उच्यते। इहैकत्यो दान समादाय याचितः समानः प्रतिजानीते। कृच्छ्रेण ददाति। दत्त्वा तु दान पश्चात्प्रीतिमुत्पादयति। स यदा मनुष्येषूत्पद्यते, दरिद्रेषु कुलेषूत्पद्यते। तस्य पश्चात्ते भोगा अभिवृद्धिं गच्छन्ति। अत्र च अनिरुद्धस्यावदान वक्तव्यम्। तेन किल

L 67 राजगृहे श्यामाकतण्डुलभक्तमुपरिष्टस्य प्रत्येकबुद्धस्य पिण्डपातो दत्तः। तद्दिवसमेव राज्ञा तुष्टेन अष्टौ महाग्रामा दत्ताः। तच्च पश्चिमक दारिद्र्यम्। यथा तस्यैव व्याकरणं पूर्वापरान्तके सूत्रे। यथा च श्रावस्त्या दरिद्रपुरुषेण खजनफलानि याचित्वा क्षेत्र नीतानि कर्पणार्थे। तस्य पत्न्या परगृहे भाजनमाधाय व्रीहिमानीय भक्तं सिद्धम्। अथ भगवता शारिपुत्रमौद्गल्यायनमहाकाश्यपसुभूतिप्रभृतयः एते उक्ताः—अमुकस्य गृहपतेर्गृहे प्रथम भैक्ष्यं ग्रहीतव्यमिति। ते च सर्वे यथानुपूर्व तत्र गताः। सर्वैश्च तस्माद्भैक्ष्य लब्धम्। अथ पश्चाद्भगवानपि गत.। तया स्त्रिया जातप्रसादया परिशिष्ट भक्त सर्वं भगवतो दत्तम्, प्रणिधान च करोति—अनेन भगवन् कुशलमूलेन मा मे भूय. कदाचिद्दारिद्र्य स्यादिति। तथास्त्विति भगवता प्रतिश्रुतम्। तदहरेव तस्य महानिधान प्रादुर्भूतम्। तच्छ्रुत्वा राजा प्रसेनजित्तस्मिन् गृहे गत । तेनोक्तम्—अस्माक पूर्वराजभिस्ते दीनाराः स्थापिता इति। गृहपतिना तस्य ततो गृह्य अञ्जलिपूरो दत्तः। अङ्गारः सवृत्तः। राज्ञा भूयो गृहपतेर्दत्ता.। सुवर्णं सवृत्तम्। अथा राजा प्रसेनजिद्विस्मयजातः गत्वा भगवतो निवेदयति। भगवानाह—पुण्यनिर्जाता गृहपतेर्न ग्राह्याः। सर्व च तदानुपूर्वेण कथितम्। एवमेष यदा दाता
L 68 भवति, दु खेन याचित. समानः प्रतिजानीते। दु.खेन ददाति, दत्त्वा च चित्त प्रसादयति। तेन हेतुना पूर्वं दरिद्रो भूत्वा पश्चान्महाधनो भवति। इद कर्म येन समन्वागत पुद्गलः पूर्वं दु खितो भूत्वा पश्चात्सुखितो भवति ॥

३५ कतमत्कर्म येन समन्वागत पुद्गलः पूर्व च पश्चाच्च सुखितो भवति? उच्यते। इहैकत्यो दान याचित। स प्रहृष्टः प्रतिजानीते। प्रहृष्टो ददाति। दत्त्वापि च प्रीतिमान् भवति। स यदा मनुष्येषूपपद्यते, आढ्येषु कुलेषूपपद्यते महाधनेषु महाभोगेषु। अत्र भद्रिके नगरे मिण्ढकप्रभृतीना चतुर्णा दानपतीना विपाको वक्तव्यः। तै. किल तगरशिखी प्रत्येकबुद्धः पिण्डपातेन प्रतिपादितः। अत्र विनयावदान वक्तव्यम्। इद कर्म येन समन्वागतः पुद्गल. पूर्व च पश्चाच्च सुखितो भवति ॥

३६. कतमत्कर्म येन समन्वागतः पुद्गलः पूर्व च पश्चाच्च दुःखितो भवति? उच्यते। इहैकत्यः कल्याणमित्रविरहितो भवति। स दान न ददाति। न च तेन किंचित्पापक कर्म कृत भवति। स यदा मनुष्येषूपपद्यते, दरिद्रेषु कुलेषूपपद्यते अल्पान्नपानभोजनेषु यथा श्रावस्त्या दरिद्रदारकस्यावदान वर्णयन्ति—श्रावस्त्या किल भगवान् पिण्डपात पर्यटति। तदा च श्रावस्त्यामिक्षुद्वादशी नाम भवति। भगवता च इक्षूणि लब्धानि। अन्यतरस्मिन्
L 69 गृहद्वारे दरिद्रदारकस्तिष्ठति। स भगवन्तमिक्षूणि याचति। भगवतैक दत्तम्। स भूयो याचति। भगवानाह—वत्स उच्यताम्—नेच्छामीति। ते भूयो दास्यामीति। स प्राह—मया भगवन् न कदाचिन्नेच्छामीत्युक्तपूर्वम्। भगवानाह—वत्स, उच्यताम्। नेच्छामि भगवन्, सर्वाणि दास्यामीति। तेनेक्षुलोभान्नेच्छामीत्युक्तम्। भगवता सर्वाणि दत्तानि। अथ आर्यानन्दः पृच्छति—भगवन्, किमिदम्? भगवानाह—न कदाचिदेष आनन्द रूपरस-

गन्धस्पर्शादीनां तृप्तपूर्वोऽभवत्, नेच्छामीति वा न कदाचिदुक्तपूर्वम्। तदेतस्य वचन तस्य नेच्छामीति हेतुभूत भविष्यति। आह च—

नेच्छामीत्येष व्याहारो न कदाचिदुदीरितः।
कुतो रूपाणि शब्दश्च गन्धाः स्पर्शाश्च वै कुतः ॥ १९ ॥
इत्येव प्रार्थयन्नेष नित्य भ्रमति बालिशः।
नेच्छामीति प्रहर्षेण यैषा वाक्समुदीरिता।
हेतुरल्पेच्छता यैषा स एवास्य भविष्यति ॥ २० ॥

इद कर्म येन समन्वागत· पूर्व च पश्चाच्च दुःखितो भवति ॥

३७. कतमत्कर्म येन समन्वागतः पुद्गल आढ्यो भवति मत्सरी? उच्यते। इहैकत्येनाल्पमात्र दान दत्त भवति शीलवति पात्रभूते, न तु पुनस्त्यागचित्तमभ्यस्त भवति। यदा मनुष्येषूपपद्यते, आढ्येषु कुलेषूपपद्यते महाधनेषु महाभोगेषु। तेन दानविशेषेण यत्तेन पुनस्त्यागचित्तमभ्यस्त न भवति, स तेन कर्मणा मत्सरी भवति। यथा श्रावस्त्या हिल्लिशालगृहपतेरवदानम्। स किल पूर्वजन्मनि मत्सरी भवति। अथ तस्य गृहद्वारे L 70
तगरशिखी नाम प्रत्येकबुद्ध आगतः। तस्य भिक्षा दत्ता। तेन दृष्ट्वा दीयमाना तेन क्षवणये(?) न च भिक्षा दत्ता। स च प्रव्राजितः। परिभ्रष्टः। स तेन कर्मणा दिव्यमानुष्यका सपत्तयोऽनुभूय श्रावस्त्यामग्रकुलिकपुत्रः प्रत्याजातो मत्सरी कालगत·। तस्य द्रव्य राज्ञा प्रसेनजिता अपुत्रक गृहीत्वा शतवर्गे आगमे प्रसेनजित्सयुक्तेषु राजोपकीर्णक नाम सूत्रम्। प्रसेनजिद्भगवतः कथयति—इह भगवन्नग्रकुलिकः कालगत.। तस्य मया अपुत्रक स्वापतेय गृहीतम्। भगवानाह—कतीय(?) महाराज गृहपतेर्द्रव्य गृहीतम्? स आह—शत भगवन् शतसहस्राणा यदाहत परिशिष्ट द्रव्यमपरिमितमनाहतम्। भगवानाह—इदं तस्य महाराज सप्तममपुत्रक द्रव्यग्रहणम्। यत्तेन तगरशिखी नाम प्रत्येकबुद्धः पिण्डपातेन प्रतिपादित·, तदस्य कर्म परिक्षीणम्। अन्यच्च कुशलमूल न कृतम्। तेनाद्य प्रथमाया रात्र्या महारौरवे नरके पच्यते। तत्र भगवान् गाथा भाषते—

धन धान्य जातरूप गवाश्वमणिकुण्डलम्।
दासकर्मकरा भृत्या ये चान्ये अनुजीविन.।
म्रियमाणस्य नान्वेति नाप्यादाय गच्छति ॥ २१ ॥
यत्तेन कृत भवति कल्याणमथ पापकम्।
तद्धि तस्य स्वक भवति तच्च आदाय गच्छति ॥ २२ ॥
तस्मात्कुरुत पुण्यानां निचय साम्परायिकम्।
पुण्यानि परलोकेऽस्मिन् प्रतिष्ठा प्राणिना स्मृता ॥ २३ ॥ L 71
गृहे तिष्ठति कायोऽय श्मशाने प्रियबान्धवाः।
सुकृत दुष्कृतं चैव गच्छन्तमनुगच्छति ॥ २४ ॥

अयं पुद्गल आढ्यो भवति मत्सरी ॥

३८ कतमत्कर्म येन समन्वागतः पुद्गलो दरिद्रो भवति त्यागवान्? उच्यते। इहैकत्येन पुद्गलेन बहु दान दत्त भवति। तिर्यग्गतेषु मनुष्येषु च दु.शीलेष्वब्रह्मचारिषु पुनः पुनस्त्यागचित्तमभ्यस्तम्। स यदा मनुष्येषूपपद्यते, दरिद्रो भवति त्यागवान् तेन दानाभ्यासेन। यत्तु तेनापात्रभूतेषु दान दत्त तेन दरिद्रः। यथा श्रावस्त्या तत्र विनये तन्त्रवायस्य निदान वर्णयन्ति। स त्यागवान् दरिद्रश्च। पुनः पुनः त्यागचित्तमभ्यस्तम्। इदं कर्म येन समन्वागत. पुद्गलो दरिद्रो भवति त्यागवान्॥

३९. कतमत्कर्म येन समन्वागतः पुद्गल आढ्यो भवति त्यागवान्? उच्यते। इहैकत्येन पुद्गलेन बहु दानं दत्त भवति। शीलवत्सु पात्रभूतेषु पुन· पुनस्त्यागचित्तमभ्यस्त भवति। स तेन कर्मणा यदा मनुष्येषूपपद्यते, आढ्येषु कुलेषूपपद्यते महाधनेषु महाभोगेषु। यत्तु तेन पुनःपुनस्त्यागचित्तमभ्यस्तम्, तेन त्यागवान् भवति। यथा अनाथपिण्डदेन किल ककुच्छन्दे सम्यक्सबुद्धे जेतवनं निर्यातितम्, विहारश्च कारितः। एव कनकमुनौ सम्यक्सबुद्धे काश्यपे सर्वार्थसिद्धे च। भूयश्च मैत्रेयस्य सुवर्णास्तीर्णं निर्यातयिष्यति। इद कर्म येन समन्वागत. पुद्गल आढ्यो भवति त्यागवान्॥

४० कतमस्य पुद्गलस्यायुः क्षीण न कर्म? उच्यते। यः पुद्गलो नरकाच्च्युतो नरके-
L 72 षूपपद्यते। तिर्यग्भ्यश्च्युतस्तिर्यक्षूपपद्यते। यमलोकाच्च्युतो यमलोके उपपद्यते। देवेभ्यश्च्युतो देवेषूपपद्यते। यथा वर्षाकारस्य ब्राह्मणस्य पुनः पुन· कालगतस्य मर्कटोपपत्ति·। यथा काश्मीराया पूर्वोक्तस्य गृहपतेः पुन. पुनः पशूपपत्ति·। यथा च श्रावस्त्या कश्चिद्दरिद्रः कुटुम्बी कालगत.। तस्य गृहद्वारे बलीवर्दो व्रणीभूतेन स्कन्धेन तिष्ठति। स गृहे आसक्तचित्त. कुटुम्बी। तस्य बलीवर्दस्य स्कन्धे कृमि· प्रत्याजात.। उपपन्नमात्रश्च काकेन भक्षित·। पुनस्तत्रैव कृमिः प्रत्याजात·। स एव सप्तकृत्वा एकदिवसेन कालगतः। उपपन्नमात्रश्च काकेन भक्षित·। यथा च आर्यमहामौद्गल्यायनो मगधेषु भैक्ष्य पर्यटमानोऽन्यतमगृहद्वारमनुप्राप्तः। तस्मिंश्च गृहे गृहपतिः पत्नीसहितो मत्स्यमासप्रकारेण भोजन भुङ्क्ते पुत्रेण पर्यङ्कगतेन। कृष्णा चास्य कुक्कुरी पुरःस्थिता। स तस्या मत्स्यास्थीनि क्षिपति। अथ स गृहपतिर्महामौद्गल्यायन दृष्ट्वाह—गम्यतामार्य, नास्ति कश्चिदत्र यो भिक्षा दास्यति। स खलु सप्रस्थित। तस्मिंश्च गृहद्वारे देशान्तराभ्यागताः पुरुषा विद्वासः पूर्वस्थिता·। ते त दृष्ट्वा विस्मय प्राप्ताः। अहो आश्चर्यम्—अय नाम ऋद्धिमतामग्र्यः। येन नन्दोपनन्दौ नागराजानौ विनीतौ, वैजयन्तश्च प्रासादो वामपादाङ्गुष्ठेन कम्पित.। शक्रो विस्मापितः। त्रिसाहस्र लोकधातुं निमेषान्तरचारी। स नाम भिक्षामदत्त्वा विसर्जितः। अथ स्थविरस्तेषां संवेजनार्थमाह—वत्स नैतदाश्चर्यम्। पुरुषा ऊचुः—अथ किमन्यदाश्चर्य विस्मयकारणम्? स
L 73 उवाच—य एष गृहपतिर्मत्स्यमासप्रकारैर्भोजन भुङ्क्ते, एष मत्स्यः अस्य गृहपतेः पिता। तेन या एषा अस्य गृहस्य पृष्ठतः पुष्करिणी, अतः प्रभूतमत्स्यानुद्धृत्योद्धृत्य भक्षिताः।

स कालगतोऽत्रैव मत्स्य. प्रत्याजातः । स एषोऽनेकश उद्धृत्योद्धृत्य भक्ष्यते । अत्रैव च भूयो भूय उपपद्यते । याप्येषा कुक्कुरी, अस्यैव गृहपतेर्माता । एतया लोभदोषेण न किंचिद्दान दत्तम् । न च शील सेवितम् । केवल कुलवशार्थं द्रव्य परिपालितम् । सा अत्रैव गृहे आसक्तचित्ता कालगता, कुक्कुरीषु प्रत्याजाता । कालगता भूयो भूयोऽत्रैवोपपद्यते । सर्वा च रात्रिं गृह समन्तात्पर्यटति मात्र कश्चित्प्रविशेदिति । अथ यस्त्वेष पुत्र' पर्यङ्के कृतः, एषोऽस्या एव स्त्रिया. प्रच्छन्नभर्ता । अनेन च गृहपतिना श्रुतम्—एषा ते पत्नी परपुरुषव्यासक्ता जातेति । स एष गृहपतिर्ग्रामान्तरगमनव्यपदेशेन गृहान्निष्क्रान्तः । एषा अपि स्त्री परपुरुषेण सह शयिता । अनेन गृहपतिना रात्रावागम्य पुरुषो घातितः । सोऽस्यामेव स्त्रियामारक्तचित्तस्तेनैव स्नेहानुबन्धेन कुक्षावुपपन्नः । पश्य वत्स य पिता चैव तस्य स मासानि भक्षयति । या माता जनित्री तस्या मत्स्यकण्टकास्थिकानि ददाति । यश्च शत्रुः क्रुद्धेन मारितः पारदारिकः, त पर्यङ्केन धारयति । एष ससारदोषो निर्वेदः कार्यः । इदमत्राश्चर्यकारणम् । अथ स भिक्षुर्महामौद्गल्यायन एतदेवार्थं सर्वं पश्चिमजनतासवेजनार्थं श्लोकेन सगृहीतवान् । यथा आह—

पितुर्मांसानि खादते मातुः क्षिपति कण्टकान् ।
भार्याजार च पोषेति लोको मोहतमोवृतः ॥ २५ ॥

अयं पुद्गलो यस्यायुः क्षीण न कर्म ॥

४१ कतमस्य पुद्गलस्य कर्म क्षीण नायु.[2] उच्यते । यः पूर्वं सुखितो भूत्वा पश्चाद्दुःखितो भवति । पूर्वं यो दु'खितो भूत्वा पश्चात्सुखितो भवति । अस्य पुद्गलस्य कर्म क्षीण नायुः ॥ L 74

४२. कतमस्य पुद्गलस्य कर्म क्षीण आयुश्च[2] उच्यते । यः पुद्गलो नरकाच्च्युतस्तिर्यक्षूपपद्यते । तिर्यग्भ्यश्च्युतो यमलोके उपपद्यते । यमलोकाच्च्युतो मनुष्येषूपपद्यते । ततश्च्युतो देवेषूपपद्यते । यथा श्रावस्त्या वणिक्पुत्र उद्यान गतः पुष्पहेतो पत्नीवचनेनाशोकवृक्षमारूढ' । सा च वृक्षशाखा विशीर्णा । स पाषाणशिलाया पतितः कालगतः । तत्र महाजनकायो रुदति । अथ भिक्षवो दिवाविहार गता. । ते दृष्ट्वा सविग्ना भगवतो निवेदयन्ति—भगवन्, अहो अनित्यता । अत्रोद्याने गृहपतिपुत्रो बालोऽभुक्तभोगोऽशोकवृक्षात्पतितः कालगतः । तत्र महाजनकायः सनिपतितः । रौरवसदृशश्च शब्द. श्रूयते । भगवानाह—एष एव भिक्षवः गृहपतिपुत्रः पूर्वं महासमुद्रेऽन्यतरस्मिन् नागकुले उपपन्नः । स तत्र जातमात्र एव स्त्रीसहितः क्रीडमानो गरुडेनोद्धृत्य भक्षितः । तत्र नागकन्या रुदन्ति, इह स्त्रियो रुदन्ति । स च यस्याः स्त्रिया वचनेनाशोकवृक्षमारूढः, तस्योपरि आघात कृतवान्—अस्या दोषेणाह वृक्षमारूढः । क्रुद्धः कालगतो नरकेषूपपन्नः । अस्य पुद्गलस्य कर्म क्षीणमायुश्च ॥

L 75 ४३. कतमस्य पुद्गलस्य पुण्यानि च क्षीणानि आयुश्च ? उच्यते । स एव हिल्लिसालीगृहपतिः यथा भगवानाह । तस्य पुनर्महाराज गृहपतेस्तच्च कुशल कर्म परिक्षीणम्, अन्यच्च न कृतम् । सोऽद्य प्रथमरात्रिं रौरवे पच्यते । यथा राजा प्रसेनजिद्राज्याद्भ्रष्टो राजगृहमनुप्राप्त· । स तत्र पुराणमूलकपत्राणि मुखे प्रक्षिप्य खादन् पुरुषेणाक्षिप्तः श्यासुपूर्णेन(?) मुखेन । अथ मरण मृतः । प्रत्येकबुद्धपूर्वस्तस्य [पूर्वस्य ?] पिण्डपातस्य विपाकेन । अय पुद्गलो यस्यायुश्च क्षीण पुण्यानि च ॥

४३ (अ) कतमस्य पुद्गलस्य नायुः क्षीणं [ न ] कर्म, अपि तु क्लेशाः क्षीणाः ? उच्यते । स्रोतआपन्नस्य, सकृदागामिनः, अनागामिनः, प्रत्येकबुद्धस्य । अय पुद्गलो यस्य नायुः क्षीण [ न ] कर्म । अपि तु क्लेशाः क्षीणाः ॥

४४. कतमः पुद्गलः कायेन सुखी न चित्तेन ? उच्यते । कृतपुण्यः पृथग्जनः कायेन सुखी न चित्तेन । यथा महाधनब्राह्मणगृहपतयो राजा च माधाता । अय पुद्गलः कायेन सुखी न चित्तेन ॥

४५. कतमः पुद्गलश्चित्तेन सुखी न कायेन ? उच्यते । यथार्हन्नपुण्यः चित्तेन सुखी न कायेन । यथार्यशोणोत्तरः । तेन किल पूर्वजन्मनि प्रत्येकबुद्धस्य स्नायतो गोमयपिण्डकः कपिकच्छुमिश्रः स्नानार्थं दत्तः । तेन कर्मविपाकेन कुष्ठेन शरीरं विशीर्यति तथा हि गाथा भाषिता—

L 76 कर्माणि नूनं बलवत्तराणि कर्मभ्यो वज्रकल्पेभ्यः ।
यत्र वशीभूतोऽहमनुभवामि दुःखानि कर्माणि ॥ २६ ॥

यथा च जङ्घाकाश्यपः । तेन किल वाराणस्या प्रत्येकबुद्धस्य प्रतिश्रुतम्—भक्तं दास्यामीति । स तस्य महता परिश्रमेण कालातिक्रमणे आसन्ने भक्त दत्तवान् । स तेन कर्मणा पश्चिमे जन्मनि वीतरागोऽपि भूत्वा पूर्वाह्णे पिण्डपात पर्यटति । कालातिक्रमणे आसन्ने कथचिद्भक्त लभते । तथास्य जङ्घाकाश्यप एव नाम । अय पुद्गलश्चित्तेन सुखी न कायेन ॥

४६ कतमः पुद्गलः कायेन सुखी चित्तेन च ? उच्यते । अर्हन् क्षीणास्रवः कृतपुण्यः । यथा कश्मीरराजा धर्मयशःपुत्रो बकुलः । तथा ह्यस्य सिंहनादः । अशीतिर्मे आयुष्मन्तो वर्षाणि प्रव्रजितस्य, न कदाचिद् व्याधिर्भूतपूर्व., अन्तत. शिरोर्तिमात्रमपि । तेन किल वाराणस्या गान्धिकवणिजा भूत्वा क्रकुच्छन्दः सम्यक्सबुद्ध. सश्रावकसंघो ग्लानभैषज्येनोपनिमन्त्रित· । भिक्षुणा चार्हता एका हरीतकी गृहीता । स तस्य कर्मणो विपाकेन निराबाधः । आरोग्यपरमा लाभा उक्ता भगवता । यथा च आर्यानिरुद्धः कथयति । तस्य खल्वायुष्मन्तः पिण्डपातस्य विपाकेन सप्तकृत्व. प्रणीते त्रायस्त्रिंशदेव-
L 77 निकाये उपपन्नः । सप्तकृत्वो मनुष्येषु राज्य कारितम् । तस्यैव च पिण्डपातस्य विपाकेनार्हत्त्वफललाभी, चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारणा लाभी । तथाहि तस्य

भगवता दुर्भिक्षे पञ्च भिक्षुशतानि दत्तानि । तस्य पुण्यानुभावेन सर्वेषा दिव्यमनन्तभक्तं प्रादुर्भवति । अयं पुद्गलः कायेन सुखी चित्तेन च ॥

४७. कतमः पुद्गलो न कायेन सुखी न चित्तेन च ? अकृतपुण्याः पृथग्जना उत्सन्नकुलवशा वस्त्रान्नपानविरहिताः परगृहेषु हिण्डन्ति । तथा व्याधिभि· कुष्ठक्षयकासज्वरपाण्डुरोगदद्रुपामादिभि. परिगता हस्तपादविकलाश्चक्षुर्विहीनाश्च । अय पुद्गलो न कायेन सुखी न चित्तेन ॥

४८ कतमत्कर्म येन समन्वागतः पुद्गलोऽपायेषूपपन्नोऽभिरूपो भवति प्रासादिकः स्निग्धकायः स्निग्धच्छविर्नयनाभिरामो दर्शनीय ? उच्यते । यः पुद्गलो रागसमुत्थितेन दौ·शील्येन समन्वागत. अपायेषूपपद्यते । यथा मयूरशुकसारिकाकारण्डवचक्रवाकप्रभृतयः । इदं कर्म येन समन्वागतः पुद्गलोऽपायेषूपपन्नोऽभिरूपो भवति प्रासादिकः स्निग्धकायः स्निग्धच्छविर्नयनाभिरामो दर्शनीयः ॥

४९. तत्र कतमत्कर्म येन समन्वागत· पुद्गलोऽपायेषूपपन्नो दुर्वर्णो भवति रूक्षकायो घोरदर्शनः ? उच्यते । यः पुद्गलो द्वेषसमुत्थितेन दौःशील्येन समन्वागतोऽपायेषूपपद्यते । यथा सिंहव्याघ्रकाकशृगालकृष्णसर्पप्रेतपिशाचादयः । इद कर्म येन अपायेषूपपन्नो दुर्वर्णो भवति रूक्षकायो घोरदर्शनः ॥

५० तत्र कतमत्कर्म येन समन्वागत पुद्गलोऽपायेषूपपन्नो दुर्गन्धो भवति जिह्वे-
न्द्रियोऽव्यक्तेन्द्रियः ? उच्यते । यः पुद्गलो मोहसमुत्थितेन दौ.शील्येन समन्वागत. अपायेषूप-
पद्यते । यथा चुचुन्दरिकृम्यजगरयूकामक्षिकादयो यथा शरीरे विंशतिकृमिजातयः । इद L 78
कर्म येन समन्वागतः पुद्गलोऽपायेषूपपन्नो दुर्गन्धो भवति जिह्वेन्द्रियोऽव्यक्तेन्द्रिय· ॥

५१. दशाकुशलाः कर्मपथाः । कतमे दश ? त्रिविध कायकर्म । चतुर्विध वाक्कर्म । त्रिविध मनस्कर्म । एषा दशानामकुशलाना कर्मपथाना विपाकेन दशानां बाह्याना भावानामभिवृद्धिर्भवति ॥

५२ प्राणातिपातस्याकुशलकर्मपथस्य विपाकेन पृथिव्या ओजश्च तेजश्चान्तर्धीयते । तस्यैव च कर्मणो विपाकेनाल्पायुर्भवति ॥

५३. अदत्तादानस्याकुशलस्य कर्मपथस्य विपाकेन पृथिव्यामशनिशुकशलभमूषिककीटप्रभृतयः [ सस्यघातका उत्पद्य ]न्ते । तस्यैव कर्मणो विपाकेन भोगव्यसनमधिगच्छति ॥

५४ काममिथ्याचारस्याकुशलस्य कर्मपथस्य विपाकेन पृथिव्या तृणदर्भादीनि दुर्गन्धीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेन सपत्नगृहावास प्रविशन्ति । अत्रावदान श्वभ्रपदस्य सुसुधी दारिका काशिराज्ञः पत्नी । देवावतरणे कालोदयिनः पूर्वजन्मन्यवदान वक्तव्यम् ॥

५५. मृषावादस्याकुशलस्य कर्मपथस्य विपाकेन मुखरोगदन्तरोगगलरोगमुख- L 79
दौर्गन्ध्यादीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेनाभूताख्यान प्रतिलभते ॥

५६. पिशुनवचनस्याकुशलस्य कर्मपथस्य विपाकेन पृथिव्या शर्करकठल्यादीनि दु.खसस्पर्शादीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेन जातिव्यसना मित्रव्यसना भवन्ति, भेद्यः परिवारश्च भवति ॥

५७. परुषवचसोऽकुशलकर्मपथस्य विपाकेन पांशुरजोधूलिवातवृष्ट्यादीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेनामनोज्ञशब्दश्रवणदर्शनान्यनुभवन्ति ॥

५८. सभिन्नप्रलापस्याकुशलस्य कर्मपथस्य विपाकेन कदरश्वभ्रादीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेनानादेयवचना भवन्ति ॥

५९. अभिध्याया अकुशलस्य कर्मपथस्य विपाकेन व्रीहियवगोधूमादीना सस्याना तुषपलालादीनि प्रादुर्भवन्ति । तस्यैव कर्मणो विपाकेन परप्रार्थनीयभोगा भवन्ति ॥

६०. व्यापादस्याकुशलकर्मपथस्य विपाकेन प्रभूते उप्ते निष्फल सस्य भवति । तस्यैव कर्मणो विपाकेन प्रतिकूलदर्शनो भवति ॥

L 80 ६१. मिथ्यादृष्टेरकुशलस्य कर्मपथस्य विपाकेन तिक्तकटुकभावान्यपि पिचुमन्दकोषातकीविषतिक्तालाबुप्रभृतीनि फलानि प्रादुर्भवन्ति । मिथ्यादृष्टेरकुशलस्य कर्मपथस्य विपाकेन नास्तिक्यवादी भवति, उच्छेददृष्टि । लोकायतादिषु च शास्त्रेषु प्रसादो भवति । यथा पदाश्वस्य राजपुत्रस्य, य· कुमारकाश्यपेन श्वेतिकाया विनीतो लोकायतिक । यथा यथा सत्त्वा इमान् दशाकुशलान् कर्मपथान् भावयन्ति, तथैषा दशाना बाह्याना भावानामतीव प्रादुर्भावो भवति । अनेनैव च कारणेन महासवर्तकल्पे भविष्यति समयेऽनागतेऽध्वनि यत्तिला भविष्यन्ति, तिलपिष्टं भविष्यति, तैल न भविष्यति, इक्षुर्भविष्यति, इक्षुरसो न भविष्यति, गुडो न भविष्यति, न खण्ड भविष्यति, न शर्करा भविष्यति । गावो भविष्यन्ति, क्षीर भविष्यति, दधि भविष्यति, नवनीत न भविष्यति, न घृत न घृतमण्डो भविष्यति । एवमनुपूर्वेण सर्वेण सर्वे रसा अन्तर्धास्यन्ति ॥

L 82 ६२ कतमे दशानुशसा मध्यदेशे चतुर्महाचैत्यलुम्बिनीमहाबोधिप्रभृतिषु तथागतचैत्याञ्जलिकर्मप्रणिपाते[1] उच्यते । मध्यदेशे जन्म प्रतिलभते । उदाराणि च वस्त्राणि प्रतिलभते । उदार कुल प्रतिलभते । उदार स्वर प्रतिलभते । उदार वयः प्रतिलभते । उदारा प्रतिभानता प्रतिलभते । उदारा श्रद्धा प्रतिलभते । उदार शील प्रतिलभते । उदारं श्रुत प्रतिलभते । उदार त्याग प्रतिलभते । उदारा स्मृतिं प्रतिलभते । उदारा प्रज्ञा प्रतिलभते । अस्योद्दानम्—देशवस्त्रकुलरूपस्वरप्रतिभानताश्रद्धाशीलश्रुतत्यागान् । स्मृतिमान् भवति
L 83 प्रज्ञावान् । तथागतस्य बुद्धप्रसाद कृत्वाञ्जलिं लभते । धीरः सप्रज्ञ उदारमासवक्षयम् । उक्त च सूत्रे—ये केचिदानन्द चैत्यचर्या चरमाणाः प्रसन्नचित्ताः काल करिष्यन्ति, यथा भल्लो निक्षिप्तः पृथिव्या तिष्ठते, एव कायस्य भेदात्स्वर्गेषूपपत्स्यन्ति ॥

L 84 ६३· कतमे दशानुशसास्तथागतचैत्यवन्दनायाम्[1] उच्यते । अभिरूपो भवति । सुस्वरः । आदेयवाक्यः । परिषदमुपसक्रान्तः परिषदमावर्जयति । प्रियो भवति देवमनुष्या-

णाम् । महेशाख्यो भवति । महेशाख्यैः समागमः सत्त्वैः भवति । बुद्धैर्बुद्धश्रावकैश्च समागमो भवति । महाभोगो भवति । स्वर्गेषूपपद्यते । क्षिप्र च परिनिर्वाति । इमे दशानुशंसास्तथागतचैत्यवन्दनाया. ॥

६४ कतमे दशानुशसाश्छत्रप्रदानस्य[2] उच्यते । छत्रभूतो भवति लोकस्य । L 85
अनवतप्तो भवति कायेन । अनवतप्तो भवति चित्तेन । आधिपत्यसवर्तनीय चानेन कर्म कृत भवत्युपचितम् । पुन. पुनश्च राजा भवति चक्रवर्ती । महेशाख्यो भवति । महेशाख्यै सत्त्वै· समागमो भवति । बुद्धैर्बुद्धश्रावकैश्च समागमो भवति । महाभोगो भवति । स्वर्गेषूपपद्यते । क्षिप्र च परिनिर्वाति ॥

a) अत्र गङ्गासतारे भगवतः प्रत्येकबुद्धस्य स्तूपे दत्तस्य छत्रस्य विपाको वर्ण्यते । यथा चार्यसुन्दरनन्दो व्याकरोति—

जेन्ताकस्य च स्नानेन तिलस्यालेपनेन च ।
एकच्छत्रप्रदानाच्च प्राप्ता मे सुवर्णवर्णता ॥ २५ ॥

एवमादि छत्रप्रदानस्य विपाको वक्तव्यः । आह च— L 86

यद्धार्यते प्रवरदण्डमुदाररूप L 87
कोदण्डदामपरिमण्डितबस्तिकोशम् ।
छत्र विशालममल शशिमण्डलाभ
छत्रप्रदानजनितेन जगद्धरस्य ॥ २६ ॥
श्रीचिह्नभूत मणिहेमदण्ड
पटोज्ज्वल काञ्चनमातपत्रम् ।
यद्धार्यते मूर्ध्नि नराधिपस्य
छत्रप्रदानेन जगद्धरस्य ॥ २७ ॥

इमे दशानुशसाश्छत्रप्रदानस्य ॥

६५. कतमे दशानुशसा घण्टाप्रदानस्य[2] उच्यते । अभिरूपो भवति । सुस्वरो भवति । मनोज्ञभाषी भवति । कलविङ्करुतभाषी भवति । आदेयवाक्यो भवति । नित्य सप्रहार्यजातो भवति । पुन. पुनरानन्द शब्द शृणोति । स्वर्गेषूपपद्यते । महाभोगश्च भवति । क्षिप्र च परिनिर्वाति ॥

a) यथा विशाखया मृगारमात्रा भगवान् पृष्टः—कथं मम प्रासादे नित्यकालं
पञ्चाङ्गिक तूर्यं सदैव वदेत्[2] भगवानाह—सर्वस्वरोपेता घण्टामारोपय । एव ते नित्यकाल L 88
प्रासादे पञ्चाङ्गिकतूर्यशब्दो भविष्यति अनवद्यश्च । इमे दश गुणा घण्टाप्रदानस्य ॥

६६. कतमे दश गुणा वस्त्रप्रदानस्य[2] उच्यते । श्लक्ष्णच्छविर्भवति । स्निग्ध- L 89
च्छविर्भवति । न च रजश्चैल काये श्लिष्यति । ह्रीरपत्राप्यसपन्नो भवति । प्रियदर्शनो भवति । प्रभूतवस्त्रो भवति । लाभी च भवति सूक्ष्माणा वस्त्राणामास्तरणानाम् । महाभोगो

भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति। यथोक्तं भगवता देवतासूत्रे—वस्त्रप्रदो भवति वर्णवान्। इमे दश गुणानुशंसा वस्त्रप्रदानस्य॥

L 90 ६७. कतमे दशानुशंसा आसनप्रदानस्य? उच्यते। गुरुस्थानीयो भवति लोकस्य। प्रियदर्शनो भवति। प्रासादिको भवति। पण्डितजनाभिगम्यो भवति। यशः कीर्तिश्चास्य लोके प्रथिता भवति। सुखसौमनस्यबहुलो भवति। स्वदेशेऽभिरमति। आसनैरवैकल्यं भवति। उपस्थायकैरवैकल्यं भवति। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति। इमे दश गुणा आसनप्रदानस्य॥

L 91 ६८. कतमे दशानुशंसा भाजनप्रदानस्य? उच्यते। भाजनभूतो भवति गुणानाम्। स्निग्धसंततिर्भवति। न च तृषाबहुलो भवति। तृषार्तस्य पानीयं प्रादुर्भवति। न च प्रेतेषूपपद्यते। भाजनैरवैकल्यं भवति। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति। इमे दशानुशंसा भाजनप्रदानस्य॥

L 92 ६९. कतमे दशानुशंसा भोजनप्रदानस्य? उच्यते। बलवान् भवति। वर्णवान् भवति। सुखितो भवति। प्रतिभानवान् भवति। दीर्घायुर्भवति। महाजनाभिगम्यो भवति। प्रियदर्शनो भवति। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति॥

a) यथोक्तं भगवता वैशाल्यां सिंहस्य राजपुत्रस्य—ददन् सिंह प्रियो भवति। सन्तो जना भजन्ति। कल्याणशब्दो भवति। विशारदः पर्षदमवगाहति। कालगतो देवेषूपपद्यते॥

गाथा चोक्ता—

L 93 ते तत्र नन्दन्ति रमन्ति च मोदयन्ति
समर्पिताः कामगुणेषु पञ्चसु।
कृत्वा हि वाक्यममितस्य तायिनो
मोदन्ति ते सुगतवरस्य श्रावका॥ २८॥

एतद्दानस्य फलं भगवतोक्तम्—स्वर्गेषूपपद्यते क्षिप्रं च परिनिर्वाति।

आह च—

नानारसव्यञ्जनसुप्रणीतं
काले शुभं गन्धरसोपपन्नम्।
ददाति यः पात्रमवेक्ष्य दानं
सदार्यसंघस्य गुणान् विचिन्त्य॥ २९॥
आयुश्च वर्णं च यशो बलं च
संप्राप्य भोगान् प्रतिभां सुखं च।
दिवीह चैव प्रथितोत्तमश्रीः
सुखात्सुखं याति विमोक्षमन्ते॥ ३०॥

इमे दश गुणा भोजनप्रदानस्य ॥

७०. कतमे दश गुणा यानप्रदानस्य ? उच्यते। सुकुमारचरणो भवति। सुप्रतिष्ठितचरणो भवति। मार्गक्लमथो न भवति। न च बह्वमित्रो भवति। पुनः पुनः ऋद्धिपादान् प्रतिलभते। हस्त्यश्वादिभिर्यानैरवैकल्य भवति। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्र च परिनिर्वाति ॥ L 94

a) यथा चोक्त देवतासूत्रे—यानद. सुखितो भवति यो ददात्युपानहौ॰।

यथा चोक्तमभिधर्मे चक्रवर्तिसूत्रे—कतमस्य कर्मणो विपाकेन राजा चक्रवर्ती हस्त्यश्वादीनि वाहनानि प्रतिलभते ? दीर्घरात्र राजा चक्रवर्ती मातर वा पितर वा उपाध्याय वा स्कन्धेन वहति वा वाहयति वा। हस्त्यश्वादिभिः शिबिकायानैर्वा वहति। दुर्गसंक्रमं वा करोति। सेतुबन्ध करोति। उपानहप्रदानानि वा ददाति। कारुण्येन महाटव्या सार्थमतिक्रामयति। तस्य कर्मणो विपाकेन राजा चक्रवर्ती हस्त्यश्वादीनि प्रतिलभते। तत्रारूढः समुद्रपर्यन्ता पृथिवीं दिवसचतुर्भागेन पर्यटति। इमे दश गुणा यानप्रदानस्य ॥

७१. कतमे दश गुणाः प्रतिश्रयप्रदानस्य ? उच्यते। राजा भवति प्रादेशिक। राजा भवति माण्डलिक। राजा भवति जम्बुद्वीपाधिपतिः। राजा भवति द्वीपद्वयाधिपति। राजा भवति द्वीपत्रयाधिपतिः। राजा भवति चतुर्द्वीपाधिपतिश्चक्रवर्ती। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्र च परिनिर्वाति ॥ L 96

यथा सुमेधाया भिक्षुण्या गाथा—

भगवति कोणागमुनौ सघारामे च निवेशे। L 97
सख्यस्त्रयो वय स विहार ददौ पूर्वम्॰॥ ३१ ॥

एता गाथा सुमेधाया। धर्मदिन्ना च भिक्षुणी विशाखा च मृगारमाता। ताभिः पूर्व दरिद्रस्त्रीभिश्चत्वारि काष्ठानि निखन्य काशकटकमुपरि दत्त्वा भगवान् कोणागमुनिर्बुद्धो निमन्त्रित। स तत्र भिक्षुभिः सार्धं मुहूर्तं विश्रान्त.। ताभिश्चित्तानि प्रसादितानि। तेन कर्मणा शतसहस्र वारान् देवेषूपपन्ना.। अपरिमितानि चक्रवर्तिराष्ट्राण्यनुभूतानि। सुमेधागाथाश्चास्मिन्नर्थे सर्वा विस्तरेण प्रत्येकमवगन्तव्या। इमे दश गुणा प्रतिश्रयप्रदानस्य ॥

७२. कतमे दश गुणाः पानकप्रदानस्य ? उच्यते। सर्वेन्द्रियसपन्नो भवति। प्रसन्नवदनः। विशुद्धललाट। स्निग्धच्छविः। सगतभाषी भवति। न च तृपाबहुलो भवति। तृषितस्य पानीयं प्रादुर्भवति। न च प्रेतेषूपपद्यते। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति। यथा चाह— L 98

मनोज्ञवर्णं रसगन्धयुक्तं
सर्वेन्द्रियप्रीतिविवर्धन च।
अकालिक सत्पुरुषप्रशस्त
ददाति सघाय तु पानक यः ॥ ३२ ॥

सक्तृपिपासाविगतो विशोको
रसान् प्रधानाश्चतुरोऽनुभूय ।
जगच्च सद्धर्मरसेन तर्प्य
तृषाक्षय याति सुखंसुखेन ॥ ३३ ॥

इमे दश गुणाः पानकप्रदानस्य ॥

७३. कतमे दश गुणा मालाप्रदानस्य ? उच्यते । मालाभूतो भवति लोकस्य । कायाद् दौर्गन्ध्यमपैति । सौगन्ध्य प्रादुर्भवति । नित्यसुगन्धो नित्यालकृतो भवति । अभेद्यपरिवारो भवति । सर्वजनप्रियो भवति । महाभोगश्च भवति । स्वर्गेषूपपद्यते । क्षिप्र च परिनिर्वाति ॥

L 99 a) आह च–

माल्य विचित्र प्रवरं सुगन्ध
प्रहर्षण प्रीतिकर नराणाम् ।
प्रसन्नचित्तो मुनिधातुगर्भे
तथागतेभ्यश्च ददाति यो वै ॥ ३४ ॥
स दिव्यमाल्याभरणोज्ज्वलाङ्ग.
श्रीमत्सुख प्राप्य दिवीह चैव ।
बोध्यङ्गदामप्रतिभूषितात्मा
मोक्ष पर याति गुणाग्रगन्धः ॥ ३५ ॥

b) तथा अन्यतरस्य दरिद्रगृहपतेर्दुहिता । सा खलु द्वारे स्थिता जनपद सर्वालंकारभूषित पश्यति उत्सवे रममाणम् । सा पितरमाह–मामप्यलकुरुष्वेति । पिताह–कुतोऽस्माक दरिद्राणामलकार ? एष जनपद. कृतपुण्योऽनेकशो बुद्धे भगवति कृताधिकारः। तेन च कर्मणा कर्णेसुमनस्य स्थविरस्य अवदान विस्तरशस्तस्योक्तम्। एवमल्पोऽपि भगवति कृतः प्रसादो महाफलो भवति । तया पिता अतीवोपरोधितः–प्रयच्छ मम किंचित् । एषोऽग्रतो विहार. । अत्र भगवत. पूजामुपचरिष्यामीति । तेन दु.खार्तेन विभवेऽविद्यमाने पलालमयी माला कृत्वा दत्ता । सा ता पलालमयी माला गृह्य बुद्धप्रतिमायाः शिरसि दत्त्वा पादयो प्रणिपत्य आह–भगवन्, अनेन कुशलमूलेन ससारे ससरत्या मा भूयो दारिद्र्य स्यादिति । तस्या. प्रसादजातायास्तदहरेव मानुष्यस्त्रीभावमतिक्रान्तम्, दिव्यं रूपं प्रादुर्भूतम् । तद्विषयप्रतिवासिना च राज्ञा अग्रदेवी स्थापिता । कालगता देवेषूपपन्ना ।
L 100 पश्चिमेऽपि च भवे चम्पायामग्रकुलिकस्य दुहिता प्रत्याजाता परमकल्याणी । सौवर्णी चास्या माला सर्वरत्नमण्डिता शिरसि सहसैव प्रादुर्भूता । मातापितृभ्या विस्मयजाताभ्या मालिनीत्येवास्य नाम कृतम् । यदा च भगवान् अभिसबुद्धो राजगृहाच्चम्पामनुप्राप्तः, सा चोपसक्रान्ता । तस्याश्च भगवता धर्मदेशना कृता । प्रव्रजिता. च अर्हन्ती सवृत्ता । साह–

चित्तोत्पाददेवास्या मा मे भूयो माला भवत्विति। अन्तर्हिता। ता च दृष्ट्वा विस्मयप्राप्ता देवता गाथामनुगायते। यथाह—

दत्त्वा तु पलालमयीं मालां सा मालिनी सुगतस्य चैत्ये।
वरकनकरत्नमालां लेभे बोध्यङ्गमालां च ॥ ३६ ॥

इमे दश गुणा मालाप्रदानस्य ॥

७४ कतमे दश गुणा मुक्तपुष्पप्रदानस्य? उच्यते। पुष्पभूतो भवति लोकस्य। घ्राणेन्द्रियं विशुध्यति। कायदौर्गन्ध्यं समपैति। सौगन्ध्यं प्रादुर्भवति। दश दिशः शीलगन्धः ख्यातिं गच्छति। अभिगमनीयश्च भवति। लाभी च भवति इष्टानां धर्माणाम्। L 101
महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति ॥

a) अत्र कर्णसुमनस्य पूर्वजन्मनि प्रसादे जाते एकैकपुष्पप्रदानस्य विपाको वक्तव्यः। यथा स एव आह—

एकपुष्पप्रदानेन अशीतिकल्पकोटयः।
दुर्गतिं नाभिजानामि बुद्धपूजाय तत्फलम् ॥ ३७ ॥

इमे दश गुणा मुक्तपुष्पप्रदानस्य ॥

७५ कतमे दश गुणा दीपप्रदानस्य? उच्यते। प्रदीपभूतो भवति लोकस्य। मांसचक्षुर्नश्यति। दिव्यचक्षुः प्रादुर्भवति। अविद्यान्धकारं विधमति। ज्ञानालोकं उत्पद्यते। कुशलाकुशलान् धर्मान् क्षिप्रं प्रज्ञया प्रतिविध्यति। संसारे संसरतोऽविद्यान्धकारो न भवति। महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्रं च परिनिर्वाति ॥

a) यथा चोक्तमभिधर्मे चक्रवर्तिसूत्रविभङ्गे—कस्य कर्मणो विपाकेन राजा चक्रवर्ती L 102
मणिरत्नं प्रतिलभते? दीर्घरात्रं राज्ञा चक्रवर्तिना दीपप्रदानानि, प्रदीपैकदानानि च। अन्धकारे रत्नप्रदीपा धारिता ये चक्षुष्मन्तस्ते समविषमाणि रूपाणि पश्यन्तु। आह च—

बुद्धप्रशस्तं लभते च चक्षुः
चक्षुस्तु यस्योत्तमहेतुभूतम्।
लोकावभासं भवतीह रूपं
प्रदीपदानेन जगद्धरस्य ॥ ३८ ॥
तेजोधिको नार्थमुदीक्षणीयः
अतीव तुष्टः शुभकर्मदर्शी।
संप्राप्य सौख्यं दिवि चेह चैव
विशुद्धचक्षुः प्रशमं परैति ॥ ३९ ॥

अत्र आर्यानिरुद्धस्य दीपे दिव्यचक्षुर्ऋषीणां च चक्षूत्पाटनमोक्षायणे वक्तव्यम्। यथा दीपमालाप्रदानेन दीपंकरेण बुद्धत्वं प्राप्तम्। या च श्रावस्त्यां चक्षुर्विकलेन प्रदीपमाला कारिता। संप्रसादो जातः। प्रणिधानं कृतवान्। उत्थितस्य चास्य यथापौराणं चक्षुः संवृत्तम्। इमे दश गुणा दीपप्रदानस्य ॥

L 103 ७६. कतमे दश गुणा गन्धप्रदानस्य ? उच्यते । गन्धभूतो भवति लोकस्य । घ्राणेन्द्रियं विशुध्यति । कायदौर्गन्ध्यमपैति । सौगन्ध्य प्रादुर्भवति । दश दिशः शीलगन्धः प्रवाति । अभिगमनीयो भवति । लाभी च भवति इष्टाना धर्माणाम् । महाभोगश्च भवति । स्वर्गेषूपपद्यते । क्षिप्र च परिनिर्वाति ॥

a) यथोक्त अभिधर्मे चक्रवर्तिसूत्रे—कस्य कर्मणो विपाकेन राज्ञश्चक्रवर्तिनः स्त्रीरत्नस्य रोमकूपेभ्यः शरीराद्गन्धो निर्गच्छति तद्यथा गन्धसमुद्गकस्य ? दीर्घरात्र तया स्त्रिया चैत्यगर्भगृहेषु गन्धोपलेपनानि दत्तानि, सुरभीणि च पुष्पाणि । धूपाश्च दत्ताः । स्तूपेषु च गन्धस्नापनानि कृतानि । तस्य कर्मणो विपाकेन राज्ञश्चक्रवर्तिनः स्त्रीरत्नस्य शरीरादेवरूपो गन्धो निर्गच्छति तद्यथा गन्धकरण्डस्य । इमे दश गुणा गन्धप्रदानस्य ॥

L 104 ७७. कतमे दश गुणाः प्रव्रज्यायाः ? उच्यते । पुत्रभार्यादुहितृधनतृष्णास्य न भवति । कामस्य परिग्रहो न भवति । अरण्यवासे प्रीतिं प्रतिलभते । बुद्धगोचर सेवते । बालगोचर विवर्जयति । दुर्गतिगमनीयान् धर्मान् विवर्जयति । सुगतिगमनीयान् धर्मान् सेवते । देवा अस्य स्पृहयन्ति । नित्य सुगतवचने प्रव्रज्या प्रतिलभते । इमे दश गुणाः प्रव्रज्याया भवन्ति ॥

७८. कतमे दश गुणा अरण्यवासस्य ? उच्यते । सगणिका विवर्जयति । प्रविवेक सेवते । ध्यानालम्बन चित्त भवति । न च बहुकर्मकृत्यता प्राप्नोति । बुद्धाना स्मृतिं याति । प्रीतिसुखसौमनस्य कायो न जहाति । अन्तरायश्च न भवति ब्रह्मचर्यस्य । अल्पायासेन समाधिमधिगच्छति । उद्दिष्ट चास्य पदव्यञ्जन न नश्यति । यथाश्रुताना धर्माणा विस्तरेणार्थमाजानाति । इमे दश गुणा अरण्यवासस्य ॥

७९. कतमे दश गुणाः पैण्डपातिकत्वे ? उच्यते । चक्रमोऽस्य उपार्जितो भवति ।
L 105 गोचरोऽस्य प्रहतो भवति । मानोऽस्य निहतो भवति । आत्मान लाभेन योजयति । परान् पुण्ये प्रतिष्ठापयति । शास्तुः शासन दीपयति । पश्चिमाया जनताया आलोकः कृतो भवति । सब्रह्मचारिणामुपघातः कृतो न भवति । नीचचित्तमुपस्थापितं भवति । पिण्डपातपरचित्तस्य भिक्षोः सर्वा दिशोऽप्रतिकूला भवन्ति गमनाय । इमे दश गुणाः पिण्डपातिकत्वे ॥

८०. दश वैशारद्यानि । कतमानि दश ? उच्यते । विशारदो ग्राम प्रविशति । विशारदो ग्रामान्निष्क्रामति । विशारदः पिण्डपात परिभुङ्क्ते । विशारदः परिषदि धर्म देशयति । विशारदः सघमध्यमवतरति । विशारद आचार्योपाध्यायानुपसक्रामति । विशारदो मैत्रचित्तः शिष्याननुशास्ति । विशारदश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारान् परिभुङ्क्ते । ग्राह्य चास्य वचो भवति । इमानि दश वैशारद्यानि ॥

कर्मविभङ्गसूत्रं समाप्तम् ॥



# Critical Notes on
## Māhakarmavibhanga

In this sūtra, the practical aspect of Karmans or acts and their fruits has been discussed in a Sūtra form in Mahāyāna literature There seems to be a Śukasūtra in Sanskrit, fragments of which have been discovered in the *Manuscript Remains found in Eastern Turkestan*, edited by Hoernle (Oxford, 1916, pp 48–50), dealing with this subject with the same Śuka, the son of Taudeya, figuring in it In the Pali counterpart, the person is called Subha, but he is also the son of Todeyya, proving thereby the identity of Śuka and Subha The subject matter again of *Cūlakammavibhanga* (MN 135) in which Subha figures is similar to our Sanskrit Mahākarmavibhanga, and the Subhasutta of Dīgha Nikāya (Vol I, No 10) has the same Subha Buddhaghosa's commentaries Sumangalavilāsinī and Papañcasūdanī which textually are almost identical also deal with the topic of acts and their fruits The present text of Mahākarmavibhanga is full of references to persons, gāthās and books which are supplied here

(1) **शुक तौदेयपुत्र** = सुभ तोदेय्यपुत्त (MN 135, DN 10)
(2) **शङ्कुकुञ्जर,** the son of the above
(3) **कालिकसूत्र** = (AN V 164) There was also a similar Sūtra in Sanskrit *Madhyamāgama*
(4) **नन्दिकसूत्र** is found translated in Kanjur (see T 334), but is not yet traced in Sanskrit
(5) **बकप्रत्येकब्रह्मसूत्र** = (SN Vol I, p 142),=बकब्रह्मजातक (No 405), compare also MBh III 193 of Bombay edition and No 21 in App No I in the Critical Edition
(6) **सर्वौषध** is not yet traced, but there are stories of persons who offered their bodies as medicine to people suffering from diseases
(7) **महादेव** is not yet traced
(8) **माधाता,** a king whose story is found in the Vinaya of Mūlasarvāstivādins, see Gilgit Mss
(9) **सप्तसूर्योपदेश** = सत्तसूरियसुत्त (= AN Vol IV p 103)
(10) **सुनेत्र,** see above sūtra, where सुनेत्र is mentioned as तथागत Also compare the following allusion to सुनेत्र in Saundarananda (11 57)

मैत्रया सप्तवार्षिक्या ब्रह्मलोकमितो गत ।
सुनेत्र पुनरावृत्तो गर्भवासमुपेयिवान् ॥

सुनेत्र is also refered to by वसुबन्धु and figures in राष्ट्रपालपरिपृच्छा (st 130) and लङ्कावतार (p 141)
(11) **सुन्दरनन्द** is referred to in the Vinaya of Mūlasarvāstivādins in भैषज्यवस्तु, see Gilgit Mss

(12) पूर्वापरान्तकसूत्र is not yet traced to Sanskrit sources, but is found translated in Chinese

(13) अजित referred to in the above sūtra with a citation from it given below

(14) सूत्रम् referred to on page 185 corresponds to AN Vol III, p 244

(15) सूत्रम् referred to on page 186 is the कालिकसूत्र (3) mentioned above, and corresponds to AN Vol IV p 247

(16) नन्दिकसूत्र, see above

(17) चूडापन्थक, see DA 35

(18) सिंहजातक The Pali version of सिंहजातक (No 157) has no correspondance with this सिंहजातक

(19) वर्षाकारस्य ब्राह्मणस्य मर्कटोपपत्ति not yet traced, but there are several instances of वाग्दुश्चरित mentioned in DA

(20) यत्रोस्विकामात्राणि, read (यत्रोष्ट्रिकामात्राणि)

(21) दीर्घा जागरतो रात्रि॰ = उदानवर्ग I 17 (19), धम्मपद 60

(22) शतवर्गे आगमे corresponds to Madhyamāgama in Sanskrit The Pali passage corresponding to it is found in *Mahākamma-vibhanga Sutta* in MN Vol III

(23) मन पूर्वंगमा धर्मा = धम्मपद 1–2, उदानवर्ग 31 24–25

(24) अजातशत्रु see below

(25) श्रामण्यफलसूत्रम् = सामञ्ञफलसुत्त, DN 2

(26) श्यामाकजातक = AK 101

(27) मैत्रायज्ञ = मित्तविन्दक in Pali See Jātaka Nos 82, 104, 369 and 439 as also लोसकजातक No 41 The Sanskrit version corresponds to मैत्रकन्यक in DA 38, AŚ 36, AK 24 Boro Boudour has a number of frescos describing the story of मैत्रकन्यक

(28) श्यामजातक = Jātaka No 540, MVastu II 210, AK 101, CP III 13, RP page 126

(29) धनंजयसूत्र, not yet traced

(30) शिवालकसूत्र = सिगालोवाद = DN 31

(31) ये तत्राभ्यनुमोदन्ते etc For this stanza, see AN Vol III 41

(32) तगरशिखी The story of a gift to तगरशिखी is frequently referred to in Buddhist literature, as for instance below under 37

(33) शिखण्डी, रौरुक नगरम् see DA 37

(34) शुद्धोदनस्य चक्षुषी पुत्रशोकेन अन्तर्हिते According to MVastu III 117–132, it is गौतमी who lost her eye-sight due to weeping and not शुद्धोदन

(35) भगवता विनये उक्तम् = See महावग्ग I 6

(36) चक्रवर्तिसूत्र is said to belong to अभिधर्म where the topic of कर्मविभङ्ग is discussed

(37) महीशासका गोत्रान्तरीया is a subsect of Buddhists who had a Vinaya, now no longer extant in Sanskrit, but is preserved in Chinese translation

(38) दक्षिणाविभङ्गसूत्र = MN 142. The corresponding passage in Pali is found in Vol III p 254. It is presumed that in the Madhyamāgama its Sanskrit version is found.

(39) कात्यायन, मध्यदिन, गवापति, पिण्डोलभरद्वाज, and महेन्द्र are the pupils of Buddha who propagated Buddhism in अवन्ति, कश्मीर, सुवर्णभूमि, पूर्वविदेह and सिंहलद्वीप respectively.

(40) अध्यर्धशतके सूत्रे आर्यपूर्णेन. Although the name of this sūtra is not yet traced, पूर्ण is referred to often. There is also mention of चन्दनमालविहार as in DA 2 which is called पूर्णावदान.

(41) आर्यगोपक. The story is not yet traced.

(42) ईश्वरो गृहपतिपुत्र. The story is not yet traced.

(43) अनिरुद्धावदानम्. Elsewhere we find the story of अरिष्ट or उपारिष्ट which corresponds to the story given here.

(44) मिण्डक or मेण्ढक. For the story see DA 9 and 10.

(45) दरिद्रदारकावदानम्, not yet traced.

(46) हिङ्गिशाल may perhaps be = इल्लीस referred to in Jātaka No 78, but the story and the stanzas are found in कोसलसंयुत्त, SN Vol III 2-10. They are also found in Chinese translation of संयुक्तागम 46.

(47) अनाथपिण्डद. The story of अनाथपिण्डद donating जेतवन to Buddha is found in चुल्लवग्ग VI.

(48) आर्यशोणोत्तर, not yet traced.

(49) वकुल. His story is traced to the Vinaya of Mūlasarvāstivādins preserved in Chinese.

(50) पदाश्वः राजपुत्र is identical with पायासि, the hero of DN 13, and श्वेतिका = सेतव्या in Pali.

(51) After section 61, Tibetan and Chinese translations add some 11 sections which, however, seem to be developed later as the Sanskrit text which gives the list of contents on pages 180–81 omits them.

(52) The panels in Boro-Boudour (Nos 125–51) give in pictorial form the ten advantages of caityavandanā. The सुभाषितरत्नकरण्डककथा of आर्यशूर describes many of these advantages in stanzas 21 to 157.

(53) विशाखा मृगारमाता. The story is found in महावग्ग VIII.

(54) देवतासूत्र = किंददसुत्त in देवतासंयुत्त SN Vol I. 5.

(55) सिंहो राजपुत्र. The text and the stanzas following correspond to AN Vol IV (पञ्चकनिपात 34), where they are addressed to सीह सेनापति.

(56) सुमेधा भिक्षुणी. See थेरीगाथा 518.

(57) मालिनी, not yet traced.

(58) कर्णसुमन and his story is frequently referred to in the विनय of मूलसर्वास्तिवादिन्.

(59) अनिरुद्ध, see section 34 above.

L 153 ## १५ (अ) कर्मविभङ्गोपदेशः ।

शङ्खक्षीरमृणालकुन्दकुमुदप्रस्मेरहारप्रभै·
सौवर्णागरुधूपदुर्दिनतलैश्चक्षत्पताकाधरैः ।
श्लाघ्यैर्धातुवरैर्वनधरनिभैर् [ भूर्यस्य ] सभूषिता
,त वन्दे सुरनागयक्षमुकुटाव्याघृष्टपाद मुनिम् ॥

जयतु सद्धर्म· । इत्याह भिक्षा श्रुतसोमा ।

अस्ति कर्म अल्पायु.सवर्तनीयम् । अस्ति कर्म अल्पायुःसवर्तनीयमिति कर्मगतिर्यथान्याय विस्तरेण विभक्ता । दशानुशसा. प्रव्रज्यारण्यकत्वे भैक्ष्यचर्यायाम् । दश वैशारद्यानीति । सर्वे कामगुणा यथान्याय युक्ता । दशानुशसास्तथागतचैत्याञ्जलिकर्मगन्धपुष्पच्छत्राणाम् । कथ दशानुशसा· ? ननु भगवता सूत्रमुक्तमेकोत्तरिके–यावन्तो भिक्षव. सत्त्वा अपदा वा द्विपदा वा चतुष्पदा वा बहुपदा वा, तथागतस्तेषा सत्त्वानामग्रत आख्यायते यदिदमर्हन् सम्यक्संबुद्धः इति विस्तर. । गाथा चोक्ता–

एवमचिन्तियो बुद्धो बुद्धधर्मोऽप्यचिन्तियः ।
यदि धर्मो न्वचिन्त्यो बुद्धोऽप्यचिन्त्यो
अचिन्त्यप्रसन्नस्य विपाकोऽपि अचिन्तियः ।

L 154 कथ दश गुणाः पुष्पच्छत्रादीनाम् ? उच्यते । एवमेतद्यथासूत्रमुक्तम्, तथैव तन्नान्यथा । ये बुद्धे श्रद्दधन्ति, धर्मे चापि, सघे च प्रतिपन्ना, तेषामचिन्त्यप्रसन्नस्य विपाकोऽप्यचिन्त्यः । ये तु मिथ्यादर्शनोपहतचित्ताः, यथा–बुद्धस्य परिनिर्वृतस्य स्तूपे दत्तस्य फल कुतः ? यस्मान्नास्ति प्रतिग्राह इति, तेषा विपरीतदृष्टीनाम् । भगवानाह–दशेमे गुणाश्छत्रादीनाम् । अनेनापि तावत्सुखेन पुण्यानि कुर्वन्तु । तत्तेषा भविष्यति दीर्घरात्र हिताय सुखाय । अपि च सर्वेऽपि गुणा एतेष्वेवान्तर्गताः उच्यन्ते । कथ पुनर्भगवति कृतः प्रसादोऽचिन्त्य इति ? उच्यते । यथा अत्रैव कर्मविभङ्गे उक्तम्, एवमन्येषु सूत्रान्तेषु । अपि तु ,मन्दबुद्धीनामर्थाय पुनरुक्त क्रियते । यथा कर्णेसुमनःप्रभृतीना स्थविराणाम्–

एकपुष्पप्रदानेन अशीतिकल्पकोटय ।

इद अश्रद्धानीयम् । एवमचिन्त्यो विपाक. । तथा अशोकप्रभृतीना पांशुदानेन चक्रवर्तिराज्य स्रोतापत्तिफल [ च ] । इदमचिन्त्यमश्रद्धेय च । तथा च अनिरुद्धप्रभृतीना चैकपिण्डपातप्रदानेन चक्रवर्तिराज्य सप्त देवराज्यानि पश्चिमे च भवेऽर्हत्त्व च

L 155 प्राप्तम् । एवमादीनि च बहूनि वक्तव्यानि । अपि च । एकेनाचिन्तनीयेन सर्वमाक्राम्यति । यथोक्तं भगवता अभिधर्मे बालकाण्डसूत्रे–एकचित्तप्रसादस्य विपाको वर्णितः–यदि आनन्द ससारे संसरतः एकचित्तप्रसादस्य विपाकेन सप्तकृत्वः परनिर्मित-

वशवर्तिषु देवपुत्रो राज्य कारयति, सप्तकृत्वो निर्माणरतिषु । सप्तकृत्व सुखितेषु । सप्तकृत्वो यामेषु देवेषु देवपुत्रो भूत्वा राज्य कारयति । षट्त्रिंशदिन्द्रराज्यानि कारयति । द्वासप्तति-महाराजिकेषु देवेषु राज्य कारयति । चक्रवर्तिराज्याना कोटिकोटीना राज्यानि कारयति । यदि न राज्य तत इदमेकचित्तप्रसादस्य फलम् । अपि च सर्वश्रावकबुद्धेनापि भूयते । यथा दीपकरेण बुद्धेन दीपमालाया प्रदानेन बुद्धत्व प्राप्तम् । इदमप्यश्रद्दानामश्रद्धानीयम् । एवरूपाणि कर्माणि, यानि लोके न प्रश्रद्दधति । तेषामश्रद्धाना हीनाधिमुक्तिकाना भगवानाह—दशेमे गुणाश्चैत्यवन्दनायाश्च । विस्तर । गुणपूर्णाना तु बुद्धमाहात्म्य न केवलमग्रतासूत्रे । उक्त च यथा ब्राह्मणसूत्रे—अग्रोऽह हि ब्राह्मणश्रेष्ठो लोके । इति सूत्र योज्यम् । यथा च भगवान् कोटुस्य महर्षेः शेलस्य च तापसस्य विनयार्थमाश्रम गत । ताभ्या च भक्तेन निमन्त्रित । ताभ्या च भगवान् ज्ञात्वेदमुदानमुदानीतवान्—

अग्निहोत्रमुखा वेदा गायत्री छन्दसा मुखम् । L 156
राजा मुख मनुष्याणा नदीना सागरो मुखम् ॥
नक्षत्राणा मुख चन्द्र आदित्यस्तपता मुखम् ।
पुण्यमाकाङ्क्षमाणाना सबुद्धो यतता मुखम् ॥

एतद्दर्शयति भगवान् । यथा सर्वेषा यज्ञाना जायमानानामग्निहोत्र मुखम् । वेदाना गायत्री मुखम् । सर्वेषा पुरुषाणा राजा मुखम् । नदीना सागर. श्रेष्ठः । नक्षत्राणा चन्द्रमा अग्र्यः । तपतामादित्य· प्रधान· साहस्राणा लोकधातूनामवभासयति । एव यश्चिन्तयति—अस्मिन्नेकपुरुषे दत्त महाफलमिति । भगवानाह—सबुद्धो दक्षिणेयानामग्र्य इति । अनेनापि कारणेन भगवानग्र्य । एतत्सूत्रमप्यागमे ब्राह्मणनिपाते विस्तरेण प्रत्यव-गन्तव्यम् । यथा च भगवता एतदग्रे दक्षिणाविभङ्गे सूत्र उक्तम्—एतदग्रमानन्द प्रतिपुद्गलिकानां दक्षिणीयाना यदिद तथागतोऽर्हन् सम्यक्सबुद्ध । एवमग्र्यता भगवतो L 157
वक्तव्या । यथा च महासमाजीये परिनिर्वाणादिसूत्रेषु द्वादशयोजनिको देवाना सनिपात । यथा महाप्रातिहार्येऽकनिष्ठिकादिभिर्देवैः पूजित. । महाप्रातिहार्य च दृष्ट्वा अनेकानि तीर्थकरशतानि प्रव्रजितानि । यथा च तापसा उरुबिल्वाकाश्यपप्रभृतय· प्रव्रजिताः । परिव्राजकाश्च शारिपुत्रमौद्गल्यायनप्रभृतय प्रव्रजिता· । ब्राह्मणाश्च ब्रह्मायु( पूरशायिनो ) वसिष्ठभारद्वाजप्रभृतयोऽभिप्रसन्ना. । तथा राजान. प्रसेनजिद्बिम्बसारप्रभृतय , गृहपतय. अनाथपिण्डदघोषिलप्रभृतय । एव देवाना येऽग्र्या मनुष्याणा च, तेऽभिप्रसन्ना भगवति । अनेनापि कारणेन भगवान् अग्र्यः । अपि च । यथैकोत्तरिकाग्रतासूत्र उक्तम्—अग्रधर्म-समन्वागतो देवभूतमनुष्याग्र्य· प्राप्त. प्रमोदितः । एतदुक्त भवति—निर्वाणगामी धर्मोऽधि-गतः । तेन कारणेनाग्र्य· । किं कारण पूर्वमपि बोधिसत्त्वभूत देवा उपसक्रान्ताः । यथा गोविन्दसूत्रे, शतवर्गे च तापससूत्रे इन्द्र उपसक्रान्तः । ननु तदा अग्रधर्मसमन्वागत., साप्रत निर्वाणगामी मार्गोऽधिगतः । तेनाग्र्य । एवमपि देशिता धर्मा । केचिदाहुः—

बुद्धः परिनिर्वृतो मोक्ष प्राप्त.। तस्य यत् स्तूपे दत्त प्रतिमाया वा धूपपुष्पादिक क प्रतिगृह्णाति ? यदा बुद्धः परिनिर्वृत एवोच्यते। अश्रद्धैतद्वाक्यम्, पुरतो वा पापतरम्, येषा बुद्धशासनसिद्धान्तो न विदित.। य एप धर्मो भगवता देशित., एतद्भगवत· शरीरम्। स चाद्य तिष्ठति। तस्मिन्नन्तर्हिते बुद्ध. परिनिर्वृतो भविष्यति। यावद्धर्मस्तिष्ठति तावद्बुद्धो न परिनिर्वापयति। कि कारणम् ? धर्मशरीरं भगवतः शरीरं पारमार्थिकम्। तेन धर्मेण यदा देशितेन स्रोतापत्तिफल प्राप्स्यते, सकृदागामिफलम्, अनागामिफलम्, अनागामिफल च अर्हत्त्व [ च ]। एतदर्थ चास्माक प्रव्रज्या फलप्राप्तिनिमित्तम्। बुद्धस्तिष्ठति। फलानि प्राप्स्यन्ते। न परिनिर्वृतः। तत्राय दोष स्यात्। अस्माक त्वद्यापि फलानि प्राप्यन्ते। आरब्धवीर्याणा न किंचिद् दुष्करम्। L 158 बुद्धे तिष्ठमाने कर्तव्यमेतत्सर्वं क्रियते। अनेनापि कारणेन ज्ञेय धर्मशरीरस्तथागत इति। यथा महापरिनिर्वाणसूत्रे उक्तम्—स्यादेवमानन्द युष्माक परिनिर्वृतो भगवान्। अद्याग्रे नास्ति शास्तेति। नैतदेव द्रष्टव्यम्। अद्याग्रे व· आनन्द सूत्रान्त शास्ता। एव भगवता सूत्राभिधर्मविनया दत्ता.। अद्याग्रे चैष बुद्धः। एतद्दर्शयति भगवान्। तथा न किंचिन्मातापितृसभवेन शरीरेण कार्यं क्रियते। एतद्दर्शयति। यदाह गृह आवासवसित·, न तदा मया कश्चिद्धर्मोऽभिसबुद्ध·। तस्मान्न मातापितृसभव शरीर बुद्ध.। यदा त्वहमेकोनत्रिंशद्वर्षाद्गृहान्निर्गत., ये दु·खेन धर्ममिच्छन्ति ते दुष्करचर्यया विस्मापिता.। न च मे कश्चिद्दु खेन धर्मोऽधिगत। यथा रोमहर्षणीयसूत्रे उक्ता·, तथा प्रत्यवगन्तव्या.। षड्वर्षाणि दुष्कर कृतम्। न च तेन कश्चिद्धर्मोऽधिगतः। पश्चान्मया भोजन भुक्त शरीरबल च प्राप्य वैशाखमासपूर्णपञ्चदश्या बोधिमूले निषण्णेनानुत्तरा सम्यक्सबोधिः प्राप्ता। वाराणस्या गत्वा धर्मचक्र प्रवर्तितम्। तेन धर्मेण फलाधिगमः क्रियते। स चा ति। अनेनापि कारणेन धर्मकायास्तथागताः। यथा विनये पाठ.। भगवन्त भगवतो मातृष्वसाह—जीवन्तु भवन्त· भग. । यत्तु भगवतोक्तम् न तेऽह गौतमि पुरेव वक्तव्यः। साह—अथ कथ भगवान् वक्तव्यः ? भगवानाह—एव वक्तव्यम्—दी(र्घरात्र भगव)तो धर्मस्तिष्ठतु। एतद्दर्शयति—न मम मातापितृसभवेन शरीरेण किंचिन्निष्ठा। अतो धर्मशरीरं मे दीर्घरात्र तिष्ठतु। यानि मया ससारे दुष्करसहस्राणि कृतानि, तान्यतीव धर्मस्यार्थाय। अनेनापि L 159 कारणेन य एव भगवत· शरीर । महापरिनिर्वाणसूत्रे उक्तम्—आगता आनन्द देवाः, दिव्यानि च चन्दनचूर्णानि गृह्य, दिव्यानि च मान्दारवाणि पुष्पाणि, दिव्यानि नन्द एव तथागतः सत्कृतो भवति गुरुकृतो मानितो वा पूजितो वा। य. पुनः कश्चिदानन्द मम शासनेऽप्रमत्तो विहरति, आ कुरुते धर्म धारयति, तेनाह सत्कृतो गुरुकृतो मानितः पूजितो भवामि। एतद्दर्शयति। काश्यपस्य सम्यक्सबुद्ध( स्य भिक्षु )भिक्षुणीभिरुपासकोपासिकाभि । [ तं च ] शरीरपूजा कृता, न धर्मो धारित.। यावद्धर्मोऽन्तर्हित·। एवमापूर्यमप्येव करि ( अप ) चयितव्यः। एतन्मम शरीरम्। एतद्दर्शयति—

मयि परिनिर्वृते यत्कर्तव्यम्। धर्म सत्करिष्यत एवोक्तम्। धर्मकायास्त(थागता.)। महापरिनिर्वाणे आर्यानन्दः पृच्छति—कथमस्माभिर्भगवति परिनिर्वृते भगवच्छरीरप्रतिपत्तिः कार्या? भगवानाह—अल्पोत्सुकैर्युष्माभिर्भवितव्यम्। उपासकाः शरीरं यथा ज्ञास्यन्ति, तथा करिष्यन्ति। एतद्दर्शयति—यदेतद्धर्मशरीरम्, एतद्युष्माभि परिपालितव्यम्। उपासका बहुव्यग्राः। असमर्था धर्मधारण कर्तुम्। अनेन चिरस्थितेनाह चिरस्थितिको भविष्यामीति। यथा च देवावतारसूत्रे उत्पलवर्णाभिक्षुण्या चक्रवर्तिरूप निर्माय भगवान् देवलोकावतीर्ण L 160 प्रथम वन्दित। सा तुष्टा। मया भगवान् प्रथम वन्दित। तस्याश्च[ ] त ज्ञात्वा स्रोतापत्तिफल प्राप्तम्। एतद्दर्शयति—न मातापितृसभवेन शरीरेण वर्णितेन वन्दितो भवामि। येन फल प्राप्त तेनाह वन्दित। एतदर्थमेव च तत्र गाथोक्ता—

मनुष्यप्रतिलाभेन स्वर्गाणां गमनेन च।
पृथिव्यामेकराज्य च स्रोतापत्तिफल परम्॥

अनेनापि कारणेन धर्म एव भगवत शरीरम्। यथा च बोधिमूलसूत्रे भगवानयोध्याया विहरति। अथ पश्चिमेषु जनपदेषु द्वौ भिक्षू प्रतिवसत सखायौ। तौ भगवद्दर्शनाय प्रस्थितौ। महाटव्या प्रपन्नौ। तृषार्ताभ्या ताभ्या पानीय प्राप्तम्। एकेन तृषितेन पीतम्। द्वितीय आह—नाह भगवत शिक्षामतिक्रमिष्यामि। अपरिस्राव सप्राणकमेतत्पानीयमिति। धर्मश्च भगवत शरीरम्। तमनुपालयता दृष्ट एव मया भगवान्। स तृषार्तो भगवन्त नमस्कुर्वन् कालगतः, प्रसन्नचित्तश्च देवेषूपपन्न। द्वितीयो भिक्षु सप्राणक पानीय पीत्वा अनुपूर्वेण बहुभिर्दिवसैर्भगवत. समीप गतः। स च देवेषूपपन्नो भिक्षु पूर्वं गतः। येन सप्राणक पानीय पीत तस्य भिक्षोर्भगवता मातापितृसभव शरीर दर्शितम्—एतन्मम शरीर पश्य। स च देवलोकोपपन्नो भिक्षुर्भगवतोक्त.—दर्शय शरीरं ते। देवपुत्रशरीर दिव्य दर्शितम्। स भिक्षु. सविग्न. पृच्छति—भगवन्, किमिदम्? भगवानाह—य एष देवपुत्रोऽनेन तृष्णार्तेन सप्राणकमुदक न पीतम्। मया यथोक्ता शिक्षा रक्षिता। एष द्वितीयो मातापितृसभव शरीर द्रष्टुकामः सप्राणक पानीय पीत्वा एतस्य मया मातापितृसभव शरीर दर्शितम्—एतच्छरीर पश्य। यद्यनेन कश्चिद्गुणो न दृष्ट., तेन च मातापितृसभवमेतच्छरीर दृष्टम्, न तेनाह दृष्टः। एतदर्थमेव गाथोक्ता—

चीवरकर्णक चेन्निश्राय आक्रमन्ति पदे पदे। L 161
अपराधेन तिष्ठन्ति न ते बुद्धस्य सान्तिके॥
योजनाना सहस्रेषु ये श्रुत्वा न सुभाषितम्।
तदर्थं प्रतिपद्यन्ति ते वै बुद्धस्य सान्तिके॥

यथा च भगवान् धर्मप्रीत्यर्थ नन्दकस्य भिक्षाधर्मश्रावणायोपसक्रान्त। यथा चोपस्थापनकसूत्रे उक्तम्—पर्येषत भिक्षवः। उपस्थापयति धर्मं च मे धारयिष्यति। सूत्र गेयं व्याकरणमितिवृत्त गाथोदानम्। एव नवाङ्गशासन यो मम धारयति, त मार्गयत। न माता-

पितृसभवस्य शरीरस्य उपस्थापक मार्गयत। किं कारणम्? यथोक्त ऋद्धिपादनिपाते मृगारमातुः प्रासादे–एव भावितेषु भिक्षवस्तथागतश्चतुर्षु ऋद्धिपादेषु कल्प वा तिष्ठेत् कल्पावशेष वा। एतद्दर्शयति–न यूय समर्था मम शरीर कल्प वा धारयितुम्। एष तु धर्मो धारयितव्य। एतन्मम शरीरम्। यथा च महादेवसूत्रे उक्तम्–मा मम भविष्यथ पश्चिम । त्मना यदिद कौण्डिन्य। महाप्रज्ञाना सारिपुत्रः। ऋद्धिमता मौद्गल्यायन.। यावद्दक्षिणेयाना सुभूति कुलपुत्र'। एव सर्वसूत्र वक्तव्यम्। भिक्षुणीनामग्रतासूत्रे उक्तम्, एवमुपासकानामुपासिकानामग्रतासूत्रे उक्तम्। तथा चतुष्पर्षदसूत्रम्–

L 162 भिक्षव.। व्यक्तो विनीत विशारद.। बहुश्रुत.। धर्मकथिक.। धर्मार्थप्रतिपन्न' सघ शोभयति। भिक्षुणी। उपासकः। उपासिका। भिक्षव.। व्यक्ता विनीता विशारदा बहुश्रुता धार्मिका धर्मार्थप्रतिपन्ना सघ शोभयन्ति। तदपि सूत्र वक्तव्यम्। अपि च। एकपुद्गलेऽपि तावच्च अस्माक वीतरागेऽप्रमेया दक्षिणा। यथोक्तमुग्रसूत्रे–पश्योग्र भिक्षु. चीवरेण प्रावृतेनाप्रमाण समाधिमुपसपद्य विहरति। अप्रमेयस्तस्य पुण्यस्य पुण्याभिष्यन्द.। कुशलाभिष्यन्द. सुखस्याहार। तथा पिण्डपातशयनासनग्लानप्रत्ययभैषज्य परिभुक्त्वा अप्रमाण समाधिमुपसपद्य विहरति। तद्यथोग्र गृहपते सबहुला महानद्य एकीभाव गच्छन्ति। न शक्य ते उदक परिसख्यातुम्। अथ च पुनरप्रमेयोऽसंख्येयो महानुदकस्कन्ध इति सख्या गच्छन्ति। कतमा महानद्यः? गङ्गा यमुना सरयू आर्यवती मही। न शक्य तदुदक परिसख्यातुम्। अथ च पुनरप्रमेयोऽसख्येयो महानुदकस्कन्ध. सख्या गच्छन्ति। एवमेवोग्र पश्य भिक्षु चीवर परिभुञ्जन्नप्रमाण समाधिमुपसपद्य विहरति। एवं पिण्डपातशयनासनग्लानभैषज्य परिभुञ्जन्नप्रमाण समाधिमुपसपद्य विहरति। अप्रमाणस्तस्य पुण्यस्य पुण्याभिष्यन्द. कुशलाभिष्यन्द. सुखस्याहार.। एवमेव पुद्गलेऽपि तावच्छीलवति

L 163 अस्माक दत्तमप्रमेयफल भवति। तथा आरामदानविहारदानानि। वेलामसूत्रे, दक्षिणासूत्रे विस्तरः प्रत्यवगन्तव्य। तथा परिनिर्वृतस्य भगवत. स्तूपे कृताया. पूजाया अप्रमेयो विपाकः। यथोक्त कर्मविभङ्गे–दशानुशसास्तथागतपूजाया'। किं कारणम्? यः कश्चिद्दानपति., स महाभोगवत्ता वा प्रार्थयन् दान ददाति, स्वर्गसुख वा चिन्तयन्, मोक्षनिमित्त वा। तच्च सर्वमुक्तम्–यथा महाभोगश्च भवति। स्वर्गेषूपपद्यते। क्षिप्र च परिनिर्वाति। एवमप्रमेयः स्तूपे कृताधिकारस्य विपाक। न यथान्येषां वाक्याना देवदत्तमनेन गृह्णाति। अस्ति कर्म अस्माक य स्तूपे दत्तमपहरति, तस्यापरिमाण पापम्। तेषामुपमान न तेषां प्रमाण क्रियते। यत्किंचिदस्मिन् पृथिवीमण्डले सर्वसत्त्वाना हिरण्यसुवर्ण धनधान्य वस्त्रालंकारादिः, तस्य सर्वस्य य कश्चिदपहार करोति, तस्मात्पापात्प्रभूततर पाप यः स्तूपे दत्तमपहरति। एषोऽस्माक सिद्धान्त.–यत्स्तूपे दत्त तत्स्तूपे एव योज्यम्। यत्सघे, तत्सघे एवोपयोज्यम्। एष स्वसिद्धान्त प्रतिष्ठापितः। यथास्माक भगवान् तिष्ठति, तस्मिंश्च कृतोऽधिकारोऽप्रमेयविपाकः। कथ पुनर्बाह्या ये देवास्तेषा दत्ते किं पुण्य फलते?

एवं सप्रतिपन्ना· । बुद्धः परिनिर्वृतः । अस्माक देवास्तिष्ठन्ति । एव च ब्रूम.–यस्तिष्ठति यदेव भक्ता वा धूप वा पुष्प वा गन्ध वा दीप वा भोजन वा वस्त्र वा अलकार वा हिरण्य वा सुवर्णं वा प्रयच्छन्ति, किमयं हस्तेन हस्त न प्रतिगृह्णाति? अथ न प्रतिगृह्णाति, बुद्धस्य तेषा च कः प्रतिविशेषः? अथ मतम्–देवाना वा अर्चास्तेषा प्रतिकृतयः पूज्यन्ते । अस्माकमपि बुद्धस्य धर्मशरीर तिष्ठति । गुणाश्च पूज्यन्ते । प्रतिमासु ये धूप गन्ध पुष्प प्रतियच्छन्ति । एव कृतेऽस्माकमेव दत्ते स्तूपेषु पुण्यमस्ति । पूज्यन्ते । यस्मान्न प्रतिगृह्णाति, तस्मान्नास्ति देवा. । अथास्ति देवाः, कस्मान्न प्रतिगृह्णन्ति? किं कारणम्? उक्त भगवता–त्रयाणा समवायेन दक्षिणा महाफला भवति । यदि तावद्दाता भवति, यच्च द्रव्य दातव्य हिरण्यसुवर्णादि तच्च भवति, ये दक्षिणीया· । प्रतिग्राहकाः देवा मनुष्या वा । एव तेषा त्रयाणामपि समवायैः । न दानप्रतिदान हस्तेन हस्त दत्त L 164 महाफल भवति । यद्यस्त्येव, किं च न प्रतिगृह्णन्ति? तद्भक्तानाम् । अथ प्रतिगृह्णन्ति, तद्भक्तानाम् । अथ न प्रतिगृह्णन्ति, किं कृत्वा? अथ युक्त च भक्तानामेव क्रोध· कारणम् । अथ तेषा सत्य नास्माक देवः क्रुद्ध इति । उच्यते । यदि न क्रुद्धा., किमर्थं न प्रतिगृह्णन्ति? तस्मान्नास्ति स· । इद तृतीय कारणम् । यच्च तेषा देवाना देवभक्ता· सुवर्ण हिरण्य वा पादमूले प्रयच्छन्ति, एव देवस्य को बन्धो वा इति । तद्यदि तस्य धूपेषु पुष्पेषु गन्धेषु वा माल्यकरे वोपयुज्यते । येन तु दत्त तस्य पुण्यफलमस्ति । अथ तद्द्रव्यमन्यैरेव गृहीतम्, यो दाता तस्य पुण्यफल नास्ति । ये च गृह्णन्ति वय देवभक्ता देवपादोपजीविनः । देवो वय चैकमिति । तेषामदत्तदेवैश्वर्ये देवद्रव्यापहारे किं कारणम्? देवद्रव्यमन्येन ग्राह्यम् । इह देवस्य समो वा द्रव्य गृह्णेत् प्रतिविशिष्टो वा? न च देवस्य कश्चित्तुल्य, प्रागेव विशिष्टतरश्च । ते प्रतिविशिष्टतरा· । किं कारणम्? यस्मात्ते तस्य प्रणिपात कुर्वन्ति । देवपादे च स्वपन्ति । यदा ते विशिष्टतरा., किमर्थं देवः प्रसाद्यते? अथ तत्र देवद्रव्यग्रहणे पाप नास्ति, अन्येषामपि तस्कराणा ये चौर्येण जीवन्ति, तद्द्रव्यपरस्वापहारं च कुर्वन्ति, तेषामपि पापं नास्ति । अथ माता पिता पुत्रो राजा भृत्यश्च यथाद्रव्य यथापैत्र्य द्रव्य पुत्रो गृह्णाति । भृत्यो वा राज्ञो द्रव्य गृह्णाति, तथा वयमपि । एवमप्ययुक्तम् । किं कारणम्? पुत्रस्य तु पितुर्द्रव्य गृह्णतो महान् पातकः । अथ मतम्–राजभृत्यवद्द्रव्यमिति । उच्यते । राजा अदत्ताना गृह्णमाण पुत्र च पिता च दद्यात् पिता, प्रागेव भृत्यम् । तस्मादस्मदर्थं सोऽयं दृष्टान्त. । यच्चैव सप्रतिपन्नाः–वय देवभक्तास्तत्पादोपजीविनश्च, तस्माद्गृह्णीम इति । तच्चायुक्तम् । किं कारणम्? न च देवभक्तास्ते देवद्रव्य गृह्णन्ति । अथ गृह्णन्ति, न ते तद्भक्ता भवन्ति । न कश्चिद्भक्तिमान् देवद्रव्य गृह्णाति । न तेषा देवभक्तिर्भवति । देवद्रव्ये तेषा भक्तिः । न तेषा किंचित्पाप न विद्यते, येऽदत्त गृह्णन्ति । किं कारणम्? पूर्वर्षिभिर्मूले छिन्ने तपोवृक्षशाखाया यस्य लुप्तपितृस्नेहस्तस्येतरो जनः । एतदुक्त भवति–योऽदत्त देवद्रव्य गृह्णाति, न तस्य किंचिदकरणीयम् । किं कारणम्?

L 165 न ते भक्तिमन्त । अथ ते भक्तिमन्त', शत्रव. के ख्यापिता देवस्य ? अथ मतम्—यथा अममास्तेन तेषा द्रव्य न प्रयोजनम् । उच्यते । अस्ति केषाचिद्देवाना श्रुतिर्यथा देवयज्ञविध्वसन पृथिव्या अपहारश्च कृत इति । कस्मात्तेऽममा न भवन्ति ? अस्मादस्माकमेव दत्त न देवस्य । उच्यते । दानपतिना किमर्थम् ? अस्माकमेव दत्तम् । यस्मादुत्सृज्य देवस्य, तस्मान्न युष्माक दत्तम् । अथ मतम्—देवस्यैव तुष्टिर्यद्द्रव्य गृह्णीम । किमर्थ देवेन स दाता नोक्त —एषा प्रयच्छ, एषा दत्तो भविष्यामीति । यस्माद्दाता देवेन नोक्तः, तैश्च गृहीतम्, तस्माद्दातु' पुण्यफल नास्ति । ये च गृह्णन्ति तेषामदत्तादानम् । अथ मतम्—देवस्य पुण्ये च तच्चायुक्तम् । किं कारणम् ? यस्माद्देवेन तद् द्रव्य स्वयमेव गृह्य हस्तेन हस्त तेषा न प्रतिपादितम् । यथोक्त भगवता—त्रयाणा समवायेन दक्षिणा महाफला भवत्येवेति । एव किं न दत्तम् ? एव चैते विशिष्टा' समानादेव । उच्यते—परद्रव्यापहारमपि करिष्यति । अस्ति च के नानापि जीवन्ति । तत्परद्रव्यमशक्तितो न गृह्णन्ति । केचिद्राजादत्तभयात् । एतानि देवाना च देवभक्ताना च देवधर्मस्य प कानि । अद्यापि चात्र भूत वक्तव्यमेतत्तावद्देवस्य तीर्थयात्रमपि तेषा क. प्रतिगृह्णति । तासा च नदीना च कूलानि विशालानि पा कालगता । यत्तीर्थेषु श्रावयन्ति कस्तीर्थयात्रा तेषा प्रतिगृह्णाति ? अथ मतम्—नद्या स्नायामस्तीर्थमुद्दिश्य अस्या नद्यास्तस्मात्तीर्थं यते । सिद्धोऽस्मत्पक्ष. । किं कारणम् ? अस्माक बुद्धस्य शरीरं तिष्ठति । गुणा पूज्यन्ते । स्तूपानि च धूप पुष्प प्रतिगृह्णन्ति ।... ता नद्य. पौराणमार्गमुत्सृज्य अनेन पृथिवीप्रदेशेन वहन्ति । ते च ऋषय. कालगता । तस्मात्तेषा न कश्चित्तीर्थयात्रा प्रतिगृह्णाति । एवविधमेव ये ऋषीणा ते ब्रह्मर्षिणा पूजाप्रभृतय. । किं कारणम् ? केचित् तत्र सप्रतिपन्ना. । ब्रह्मास्य जातिः । केचिदाकाश्यपीय पूजाः । केषाचिदीश्वर. कर्ता । अपरे त्वाहुः—प्रजापतिना सृष्टा' प्रजा. । तस्य ब्राह्मणो मुखम् । बाहुस्तु क्षत्रिया. । ऊरुभ्या वैश्या । पद्भ्या शूद्राः । एव ते सप्रतिपन्नाः । वय ब्रूम.—पूर्वकालतो देवपरीक्षिता इद पापतरमश्रोतव्य च । कि कारणम् ? ये केचन सत्त्वा द्विपदा चतुष्पदा वा, तेषा योनिमुखान्निर्गम' । किं प्राप्तम् ? प्रजापतियोनिचतुष्टय च प्रथमत' । न भगचतुष्टयम् । मनसा विचिन्त्यैव निर्मिता । एव च सर्वे मुखत एव जाता. । कथमेकपुरुषेण वर्णचतुष्टय जातम् ? यदि च चातुर्वर्ण्यं प्रजापतिना जातम् । एते वर्णाश्चण्डालम्लेच्छ यश्च कुत. प्रादुर्भूताः ? तथा हस्तिगवाश्वादय. । कि कारणम् ? एषा-

L 166 मत्र नामग्रहण न कृतम् । किमर्थं नोक्तम् ? मूर्धातश्च पादतलान्म्लेच्छा. । स्त्रिय पृष्ठत. । हस्तिगवाश्वादीनि पादाङ्गुष्ठाज्जातानि । अथ वा किं नोक्तम् । मूर्धादसुरा जाता. हस्ततः . ति । यस्मादेतेषा च नामग्रहण न कृतम्, तेन प्रभूततरा मृगपक्षिप्रभृतयः । यस्मादिद पूर्वापरविरुद्धम् । यदिद च ब्राह्मणा समा । ब्राह्मणस्य प्रथम. पुत्रो ब्राह्मणः । द्वितीयः क्षत्रिय. । तृतीयो वैश्यः । चतुर्थ. शूद्रः । पञ्चमश्चाण्डालः ततो न्यूनतराः । कि कारणम् ? प्रजापते. पुत्रचतुष्टयम् । तेषामपरिमिता. पुत्रा. । एव क्षत्रियस्यैव वैश्यस्य

शूद्रस्य प्रथम' पुत्रो ब्राह्मण' । द्वितीय क्षत्रिय । तृतीयो वैश्य' । चतुर्थः शूद्र. । पञ्चमश्चण्डाल । शेषा न्यूनतरा । किं कारणम् ? बीजसदृश फलम् । यथा प्रजापतेश्चतुर्वर्णम्, एव तस्य पुत्राणा गोत्राणा च चतुर्वर्ण भविष्यति । अथ ब्राह्मणाना पुत्रा सर्वे ब्राह्मणा., तस्मात्प्रजापतेस्ते तु विशिष्टतरा । यदि च ते प्रतिविशिष्टतराः प्रजापतिना, किं प्रयोजनम् ? अथ मतम्—प्रजापतिना ब्राह्मणा न्यूनतरा इति । तस्माद्ब्राह्मणस्य प्रथमपुत्र शूद्रः, शेषा न्यूनतरा. । यावद्ब्राह्मणपुत्री ब्राह्मणी यद्यस्य मुखतो जाता, तस्मादगम्या । अथ पद्भ्या जाता, शूद्रा । एव तेषा प्रजापतिपरीक्षाया अपरिमाणा दोषा । अथ मतम्—प्रजापति. स्रष्टा । ईश्वरेण किं प्रयोजनम् ? अथेश्वर. कर्ता, किं कारणम् ? यस्मादुक्तम्—ब्रह्मणेद जगत्सृष्ट लोकेश्वरनिर्मित प्रजापतिकृत चेति । स क सत्य भवेत् । एव तेऽन्योन्यविरुद्धास्तीर्थकरा विवदन्ति । अथ मतम्—सहिता भूत्वा प्रजा निर्मिणन्ति, तदप्ययुक्तम् । किं कारणम् ? ते प्रतिसामन्तराजानो यथान्योन्याहङ्कारा.—अह कर्ता, अह कर्तेति । यथोक्तम्—

कर्मद्वेषाभिभूताश्च त्रय एव यदा इमे ।
अशाश्वतस्य चित्तस्य ते निर्मायुः कथ प्रजा' ॥

एव ते सहिता भूत्वा असमर्थाः प्रजानिर्माणे । एव तेषा मातापि । महादोष' कर्मणा न किंचिन्मात्रैव प्रदर्शितम् । अथ मतम्—अद्यापि सावकाशम्, यस्मान्नामग्रहण न कृतम् । उच्यते । अद्य निरवकाश यस्मान्नामग्रहण न कृतम् । किं कारणम् ? एकस्य दोषे दत्ते शेषा दोषा भवन्ति । एतदुक्त भवति—यदि तव ब्राह्मणार्थे सह कथां कुर्यात्, स तस्य दोषो दातव्यः । यदि क्षत्रियेण, यदि वैश्येन, यदि शूद्रेण सह कथा क्रियते, यदेवमासृत्य शूद्रः कथा कुर्यात् सह वक्तव्यम् । तस्मादय दोष' इत्येव निरवकाश कृत भवति । य एव प्रतिपन्ना'—बुद्ध' परिनिर्वृत', कस्ता. पूजा. परिगृह्णातीति, तेषामेव स्वसिद्धान्तदोषो वक्तव्य' । तस्मात्तेषामेव प्रतिस्व स्वसिद्धान्ताना दोषो दातव्य' । किं कारणम् ? न ह्यभियुक्तस्य L 167 पश्चात्प्रत्यभियोगः । तस्मादनेकप्रकारेण तेषा पूर्वाभियोग. कार्य इति । न चैतदनर्थमुक्तम् । अत्रैकोत्तरिकासूत्र प्रत्यवगन्तव्यम्—त्रीणीमानि भिक्षव' प्रच्छन्नवाहीनीति । कतमानि त्रीणि ? मातृग्राम' कूटकार्षापणो ब्राह्मणाना सिद्धान्त. । त्रीणीमानि भिक्षवः विवृतानि शोभन्ति इति । कतमानि त्रीणि ? चन्द्रमण्डल सूर्यमण्डल बुद्धवचनम् । इमानि त्रीणि विवृतानि शोभन्ति । यान्येतानि परीक्षाकारणानि देवपूजाप्रजापतिप्रभृतीना सदा कार्यमधिकृत्य भगवतोक्तम्—ब्राह्मणाना सिद्धान्तः प्रच्छन्नवाही । महाकर्मविभङ्ग उच्यते—महान्ति कर्माणि । अत्र विस्तरेण विभक्तानि । तस्मान्महाकर्मविभङ्गः । सग्रहसारकर्मविभङ्गसर्वसारकर्मणा हीनोत्कृष्टमध्यमानि विस्तरेण कथामुखानि दर्शितानि । तस्मादपि महाकर्मविभङ्गः गोत्रान्तरीयाणामभिधर्मसयुक्तेषु ॥

महाकर्मविभङ्गो नाम समाप्तः ॥

*  *  *  *  *

ये धर्मा हेतुप्रभवा हेतु तेषा तथागतो ह्यवदत् ।
तेषा च यो निरोध एव वादी महाश्रमण. ॥
स्याद्राजा धार्मिकश्च प्रचुरगुणधृतो धर्मयुक्तश्च सर्वे
काले वर्षन्तु मेघाः सकलभयहरा रौद्रससारदु.खात् ॥
उदकानलचौरेभ्यो मूषिकेभ्यस्तथैव च ।
रक्षितव्य प्रयत्नेन मया कष्टेन लेखितम् ॥
यादृश पुस्तक दृष्ट्वा तादृश लिखित मया ।
यदि शुद्धमशुद्ध वा मम दोषो न विद्यते ॥
भग्नपृष्ठकटिग्रीवस्तब्धदृष्टिरधोमुखः ।
रक्षितव्य प्रयत्नेन जीवमिव प्रतिज्ञाय(०ज्ञया) ।

श्रेयोऽस्तु । संवत् ५३१ मार्गशिरोमासे शुक्लपक्षे त्रयोदश्या तिथौ । रोहिणीनक्षत्रे शुभघटि २ सुकर्मयोगेऽङ्गारवासरे । त्व अनुराधाफलप्राप्त भवतु ॥

श्रीश्रीराजाधिराजपरमेश्वर परमभट्टारक विजयराज्याः। यजमानश्रिय ब्रूमो या शृङ्गाङ्गलगे श्रीश्री षडक्षरीमहाविहारे शाक्यभिक्षुश्री मम लिख्यते ॥

---

# १६ सुखावतीव्यूहः ।

[ विस्तरमातृका ]

ॐ नमो रत्नत्रयाय । ॐ नम श्रीसर्वबुद्धबोधिसत्त्वेभ्य· । नमो दशदिगनन्तापर्यन्त- M 1 लोकधातुप्रतिष्ठितेभ्यः सर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धेभ्योऽतीतानागतप्रत्युत्पन्नेभ्य. । नमोऽमिताभाय । नमोऽचिन्त्यगुणान्तरात्मने ॥

एव[1] मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटपर्वते महता भिक्षुसघेन सार्धं द्वात्रिंशता भिक्षुसहस्रै., सर्वैरर्हद्भि· क्षीणास्रवैर्नि क्लेशैरुषितवद्भि सम्यगाज्ञासुविमुक्तचित्तै परीक्षचित्तै. परिक्षीणभवसयोजनैरनुप्राप्तस्वकार्थैर्विजितवद्भिरुत्तमदमथप्राप्तै सुविमुक्तचित्तैः सुविमुक्तप्रज्ञैर्महानागै षडभिज्ञैर्वशीभूतैरष्टविमोक्षध्यायिभिर्बल- M 2 प्राप्तैरभिज्ञाताभिज्ञैः स्थविरैर्महाश्रावकैः । तद्यथा—आज्ञातकौण्डिन्येन च, अश्वजिता च, बाष्पेण च, महानाम्ना च, भद्रजिता च, यशोदेवेन च, विमलेन च, सुबाहुना च, पूर्णमैत्रायणीपुत्रेण च, उरुबिल्वाकाश्यपेन च, नदीकाश्यपेन च, गयाकाश्यपेन च, कुमारकाश्यपेन च, महाकाश्यपेन च, शारिपुत्रेण च, महामौद्गल्यायनेन च, महाकौष्ठिल्येन च, महाकफिलेन च, महाचुन्देन च, अनिरुद्धेन च, नन्दिकेन च, कम्पिलेन च, सुभूतिना च, रेवतेन च, खदिरवनिकेन च, वकुलेन च, स्वागतेन च, अमोघराजेन च, पारायणिकेन च, पत्केन च, चुल्लपत्केन च, नन्देन च, राहुलेन च, आयुष्मतानन्देन च, एतैश्चान्यैश्च अभिज्ञाताभिज्ञै. स्थविरैर्महाश्रावकैरेक पुद्गलं स्थापयित्वा शैक्षप्रतिपद्युत्तरिकरणीय यदिदमायुष्मन्तमानन्दम् । मैत्रेयपूर्वंगमैश्च सबहुलैर्बोधिसत्त्वैर्महासत्त्वै· ॥ १ ॥

अथ खल्वायुष्मानानन्द उत्थायासनादेकासमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—विप्रसन्नानि तव भगवत इन्द्रियाणि, परिशुद्धश्छविवर्णः, पर्यवदातो मुखवर्णः पीतनिर्भास· । M 3 तद्यथापि नाम शारद वनदं पाण्डुपरिशुद्ध पर्यवदात पीतनिर्भासम्, एवमेव भगवतो विप्रसन्नानीन्द्रियाणि, परिशुद्धो मुखवर्णः, पर्यवदातश्छविवर्णः पीतनिर्भासः । तद्यथापि नाम भगवन् जाम्बूनदसुवर्णनिष्को दक्षेण कर्मारेण कर्मारान्तेवासिना वा उल्कामुखेन सप्रवेश्य सुपरि-

---

१ Before एव, Max Muler's edition reads the following, which, of course, is not the part of the sūtra

नमोऽमिताभाय जिनाय ते मुने
सुखावतीं यामि ते चानुकम्पया ।
सुखावतीं कनकविचित्रकानना
मनोरमा सुगतसुतैरलंकृताम् ।
तवाश्रयं प्रथितयशस्य धीमत ।
प्रयामि ता बहुमणिरत्नसचयाम् ॥

निष्ठितः पाण्डुकम्बल उपरिनिक्षिप्तोऽतीव परिशुद्धो भवति पर्यवदात· पीतनिर्भास·, एवमेव भगवतो विप्रसन्नानीन्द्रियाणि, परिशुद्धो मुखवर्ण·, पर्यवदातश्छविवर्ण· पीतनिर्भास । न खलु पुनरह भगवन् अभिजानामि इतः पूर्वतरमेव विप्रसन्नानि तथागतस्येन्द्रियाणि एव परिशुद्ध मुखवर्णं पर्यवदात छविवर्ण पीतनिर्भासम् । तस्य मे भगवन् एव भवति–बुद्धविहारेण बताद्य तथागतो विहरति, जिनविहारेण सर्वज्ञताविहारेण । महानागविहारेण बताद्य तथागतो विहरति । अतीतानागतप्रत्युत्पन्नान् वा तथागतानर्हत· सम्यक्संबुद्धान् समनुस्मरतीति । एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्–साधु साध्वानन्द । किं पुनस्ते देवता एतमर्थमारोचयन्ति, उताहो बुद्धा भगवन्त. ? अथ तेन प्रत्युत्पन्नमीमासाज्ञानेनैव प्रजानासीति ? एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्–न मे भगवन् देवता एतमर्थमारोचयन्ति, नापि बुद्धा भगवन्त । अथ तर्हि मे भगवस्तेनैव प्रत्यात्ममीमासाज्ञानेनैव
M 4 भवति–बुद्धविहारेणाद्य तथागतो विहरति । जिनविहारेण सर्वज्ञताविहारेण बताद्य तथागतो विहरति । अतीतानागतप्रत्युत्पन्नान् वा बुद्धान् भगवत. समनुस्मरतीति । एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्–साधु साध्वानन्द । उदारः खलु ते उन्मिञ्ज., भद्रिका मीमासा, कल्याण प्रतिभानम् । बहुजनहिताय त्वमानन्द प्रतिपन्नो बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवाना च मनुष्याणा च, यस्त्व तथागतमर्थं परिप्रष्टव्य मन्यसे । एवमेव भगवत्सु आनन्दस्तथागतेष्वर्हत्सु सम्यक्सबुद्धेषु अप्रमेयेषु असख्येयेषु ज्ञानदर्शनमुपसहरेत्, न तथागतस्य ज्ञानमुपहन्येत । तत्कस्य हेतोः ? अप्रतिहतहेतुज्ञानदर्शनो ह्यानन्द तथागत· । ज्ञानमाकाङ्क्षन्नानन्द तथागतः एकपिण्डपातेन कल्प वा तिष्ठेत् कल्पशत वा कल्पसहस्र वा कल्पशतसहस्र वा यावत्कल्पकोटीनियुतशतसहस्र वा, ततो वोत्तरि तिष्ठेत्, न च तथागतस्येन्द्रियाण्युपनश्येयु·, न मुखवर्णस्यान्यथात्व भवेत्, नापि च्छविवर्ण उपहन्येत । तत्कस्य हेतोः ? तथा हि आनन्द तथागतः समाधिमुखपारमिताप्राप्तः । सम्यक्सबुद्धानामानन्द लोके सुदुर्लभ. प्रादुर्भावः । तद्यथा औदुम्बरपुष्पाणा लोके प्रादुर्भाव· सुदुर्लभो भवति, एवमेव आनन्द तथागतानामर्थकामानाँ हितैषिणामनुकम्पकाना महाकरुणाप्रतिपन्नाना सुदुर्लभ· प्रादुर्भावः । अपि तु खल्वानन्द तथागतस्यैव सोऽनुभावो यस्त्व सर्वलोकाचार्याणा सत्त्वाना लोके प्रादुर्भावाय बोधिसत्त्वाना
M 5 महासत्त्वानामर्थाय तथागतमेतमर्थ परिप्रष्टव्य मन्यसे । तेन ह्यानन्द शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽह ते । एव भगवन् इत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत् ॥ २ ॥

भगवानानन्दमेतदवोचत्–भूतपूर्वमानन्द अतीतेऽध्वनि इतोऽसख्येये कल्पेऽसख्येयतरे विपुलेऽप्रमेयेऽचिन्त्ये यदासीत् । तेन कालेन तेन समयेन दीपकरो नाम तथागतोऽर्हन् सम्यक्सबुद्धो लोक उदपादि । दीपकरस्यानन्द परेण परतर प्रतापवान्नाम तथागतोऽभूत् । तस्य परेण परतर प्रभाकरो नाम तथागतोऽभूत् । तस्य परेण परतर चन्दनगन्धो नाम तथागतोऽभूत् । तस्य परेण परतर सुमेरुकल्पो नाम तथागतोऽभूत् ।

एव चन्दनो नाम, विमलाननो नाम, अनुपलिप्तो नाम, विमलप्रभो नाम, नागाभिभूर्नाम, सूर्योदनो नाम, गिरिराजघोषो नाम, मेरुकूटो नाम, सुवर्णप्रभो नाम, ज्योतिष्प्रभो नाम, वैडूर्यनिर्भासो नाम, ब्रह्मघोषो नाम, चन्द्राभिभूर्नाम, तूर्यघोषो नाम, मुक्तकुसुमप्रतिमण्डितप्रभो नाम, श्रीकूटो नाम, सागरवरबुद्धिविक्रीडिताभिज्ञो नाम, वरप्रभो नाम, महागन्धराजनिर्भासो नाम, व्यपगतखिलमलप्रतिघोषो नाम, शूरकूटो नाम, रणजहो नाम, महागुणधरबुद्धिप्राप्ताभिज्ञो नाम, चन्द्रसूर्यजिह्मीकरणो नाम, उत्तप्तवैडूर्यनिर्भासो नाम, चित्तधाराबुद्धिसकुसुमिताभ्युद्गतो नाम, पुष्पावतीवनराजसकुसुमिताभिज्ञो नाम, पुष्पाकरो नाम, M 6 उदकचन्द्रो नाम, अविद्यान्धकारविध्वसनकरो नाम, लोकेन्द्रो नाम, मुक्तच्छत्रप्रवातसदृशो नाम, तिष्यो नाम, धर्ममतिविनन्दितराजो नाम, सिंहसागरकूटविनन्दितराजो नाम, सागरमेरुचन्द्रो नाम, ब्रह्मस्वरनादाभिनन्दितो नाम, कुसुमसभवो नाम, प्राप्तसेनो नाम, चन्द्रभानुर्नाम, मेरुकूटो नाम, चन्द्रप्रभो नाम, विमलनेत्रो नाम, गिरिराजघोषेश्वरो नाम, कुसुमप्रभो नाम, कुसुमवृष्ट्यभिप्रकीर्णो नाम, रत्नचन्द्रो नाम, पद्मबिम्ब्युपशोभितो नाम, चन्दनगन्धो नाम, रत्नाभिभासो नाम, निमिर्नाम, महाव्यूहो नाम, व्यपगतखिलदोषो नाम, ब्रह्मघोषो नाम, सप्तरत्नाभिवृष्टो नाम, महागुणधरो नाम, महातमालपत्रचन्दनकर्दमो नाम, कुसुमाभिज्ञो नाम, अज्ञानविध्वसनो नाम, केसरी नाम, मुक्तच्छत्रो नाम, सुवर्णगर्भो नाम, वैडूर्यगर्भो नाम, महाकेतुर्नाम, धर्मकेतुर्नाम, रत्नकेतुर्नाम, रत्नश्रीर्नाम, लोकेन्द्रो नाम, नरेन्द्रो नाम, कारुणिको नाम, लोकसुन्दरो नाम, ब्रह्मकेतुर्नाम, धर्ममतिर्नाम, सिंहो नाम- सिंहमतिर्नाम । सिंहमतेरानन्द परेण परतर लोकेश्वरराजो नाम तथागतोऽर्हन् सम्यक्सबुद्धो लोक उदपादि विद्याचरणसपन्न सुगतो लोकविदनुत्तर. पुरुषदम्यसारथि. शास्ता M 7 देवाना च मनुष्याणा च बुद्धो भगवान् । तस्य खलु पुनरानन्द लोकेश्वरराजस्य तथागत, स्यार्हत. सम्यक्सबुद्धस्य प्रवचने धर्माकरो नाम भिक्षुरभूदधिमात्रं स्मृतिमान् मतिमान् गतिमान् प्रज्ञावान्, अविमात्र वीर्यवान् उदाराधिमुक्तिक ॥ ३ ॥

अथ खल्वानन्द स धर्माकरो भिक्षुरुत्थायासनादेकासमुत्तरासङ्ग कृत्वा दक्षिणजानुमण्डल पृथिव्या प्रतिष्ठाप्य येनासौ भगवाँल्लोकेश्वरराजस्तथागतस्तेनाञ्जलिं प्रणम्य भगवन्त नमस्कृत्य तस्मिन्नेव समये समुखमाभिर्गाथाभिरभ्यष्टावीत्—

अमितप्रभ अनन्ततुल्यबुद्धे
न च इह अन्य प्रभा विभाति काचित् ।
सूर्यमणिगिरीशचन्द्रआभा
न तपित भोसिषु एभि सर्वलोके ॥ १ ॥
रूपमपि अनन्तु सत्त्वसारे
तथ अपि बुद्धस्वरो अनन्तघोष. ।
शीलमपि समाधिप्रज्ञवीर्यै.
सदृशु न तेऽस्तिह लोकि कश्चिदन्यः ॥ २ ॥

गभिरु विपुलु सूक्ष्मप्राप्तु धर्मो-
ऽचिन्तितु बुद्धवरो यथा समुद्रः ।
तेनोन्नमना न चास्ति शास्तुः
M 8 खिलदोषान् जह्या अतोऽधिकालम् ॥ ३ ॥

अथ बुद्धबला अनन्ततेजा
प्रतपति सर्वदिशा नरेन्द्रराजा ।
तथ अहु बुद्ध भवि धर्मस्वामी
जरमरणात्प्रजा प्रमोचयेयम् ॥ ४ ॥

दानशमथशीलक्षान्तिवीर्य
ध्यानसमाधितश्चैव अग्रश्रेष्ठा ।
एभि अहु व्रता समाददामि
बुद्ध भविष्यमि सर्वसत्त्वत्राता ॥ ५ ॥

बुद्धशतसहस्र कोट्यनेका
यथरिव वालिक गङ्गया अनन्ता ।
सर्वत अहु पूजयिष्य नाथा
शिववरबोधिगवेषको अतुल्या ॥ ६ ॥

गङ्गारजसमानलोकधातू
तत्र भूयोऽन्तरि ये अनन्तक्षेत्राः ।
सर्वत प्रभ मुञ्चयिष्य तत्रा
इति एतादृश वीर्यमारभिष्य ॥ ७ ॥

क्षेत्र मम उदारु अग्र श्रेष्ठो
वरमिह मली(?) संस्कृतेऽस्मिं ।
M 9 असदृश निर्वाणधातुसौख्य
तश्च(च?) असत्त्वतया विशोधयिष्ये ॥ ८ ॥

दशदिशत समागतानि सत्त्वा
तत्र गता सुख मे दिशन्ति क्षिप्रम् ।
बुद्ध मम प्रमाणु अत्र शिक्षी
अवितथवीर्यबल जनेमि छन्दम् ॥ ९ ॥

दशदिशलोकविदसङ्गज्ञानी
सद मम चित्त प्रजानयन्ति तेऽपि ।
अविचिगतु अह सदा वसेयं
प्रणिधिबल न पुनर्विवर्तयिष्ये ॥ १० ॥

अथ खल्वानन्द स धर्माकरो भिक्षुस्त भगवन्त लोकेश्वरराज तथागत समुखमाभिर्गाथाभिरभिष्टुत्य एतदवोचत्—अहमस्मि भगवन् उत्तरा सम्यक्सबोधिमभिसबोद्धुकाम.। पुन' पुनरनुत्तराया सम्यक्सबोधौ चित्तमुत्पादयामि परिणामयामि। तस्य मे भगवान् शास्ता तथा धर्म देशयतु, यथाह क्षिप्रमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम्। असमसमस्तथागतो लोके भवेयम्। ताश्च भगवानाकारान् परिकीर्तयतु यैरह बुद्धक्षेत्रस्य गुणव्यूहसपद परिगृह्णीयाम्। एवमुक्ते आनन्द भगवाँल्लोकेश्वरराजस्तथागतस्त भिक्षुमेतदवोचत्—तेन हि त्व भिक्षो स्वयमेव बुद्धक्षेत्रगुणालकारव्यूहसपद परिगृह्णीष्व। सोऽवोचत्—नाह भगवस्तत्सहेयम्, अपि तु भगवानेव। भापस्व अन्येषा तथागताना बुद्धक्षेत्रगुणव्यूहा- M 10
लकारसपदम्, या श्रुत्वा वय सर्वाकार परिपूरयिष्याम इति। अथानन्द स लोकेश्वरराजस्तथागतोऽर्हन् सम्यक्सबुद्धस्तस्य भिक्षोराशय ज्ञात्वा परिपूर्णा वर्पकोटीमेकाशीतिबुद्धकोटीनियुतशतसहस्राणा बुद्धक्षेत्रगुणालकारव्यूहसपद साकारा सोद्देशा सनिर्देशा सप्रकाशितवानर्थकामो हितैषी अनुकम्पकोऽनुकम्पामुपादाय बुद्धक्षेत्रानुपच्छेदाय सत्त्वेषु महाकरुणा सजनयित्वा। परिपूर्णाश्चत्वारिंशत्कल्पास्तस्य भगवतस्तथागतस्यायु.प्रमाणम्॥ ५॥

अथ खल्वानन्द स धर्माकरो भिक्षुर्यास्तेषामेकाशीतिबुद्धकोटीनियुतशतसहस्राणा बुद्धक्षेत्रगुणालकारव्यूहसपदः, ता सर्वा एके बुद्धक्षेत्रे परिगृह्य भगवतो लोकेश्वरराजस्य तथागतस्य पादौ शिरसा वन्दित्वा प्रदक्षिणीकृत्य तस्य भगवतोऽन्तिकात्प्राक्रामत्। उत्तरि च पञ्च कल्पान् बुद्धक्षेत्रगुणालकारव्यूहसपदमुदारतरा प्रणीततरा च सर्वलोके दशसु दिक्षु अप्रचरितपूर्वा परिगृहीतवान्, उदारतर च प्रणिधानमकार्षीत्॥ ६॥

इति ह्यानन्द या तेन भगवता लोकेश्वरराजेन तथागतेन तेषामेकाशीतिबुद्धक्षेत्रकोटीनियुतशतसहस्राणा सपत्ति. कथिता, ततो भिक्षुरेकाशीत्युदारप्रणीताप्रमेयतरा बुद्धक्षेत्रसपत्तिं परिगृह्य येन स तथागतस्तेनोपसक्रम्य भगवत पादौ शिरसा वन्दित्वा एतदवोचत्—परिगृहीता मे भगवन् बुद्धक्षेत्रगुणालकारव्यूहसपदिति। एवमुक्ते आनन्द स M 11
लोकेश्वरराजस्तथागतस्त भिक्षुमेतदवोचत्—तेन हि भिक्षो भाषस्व, अनुमोदते तथागत.। अय कालो भिक्षो, प्रमोदय पर्षदम्, हर्ष जनय, सिंहनाद नद, य श्रुत्वा बोधिसत्त्वा महासत्त्वा एतर्ह्यनागतेऽध्वनि एवरूपाणि बुद्धक्षेत्रगुणसपत्तिप्रणिधिस्थानानि परिग्रहीष्यन्ति। अथानन्द स धर्माकरो भिक्षुस्तस्या वेलाया भगवन्तमेतदवोचत्—तेन हि शृणोतु मे भगवान् ये मम प्रणिधानविशेषा., यथा मेऽनुत्तरा सम्यक्सबोधिमभिसबुद्धस्य अचिन्त्यगुणालकारव्यूहसमन्वागत तद् बुद्धक्षेत्र भविष्यति॥ ७॥

१. सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे निरयो वा तिर्यग्योनिर्वा प्रेतविषयो वा आसुरो वा कायो भवेत्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम्॥

२ सचेन्मे भगवस्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वा प्रत्याजाता भवेयुः, ते पुनस्ततश्च्युत्वा निरय वा तिर्यग्योनिं वा प्रेतविषय वा आसुर वा काय प्रपतेयुः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम्॥

३. सचेन्मे भगवस्तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजातास्ते च सर्वे नैकवर्णाः स्युर्यदिद सुवर्णवर्णाः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

M 12 ४ सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे देवाना च मनुष्याणा च नानात्व प्रज्ञायेत अन्यत्र नाम सवृतिव्यवहारमात्रा देवमनुष्या इति सख्यागणनातः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

५. सचेन्मे भगवंस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वा· प्रत्याजाताः, ते च सर्वे न ऋद्धिवशितापरमपारमिताप्राप्ता भवेयु , अन्तश एकचित्तक्षणलवेन बुद्धक्षेत्रकोटीनियुतशतसहस्राति‌क्रमणतयापि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

६. सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वा· प्रत्याजाता भवेयु·, ते च सर्वे जातिस्मरा न स्यु , अन्तश· कल्पकोटीनियुतशतसहस्रानुस्मरणतयापि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

७. सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वा. प्रत्याजायेरन्, ते सर्वे न दिव्यस्य चक्षुषो लाभिनो भवेयु , अन्तशो लोकधातुकोटीनियुतशतसहस्रदर्शनतयापि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसंबुध्येयम् ॥

८. सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरन्, ते सर्वे न दिव्यस्य श्रोत्रस्य लाभिनो भवेयु , अन्तशो बुद्धक्षेत्रकोटीनियुतशतसहस्रादपि युगपत्सद्धर्मश्रवणतया, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

M 13 ९ सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरन्, ते सर्वे न परचित्तज्ञानकोविदा भवेयुः, अन्तशो बुद्धक्षेत्रकोटीनियुतशतसहस्रपर्यापन्नानामपि सत्त्वाना चित्तचरितपरिज्ञानतया, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१० सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वा प्रत्याजायेरन्, तेषा काचित्परिग्रहसज्ञोत्पद्येत, अन्तश· स्वशरीरेऽपि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

११ सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे ये सत्त्वा. प्रत्याजायेरन्, ते सर्वे न नियता. स्युर्यदिद सम्यक्त्वे यावन्महापरिनिर्वाणे, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१२. सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे अनुत्तरा सम्यक्संबोधिमभिसबुद्धस्य कश्चित्सत्त्वः श्रावकाणा गणनामधिगच्छेत्, अन्तशस्त्रिसाहस्रमहासाहस्रपर्यापन्ना अपि सर्वसत्त्वाः प्रत्येकबुद्धभूताः कल्पकोटीनियुतशतसहस्रमभिगणयन्तः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१३ सचेन्मे भगवस्तस्मिन् बुद्धक्षेत्रे अनुत्तरा सम्यक्सबोधिमभिसबुद्धस्य प्रमाणिकी मे प्रभा भवेत्, अन्तशो बुद्धक्षेत्रकोटीनियुतशतसहस्रप्रमाणेनापि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१४. सचेन्मे भगवन्ननुत्तरा सम्यक्सबोधिमभिसंबुद्धस्य तस्मिन् बुद्धक्षेत्रे सत्त्वाना M 14 प्रमाणीकृतमायुष्प्रमाण भवेत्, अन्यत्र प्रणिधानवशेन, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१५ सचेन्मे भगवन् बोधिप्राप्तस्यायुष्प्रमाण पर्यन्तीकृत भवेत्, अन्तशः कल्पकोटीनियुतशतसहस्रगणनयापि, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१६ सचेन्मे भगवन् बोधिप्राप्तस्य तस्मिन् बुद्धक्षेत्रे सत्त्वानामकुशलस्य नामधेयमपि भवेत्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१७. सचेन्मे भगवन् बोधिप्राप्तस्य नाप्रमेयेषु बुद्धक्षेत्रेषु अप्रमयासख्येया बुद्धा भगवन्तो नामधेयं परिकीर्तयेयुः, न वर्णं भाषेरन्, न प्रशंसामभ्युदीरयेरन्, न समुदीरयेयुः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१८ सचेन्मे भगवन् बोधिप्राप्तस्य ये सत्त्वा अन्येषु लोकधातुष्वनुत्तराया सम्यक्सबोधौ चित्तमुत्पाद्य मम नामधेय श्रुत्वा प्रसन्नचित्ता मामनुस्मरेयुः, तेषा चेदह मरणकालसमये प्रत्युपस्थिते भिक्षुसघपरिवृतः पुरस्कृतो न पुरतस्तिष्ठेय यदिद चित्ताविक्षेपतायै, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

१९ सचेन्मे भगवन् बोधिप्राप्तस्य अप्रमेयासख्येयेषु बुद्धक्षेत्रेषु ये सत्त्वा मम नाम- M 15 धेयं श्रुत्वा तत्र बुद्धक्षेत्रे चित्त प्रेरयेयुः, उपपत्तये कुशलमूलानि च परिणामयेयुः, ते तत्र बुद्धक्षेत्रे नोपपद्येरन्, अन्तशो दशभिश्चित्तोत्पादपरिवर्तैः स्थापयित्वा आनन्तर्यकारिणः सद्धर्मप्रतिक्षेपावरणकृताश्च सत्त्वान्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२०. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुः, ते सर्वे नैकजातिप्रतिबद्धाः स्युरनुत्तराया सम्यक्सबोधौ स्थापयित्वा प्रणिधानविशेषान्, तेषामेव बोधिसत्त्वाना महासत्त्वाना महासनाहसनद्धाना सर्वलोकार्थसबुद्धाना सर्वलोकाभियुक्ताना सर्वलोकपरिनिर्वाणाभियुक्ताना सर्वलोकधातुषु बोधिसत्त्वचर्यां चरितुकामाना सर्वबुद्धाना सवर्तुकामाना गङ्गानदीवालुकासमान् सत्त्वान् अनुत्तराया सम्यक्सबोधौ प्रतिष्ठापकाना भूयश्च उत्तरचर्याभिमुखाना समन्तभद्रचर्यानिर्यातानाम्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२१. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाता भवेयुः, ते सर्वे एकपुरोभक्तेन अन्यानि बुद्धक्षेत्राणि गत्वा बहूनि बुद्धशतानि बहूनि बुद्धसहस्राणि बहूनि बुद्धशतसहस्राणि बह्वीर्बुद्धकोटीर्यावद्बहूनि बुद्धकोटीनियुतशतसहस्राणि नोपतिष्ठेरन् M 16 सर्वसुखोपधानैः तदिद बुद्धानुभावेन, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसबुध्येयम् ॥

२२. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे बोधिसत्त्वा यथारूपैराकारैराकाङ्क्षेयुः कुशलमूलान्यवरोपयितु यदिद सुवर्णेन वा रजतेन वा मणिमुक्तावैडूर्यशङ्खशिलाप्रवालस्फटिकमुसारगल्वलोहितमुक्ताश्मगर्भादिभिर्वा अन्यतमान्यतमैः सर्वैः रत्नैर्वा सर्वगन्धपुष्पमाल्य-

विलेपनधूपचूर्णचीवरच्छत्रध्वजपताकाप्रदीपैर्वा सर्वनृत्यगीतवाद्यैर्वा, तेषा च तथारूपा आहारा. सहचित्तोत्पादान्न प्रादुर्भवेयु, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२३ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयु, ते सर्वे न सर्वज्ञतासहगता धर्मकथा कथयेयु, मा तावदहमनुत्तरां सम्यक्सबोधिमभिसबुध्येयम् ॥

२४ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वा एव चित्तमुत्पादयेयु—यदिहैव वय लोकधातौ स्थित्वा अप्रमेयासख्येयेषु बुद्धक्षेत्रेषु बुद्धान् भगवत सत्कुर्याम गुरुकुर्याम मानयेम पूजयेम यदिद चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारै. पुष्पधूपदीपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्नानाविधनृत्यगीतवाद्यै
M 17 रत्नवर्षैरिति, तेषा च बुद्धा भगवन्त सहचित्तोत्पादान्न प्रतिगृह्णीयुर्यदिदमनुकम्पामुपादाय, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२५ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाता भवेयु, ते सर्वे न नारायणवज्रसहतात्मभावस्थामप्रतिलब्धा भवेयु, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२६ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे यः कश्चित्सत्त्वोऽलकारस्य वर्णपर्यन्तमुद्गृह्णीयात्—अन्तशो दिव्येनापि चक्षुषा एववर्णमेवविभूति इद बुद्धक्षेत्रमिति नानावर्णता जानीयात्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२७. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे यः सर्वपरीत्तकुशलमूलो बोधिसत्त्वः सोऽन्तशो योजनशतोत्थितमुदारवर्ण बोधिवृक्ष न सजानीयात्, मा तावदहमनुत्तरां सम्यक्सबोधिमभिसबुध्येयम् ॥

२८ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे कस्यचित्सत्त्वस्योद्देशो वा स्वाध्यायो वा कर्तव्यः स्यात्, न ते सर्वे प्रतिसवित्प्राप्ता भवेयुः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

२९ सचेन्मे भगवन् बोधिप्राप्तस्य नैव प्रभास्वर तद्बुद्धक्षेत्र भवेद्यत्र समन्तादप्रमेया-
M 18 सख्येयाचिन्त्यातुल्यापरिमाणानि बुद्धक्षेत्राणि सदृश्येरन् तद्यथापि नाम परिमृष्टे आदर्शमण्डले मुखमण्डलम्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

३० सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे धरणीतलमुपादाय यावदन्तरीक्षाद्देवमनुष्यविषयातिक्रान्तस्याभिजातस्य धूपस्य तथागतबोधिसत्त्वपूजाप्रत्यर्हस्य सर्वरत्नमयानि नानासुरभिगन्धघटिकाशतसहस्राणि सदा निधूपितान्येव न स्यु., मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

३१. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे न सदाभिप्रवृष्टान्येव सुगन्धिनानारत्नपुष्पवर्षाणि सदा प्रवादिताश्च मनोज्ञस्वरा वाद्यमेघा न स्यु., मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

३२ सचेन्मे भगवन् बोधिप्राप्तस्य ये सत्त्वा अप्रमेयासंख्येयाचिन्त्यातुल्येषु लोकधातुष्वाभया स्फुटा भवेयु॰, ते सर्वे न देवमनुष्यसमतिक्रान्तेन सुखेन समन्वागता भवेयु, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३३ सचेन्मे भगवन् बोधिप्राप्तस्य समन्तादप्रमेयाचिन्त्यातुल्यापरिमाणेषु बुद्धक्षेत्रेषु बोधिसत्त्वा महासत्त्वा मम नामधेयं श्रुत्वा तच्छ्रवणसहगतेन कुशलेन जातिव्यतिवृत्ता. सन्तो न धारणीप्रतिलब्धा भवेयुर्यावद्बोधिमण्डपर्यन्तमिति, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३४ सचेन्मे भगवन् बोधिप्राप्तस्य समन्तादप्रमेयासंख्येयाचिन्त्यातुल्यापरिमाणेषु M 19
बुद्धक्षेत्रेषु याः स्त्रियो मम नामधेयं श्रुत्वा प्रसादं संजनयेयु, बोधिचित्तं नोत्पादयेयु॰, स्त्रीभावं च न विजुगुप्सेरन्, जातिव्यतिवृत्ता॰ समाना सचेद्द्वितीयं स्त्रीभावं प्रतिलभेरन्, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३५ सचेन्मे भगवन् बोधिप्राप्तस्य समन्ताद्दशसु दिक्षु अप्रमेयासंख्येयाचिन्त्यातुल्यापरिमाणेषु बुद्धक्षेत्रेषु ये बोधिसत्त्वा मम नामधेयं श्रुत्वा प्रणिपत्य पञ्चमण्डलनमस्कारेण वन्दिष्यन्ते ते बोधिसत्त्वचर्यां चरन्तो न सदेवकेन लोकेन सत्क्रियेरन्, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३६ सचेन्मे भगवन् बोधिप्राप्तस्य कस्यचिद्बोधिसत्त्वस्य चीवरधावनशोपणसीवनरञ्जनकर्म कर्तव्यं भवेत्, न त्वेव नवाभिजातचीवररत्नैः प्रावृतमेवात्मानं संजानीयु. सहचित्तोत्पादात्तथागतानुज्ञातै, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३७ सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे सहोत्पन्ना. सत्त्वा नैवंविधं सुखं प्रतिलभेरंस्तद्यथापि नाम निष्परिदाहस्यार्हतो भिक्षोस्तृतीयध्यानसमापन्नस्य, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३८. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाता., ते यथारूपं बुद्धक्षेत्रे गुणालंकारव्यूहमाकाङ्क्षेयुः, तथारूपं नानारत्नवृक्षेभ्यो न संजनयेयुः, M 20
मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

३९. सचेन्मे भगवन् बोधिप्राप्तस्य मम नामधेयं श्रुत्वा अन्यबुद्धक्षेत्रोपपन्ना बोधिसत्त्वा इन्द्रियबलवैकल्यं गच्छेयुः, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

४०. सचेन्मे भगवन् बोधिप्राप्तस्य तदन्यबुद्धक्षेत्रस्थाने बोधिसत्त्वा मम नामधेयसहश्रवणान्न सुविभक्तवतीं नाम समाधिं प्रतिलभेरन्, यत्र समाधौ स्थित्वा बोधिसत्त्वा एकक्षणव्यतिहारेण अप्रमेयासंख्येयाचिन्त्यातुल्यापरिमाणान् बुद्धान् भगवतः पश्यन्ति, स चैषां समाधिरन्तरा विप्रणश्येत्, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

४१ सचेन्मे भगवन् बोधिप्राप्तस्य तदन्येषु बुद्धक्षेत्रेषु मम नामधेयं श्रुत्वा तच्छ्रवणसहगतेन कुशलमूलेन सत्त्वा नाभिजातकुलोपपत्तिं प्रतिलभेरन् यावद्बोधिपर्यन्तम्, मा तावदहमनुत्तरा सम्यक्संबोधिमभिसंबुध्येयम् ॥

४२. सचेन्मे भगवन् बोधिप्राप्तस्य तदन्येषु बुद्धक्षेत्रेषु ये बोधिसत्त्वा मम नामधेय श्रुत्वा तच्छ्रवणकुशलमूलेन यावद्बोधिपर्यन्त ते सर्वे बोधिसत्त्वचर्याप्रीतिप्रामोद्यकुशलमूलसमवधानगता न भवेयुः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

M 21 ४३ सचेन्मे भगवन् बोधिप्राप्तस्य सहनामधेयश्रवणात्तदन्येषु लोकधातुषु बोधिसत्त्वा न समन्तानुगत नाम समाधिं प्रतिलभेरन्, यत्र स्थित्वा बोधिसत्त्वा एकक्षणव्यतिहारेण अप्रमेयासख्येयाचिन्त्यातुल्यापरिमाणान् बुद्धान् भगवत' सत्कुर्वन्ति, स चैषा समाधिरन्तरा विप्रणश्येद्यावद्बोधिमण्डपर्यन्तम्, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

४४. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुः ते यथारूपां धर्मदेशनामाकाङ्क्षेयु· श्रोतुम्, तथारूपा सहचित्तोत्पादान्न शृणुयुः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिसबुध्येयम् ॥

४५. सचेन्मे भगवन् बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे तदन्येषु बुद्धक्षेत्रेषु ये च बोधिसत्त्वा मम नामधेय शृणुयुः, ते सहनामधेयश्रवणान्नावैवर्तिका भवेयुरनुत्तरायाः सम्यक्सबोधेः, मा तावदहमनुत्तरां सम्यक्संबोधिमभिसबुध्येयम् ॥

४६ सचेन्मे भगवन् बोधिप्राप्तस्य बुद्धशास्तुर्बुद्धक्षेत्रेषु ते बोधिसत्त्वा मम नामधेयं शृणुयुः, ते सहनामधेयश्रवणात्प्रथमद्वितीयतृतीयाः क्षान्तीः प्रतिलभेरन् नावैवर्तिका भवेयुर्बुद्धधर्मसघेभ्यः, मा तावदहमनुत्तरा सम्यक्सबोधिमभिबुध्येयम् ॥ ८ ॥

M 22 अथ खल्वानन्द स धर्माकरो भिक्षुरिमानेवरूपान् प्रणिधानविशेषान्निर्दिश्य तस्या वेलाया बुद्धानुभावेन इमा गाथा अभाषत—

सचि मि [सिय] विशिष्ट नैवरूपा
वरप्रणिधान सिया खु बोधिप्राप्तो।
माह सिय गवेन्द्रसत्त्वसारो
दशबलधारि अतुल्यदक्षिणीयः ॥ ११ ॥

सचि मि सिय न क्षेत्र एवरूप
बहु अध नानप्रभूतदिव्यवित्तम्।
सुखित नरक येय दु'खप्राप्तो
माह सिया रतनान [लोक]राजा ॥ १२ ॥

सचि मि उपगतस्य बोधिमण्ड
दशदिशि प्रव्रजि नामधेयु क्षिप्रम्।
पृथु बहव अनन्त बुद्धक्षेत्रा
माह सिया बलप्राप्तु लोकनाथः ॥ १३ ॥

सचि खु अह्व रमेय कामभोगा
स्मृतिमतिया गतिया विहीनु सन्त. ।
अतुल शिव समेयमान बोधिं M 23
माहु सिया बलप्राप्तु शास्त्र लोके ॥ १४ ॥
विपुलप्रभ अतुल्यनन्त नाथ
दिशि विदिशि स्फुरि सर्वबुद्धक्षेत्रा ।
राग प्रशमि सर्वदोषमोहा
नरकगतिस्मि प्रशामि धूमकेतुम् ॥ १५ ॥
जनिय सुरुचिर विशालनेत्र
विधुनिय सर्वनराण अन्धकारम् ।
अपनिय सु न अक्षणानशेषा
उपनयि स्वर्गगताननन्ततेजां ॥ १६ ॥
न तपति नभ चन्द्रसूर्यआभा
मणिगण अग्निप्रभा न देवतानाम् ।
अभिभवति नरेन्द्र आभ सर्वां
पुरिमचरिं परिशुद्ध आचरित्वा ॥ १७ ॥
पुरुषवरु निधान दुःखिताना
दिशि विदिशासु न अस्ति एवरूपः ।
कुशलशतसहस्रसर्वपूर्ण M 24
पर्षगतो नदि बुद्धसिंहनादम् ॥ १८ ॥
पुरिमजिन स्वयंभु सत्करित्वा
व्रततपकोटि चरित्व अप्रमेयाम् ।
प्रवरवरसमे स्मि ज्ञानस्कन्ध
प्रणिधिबलप्रतिपूर्ण सत्त्वसारो ॥ १९ ॥
यथ भगव असङ्गज्ञानदर्शी
त्रिविध प्रजानति संस्कृते नरेन्द्र' ।
अहमपि सिय तुल्यदक्षिणीयो
विदुप्रवरो नरनायको नराणाम् ॥ २० ॥
सचि मि अयु नरेन्द्र एवरूपा
प्रणिधि समृध्यति बोधि प्रापुणित्वा ।
चलतु अय सहस्रलोकधातु
कुसुमप्रवर्षण भातु देवसंघा ॥ २१ ॥

प्रचलित वसुधा प्रवर्षि पुष्पाः
तूर्यशता गगनेऽथ सप्रणेदुः ।
दिव्यरुचिरचन्दनस्य चूर्णा
अवकिरि चैव भविष्य लोकि बुद्धः ॥ २२ ॥ इति ॥ ९ ॥

M 25 एवरूपया आनन्द प्रणिधानसपदा स धर्माकरो भिक्षुर्बोधिसत्त्वो महासत्त्व.
समन्वागतोऽनूत् । एवरूपया चानन्द प्रणिधानसपदा अल्पका बोधिसत्त्वाः समन्वागता. ।
अल्पकाना चैवरूपाणा प्रणिधीना लोके प्रादुर्भावो भवति परीत्तानाम् । न पुनः सर्वशो
नास्ति । स खलु पुनरानन्द धर्माकरो भिक्षुस्तस्य भगवतो लोकेश्वरराजस्य तथागतस्य
पुरत· सदेवकस्य लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः सदेव-
मानुषासुरायाः पुरत इमानेवरूपान् प्रणिधानविशेषान्निर्दिश्य यथाभूतप्रतिज्ञाप्रतिपत्ति-
प्रतिष्ठितोऽभूत् । स इमामेवरूपा बुद्धक्षेत्रपरिशुद्धिं बुद्धक्षेत्रमाहात्म्य बुद्धक्षेत्रोदारता
समुदानयन् बोधिसत्त्वचर्या चरन् अप्रमेयासख्येयाचिन्त्यातुल्यामाप्यापरिमाणानभिलाप्यानि
वर्षकोटीनियुतशतसहस्राणि न जातु कामव्यापादविहिंसावितर्कान् वितर्कितवान्, न जातु
कामव्यापादविहिंसासज्ञामुत्पादितवान्, न जातु रूपशब्दगन्धरसस्प्रष्टव्यसज्ञामुत्पादितवान्।
स दहरमनोहर एव सुरतोऽभूत्सुखसवासोऽधिवासनजातीयः सुभगः सुपोषोऽल्पेच्छ. सतुष्टः
प्रविविक्तोऽदुष्टोऽमूढोऽशङ्कोऽजिह्मोऽशठोऽमायावी सुखिलोम· प्रियालापो नित्याभियुक्तः शुक्ल-
M 26 धर्मपर्येष्टौ सुनिक्षिप्तधुर. सर्वसत्त्वानामर्थाय महाप्रणिधान समुदानितवान् बुद्धधर्मसघाचार्यो-
पाध्यायकल्याणमित्रसगौरवो नित्यसनद्धो बोधिसत्त्वचर्यायामार्जवो मार्दवोऽकुहकोऽनिलपको
गुणवान् पूर्वंगम. सर्वकुशलधर्मसमादापनतायै शून्यतानिमित्ताप्रणिहितानभिसस्कारानुत्पाद-
विहारैर्निर्मान. स्वारक्षितवाक्यश्चाभूत् । बोधिसत्त्वचर्या चरन् स यद्वाक्कर्मोत्सृष्टमात्मपरोभय-
व्यापादाय सवर्तते, तथाविध त्यक्त्वा यद्वाक्कर्म स्वपरोभयहितसुखसवर्तक तदेवाभिप्रयुक्तवान्।
एव च सप्रजानोऽभूत् यद्ग्रामनगरनिगमजनपदराष्ट्रराजधानीष्ववतरन्न जातु रूपशब्दगन्धरस-
स्प्रष्टव्यधर्मेष्वनुनीतोऽभूदप्रतिहतः। स बोधिसत्त्वचर्याया चरन् स्वय च दानपारमितायामचरत्
पराश्च तत्रैव समादापितवान्, स्वय च शीलक्षान्तिवीर्यध्यानप्रज्ञापारमितास्वचरत्, परांश्च
तत्रैव समादापितवान् । तथारूपाणि च कुशलमूलानि समुदानीतवान्, यै समन्वागतो
यत्रयत्रोपपद्यते, तत्र तत्र अस्यानेकानि निधानकोटीनियुतशतसहस्राणि धरण्याः प्रादुर्भवन्ति।
तेन बोधिसत्त्वचर्या चरता तावदप्रमेयासख्येयानि सत्त्वकोटीनियुतशतसहस्राण्यनुत्तराया
सम्यक्सबोधौ प्रतिष्ठापितानि, येषा न सुकर वाक्कर्मणा पर्यन्तमधिगन्तुम् । तावदप्रमेया-
M 27 सख्येया बुद्धा भगवन्त सत्कृता गुरुकृता मानिता पूजिताश्चीवरपिण्डपात्रशयनासनग्लान-
प्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानस्पर्शविहारै· प्रतिपादिताः । यावन्तः सत्त्वा· श्रेष्ठिगृह-
पत्यमात्यक्षत्रियब्राह्मणमहाशालकुलेषु प्रतिष्ठापिता , तेषा न सुकरो वाक्कर्मनिर्देशेन पर्यन्तो-
ऽधिगन्तुम् । एव जाम्बूद्वीपेश्वराश्च प्रतिष्ठापिताश्चक्रवर्तित्वे लोकपालत्वे शक्रत्वे सुयामत्वे

सुतुषितत्वे सुनिर्मितत्वे सुवशवर्तित्वे देवराजत्वे महाब्रह्मत्वे च प्रतिष्ठापिता। तावदप्रमेयासख्येया बुद्धा भगवन्त' सत्कृता गुरुकृता मानिता' पूजिताश्चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानस्पर्शविहारै. प्रतिपादिता.। यावन्त' सत्त्वाः श्रेष्ठिगृहपत्यमात्यक्षत्रियब्राह्मणमहाशालकुलेषु प्रतिष्ठापिताः, तेषा न सुकरो वाक्कर्मनिर्देशेन पर्यन्तोऽधिगन्तुम्। एव जाम्बूद्वीपेश्वराश्च प्रतिष्ठापिताश्चक्रवर्तित्वे लोकपालत्वे शक्रत्वे सुयामत्वे सुतुषितत्वे सुनिर्मितत्वे वशवर्तित्वे देवराजत्वे महाब्रह्मत्वे च प्रतिष्ठापिताः। तावदप्रमेयासख्येया बुद्धा भगवन्तः सत्कृता गुरुकृता मानिता' पूजिता धर्मचक्रप्रवर्तनार्थं चाधीष्टा', येषा न सुकरो वाक्कर्मनिर्देशेन पर्यन्तोऽधिगन्तुम्। स एवरूप कुशल समुदानयत्, यदस्य बोधिसत्त्वचर्यां चरतोऽप्रमेयासख्येयाचिन्त्यातुल्यामाप्यापरिमाणानभिलाप्यानि कल्पकोटीनियुतशतसहस्राणि सुरभिर्दिव्यातिक्रान्तचन्दनगन्धो मुखात्प्रवाति स्म। सर्वरोमकूपेभ्य उत्पलगन्धो वाति स्म। सर्वलोकाभिरूपश्चाभूत्प्रासादिको दर्शनीय. परमशुभवर्णपुष्कलतया समन्वागत' लक्षणव्यञ्जनसमलकृतेनात्मभावेन। तस्य सर्वरत्नालकारा. सर्ववस्त्रचीवराभिनिर्हाराः सर्वपुष्पधूपगन्धमाल्यविलेपनच्छत्रध्वजपताकाभिनिर्हारा सर्ववाद्यसगीत्यभिनिर्हाराश्च सर्वरोमकूपेभ्य. पाणितलाभ्या च निश्चरन्ति स्म। सर्वान्नपानखाद्यभोज्यलेह्यरसाभिनिर्हारा सर्वोपभोगपरिभोगाभिनिर्हाराश्च पाणितलाभ्या प्रस्यन्दन्त प्रादुर्भवन्ति स्म। इति हि सर्वपरिष्कारवशिताप्राप्तः स आनन्द धर्माकरो भिक्षुरभूत् पूर्वं बोधि- M 28
सत्त्वचर्या चरन्॥ १०॥

एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्—किं पुनर्भगवन् स धर्माकरो भिक्षुर्बोधिसत्त्वो महासत्त्वोऽनुत्तरा सम्यक्सबोधिमभिसबुध्यालीत. परिनिर्वृत', उताहोऽनभिसबुद्ध. अथ प्रत्युत्पन्नोऽभिसबुद्ध एतर्हि तिष्ठति ध्रियते यापयति धर्म च देशयति? भगवानाह—न, खलु पुनरानन्द स तथागतोऽतीतो न अनागत.। अपि त्वेव स तथागतोऽर्हन् सम्यक्सबोधिमभिसबुद्ध एतर्हि तिष्ठति ध्रियते यापयति धर्मं च देशयति पश्चिमाया दिशि इतो कोटीनियुतशतसहस्रतमे च बुद्धक्षेत्रे सुखावत्या लोकधातावमिताभो नाम तथागतोऽर्हन् सम्यक्सबुद्धोऽपरिमाणैर्बोधिसत्त्वैः परिवृतः पुरस्कृतोऽनन्तै. श्रावकैरनन्तया बुद्धक्षेत्रसपदा समन्वागत.॥ ११॥

अमिता चास्य प्रभा यस्य न सुकर प्रमाणपर्यन्तमधिगन्तुम्—इयन्ति बुद्धक्षेत्रशतानि, इयन्ति बुद्धक्षेत्रसहस्राणि, इयन्ति बुद्धक्षेत्रशतसहस्राणि, इयन्ति बुद्धक्षेत्रकोटीनि, इयन्ति बुद्धक्षेत्रकोटीशतानि, इयन्ति बुद्धक्षेत्रकोटीसहस्राणि, इयन्ति बुद्धक्षेत्रकोटीशतसहस्राणि, इयन्ति बुद्धक्षेत्रकोटीनियुतशतसहस्राणि स्फरित्वा तिष्ठतीति। अपि तु खलु पुनरानन्द सक्षिप्तेन पूर्वस्या दिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्रकोटीनियुतशतसहस्राणि तया तस्य M 29
भगवतोऽमिताभस्य प्रभया सदा स्फुटानि। एव दक्षिणपश्चिमोत्तरास्वध ऊर्ध्वं दिग्विदिक्षु च एकैकस्या दिशि समन्ताद्गङ्गानदीवालुकोपमानि यावद्बुद्धक्षेत्रकोटीनियुतशतसहस्राणि

तस्य भगवतोऽमिताभस्य प्रभया सदा परिस्फुटानि स्थापयित्वा बुद्धान् भगवत. पूर्वप्रणिधानाधिष्ठानेन ये व्यामप्रभया एकद्वित्रिचतुःपञ्चदशविंशतित्रिंशच्चत्वारिंशत्पञ्चाशद्योजनप्रभया योजनशतप्रभया योजनसहस्रप्रभया योजनशतसहस्रप्रभया यावदनेकयोजनकोटीनियुतशतसहस्रप्रभया वा लोक स्फरित्वा तिष्ठन्ति । नास्त्यानन्द उपमोपन्यासो येन शक्य तस्यामिताभस्य तथागतस्य प्रभाया' प्रमाणमुद्ग्रहीतुम् । तदनेनानन्द पर्यायेण स तथागतोऽमिताभ इत्युच्यते, अमितप्रभोऽमितप्रभासोऽसमाप्तप्रभोऽसगतप्रभ' प्रभाशिखोत्सृष्टप्रभ' सदिव्यमणिप्रभोऽप्रतिहतरश्मिरागप्रभो राजनीयप्रभ' प्रेमणीयप्रभ प्रमोदनीयप्रभ. सगमनीयप्रभ उपोषणीयप्रभो निबन्धनीयप्रभोऽतिवीर्यप्रभोऽतुल्यप्रभोऽभिभूयनरेन्द्रामून्नयेन्द्रप्रभः(?) M 30 श्रान्तसचयेन्दुसूर्यजिह्मीकरणप्रभोऽभिभूय लोकपालशक्रब्रह्मशुद्धावासमहेश्वरसर्वदेवजिह्मीकरणप्रभ इत्युच्यते । सा च आर्यप्रभा विमला विपुला कायसुखसजननी चित्तौद्बिल्यकरणी देवासुरनागयक्षगन्धर्वगरुडमहोरगकिन्नरमनुष्यामनुष्याणा प्रीतिप्रामोद्यसुखकरणी कुशलाशयाना सत्त्वाना कल्यकुशलमिमिणेवद्विप्रामोद्यकरणी(?) येऽन्येष्वप्यनन्तापर्यन्तेषु बुद्धक्षेत्रेषु । अनेन चानन्द पर्यायेण तथागत परिपूर्ण कल्प भाष्येत् तस्यामिताभस्य तथागतस्य नाम कर्मोपादाय प्रभामारभ्य, न च शक्नोति गुणपर्यन्तमधिगन्तु तस्या. प्रभायाः, तथागतस्य वैशारद्योपच्छेदो भवेत् । तत्कस्य हेतोः ? उभयमप्येतदानन्द अप्रमेयमसख्येयमचिन्त्यापर्यन्त यदिद तस्य भगवतोऽमिताभस्य तथागतस्य प्रभागुणविभूतिः, तथागतस्य चानुत्तर प्रज्ञाप्रतिभानम् ॥ १२ ॥

तस्य खलु पुनरानन्द अमिताभस्य तथागतस्याप्रमेयः श्रावकसघो यस्य न सुकर प्रमाणमुद्ग्रहीतुम्—इयत्य' श्रावककोट्य', इयन्ति श्रावककोटीशतानि, इयन्ति श्रावककोटीM 31 सहस्राणि, इयन्ति श्रावककोटीशतसहस्राणि, इयन्ति कंकराणि, इयन्ति बिम्बराणि, इयन्ति नयुतानि, इयन्त्ययुतानि, इयन्त्यक्षोभ्याणि, इयन्तो विवाहा', इयन्ति स्रोतासि, इयन्ति ओजासि, इयन्त्यप्रमेयाणि, इयन्त्यसख्येयानि, इयन्त्यगण्यानि, इयन्त्यतुल्यानि, इयन्त्यचिन्त्यानीति । तद्यथा आनन्द भिक्षुर्मौद्गल्यायन ऋद्धिवशिताप्राप्त. । स आकाङ्क्षन् त्रिसाहस्रमहासाहस्रलोकधातौ यावन्ति तारारूपाणि तानि सर्वाण्येकरात्रिदिने नगरेण गणयेत्, एवंरूपाणा च ऋद्धिमता कोटीनियुतशतसहस्र भवेत्, ते च वर्षकोटीनियुतशतसहस्रमनन्यकर्मणा अमिताभस्य तथागतस्य प्रथमश्रावकसनिपात गणयेयु. । एभिर्गणयद्भि शततमोऽपि भागो न गणितो भवेत्, सहस्रतमोऽपि शतसहस्रतमोऽपि, यावत्कलामपि उपमामपि उपनिसामपि न गणितो भवेत् । तद्यथा आनन्द महासमुद्राच्चतुरशीतियोजनसहस्राण्यावेधेन तिर्यगप्रमेयात् कश्चिदेव पुरुषः शतधा भिन्नया बालाग्रकोट्या एकमुदकबिन्दुमभ्युत्क्षिपेत्, तत्किं मन्यसे आनन्द कतमोऽत्र बहुतर'—यो वा शतधा भिन्नया बालाग्रकोट्याभ्युत्क्षिप्त एक उदकबिन्दुः, यो वा महासमुद्रेऽप्स्कन्धोऽवशिष्ट इति ? आनन्द आह—योजनसहस्रमपि तावद्भगवन् महासमुद्रस्य परीत्त भवेत् किमङ्ग पुनः शतधा भिन्नया बालाग्र-

कोट्या उत्क्षिप्त एक उदकबिन्दु । भगवानाह—तद्यथा स एकबिन्दुः, इयत्तम. स M 32 प्रथमसंनिपातोऽभूत् । तैर्मौद्गल्यायनसदृशैर्भिक्षुभिर्गणयद्भिस्तेन वर्षकोटीनियुतशतसहस्रेण गणित भवेत्, यथा महासमुद्रेऽप्स्कन्धोऽवशिष्ट । एवमगणित द्रष्टव्यम् । क पुनर्वादो द्वितीयतृतीयादीना श्रावकसनिपातानाम् । एवमनन्तापर्यन्तस्तस्य भगवत श्रावकसघो योऽप्रमेयासख्येय इत्येव सख्या गच्छति ॥ १३ ॥

अपरिमित च आनन्द तस्य भगवतोऽमिताभस्य तथागतस्यायु प्रमाण यस्य न सुकर प्रमाणमधिगन्तुम्, इयन्ति वा कल्पशतानि, इयन्ति वा कल्पसहस्राणि, इयन्ति वा कल्पशतसहस्राणि, इयत्यो वा कल्पकोट्य॰, इयन्ति वा कल्पकोटीशतानि, इयन्ति वा कल्पकोटीसहस्राणि, इयन्ति वा कल्पकोटीशतसहस्राणि, इयन्ति वा कल्पकोटीनियुतशतसहस्राणीति । अथ तर्हि आनन्द अपरिमितमेव तस्य भगवत आयु प्रमाणमपर्यन्तम् । तेन स तथागतोऽमितायुरित्युच्यते । यथा चानन्द इह लोकधातौ कल्पगणनाप्रज्ञप्तिसकेत., तथा साप्रत दश कल्पास्तस्य भगवतोऽमितायुषस्तथागतस्योत्पन्नस्य अनुत्तरा सम्यक्सबोधिमभिसबुद्धस्य ॥ १४ ॥

तस्य खलु पुनरानन्द भगवतोऽमिताभस्य सुखावती नाम लोकधातुरृद्धा च स्फीता च क्षेमा च सुभिक्षा च रमणीया च बहुदेवमनुष्याकीर्णा च । तत्र खल्वानन्द M 33 लोकधातौ न निरयाः सन्ति न तिर्यग्योनिर्न प्रेतविषयो नासुरा. काया नाक्षणोपपत्तय. । न च तानि रत्नानि लोके प्रचरन्ति यानि सुखावत्या लोकधातौ विद्यन्ते ॥ १५ ॥

सा खल्वानन्द सुखावती लोकधातु. सुरभिनानागन्धसमीरिता नानापुष्पफलसमृद्धा रत्नवृक्षसमलकृता तथागताभिनिर्मितमनोज्ञस्वरनानाद्विजसघनिषेविता । ते चानन्द रत्नवृक्षा नानावर्णा अनेकवर्णा अनेकशतसहस्रवर्णा । सन्ति तत्र रत्नवृक्षा. सुवर्णवर्णाः सुवर्णमया. । सन्ति रूप्यवर्णा रूप्यमयाः । सन्ति वैडूर्यवर्णा वैडूर्यमयाः । सन्ति स्फटिकवर्णाः स्फटिकमया । सन्ति मुसारगल्ववर्णा मुसारगल्वमयाः । सन्ति लोहितमुक्तावर्णा लोहितमुक्तामया॰ । सन्त्यश्मगर्भवर्णा अश्मगर्भमयाः । सन्ति केचिद् द्वयो रत्नयोः सुवर्णस्य रूप्यस्य च । सन्ति त्रयाणा रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य च । सन्ति चतुर्णां रत्नाना सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य च । सन्ति पञ्चाना रत्नाना सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य च । सन्ति षण्णा रत्नाना सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहितमुक्तायाश्च । सन्ति सप्ताना रत्नाना सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहितमुक्ताया अश्मगर्भस्य च सप्तमस्य । M 34 तत्रानन्द सुवर्णमयाना वृक्षाणा सुवर्णमयानि मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि रूप्यमयाणि । रूप्यमयाणा वृक्षाणा रूप्यमयान्येव मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि वैडूर्यमयाणि । वैडूर्यमयाणा वृक्षाणां वैडूर्यमयाणि मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि स्फटिकमयानि । स्फटिकमयाना वृक्षाणा स्फटिकमयान्येव मूलस्कन्धविटपशाखा-

पत्रपुष्पाणि, फलानि च मुसारगल्वमयानि । मुसारगल्वमयाना वृक्षाणा मुसारगल्वमयान्येव
मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि च लोहितमुक्तामयानि । लोहितमुक्तामयानां
वृक्षाणा लोहितमुक्तामयान्येव मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि चाश्मगर्भमयाणि ।
अश्मगर्भमयाणा वृक्षाणामश्मगर्भमयाण्येव मूलस्कन्धविटपशाखापत्रपुष्पाणि, फलानि च
सुवर्णमयानि । केषाचिदानन्द वृक्षाणा सुवर्णमयानि मूलानि, रूप्यमयाः स्कन्धाः,
वैडूर्यमया विटपा, स्फटिकमया. शाखाः, मुसारगल्वमयानि पत्राणि, लोहितमुक्तामयानि
M 35 पुष्पाणि, अश्मगर्भमयाणि फलानि । केषाचिदानन्द वृक्षाणा रूप्यमयाणि मूलानि, वैडूर्य-
मयाः स्कन्धा., स्फटिकमया विटपाः, मुसारगल्वमयाः शाखाः, लोहितमुक्तामयानि पत्राणि,
अश्मगर्भमयाणि पुष्पाणि, सुवर्णमयानि फलानि । केषाचिदानन्द वृक्षाणा वैडूर्यमयाणि
मूलानि, स्फटिकमयाः स्कन्धा·, मुसारगल्वमया विटपाः, लोहितमुक्तामया· शाखा.,
अश्मगर्भमयाणि पत्राणि, सुवर्णमयानि पुष्पाणि, रूप्यमयाणि फलानि । केषाचिदानन्द
वृक्षाणा स्फटिकमयानि मूलानि, मुसारगल्वमया· स्कन्धा·, लोहितमुक्तामया विटपाः,
अश्मगर्भमयाः शाखाः, सुवर्णमयानि पत्राणि, रूप्यमयाणि पुष्पाणि, वैडूर्यमयाणि फलानि ।
केषाचिदानन्द वृक्षाणा मुसारगल्वमयानि मूलानि, लोहितमुक्तामया· स्कन्धाः, अश्मगर्भ-
मया विटपा., सुवर्णमयाः शाखाः, रूप्यमयाणि पत्राणि, वैडूर्यमयाणि पुष्पाणि, स्फटिक-
मयानि फलानि । केषाचिदानन्द वृक्षाणा लोहितमुक्तामयानि मूलानि, अश्मगर्भमयाः
स्कन्धाः, सुवर्णमया विटपाः, रूप्यमयाः शाखाः, वैडूर्यमयाणि पत्राणि, स्फटिकमयानि
पुष्पाणि, मुसारगल्वमयानि फलानि । केषाचिदानन्द वृक्षाणामश्मगर्भमयानि मूलानि,
सुवर्णमयाः स्कन्धाः, रूप्यमया विटपाः, वैडूर्यमया. शाखाः, स्फटिकमयानि पत्राणि, मुसार-
गल्वमयानि पुष्पाणि, लोहितमुक्तामयानि फलानि । केषाचिदानन्द वृक्षाणा सप्तरत्नमयानि
मूलानि, सप्तरत्नमयाः स्कन्धाः, सप्तरत्नमया विटपा·, सप्तरत्नमयाः शाखाः, सप्तरत्नमयानि
पत्राणि, सप्तरत्नमयानि पुष्पाणि, सप्तरत्नमयानि फलानि । सर्वेषा चानन्द तेषा वृक्षाणा
M 36 मूलस्कन्धविटपशाखापत्रपुष्पफलानि सुखसस्पर्शानि सुगन्धीनि । वातेन प्रेरितेन च तेषा
वल्गुमनोज्ञघोषो निश्चरत्यसेचनकोऽप्रतिकूल. श्रवणाय । एवरूपैरानन्द सप्तरत्नमयैर्वृक्षै·
सतत तद्बुद्धक्षेत्र समन्ताच्च कदलीस्कन्धैः सप्तरत्नमयै रत्नतालपङ्क्तिभिश्चानुपरिक्षिप्त सर्वतश्च
हेमजालप्रतिच्छन्न समन्ततश्च सर्वरत्नमयैः पद्मै· संछन्नम् । सन्ति तत्र पद्मान्यर्धयोजनप्रमा-
णानि, सन्ति योजनप्रमाणानि, सन्ति द्वित्रिचतुःपञ्चयोजनप्रमाणानि, सन्ति यावद्दश-
योजनप्रमाणानि । सर्वतश्च रत्नपद्मात्षट्त्रिंशद्रश्मिकोटीशतसहस्राणि निश्चरन्ति । सर्वतश्च
रश्मिमुखात्षट्त्रिंशद्बुद्धकोटीशतसहस्राणि निश्चरन्ति सुवर्णमयवर्णै कायैर्द्वात्रिंशन्महापुरुष-
लक्षणधरैः, यानि पूर्वस्या दिश्यप्रमेयासख्येयासु लोकधातुषु गत्वा सत्त्वेभ्यो धर्म देशयन्ति ।
एव दक्षिणपश्चिमोत्तरासु दिक्षु अध ऊर्ध्वमनुविदिक्षु गतावरणे लोकेऽप्रमेयासंख्येयॉल्लोक-
धातून् गतिं गत्वा सत्त्वेभ्यो धर्मं देशयन्ति ॥ १६ ॥

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे सर्वशः कालपर्वता न सन्ति सर्वतो रत्नपर्वताः
सर्वशः सुमेरवः पर्वतराजाः सर्वशश्चक्रवाला महाचक्रवालाः पर्वतराजाः । समन्ताच्च तद्बुद्ध-
क्षेत्र सम रमणीय पाणितलजात नानाविधरत्नमणिचितभूमिभागम् । एवमुक्ते आयुष्मा- M 37
नानन्दो भगवन्तमेतदवोचत्—ये च पुनस्ते भगवश्चातुर्महाराजकायिका देवा सुमेरुपार्श्व-
निवासिनस्त्रायस्त्रिंशा वा सुमेरुमूर्ध्नि निवासिनः, ते कुत्र प्रतिष्ठिताः ? भगवानाह—तत्किं
मन्यसे आनन्द ये ते इह सुमेरोः पर्वतराजस्योपरि यामा देवास्तुषिता वा निर्माणरतयो
वा परनिर्मितवशवर्तिनो वा ब्रह्मकायिका वा ब्रह्मपुरोहिता वा महाब्रह्माणो वा यावदकनिष्ठा
वा, कुत्र ते प्रतिष्ठिता इति । आनन्द आह—अचिन्त्यो भगवन् कर्मणा विपाकः कर्माभि-
सस्कारः । भगवानाह—लब्धस्त्वयानन्द इहाचिन्त्यः कर्मणा विपाकः कर्माभिसस्कारो न
बुद्धाना भगवतामचिन्त्य बुद्धाधिष्ठान कृतपुण्याना च सत्त्वानामवरोपितकुशलमूलानाम् ।
तवाचिन्त्या पुण्या विभूतिः । आनन्द आह—न मेऽत्र भगवन् काचित्काङ्क्षा वा विमतिर्वा
विचिकित्सा वा । अपि तु खल्वहमनागताना सत्त्वाना काङ्क्षाविमतिविचिकित्सानिर्घाताय
तथागतमेतदर्थं परिपृच्छामि । भगवानाह—साधु साध्वानन्द, एव ते करणीयम् ॥ १७ ॥

तस्या खल्वानन्द सुखावत्या लोकधातौ नानाप्रकारा नद्यः प्रचरन्ति । सन्ति तत्र
महानद्यो योजनविस्ताराः । सन्ति यावद्विंशतित्रिंशच्चत्वारिंशत्पञ्चाशद्योजनविस्तारा याव-
द्द्वादशयोजनावेधाः । सर्वाश्च ता नद्यः सुखवाहिन्यो नानासुरभिगन्धवारिवाहिन्यो नानारत्न-
लुलितपुष्पसघातवाहिन्यो नानामधुरस्वरनिर्घोषाः । तासा चानन्द कोटीशतसहस्राङ्गसप्र- M 38
युक्तस्य दिव्यसगीतिसमूर्छितस्य तूर्यस्य कुशलैः सप्रवादितस्य तावन्मनोज्ञघोषो निश्चरति
यथारूपस्तासा महानदीना निर्घोषो निश्चरति गम्भीरोऽज्ञेयोऽविज्ञेयोऽनेल कर्णसुखो
हृदयगमः प्रेमणीयो वल्गुर्मनोज्ञोऽसेचनकोऽप्रतिकूलः श्रवणाय, अनित्य शान्तमनात्मेति
सुखश्रवणीयो यस्तेषा सत्त्वाना श्रोत्रेन्द्रियाभासमागच्छति । तासा खलु पुनरानन्द महा-
नदीनामुभयतस्तीराणि नानागन्धरत्नवृक्षैः सततानि, येभ्यो नानाशाखापत्रपुष्पमञ्जर्योऽव-
लम्बन्ते । तत्र ये सत्त्वास्तेषु नदीतीरेष्वाकाङ्क्षन्ति दिव्याभिरामरमणीयां रतिक्रीडा चानु-
भवितुम्, तेषा तत्र नदीष्ववतीर्णानामाकाङ्क्षता गुल्फमात्र वारि सतिष्ठते । आकाङ्क्षता
जानुमात्र कटिमात्र कक्षमात्रम्, आकाङ्क्षता कर्णमात्र वारि सतिष्ठते, दिव्याश्च रतयः
प्रादुर्भवन्ति । तत्र ये सत्त्वा आकाङ्क्षन्ति शीत वारि भवत्विति, तेषा शीत वारि भवति ।
य आकाङ्क्षन्त्युष्ण भवत्विति, तेषामुष्ण भवति । य आकाङ्क्षन्ति शीतोष्ण भवत्विति, तेषा
शीतोष्णमेव तद्वारि भवत्यनुसुखम् । ताश्च महानद्यो दिव्यतमालपत्रागरुकालानुसारि-
तगरोरगसारचन्दनवरगन्धवासितवारिपरिपूर्णा प्रवहन्ति दिव्योत्पलपद्मकुमुदपुण्डरीक- M 39
सौगन्धिकादिपुष्पसछन्ना हससारसक्रौञ्चचक्रवाककारण्डवशुकशारिककोकिलकुणालकल-
विङ्कमयूरादिमनोज्ञस्वरास्तथागताभिनिर्मितपक्षिसघनिषेवितपुलिना धार्तराष्ट्रोपशोभिताः
सूपतीर्था विकर्दमाः सुवर्णवालुकासकीर्णाः । तत्र यदा ते सत्त्वा आकाङ्क्षन्ति कीदृशा

अस्माकमभिप्रायाः परिपूर्यन्तामिति, तदा तेषा तादृशा एवाभिप्राया परिपूर्यन्ते। यश्चासावानन्द तस्य वारिणो निर्घोष स मनोज्ञो निश्चरति, येन सर्वावत्तद्बुद्धक्षेत्रमभिज्ञाप्यते। ये च सत्त्वा नदीतीरेषु स्थिता आकाङ्क्षन्ति मा अस्माकमय शब्द. श्रोत्रेन्द्रियावभासमागच्छत्विति, तेषा न दिव्यस्यापि श्रोत्रेन्द्रियस्यावभासमागच्छति। यश्च यथारूप शब्दमाकाङ्क्षति श्रोतुम्, स तथारूपमेव मनोज्ञ शब्द शृणोति। तद्यथा—बुद्धशब्द धर्मशब्द M 40 संघशब्द पारमिताशब्द भूमिशब्द बलशब्द वैशारद्यशब्दमावेणिकबुद्धधर्मशब्द प्रतिसविच्छब्द शून्यतानिमित्ताप्रणिहितानभिसस्काराजातानुत्पादाभावनिरोधशब्द शान्तप्रशान्तोपशान्त महामैत्रीमहाकरुणामहामुदितामहोपेक्षाशब्दमनुत्पत्तिकधर्मक्षान्त्यभिषेकभूमिप्रतिलम्भशब्दम्। श्रुत्वा उदारप्रीतिप्रामोद्य प्रतिलभते विवेकसहगत विरागसहगत शान्तसहगत निरोधसहगत धर्मसहगत बोधिपरिनिष्पत्तिकुशलमूलसहगत च। सर्वशश्चानन्द सुखावत्या लोकधातावकुशलशब्दो नास्ति, सर्वशो नीवरणशब्दो नास्ति, सर्वशोऽपायदुर्गतिविनिपातशब्दो नास्ति, सर्वशो दु खशब्दो नास्ति। अदु'खासुखवेदनाशब्दोऽपि तावदानन्द तत्र नास्ति, कुतः पुनर्दुःखशब्दो भविष्यति? तदनेन आनन्द पर्यायेण सा लोकधातुः सुखावतीत्युच्यते सक्षिप्तेन, न पुनर्विस्तरेण। कल्पोऽप्यानन्द परिक्षिय गच्छेत्सुखावत्या लोकधातो. सुखकारणेषु परिकीर्त्यमानेषु, न त्वेव शक्य तेषां सुखकारणाना पर्यन्तमधिगन्तुम्॥ १८॥

तस्या खलु पुनरानन्द सुखावत्या लोकधातौ ये सत्त्वाः प्रत्याजाताः प्रत्याजनिष्यन्ते, सर्वे ते एवरूपेण वर्णेन बलेन स्थाम्ना आरोहपरिणाहेन आधिपत्येन पुण्यसचयेन अतिष्ण-M 41 भिर्वस्त्राभरणोद्यानविमानकूटागारपरिभोगैरेवरूपशब्दगन्धरसस्पर्शपरिभोगैः एवरूपैश्च सर्वैरपि भोगपरिभोगैः समन्वागताः, तद्यथापि नाम देवाः परनिर्मितवशवर्तिन। न खलु पुनरानन्द सुखावत्या लोकधातौ सत्त्वा औदारिकयूषफाणिताकाराहारमाहरन्ति। अपि तु खलु पुनर्यथारूपमेवाहारमाकाङ्क्षन्ति, तथारूपमाहृतमेव सजानन्ति, प्रीणितकायाश्च भवन्ति प्रीणितमानाः। न तेषा भूयः काये प्रक्षेपः करणीयः। ते प्रीणितकायास्तथारूपाणि गन्धजातान्याकाङ्क्षन्ति—ईदृशैरेव गन्धजातैर्दिव्यैस्तद्बुद्धक्षेत्र सर्वमेव निर्धूपित भवति। तत्र यस्त गन्धमाघ्रातुकामो भवति, तस्य सर्वशो गन्धवराज्ञो वासना न समुदाचरति। एव ये यथारूपाणि गन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकातूर्याण्याकाङ्क्षन्ति, तेषा तथारूपैश्च तैः सर्वं तद्बुद्धक्षेत्र परिस्फुट भवति। चीवराण्याकाङ्क्षन्ति नानावर्णान्यनेकशतसहस्रवर्णानि, तेषा तादृशैरेव चीवररत्नै. सर्व तद्बुद्धक्षेत्र परिस्फुट भवति, प्रावृतमेव चात्मान सजानन्ति। ते यथारूपाण्याभरणान्याकाङ्क्षन्ति, तद्यथा—शीर्षाभरणानि वा कर्णाभरणानि वा ग्रीवाभरणानि वा हस्तपादाभरणानि वा यदिद मुकुटानि कुण्डलानि कटककेयूराणि वत्सहारा M 42 रुचकहारा कर्णिका मुद्रिका. स्वर्णसूत्राणि मेखला. स्वर्णसूत्राणि जालानि मुक्ताजालानि सर्वरत्नजालानि स्वर्णरत्नकिङ्किणीजालानि, तथारूपैराभरणैरनेकरत्नशतसहस्रप्रत्युप्तै. स्फुट

तद्बुद्धक्षेत्र पश्यन्ति यदिदमाभरणवृक्षावसक्तैः। तैश्चाभरणैरलङ्कृतमात्मान संजानन्ति। ते यादृश विमानमाकाङ्क्षन्ति यद्वर्णलिङ्गसस्थान यावदारोहपरिणाह नानारत्नमयनिर्यूहशत-सहस्रसमलङ्कृत नानादिव्यपुष्पसस्तीर्ण चित्रोपधानविन्यस्तपर्यङ्कम्, तादृशमेव विमान तेषा पुरत' प्रादुर्भवति। तेषु मनोनिर्वृत्तेषु विमानेषु सप्तसप्ताप्सरसहस्रपरिवृता. पुरस्कृता विहरन्ति क्रीडन्ति रमन्ते परिचारयन्ति ॥ १९ ॥

न च तत्र लोकधातौ देवाना वा मनुष्याणा वा नानात्वमस्ति अन्यत्र सवृतिव्यव-हारेण देवमनुष्याविति सख्या गच्छन्ति। तद्यथा आनन्द राज्ञश्चक्रवर्तिन पुरतो मनुष्य-हीनो मनुष्यप्रेतको न भासते न तपते न विरोचते, न च भवति विशारदो न प्रभास्वर., एवमेव देवाना परनिर्मितवशवर्तिना पुरत' शक्रो देवानामिन्द्रो न भासते न तपते न विरोचते यदिदमुद्यानविमानवस्त्राभरणैराधिपत्येन ऋद्ध्या वा प्रातिहार्येण वा ऐश्वर्येण वा आनन्द, स खलु धर्माभिसमयेन धर्मपरिभोगेण वा। तत्र आनन्द यथा देवा. परि-निर्मितवशवर्तिन., एव सुखावत्या लोकधातौ मनुष्या द्रष्टव्याः ॥ २० ॥

तस्या खलु पुनरानन्द सुखावत्या लोकधातौ पूर्वाह्णकालसमये प्रत्युपस्थिते समन्ताच्चतु- M 43
र्दिशमाकुला समाकुला वायवो वान्ति। तेषा रत्नवृक्षाणा चित्रान् दर्शनीयान् नानावर्णा-ननेकवृन्तान् नानासुरभिदिव्यगन्धपरिवासितान् क्षोभयन्ति सक्षोभयन्ति ईरयन्ति समीरयन्ति यतो बहूनि पुष्पशतानि तस्या रत्नमय्या महापृथिव्या प्रपतन्ति मनोज्ञगन्धानि दर्शनीयानि। तैश्च पुष्पैस्तद्बुद्धक्षेत्र समन्तात्सप्तपौरुष सस्कृतरूप भवति। तद्यथापि नाम पुरुषः कुशलः पृथिव्या पुष्पसस्तर सस्तृणुयात्, उभाभ्या पाणिभ्या सम रचयेत्सुचित्र दर्शनीयम्, एवमेव तद्बुद्धक्षेत्र तै' पुष्पैर्नानागन्धवर्णै. समन्तात्सप्तपौरुष स्फुटं भवति। तानि च पुष्पजातानि मृदूनि काचिलिन्दिकसुखसस्पर्शानि औपम्यमात्रेण, यानि निक्षिप्ते पादे चतुरङ्गुलमवनमन्ति, उत्क्षिप्ते पादे चतुरङ्गुलमेवोन्नमन्ति। निर्गते पुनः पूर्वाह्णकालसमये तानि पुष्पाणि निरव-शेषमन्तर्धीयन्ते। अथ तद्बुद्धक्षेत्र विविक्त रम्य शुभ भवत्यपरिक्लिष्टै' पूर्वपुष्पै'। ततः पुनरपि समन्ताच्चतुर्दिश वायवो वान्ति, ये पूर्ववदभिनवानि पुष्पाण्यभिप्रकिरन्ति। यथा पूर्वाह्णे, एव मध्याह्नकालसमये सध्यायां रात्र्या प्रथमे यामे मध्यमे यामे पश्चिमे यामे। तैश्च वातैर्वायद्भिर्नानागन्धपरिवासितैस्ते सत्त्वा स्पृष्टाः सन्त एव सुखसमर्पिता भवन्ति तद्यथापि M 44
नाम निरोधसमापन्नो भिक्षुः ॥ २१ ॥

तस्मिंश्चानन्द बुद्धक्षेत्रे सर्वशोऽग्निसूर्यचन्द्रग्रहनक्षत्रतारारूपाणा तमोन्धकारस्य नामधेयप्रज्ञप्तिरपि नास्ति। सर्वशो रात्रिंदिव प्रज्ञप्तिरपि नास्ति अन्यत्र तथागतव्यवहारात्, सर्वशश्चारामपरिग्रहसज्ञा नास्ति ॥ २२ ॥

तस्या खलु पुनरानन्द सुखावत्या लोकधातौ काले दिव्यगन्धोदकमेघा अभिप्रवर्ष-यन्ति दिव्यानि सर्ववर्णिकानि कुसुमानि, दिव्यानि सप्तरत्नानि, दिव्य चन्दनचूर्णम्, दिव्याश्छत्रध्वजपताका अभिप्रवर्षयन्ति। दिव्यानि सर्ववर्णिकानि कुसुमानि, दिव्यानि

वितानानि ध्रियन्ते, दिव्यानि च्छत्ररत्नानि सर्वाभरणान्याकाशे ध्रियन्ते, दिव्यानि वाद्यानि प्रवाद्यन्ते, दिव्याश्चाप्सरसो नृत्यन्ति ॥ २३ ॥

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे ये सत्त्वा उपपन्ना उत्पद्यन्ते उत्पत्स्यन्ते, सर्वे ते नियताः सम्यक्त्वे यावन्निर्वाणम् । तत्कस्य हेतोः? नास्ति तत्र द्वयो राश्योर्व्यवस्थान प्रज्ञप्तिर्वा यदिदमनियतस्य वा मिथ्यात्वनियतस्य वा । तदनेनाप्यानन्द पर्यायेण सा लोकधातुः सुखावतीत्युच्यते सक्षिप्तेन, न पुनर्विस्तरेण । कल्पोऽप्यानन्द परिक्षीयेत सुखावत्यां M 45 लोकधातौ सुखकारणेषु परिकीर्त्यमानेषु, न च तेषा सुखकारणाना शक्य पर्यन्तमधिगन्तुम् ॥ २४ ॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत—

सर्वेऽपि सत्त्वाः सुखिता भवेयु-
र्विशुद्धज्ञाना. परमार्थकोविदाः ।
ते कल्पकोटीमथ वापि चोत्तरिं
सुखावतीवर्ण प्रकाशयेयु. ॥ २३ ॥
क्षये कल्पकोटी वज्रे सुराश्च
सुखावतीये न च वर्णसारुः ।
क्षय न गच्छेत्प्रतिभा च तेषा
प्रकाशयन्तान तु वर्ण नाना ॥ २४ ॥
ये लोकधातू परमाणुसादृशा-
श्छिद्येय भिद्येय रजश्च कुर्यात् ।
M 46 अतो बहू उत्तरि लोकधातु
पूरेत दान रतनाहि दद्यात् ॥ २५ ॥
नैता कलापि उपमापि तस्य
पुण्यस्य भोन्ती पृथुलोकधातव. ।
ये लोकधातूय सुखावतीये
श्रुत्वैव नाम भवतीह पुण्यम् ॥ २६ ॥
ततो बहू पुण्य भवेत तेषा
ये श्रद्धते जिनवचन सप्रज्ञाः ।
श्रद्धा हि मूल जगतस्य प्राप्तये
तस्माद्धि श्रुत्वा विचिर्ति विनोदयेत् ॥ २७ ॥ इति ॥

एवमप्रमेयगुणवर्णा आनन्द सुखावती लोकधातुः ॥ २५ ॥

तस्य खलु पुनरानन्द भगवतोऽमिताभस्य तथागतस्य दशसु दिक्षु एकैकस्या दिशि गङ्गानदीवालुकासमेषु बुद्धक्षेत्रेषु गङ्गानदीवालुकासमा बुद्धा भगवन्तो नामधेय

परिकीर्तयन्ते, वर्णं भाषन्ते, यशः प्रकाशयन्ति, गुणमुदीरयन्ति । तत्कस्य हेतोः ? ये M 47 केचित्सत्त्वास्तस्य भगवतोऽमिताभस्य नामधेय शृण्वन्ति, श्रुत्वा चान्तश एकचित्तोत्पादमप्यध्याशयेन प्रसादसहगतेन चित्तमुत्पादयन्ति, ते सर्वेऽवैवर्तिकताया सन्त्यनुत्तराया सम्यक्सबोधे. ॥ २६ ॥

ये चानन्द केचित्सत्त्वास्त तथागत पुनः सत्कारमनसिकरिष्यन्ति, बहुपरिमित कुशलमूलमवरोपयिष्यन्ति बोधये चित्त परिणाम्य, तत्र च लोकधातावुपपत्तये प्रणिधास्यन्ति, तेषा सोऽमिताभस्तथागतोऽर्हन् सम्यक्सबुद्धो मरणकालसमये प्रत्युपस्थितेऽनेकभिक्षुगणपरिवृतः पुरस्कृत स्थास्यति । ततस्ते त भगवन्त दृष्ट्वा प्रसन्नचित्ताश्च्युताः सन्तस्तत्रैव सुखावत्या लोकधातावुपपत्स्यन्ते । यश्च आनन्द आकाङ्क्षेत कुलपुत्रो वा कुलदुहिता वा किमित्यह दृष्ट एव धर्मे तममिताभ तथागत पश्येयमिति, तेनानुत्तराया सम्यक्सबोधौ चित्तमुत्पाद्य अध्याशयातिशयतया सतत्या तस्मिन् बुद्धक्षेत्रे चित्त सप्रेष्य उपपत्तये कुशलमूलानि च परिणामयितव्यानि ॥ २७ ॥

ये पुनस्त तथागत न भूयो मनसिकरिष्यन्ति, न च बहुपरिमित कुशलमूलमभीक्ष्णमवरोपयिष्यन्ति, तेषा तादृशेनैव सोऽमिताभस्तथागतोऽर्हन् सम्यक्सबुद्धो वर्णसस्थानारोहपरिणाहेन भिक्षुसघपरिवारेण च तादृश एव बुद्धिनिर्मितो मरणकालसमये पुरतः M 48 स्थास्यति । ते तेनैव तथागतदर्शनप्रसादालम्बनेन समाधिना अप्रमुषितया स्मृत्या च्युतास्तत्रैव बुद्धक्षेत्रे प्रत्याजनिष्यन्ति ॥ २८ ॥

ये पुनरानन्द सत्त्वास्त तथागत दशचित्तोत्पादात्समनुस्मरिष्यन्ति, स्पृहा च तस्मिन् बुद्धक्षेत्र उत्पादयिष्यन्ति, गम्भीरेषु च धर्मेषु भाष्यमाणेषु तुष्टिं प्रतिलप्स्यन्ते, न विपत्स्यन्ते, न विषादमापत्स्यन्ते, न ससदनमापत्स्यन्ते, अन्तश एकचित्तोत्पादेनापि त तथागत मनसिकरिष्यन्ति, स्पृहा चोत्पादयिष्यन्ति तस्मिन् बुद्धक्षेत्रे, तेऽपि स्वप्नान्तरगता अमिताभ तथागत द्रक्ष्यन्ति, सुखावत्या लोकधातावुपपत्स्यन्ते, अवैवर्तिकाश्च भविष्यन्त्यनुत्तरायाः सम्यक्सबोधेः ॥ २९ ॥

इम खल्वानन्द अर्थवश सपश्य तथागता दशसु दिक्षु अप्रमेयासख्येयासु लोकधातुषु तस्यामिताभस्य तथागतस्य नामधेय परिकीर्तयन्तो वर्ण घोषयन्तः सप्रशसामभ्युदीरयन्ति । तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे दशभ्यो दिग्भ्य एकैकस्या दिशि गङ्गानदीवालुकासमा बोधिसत्त्वास्तममिताभ तथागतमुपसक्रमन्ति दर्शनाय वन्दनाय पर्युपासनाय परिप्रश्नीकरणाय, त च बोधिसत्त्वगण ताश्च बुद्धक्षेत्रगुणालंकारव्यूहसपद्विशेषान् द्रष्टुम् ॥ ३० ॥

अथ खलु भगवास्तस्या वेलायामिममेवार्थं भूयस्या मात्रया परिदीपयन्निमा गाथा M 49 अभाषत—

यथैव गङ्गानदीवालिकासमा
बुद्धान क्षेत्रा अमितायुनायकम् ॥ २८ ॥

बहुपुष्पपूटी गृहीत्व ते
नानावर्णं सुरभी मनोरमां ।
ओकिरन्ति नरनायकोत्तम
अमितायु नरदेवपूजितम् ॥ २९ ॥
तथ दक्षिणपश्चिमोत्तरासु
बुद्धान क्षेत्रा दशतासु यात्तकाः ।
यतो यतो आगमि बुद्ध वन्दितु
सबोधिसत्त्वा अमितायुनायकम् ॥ ३० ॥
M 50 बहुगन्धपूटी गृहीत्वा
नानावर्ण सुरभी मनोरमा ।
ओकिरन्ति नरनायकोत्तम
अमितायु नरदेवपूजितम् ॥ ३१ ॥
पूजित्व वा ते बहुबोधिसत्त्वा
वन्दित्व पादाममितप्रभस्य ।
प्रदक्षिणीकृत्य वदन्ति चैव
अहोऽद्भुत शोभति बुद्धक्षेत्रम् ॥ ३२ ॥
ते पुष्पपूटीहि पुनोकिरन्ति
उदग्रचित्ता अतुलाय प्रीतिये ।
काम प्रभापन्ति पुरस्त नायके
अस्मापि क्षेत्र सिय एवरूपम् ॥ ३३ ॥
ये पुष्पपूटा इति क्षिप्त तत्र
छत्रतया सस्थिहि योजनाशतम् ।
स्वलंकृत शोभति चित्ररवतो
छादन्ते बुद्धस्य समन्त कायम् ॥ ३४ ॥
ते बोधिसत्त्वा तथ सत्करित्वा
कथ करोन्ती इति तुष्ट तत्र ।
M 51 सुलब्ध लाभा खलु तेहि सत्त्वैः
येही श्रुत नाम नरोत्तमस्य ॥ ३५ ॥
अस्मेहि पी लाभ सुलब्धपूर्वा
यदा गतास्य इम बुद्धक्षेत्रम् ।
पश्याथ स्वप्नोपम मैत्र कीदृश
यत्कल्पित कल्पसहस्र शास्तुः ॥ ३६ ॥

पश्याथ बुद्धा वर पुण्यराशिः
परिवृतो शोभति बोधिसत्त्वैः ।
अमिताभस्य आभा अमिता च तेजा
अमित च आयूरमितश्च सघ ॥ ३७ ॥
स्मित करोती अमितायुनाथः
षट्त्रिंशकोटीनयुतान अर्चिषाम् ।
ये निश्चरित्वा मुखमण्डलात
स्फुरन्ति क्षेत्राणि सहस्रकोटी ॥ ३८ ॥
ताः सर्वसूरी. पुनरेत्य तत्र
मूर्धे च अस्त गमि नायकस्य ।
देवा मनुष्या जनयन्ति प्रीतिं M 52
अर्चिस्तदा अस्यमिदा विदित्वा ॥ ३९ ॥
उत्तिष्ठते बुद्धसुतो महायशा
नाथ सो हि अवलोकितेश्वरः ।
को हेतुरत्र भगव कः प्रत्ययो
येन स्मितं कुर्वसि लोकनाथ ॥ ४० ॥
त व्याकरोही यत्र सोऽर्थकोविदो
हितानुकम्पी बहुसत्त्वमोचकः ।
श्रुत्वेति वाच परमा मनोरमा
उदग्रचित्ता भविष्यन्ति सत्त्वाः ॥ ४१ ॥
ये बोधिसत्त्वा बहुलोकधातुतः
सुखावती प्रस्थित बुद्ध पश्यतां ।
ते श्रुत्वा प्रीतिं विपुला जनेत्वा
क्षिप्रमिम क्षेत्र विलोकयेयुः ॥ ४२ ॥
आगत्य च क्षेत्रमिद उदारं
ऋद्धीबलं प्रापुणि क्षिप्रमेव ।
दिव्य च चक्षुस्तथ श्रोत्र दिव्य
जातिस्मराः पारमिकोविदाश्च ॥ ४३ ॥
अमितायु बुद्धस्तद व्याकरोति M 53
मम ह्यय प्रणिधि बभूव पूर्वम् ।
कथ पि सत्त्वा श्रुणियानि नाम
व्रजेयु क्षेत्र मम नित्यमेव ॥ ४४ ॥

स मे अय प्रणिधि प्रपूर्ण शोभना
सत्त्वाश्च एभि बहुलोकधातुतः।
आगत्य क्षिप्र मम अन्तिकस्मिं
अवैवर्तिका भोन्तिह एकजातिया ॥ ४५ ॥

तस्माद्य इच्छतिह बोधिसत्त्व
ममापि क्षेत्र सिय एवरूपम्।
अह पि सत्त्वान् बहु मोचयेय
नामेन घोषेण थ दर्शनेन ॥ ४६ ॥

स शीघ्रशीघ्र त्वरमाणरूप
सुखावती गच्छतु लोकधातुम्।
गत्वा च पूर्वममितप्रभस्य
पूजेतु बुद्धान सहस्रकोटी. ॥ ४७ ॥

बुद्धान कोटी बहु पूजयित्वा
ऋद्धीबलेन बहु क्षेत्र गत्वा।
M 54 कृत्वान पूजा सुगतान सन्तिके
भक्त्या गमिष्यन्ति सुखावतीतः ॥ ४८ ॥ इति ॥ ३१ ॥

तस्य खलु पुनरानन्द अमितायुषस्तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिवृक्षः। स दश योजनशतान्युच्चैस्त्वेन, अष्टौ योजनशतान्यभिप्रलम्बितशाखापत्रपलाशः पञ्चयोजनशतमूलारोहपरिणाहः सदापत्रः सदापुष्पः सदाफलो नानावर्णोऽनेकशतसहस्रवर्णो नानापत्रो नानापुष्पो नानाफलो नानाविचित्रभूषणसमलङ्कृतश्चन्द्रभासमणिरत्नपरिस्फुटः शक्राभिलग्नमणिरत्नविचित्रितश्चिन्तामणिरत्नाकीर्णः सागरवरमणिरत्नसुविचित्रितो दिव्यसमतिक्रान्त. स्वर्णसूत्राभिप्रलम्बितो रुचकहाररत्नहारवत्सहारकटकहारलोहितमुक्ताहारनीलमुक्ताहारसिंहलतामेखलाकलापरत्नसूत्रसर्वरत्नवस्तुशताभिविचित्रित. स्वर्णजालमुक्ताजालसर्वरत्नजालकिङ्किणीजालततो मकरस्वस्तिकनन्द्यावर्तचन्द्रसमलङ्कृतः किङ्किणीमणिजालसौवर्णसर्वरत्नालङ्कारविभूषितो यथाशयसत्त्वविज्ञप्तिसमलङ्कृतश्च। तस्य खलु पुनरानन्द बोधिवृक्षस्य वातसमीरितस्य यः शब्दो घोषो निश्चरति सोऽपरिमाणाँल्लोकधातून् विज्ञापयति। तत्रानन्द येषा सत्त्वाना स बोधिवृक्षः श्रोत्रावभासमागच्छति, तेषा श्रोत्ररोगो न प्रतिकाङ्क्षितव्यो यावद्बोधिपर्यन्तम्। येषामप्रमेयासख्येयाचिन्त्यातुल्यामाप्यापरिमाणानभिलाप्याना सत्त्वाना स बोधिवृक्षश्चक्षुप आभासमागच्छति, तेषां चक्षूरोगो न प्रतिकाङ्क्षितव्यो यावद्बोधिपर्यन्तम्।
M 55 ये खलु पुनरानन्द सत्त्वास्ततो बोधिवृक्षाद्गन्ध जिघ्रन्ति, तेषा यावद्बोधिपर्यन्त न जातु घ्राणरोगः प्रतिकाङ्क्षितव्यः। ये सत्त्वास्ततो बोधिवृक्षात्फलान्यास्वादयन्ति, तेषा यावद्बोधिपर्यन्त न जातु जिह्वारोगः प्रतिकाङ्क्षितव्यः। ये सत्त्वास्तस्य बोधिवृक्षस्याभया स्फुटा

भवन्ति, तेषां यावद्बोधिपर्यन्तं न जातु कायरोगः प्रतिकाङ्क्षितव्यः। ये च खलु पुनरानन्द सत्त्वास्तं बोधिवृक्षं धर्मतो निध्यायन्ति, तेषां तत उपादाय यावद्बोधिपर्यन्त न जातु चित्तविक्षेपः प्रतिकाङ्क्षितव्यः। सर्वे च ते सत्त्वाः सहदर्शनात्तस्य बोधिवृक्षस्यावैवर्तिकाः सतिष्ठन्ते यदुतानुत्तरायाः सम्यक्सबोधेः। तिस्रश्च क्षान्तीः प्रतिलभन्ते यदिद घोषानुगामनुलोमिकीमनुत्पत्तिकधर्मक्षान्तिं च तस्यैवामितायुषस्तथागतस्य पूर्वप्रणिधानाधिष्ठानेन पूर्वजिनकृताधिकारतया पूर्वप्रणिधानपरिचर्यया च सुसमाप्यया सुभावितयानूनाविकलतया ॥३२॥

तत्रैव खलु पुनरानन्द ये बोधिसत्त्वाः प्रत्याजाताः प्रत्याजायन्ते प्रत्याजनिष्यन्ते वा, सर्वे ते एकजातिप्रतिबद्धास्तत एवानुत्तरा सम्यक्सबोधिमभिसभोत्स्यन्ते स्थापयित्वा प्रणिधानवश ये ते बोधिसत्त्वा महासिंहनादनादिन उदारसनाहसनद्धाः सर्वसत्त्वपरिनिर्वाणाभियुक्ताश्च ॥ ३३ ॥ M 56

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे ये श्रावकास्ते व्यामप्रभाः, ये बोधिसत्त्वास्ते योजनकोटीशतसहस्रप्रभाः, स्थापयित्वा द्वौ बोधिसत्त्वौ ययोः प्रभया सा लोकधातुः सततसमित नित्यावभासस्फुटा। अथ खल्वायुष्मानानन्दो भगवन्तमेतदवोचत्—किंनामधेयौ भगवस्तौ बोधिसत्त्वौ महासत्त्वौ ? भगवानाह—एकस्तयोरानन्द अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः, द्वितीयो महास्थामप्राप्तो नाम। इत एव चानन्द बुद्धक्षेत्राच्च्युता तौ तत्रोपपन्नौ ॥ ३४ ॥

तत्र चानन्द बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाताः, सर्वे ते द्वात्रिंशन्महापुरुषलक्षणसमन्वागताः परिपूर्णगात्रा ध्यानाभिज्ञाकोविदाः प्रज्ञाप्रभेदकुशलास्तीक्ष्णेन्द्रियाः सुसंवृतेन्द्रिया आज्ञातावीन्द्रिया अदीनाबलेन्द्रियाः प्रतिलम्भक्षान्तिका अनन्तापर्यन्तगुणाः ॥ ३५ ॥

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाताः, सर्वे तेऽविरहिता बुद्धदर्शनेनाविनिपातधर्माणो यावद्बोधिपर्यन्तम्। सर्वे ते तत उपादाय न जातु जातिस्मरा भविष्यन्ति स्थापयित्वा तथारूपेषु कल्पसक्षोभेषु ये पूर्वस्थानप्रणिहिताः पञ्चसु कषायेषु वर्तमानेषु यदा बुद्धानां भगवतां लोके प्रादुर्भावो भवति तद्यथापि नाम ममैतर्हि ॥३६॥ M 57

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाताः, सर्वे ते एकपुरोभक्तेनान्यॉल्लोकधातून् गत्वा अनेकानि बुद्धकोटीनियुतशतसहस्राण्युपतिष्ठन्ति यावदाकाङ्क्षन्ति बुद्धानुभावेन। ते यथा यथा चित्तमुत्पादयन्ति एवमेवरूपैः पुष्पधूपदीपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीतूर्यसगीतिवाद्यैः पूजां कुर्याम इति, तेषा सहचित्तोत्पादात्तथारूपाणि च सर्वपूजाविधानानि पाणौ प्रादुर्भवन्ति। ते तैः पुष्पैर्यावद्वाद्यैस्तेषु बुद्धेषु भगवत्सु पूजां कुर्वन्तो बहुपरिमाणासख्येय कुशलमुपचिन्वन्ति। सचेत्पुनराकाङ्क्षन्ति एवंरूपाः पुष्पपुटाः पाणौ प्रादुर्भवन्त्विति, तेषा सहचित्तोत्पादान्नानावर्णा अनेकवर्णा नानागन्धा दिव्याः पुष्पपुटाः पाणौ प्रादुर्भवन्ति। ते तैस्तथारूपैः पुष्पपुटैस्तान् बुद्धान् भगवतोऽवकिरन्ति अभ्यवकिरन्ति अभिप्रकिरन्ति। तेषा च यः सर्वपरीतः पुष्पपुट

उत्सृष्टः स दशयोजनविस्तर पुष्पच्छत्र प्रादुर्भवति उपर्यन्तरीक्षे । द्वितीये चानुत्सृष्टे न प्रथमो धरण्या प्रपतति । सन्ति तत्र पुष्पपुटा य उत्सृष्टाः सन्तो विंशतियोजनविस्ताराणि पुष्पच्छत्राण्युपर्यन्तरीक्षे प्रादुर्भवन्ति । सन्ति त्रिंशच्चत्वारिंशत्पञ्चाशद्योजनविस्ताराणि, सन्ति M 58 यावद्योजनशतसहस्रविस्ताराणि पुष्पच्छत्राण्युपर्यन्तरीक्षे प्रादुर्भवन्ति । तत्र ये उदार प्रीतिप्रामोद्य सजनयन्ति, उदार च चित्तौद्बिल्य प्रतिलभन्ते, ते बह्वपरिमितमसख्येयं कुशलमूलमवरोप्य बहूनि च बुद्धकोटीनियुतशतसहस्राण्युपस्थाय एकपूर्वाह्णेन पुनरपि सुखावत्या लोकधातौ प्रतिष्ठन्ते तस्यैवामितायुषस्तथागतस्य पूर्वप्रणिधानाधिष्ठानपरिग्रहेण पूर्वदत्तधर्मश्रवणेन पूर्वजिनावरोपितकुशलमूलतया पूर्वप्रणिधानसमृद्धिपरिपूर्यात्मभूतया सुविभक्तभावितया ॥ २७ ॥

तस्मिन् खलु पुनरानन्द बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाताः, सर्वे ते सर्वज्ञतासहगतामेव धर्मकथा कथयन्ति । न च तत्र बुद्धक्षेत्रे सत्त्वाना काचित्परिग्रहसज्ञास्ति । ते सर्वे च तद्बुद्धक्षेत्रमनुचङ्क्रममाणा अनुविचरन्तो न रतिं नारतिमुत्पादयन्ति । प्रक्रामन्तश्चानपेक्षाः, न च प्रक्रामन्ति सापेक्षाः । सर्वसत्त्वेषामेव चित्त नास्ति । तत्र खलु पुनरानन्द सुखावत्या लोकधातौ ये सत्त्वाः प्रत्याजाताः, नास्ति तेषामन्यतमकसज्ञा, नास्ति स्वकसज्ञा, नास्त्यसमसंज्ञा, नास्ति विग्रहः, नास्ति विवादः, नास्ति विरोधः । समचित्ता मैत्रचित्ता M 59 मृदुचित्ताः स्निग्धचित्ताः कर्मण्यचित्ताः प्रसन्नचित्ताः स्थिरचित्ता विनीवरणचित्ता अक्षुभितचित्ता अलुलितचित्ताः प्रज्ञापारमिताचर्याचरणचित्ताश्चित्ताधारबुद्धिप्रविष्टाः । सागरसमाः प्रज्ञया, मेरुसमा बुद्ध्या, अनेकगुणसनिचयाः, बोध्यङ्गसंगीत्या विक्रीडिताः, बुद्धसगीत्यभियुक्ता मासचक्षुः प्रविचिन्वन्ति, दिव्य चक्षुरभिनिर्हरन्ति, प्रज्ञाचक्षुर्गतिंगता धर्मचक्षु.पारगता बुद्धचक्षुर्निष्पादयन्तो दर्शयन्तो द्योतयन्तो विस्तरेण प्रकाशयन्तोऽसङ्गज्ञानमभिनिर्हरन्ति । त्रैधातुकसमतायामभियुक्ता दान्तचित्ताः शान्तचित्ताः सर्वधर्मधातूपलब्धिसमन्वागताः समुदयनिरुक्तिकुशला धर्मनिरुक्तिसमन्वागता हाराहारकुशला नयानयकुशलाः स्थानकुशला लौकिकीषु कथास्वनपेक्षा विहरन्ति । लोकोत्तराभिः कथाभिः सारं प्रत्ययन्ति । सर्वधर्मपर्येष्टिकुशलाः सर्वधर्मप्रकृतिव्युपशमज्ञानविहारिणोऽनुपलम्भगोचरा निष्किंचना निरुपादाना निश्चिन्ता निरुपधयोऽनुपादाय सुविमुक्ता अनङ्गणा अपर्यस्थायिनोऽभिज्ञासु अमूलस्थायिनोऽसङ्गाचारिका अनवलीना गम्भीरेषु धर्मेष्वभियुक्ता न ससीदन्ति दुरनुबोधबुद्धज्ञानप्रवेशोद्गता एकायनमार्गानुप्राप्ता निर्विचिकित्सास्तीर्णकथंकथा अपरप्रत्ययज्ञाना अनधिमानिनः । सुमेरुसमा ज्ञानाभ्युद्गताः । सागरसमा बुद्ध्यक्षोभ्याः । चन्द्रसूर्यप्रभातिक्रान्ताः प्रज्ञाभया पाण्डरसुशुक्लशुद्धशुभचित्ततया च । उत्तप्तहेमवर्णसदृशा M 60 अवभासनिर्भासतया च । वसुंधरासदृशाः सर्वसत्त्वशुभाशुभक्षमणतया । अप्सदृशाः सर्वक्लेशमूलनिर्धावनप्रवाहणतया च । अग्निराजसदृशाः सर्वधर्ममन्यनाक्लेशनिर्दहनतया । वायुसदृशाः सर्वलोकासङ्गनतया । आकाशसदृशाः सर्वधर्मनैर्वेधिकतया सर्वशो निष्किचनतया च ।

पद्मसदृशाः सर्वलोकानुपलिप्ततया । कालानुसारिमहामेघसदृशा धर्माभिगर्जनतया । महावृष्टिसदृशा धर्मसलिलाभिप्रवर्षणतया । ऋषभसदृशा महागणाभिभवनतया । महानागसदृशाः परमसुदान्तचित्ततया । भद्राश्वाजानेयसदृशाः सुविनीततया । सिंहमृगराजसदृशा विक्रमवैशारद्यासत्रस्ततया । न्यग्रोधद्रुमराजसदृशाः सर्वसत्त्वपरित्राणतया । पर्वतराजसदृशाः सर्वपरप्रवाद्यकम्पनतया । गगनसदृशा अपरिमाणमैत्रीप्रभावनतया । महाब्रह्मसमाः सर्वकुशलमूलधर्माधिपत्यपूर्वंगमतया । पक्षिसदृशा असंनिचयस्थानतया । गरुडद्विजराजसदृशाः सर्वपरप्रवादिविध्वंसनतया । उदुम्बरपुष्पसदृशा दुर्लभाप्रत्यर्थितया । नागवत्सुसमाहिता अविक्षिप्ताजिह्वेन्द्रियतया । विनिश्चयकुशलाः क्षान्तिसौरभ्यबहुलाः । अनीर्षुकाः परसंपत्त्यप्रार्थनतया । विशारदा धर्मकथा स्वतृप्ता धर्मपर्येष्ट्या । वैडूर्यसदृशाः शीलेन । रत्नाकराः श्रुतेन । मञ्जुस्वरा महाधर्मदुन्दुभिनिर्घोषेण । महाधर्मभेरीं पराघ्नन्तो महाधर्मशङ्खमापूरयन्तो महाधर्मध्वजमुच्छ्रापयन्तो धर्मोल्कां प्रज्वालयन्तः प्रज्ञाविलोकिनोऽसंमूढा निर्दोषाः शान्तखिलाः शुद्धा निरामगन्धा अलुब्धाः संविभागरता मुक्तत्यागाः प्रसृतपाणयो दानसंविभागरता धर्मामिषाभ्यां दानेऽमत्सरिणोऽससृष्टा उत्त्रस्तमानसा विरक्ता धीरा धौरेया धृतिमन्तो ह्रीमन्तः सुव्यूढसत्त्वा निर्गाढाः प्राप्ताभिज्ञाः सुरताः सुखसंवासा अर्थकरा लोकप्रद्योता नापदागन्तु धीरा राग तमः प्रनेकस्वष्टाः (?) शोकापगता निर्मला निमेषप्रहीणा विक्रीडिताभिज्ञा हेतुबलिकाः प्रणिधानबलिका अजिह्मा अकुटिला एते लक्षकोटीनियुतशतसहस्रावरोपितकुशलमूला उत्पाटितमानशल्या अपगतरागद्वेषमोहाः शुद्धाः शुद्धाधिमुक्ता जिनबलप्रशस्ता लोकपण्डिता उत्तप्तज्ञानसमुदागता जिनसुताश्चित्तौद्बिल्यसमन्वागताः शूरा दृढा अममा अखिला अतुला अरजस्काः सहिता उदारा ऋषभा ह्रीमन्तो धृतिमन्तः स्मृतिमन्तो मतिमन्तो गतिमन्त प्रज्ञाशस्त्रप्रहरणा पुण्यवन्तो द्युतिमन्तो व्यपगतखिला मलप्रहीणाः स्मृतियुक्ताः शान्तज्ञानालम्भाः । ईदृशा आनन्द तस्मिन् बुद्धक्षेत्रे सत्त्वाः संक्षिप्तेन च । विस्तरेण पुनः सचेत्कल्पकोटीनियुतशतसहस्रस्थितिकेनाप्यायुष्प्रमाणेन तथागता निर्दिश्येरन्, नैव शक्यं तेषां सत्पुरुषाणां गुणपर्यन्तमधिगन्तुम्, न च तथागतस्य वैशारद्योपच्छेदो भवेत् । तत्कस्य हेतोः ? उभयमप्येव आनन्द अचिन्त्यमतुल्यं यदिदं तेषां बोधिसत्त्वानां गुणास्तथागतस्य चानुत्तरप्रज्ञाप्रतिभानम् ॥ ३८ ॥

M 61

M 62

अपि चानन्द उत्तिष्ठ, पश्चान्मुखीभूत्वा पुष्पावकीर्णाञ्जली प्रगृह्य प्रणिपत । एषा सा दिग् यत्र स भगवानमिताभस्तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति, धर्मं च देशयति विरजो विशुद्ध यस्य तन्नामधेयमनावरणे दशदिशि लोके विघुष्टम् एकैकस्यां दिशि गङ्गानदीवालुकासमा बुद्धा भगवन्तो वर्णयन्ति स्तुवन्ति प्रशंसन्त्यसकृदसकृदसङ्गवाचाप्रतिवाक्याः । एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्—इच्छाम्यहं भगवंस्तममिताभममितप्रभममितायुषं तथागतमर्हन्तं सम्यक्संबुद्धं द्रष्टुम्, तांश्च बोधिसत्त्वान् महासत्त्वान् बहुबुद्धकोटीनियुतशतसहस्रावरोपितकुशलमूलान् । समनन्तरभाषिता आयुष्म-

तानन्देनेयं वाक्, अथ तावदेव सोऽमिताभस्तथागतोऽर्हन् सम्यक्सबुद्धः स्वपाणितलात्तथारूपं M 63 रश्मिं प्रामुञ्चद्यदिद कोटीनियुतशतसहस्रतम बुद्धक्षेत्र महतावभासेन स्फुटमभूत् । तेन खलु पुनः समयेन सर्वत्र कोटीशतसहस्रबुद्धक्षेत्राणा ये केचित्कालपर्वता वा रत्नपर्वता वा मेरुमहामेरुमुचिलिन्दमहामुचिलिन्दचक्रवालमहाचक्रवाला वा चितयो वा स्तम्भा वा वृक्षगहनोद्यानविमानानि दिव्यमनुष्यकाणि, तानि सर्वाणि तस्य तथागतस्य तया प्रभयाभिनिर्भिन्नान्यभूवन् समभिभूतानि । तद्यथापि नाम पुरुषो व्याममात्रकेऽन्वितो द्वितीयं पुरुष प्रत्यवेक्षेदादित्येऽभ्युद्गते, एवमेवास्मिन् बुद्धक्षेत्रे भिक्षुभिक्षुण्युपासकोपासिकादेवनागयक्षराक्षसगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्याश्च तस्या वेलायामद्राक्षुस्तममिताभं तथागतमर्हन्त सम्यक्सबुद्ध सुमेरुमिव पर्वतराज सर्वक्षेत्राभ्युद्गत सर्वा दिशोऽभिभूय भासमान तपन्त विरोचमान विभ्राजमानम्, त च महान्त बोधिसत्त्वगण त च भिक्षुसघ यदिद बुद्धानुभावेन तस्या. प्रभाया. परिशुद्धत्वात् । तद्यथेय महापृथिवी एकोदकजाता भवेत्, तत्र न वृक्षा न पर्वता न द्वीपा न तृणगुल्मौषधिवनस्पतयो न नदीश्वभ्रप्रपाताः प्रज्ञापयेरन्, अन्यत्रैकार्णवीभूता महापृथिव्येका स्यात्, एवमेव तस्मिन् बुद्धक्षेत्रे नास्त्यन्यात्किंचिM 64 ल्लिङ्ग वा निमित्त वा अन्यत्रैव व्यामप्रभाः श्रावकास्ते च योजनकोटीशतसहस्रप्रभा बोधिसत्त्वाः । स च भगवानमिताभस्तथागतोऽर्हन् सम्यक्सबुद्धस्त च श्रावकगण त च बोधिसत्त्वगणमभिभूय सर्वा दिशः प्रभासयन् सदृश्यते । तेन खल्वपि समयेन तस्या सुखावत्या लोकधातौ बोधिसत्त्वा. श्रावकदेवमनुष्याश्च सर्वे ते इमा सहालोकधातु शाक्यमुनिं च तथागतमर्हन्त सम्यक्सबुद्धमर्हता भिक्षुसघेन परिवृतं पश्यन्ति स्म धर्म देशयन्तम् ॥३९॥

तत्र खलु भगवानजित बोधिसत्त्व महासत्त्वमामन्त्रयते स्म—पश्यसि त्वमजित अमुष्मिन् बुद्धक्षेत्रे गुणालकारव्यूहसपदम् ? उपरिष्टाच्चान्तरीक्षे आरामरमणीयान्युद्यानरमणीयानि नदीपुष्करिणीरमणीयानि नानारत्नपद्मोत्पलकुमुदपुण्डरीकाकीर्णानि ? अधस्ताच्च धरणीतलमुपादाय यावदकनिष्ठभवनाद्गगनतल पुष्पाभिकीर्णं पुष्पावलिसमुपशोभित नानारत्नस्तम्भपङ्क्तिपरिस्फुट तथागताभिनिर्मितनानाद्विजसघनिषेवितम् ? अजितो बोधिसत्त्व आह—पश्यामि भगवन् । भगवानाह—पश्यसि पुनस्त्वमजित एतानमरान् द्विजसघान् सर्वबुद्धक्षेत्र बुद्धस्वरेणाभिविज्ञापयन्त येनैते बोधिसत्त्वा नित्यमविरहिता बुद्धानुस्मृत्या ? M 65 अजित आह—पश्यामि भगवन् । भगवानाह—पश्यसि पुनस्त्वमजित अत्र बुद्धक्षेत्रेऽमून् सत्त्वान् योजनशतसहस्रिकेषु विमानेष्वभिरूढानन्तरीक्षे ससत्कारान् क्रामन्तः ? अजित आह—पश्यामि भगवन् । भगवानाह—तत्किं मन्यसे अजित अस्ति किंचिन्नानात्व देवानां परनिर्मितवशवर्तिना सुखावत्या लोकधातौ मनुष्याणा वा ? अजित आह—एकमप्यहं भगवन् नानात्व न समनुपश्यामि यावन्महर्द्धिका अत्र सुखावत्या लोकधातौ मनुष्याः । भगवानाह—पश्यसि पुनस्त्वमजित तत्र सुखावत्या लोकधातावेतेषा मनुष्याणामुदारेषु पद्मेषु गर्भावासम् ? आह—तद्यथापि नाम देवास्त्रायस्त्रिंशा देवा यामा वा पञ्चाशद्योजनिकेषु वा

योजनशतिकेषु वा पञ्चयोजनशतिकेषु वा विमानेषु प्रविष्टाः क्रीडन्ति रमन्ति परिचारयन्ति, एवमेवाह भगवन् अत्र सुखावत्यां लोकधातावेतेषां मनुष्याणामुदारेषु पद्मेषु गर्भावासं पश्यामि ॥ ४० ॥

सन्ति खलु पुनरत्र भगवन् सत्त्वा य औपपादुकाः पद्मेषु पर्यङ्कैः प्रादुर्भवन्ति। तत्कोऽत्र भगवन् हेतुः कः प्रत्ययो यदन्ये गर्भावासं प्रतिवसन्ति, अन्ये पुनरौपपादुकाः पद्मेषु पर्यङ्कैः प्रादुर्भवन्ति? भगवानाह—ये ते अजित बोधिसत्त्वा अन्येषु बुद्धक्षेत्रेषु M 66
स्थिताः सुखावत्यां लोकधातावुपपत्तये विचिकित्सामुत्पादयन्ति, तेन चित्तेन कुशलमूलान्यवरोपयन्ति, तेषामत्र गर्भावासो भवति। ये पुनर्निर्विचिकित्सामुत्पाद्य च्छिन्नकाङ्क्षाः सुखावत्यां लोकधातावुपपत्तये कुशलमूलान्यवरोपयन्ति, बुद्धानां भगवतामसङ्गज्ञानमेवाकल्पयन्ति अभिश्रद्दधति अधिमुच्यन्ते, ते औपपादुकाः पद्मेषु पर्यङ्कैः प्रादुर्भवन्ति। ये ते अजित बोधिसत्त्वा महासत्त्वा अन्यत्र बुद्धक्षेत्रेषु स्थिताश्चित्तमुत्पादयन्ति अमिताभस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य दर्शनाय, न विचिकित्सामुत्पादयन्ति, न काङ्क्षन्ति असङ्गं बुद्धज्ञानम्, स्वकुशलमूलं चाभिश्रद्दधति, तेषामौपपादुकानां पर्यङ्कैः प्रादुर्भूतानां मुहूर्तमात्रेण एवंरूपः कायो भवति तद्यथान्येषां चिरोपपन्नानां सत्त्वानाम्। पश्य अजित प्रज्ञाविशेषं प्रज्ञावैमात्र्यं प्रज्ञापरिहाणिं प्रज्ञापरीत्तताम्—यत्तु हिताय पञ्चवर्षशतानि परिहीणा भवन्ति बुद्धदर्शनाद्बोधिसत्त्वदर्शनाद्धर्मश्रवणाद्धर्मसंकथनात्। कुशलमूलचर्यायाः परिहीणा भवन्ति सर्वकुशलमूलसंपत्तिभिः यदिदं विचिकित्सापतितैः संज्ञामनसिकारैः। तद्यथापि नाम अजित राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य बन्धनागारं भवेत्सर्वसौवर्णवैडूर्यप्रत्युप्तमवसक्तपट्टमाल्यदामकलापं नानारङ्गविभववितानं दूष्यपट्टसंछन्नं नानापुष्प- M 67
कुसुमाभिकीर्णमुदारधूपनिर्धूपितं प्रासादहर्म्यनिर्यूहगवाक्षवेदिकातोरणविचित्रं सप्तरत्नकिङ्किणीजालसंछन्नं चतुरस्रं चतुःस्थूणं चतुर्द्वारं चतुःसोपानम्। तत्र तस्य स राज्ञः पुत्रः केनचिदेव कृत्येन प्रक्षिप्य जाम्बूनदसुवर्णमयैर्निगडैर्बद्धो भवति। तस्य च तत्र पर्यङ्कः प्रज्ञप्तः स्यादनेकगोणिकास्तीर्णस्तूलिकापर्णकास्तीर्णः कालिङ्गप्रावरणप्रत्यास्तरणसोत्तरपदच्छद उभयान्तलोहितोपधानश्चित्रो दर्शनीयः। स तत्र तदाभिषण्णो वा अभिसपन्नो वा भवेत्। बहु चास्यानेकविधं शुचि विनीतं पानभोजनं तत्रोपनाम्येत। तत्किं मन्यसे अजित उदारस्तस्य राजपुत्रस्य स परिभोगो भवेत्? अजित आह—उदारो भगवन्। भगवानाह—तत्किं मन्यसे अजित अपि त्वास्वादयेत्तत्र निशामयेच्च, तेन वा तुष्टिं विद्यात्? आह—नो हीदं भगवन्। अपि तु खलु पुनर्यदापनीय राज्ञा तत्र बन्धनागारे प्रक्षिप्तो भवेत्, स ततो मोक्षमेवाकाङ्क्षेत्। अभिजातान् कुमारानमात्यान् स्त्र्यागारान् श्रेष्ठिनो गृहपतीन् M 68
कोट्टराजांश्च पर्येषयेत्, य एनं ततो बन्धनागारात्परिमोचयेयुः। किंचापि भगवंस्तस्य राजकुमारस्य तत्र बन्धनागारे नाभिरतिः, नात्र परिमुच्यते, यावन्न राजा प्रसादमुपदर्शयति। भगवानाह—एवमेव अजित ये ते बोधिसत्त्वा विचिकित्सापतिताः कुशलमूलान्यवरोपयन्ति,

काङ्क्षन्ति बुद्धज्ञानम्, किंचापि तेन बुद्धनामश्रवणेन तेन च चित्तप्रसादमात्रेण अत्र
सुखावत्या लोकधातावुपपद्यन्ते, न तु खल्वौपपादुकाः पद्मेषु पर्यङ्कैः प्रादुर्भवन्ति, अपि तु
पद्मेषु गर्भावास प्रतिवसन्ति। किंचापि तेषा तत्रोद्यानविमानसज्ञाः सतिष्ठन्ते, नास्त्युच्चार-
प्रस्रावम्, नास्ति खेटसिंहाणकम्, न प्रतिकूल मनसः प्रवर्तते, अपि तु खलु पुनः पञ्च
वर्षशतानि विरहिता भवन्ति बुद्धदर्शनेन धर्मश्रवणेन बोधिसत्त्वदर्शनेन धर्मसांकथ्यविनि-
श्चयेन सर्वकुशलमूलेन धर्मचर्याभिश्च। किंचापि ते तत्र नाभिरमन्ते न तुष्टिं विजानन्ति,
अपि तु खलु पुन पूर्वापरान् क्षपयित्सते भूयस्तत पश्चान्निष्क्रामन्ति। न चैषा ततो
M 69 निष्क्रामता निष्क्रमः प्रज्ञायते ऊर्ध्वमधस्तिर्यग्वा। पश्य अजित एतर्हि नाम पञ्चभिर्वर्षशतै-
र्बहूनि बुद्धकोटीनियुतशतसहस्रोपस्थानानि स्युर्बहुपरिमाणासख्येयाप्रमेयाणि च कुशल-
मूलान्यवरोपयितव्यानि। तत्सर्वं विचिकित्सादोषेण विनाशयन्ति। पश्य अजित किय-
न्महतेऽनर्थाय बोधिसत्त्वाना विचिकित्सा सवर्तत इति। तस्मात्तर्हि अजित बोधिसत्त्वैर्निर्वि-
चिकित्सैर्बोधये चित्तमुत्पाद्य क्षिप्र सर्वसत्त्वहितसुखाधानाय सामर्थ्यप्रतिलम्भार्थं सुखावत्या
लोकधातावुपपत्तये कुशलमूलानि परिणामयितव्यानि, यत्र भगवानमिताभस्तथागतोऽर्हन्
सम्यक्सबुद्ध ॥ ४१ ॥

एवमुक्ते अजितो बोधिसत्त्वो भगवन्तमेतदवोचत्—किं पुनर्भगवन् बोधिसत्त्वा इतो
बुद्धक्षेत्रात्परिनिष्पन्ना अन्येषा वा बुद्धाना भगवतामन्तिकात्सुखावत्या लोकधातावुपपत्स्यन्ते?
भगवानाह—इतो ह्यजित बुद्धक्षेत्राद् द्वासप्ततिकोटीनियुतानि बोधिसत्त्वाना परिनिष्पन्नानि
यानि सुखावत्या लोकधातावुपपत्स्यन्ते परिनिष्पन्नानामवैवर्तिकाना बहुबुद्धकोटीनियुत-
शतसहस्राण्यवरोपितैः कुशलमूलैः, कः पुनर्वादस्तत परीत्ततरैः कुशलमूलै. दुष्प्रसहस्य
M 70 तथागतस्यान्तिकादष्टादशकोटीनियुतशतानि बोधिसत्त्वाना सुखावत्या लोकधातावुपपत्स्यन्ते।
पूर्वान्तरे दिग्भागे रत्नाकरो नाम तथागतो विहरति। तस्यान्तिकान्नवतिबोधिसत्त्वकोट्य.
सुखावत्या लोकधातावुपपत्स्यन्ते। ज्योतिष्प्रभस्य तथागतस्यान्तिकाद्द्वाविंशतिबोधिसत्त्व-
कोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। अमितप्रभस्य तथागतस्यान्तिकात्पञ्चविंशतिबोधि-
सत्त्वकोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। लोकप्रदीपस्य तथागतस्यान्तिकात्षष्टि-
बोधिसत्त्वकोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। नागाभिभुवस्तथागतस्यान्तिकाच्चतुःषष्टि-
र्बोधिसत्त्वकोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। विरजःप्रभस्य तथागतस्यान्तिकात्पञ्च-
विंशतिबोधिसत्त्वकोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। सिंहस्य तथागतस्यान्तिकात्षोडश-
बोधिसत्त्वकोट्यः सुखावत्या लोकधातावुपपत्स्यन्ते। सिंहस्य तथागतस्यान्तिकादष्टा-
दशबोधिसत्त्वसहस्राणि सुखावत्या लोकधातावुपपत्स्यन्ते। श्रीकूटस्य तथागतस्यान्तिकादेका-
शीतिबोधिसत्त्वकोटीनियुतानि सुखावत्या लोकधातावुपपत्स्यन्ते। नरेन्द्रराजस्य तथागत-
स्यान्तिकाद्दशबोधिसत्त्वकोटीनियुतानि सुखावत्या लोकधातावुपपत्स्यन्ते। बलाभिज्ञस्य तथा-
M 71 गतस्यान्तिकाद्द्वादशबोधिसत्त्वसहस्राणि सुखावत्या लोकधातावुपपत्स्यन्ते। पुष्पध्वजस्य

तथागतस्यान्तिकात्पञ्चविंशतिर्वीर्यप्राप्ता बोधिसत्त्वकोट्य एकप्रस्थानप्रस्थिता एकेनाष्टाहेन नवतिकल्पकोटीनियुतशतसहस्राणि पश्चान्मुखीकृत्य सुखावत्या लोकधातावुपपत्स्यन्ते। ज्वलनाधिपतेस्तथागतस्यान्तिकाद्द्वादशबोधिसत्त्वकोट्य. सुखावत्या लोकधातावुपपत्स्यन्ते। वैशारद्यप्राप्तस्य तथागतस्यान्तिकादेकोनसप्ततिबोधिसत्त्वकोट्य सुखावत्या लोकधातावुपपत्स्यन्ते अमिताभस्य तथागतस्य दर्शनाय वन्दनाय पर्युपासनाय परिपृच्छनाय परिप्रश्नीकरणाय। एतेन अजित पर्यायेण परिपूर्णकल्पकोटीनियुत नामधेयानि परिकीर्तयेय तेपा तथागताना येभ्यस्ते बोधिसत्त्वा उपसङ्क्रामन्ति सुखावत्या लोकधातौ तममिताभ तथागत द्रष्टु वन्दितु पर्युपासितुम्, न शक्यश्च पर्यन्तोऽधिगन्तुम् ॥ ४२ ॥

पश्य अजित कियत्सुलब्धलाभास्ते सत्त्वा येऽमिताभस्य तथागतस्यार्हत· सम्यक्सम्बुद्धस्य नामधेय श्रोष्यन्ति। नापि ते सत्त्वा हीनाधिमुक्तिका भविष्यन्ति येऽन्तश एकचित्तप्रसादमपि तस्मिंस्तथागतेऽभिलप्स्यन्ते, अस्मिंश्च धर्मपर्याये। तस्मात्तर्हि अजित आरोचयामि व, प्रतिवेदयामि सदेवकस्य लोकस्य पुरतोऽस्य धर्मपर्यायस्य श्रावणाय। त्रिसाहस्रमहासाहस्रमपि लोकधातुमग्निपूर्णमवगाह्य अतिक्रम्यैकचित्तोत्पादमपि प्रतिसारो न M 72 कर्तव्य·। तत्कस्य हेतोः? बोधिसत्त्वकोट्यो ह्यजित अश्रवणादेषामेवरूपाणां धर्मपर्यायाणा विवर्तन्तेऽनुत्तराया. सम्यक्सम्बोधे। तस्मादस्य धर्मपर्यायस्याध्याशयेन श्रवणोद्ग्रहणधारणार्थं पर्यवाप्तये विस्तरेण सम्प्रकाशाय भावनार्थं च सुमहद्वीर्यमारब्धव्यम्। अन्तश एकरात्रिंदिनमपि, एकगोदोहमात्रमपि, अन्तश· पुस्तकावरोपित कृत्वा सुलिखितो धारयितव्य.। शास्तृसंज्ञा च तत्रोपाध्याये कर्तव्या य इच्छति क्षिप्रमपरिमितान् सत्त्वानवैवर्तिकत्वेऽनुत्तरायाः सम्यक्सम्बोधेः प्रतिष्ठापयितुम्, तच्च तस्य भगवतोऽमिताभस्य तथागतस्य बुद्धक्षेत्र द्रष्टुम्, आत्मनश्च विशिष्टा बुद्धक्षेत्रगुणालंकारव्यूहसम्पद परिग्रहीतुमिति। अपि· तु खलु अजित अत्यर्थ सुलब्धलाभास्ते सत्त्वा अवरोपितकुशलमूलाः पूर्वजिनकृताधिकारा बुद्धाधिष्ठिताश्च भविष्यन्ति, येषामनागतेऽध्वनि यावत्सद्धर्मविप्रलोपे वर्तमाने इमे एवरूपा उदारा धर्मपर्यायाः सर्वबुद्धसंवर्णिता· सर्वबुद्धप्रशस्ताः सर्वबुद्धानुज्ञाता महतः सर्वज्ञज्ञानस्य क्षिप्रमाहारका. श्रोत्रावभासमागमिष्यन्ति। ये श्रुत्वा चोदारप्रीतिप्रामोद्य प्रतिलप्स्यन्त उद्ग्रहीष्यन्ति M 73 धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति परेभ्यो विस्तरेण सम्प्रकाशयिष्यन्ति, भावनाभिरताश्च भविष्यन्ति, अन्तशो लिखित्वा पूजयिष्यन्ति, बहु च ते पुण्य प्रसविष्यन्ति, यस्य न सुकरा संख्या कर्तुम्। इति हि अजित यत्तथागतेन कर्तव्यम्, कृत मया। युष्माभिरिदानीं निर्विचिकित्सायोगः करणीय·। मा संशयत असङ्गमनावरण बुद्धज्ञानम्। मा भूत्सर्वाकारावरोपितरत्नमये बन्धनागारे प्रवेशः। दुर्लभो हि अजित बुद्धोत्पाद·। दुर्लभा धर्मदेशना। दुर्लभा क्षणसंपत्। आख्याता च अजित मया सर्वकुशलमूलपारमिताप्राप्तिः। यूयमिदानीमभियुज्यत प्रतिपद्यध्वम्। अस्य खलु पुनरजित धर्मपर्यायस्य महतीं परीन्दना करोमि। अविप्रणाशाय बुद्धधर्माणामनन्तर्धानाय पराक्रमिष्यथ। मा तथागताज्ञा क्षोभयिष्यथ ॥ ४३ ॥

अथ खलु पुनर्भगवास्तस्या वेलायामिमा गाथा अभाषत–

न मे अकृतपुण्याना श्रवा भेष्यन्ति ईदृशाः ।
ये तु ते शूर सिद्धार्था॰ श्रोष्यन्ति च इमा गिरम् ॥ ४९ ॥

M 74 दृष्टो यैश्च हि सबुद्धो लोकनाथः प्रभकरः ।
सगौरवै श्रुतो धर्मः प्रीतिं प्राप्स्यन्ति ते पराम् ॥ ५० ॥

न शक्त हीनेहि कुसीददृष्टिभिः
बुद्धान धर्मेषु प्रसाद विन्दितुम् ।
ये बुद्धक्षेत्रेषु अकार्षि पूजा
त्रैलोकनाथान चर्यासु शिक्षिषु ॥ ५१ ॥

यथान्धकारे पुरुषो ह्यचक्षु.
मार्ग न जाने कुतु सप्रकाशयेत् ।
सर्वं तथा श्रावक बुद्धज्ञाने
अजानकाः किं पुनरद्य सत्त्वाः ॥ ५२ ॥

बुद्धो हि बुद्धस्य गुणा प्रजानते
न देवनागासुरयक्षश्रावकाः ।
अनेकबुद्धान पि नो गती यथो
बुद्धस्य ज्ञाने हि प्रकाश्यमाने ॥ ५३ ॥

यदि सर्वसत्त्वाः समता भवेयुः
विशुद्धज्ञाने परमार्थकोविदाः ।
ते कल्पकोटीरथ वापि उत्तरे
नैकस्य बुद्धस्य गुणान् कथेयुः ॥ ५४ ॥

M 75 अत्रान्तरे निर्वृत ते भवेयुः
प्रकाशमाना बहुकल्पकोटीः ।
न च बुद्धज्ञानस्य प्रमाणु लभ्यते
तथा हि ज्ञानाश्चर्यं जिनानाम् ॥ ५५ ॥

तस्मान्नरः पण्डित विज्ञजातियः
यो मह्य वाक्यमभिश्रद्दधेय ।
कृत्स्ना स साक्षाज्जिनज्ञानमार्गान्
बुद्धः प्रजान ति गिरामुदीरयेत् ॥ ५६ ॥

कदाचि लभ्यति मनुष्यलाभः
कदाचि बुद्धान पि प्रादुर्भावः ।

श्रद्धार्थप्रज्ञा सुचिरेण लभ्यते
तस्यार्थप्राप्त्यै जनयेत वीर्यम् ॥ ५७ ॥
य ईदृशा धर्म श्रुणित्व श्रेष्ठा
लभ्यन्ति प्रीतिं सुगत स्मरन्त. ।
ते मित्रमस्माकमतीतमध्वनि
ये चापि बोधाय जनन्ति छन्दम् ॥ ५८ ॥ इति ॥ ४४ ॥

अस्मिन् खलु पुनर्धर्मपर्याये भाष्यमाणे द्वादशाना सत्त्वनियुतकोटीना विरजो M 76 विगतमल धर्मेषु धर्मचक्षुर्विशुद्धम् । चतुर्विंशत्या कोटीनियुतशतफल प्राप्तम् । अष्टाना भिक्षुशतानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि । पञ्चविंशत्या बोधिसत्त्वकोटीभिरनुत्पत्तिकधर्मक्षान्ति' प्रतिलब्धा । देवमानुषिकायाश्च प्रजायाश्चत्वारिंशत्कोटीनियुतशतसहस्राणामनुत्पन्नपूर्वाण्यनुत्तराया सम्यक्सबोधौ चित्तान्युत्पन्नानि । सुखावत्या लोकधातावुपपत्तये च कुशलमूलान्यवरोपितानि भगवतोऽमिताभस्य तथागतस्य दर्शनकामतया । सर्वे च ते तत्रोपपद्य अनुपूर्वेण मञ्जुस्वरा नाम तथागता अन्येषु लोकधातुषूपपत्स्यन्ते । अशीतिश्च नियुतकोट्यो दीपकरे तथागते लब्धक्षान्तिका अवैवर्तिका अनुत्तरायाः सम्यक्संबोधेरमितायुषैव तथागतेन परिपाचिता. पूर्वबोधिसत्त्वचर्या चरन्तस्ताश्च सुखावत्या लोकधातावुपपद्य पूर्वप्रणिधानचर्याः परिपूरयिष्यन्ति ॥ ४५ ॥

तस्या वेलायामय त्रिसाहस्रमहासाहस्रलोकधातु' षड्विकार प्राकम्पत् । विविधानि M 77 च प्रातिहार्याणि सदृश्यन्ते स्म । पृथिव्या सस्कृतमभूत् । दिव्यमानुष्यकानि च तूर्याणि सप्रवादितान्यभूवन् । अनुमोदनाशब्देन च यावदकनिष्ठभवन विज्ञप्तमभूत् ॥ ४६ ॥

इदमवोचद्भगवानात्तमना. । अजितो बोधिसत्त्वो महासत्त्व आयुष्माश्चानन्दः सा च सर्वावती पर्षत् सदेवमानुषासुरगरुडगन्धर्वस्य लोको भगवतो भाषितमभ्यनन्दन्निति ॥४७॥

भगवतोऽमिताभस्य तथागतस्य सुखावतीगुणवर्णपरिकीर्तन बोधिसत्त्वानामवैवर्त्य- M 78 भूमिप्रवेशः अमिताभस्य परिवर्तः सुखावतीव्यूहो महायानसूत्र समाप्तम् ॥

*   *   *   *   *

ये धर्मा हेतुप्रभवा हेतु तेषा तथागतो ह्यवदत् ।
तेषा च यो निरोध एव वादी महाश्रमण ॥



# १७ सुखावतीव्यूहः ।

[ सक्षिप्तमातृका । ]

**॥ नमः सर्वज्ञाय ॥**

M 92 एव मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे महता भिक्षुसघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैरभिज्ञाताभिज्ञातै. स्थविरैर्महाश्रावकै. सर्वैरर्हद्भि । तद्यथा—स्थविरेण च शारिपुत्रेण, महामौद्गल्यायनेन च महाकाश्यपेन च महाकप्फिणेन च महाकात्यायनेन च महाकौष्ठिलेन च रेवतेन च शुद्धिपन्थकेन च नन्देन च आनन्देन च राहुलेन च गवापतिना च भरद्वाजेन च कालोदयिना च वक्कुलेन च अनिरुद्धेन च । एतैश्चान्यैश्च सबहुलैर्महाश्रावकै' । सबहुलैश्च बोधिसत्त्वैर्महासत्त्वै । तद्यथा मञ्जुश्रिया च कुमारभूतेन, अजितेन च बोधिसत्त्वेन, गन्धहस्तिना च बोधिसत्त्वेन, नित्योद्युक्तेन च बोधिसत्त्वेन, अनिक्षिप्तधुरेण च बोधिसत्त्वेन । एतैश्चान्यैश्च सबहुलैर्बोधिसत्त्वैर्महासत्त्वै. । शक्रेण च देवानामिन्द्रेण, ब्रह्मणा च सहापतिना । एतैश्चान्यैश्च सबहुलैर्देवपुत्रनयुतशतसहस्रै' ॥ १ ॥

M 93 तत्र खलु भगवानायुष्मन्त शारिपुत्रमामन्त्रयति स्म—अस्ति शारिपुत्र पश्चिमे दिग्भागे इतो बुद्धक्षेत्र कोटिशतसहस्र बुद्धक्षेत्राणामतिक्रम्य सुखावती नाम लोकधातु. । तत्र अमितायुर्नाम तथागतोऽर्हन् सम्यक्सबुद्ध एतर्हि तिष्ठति ध्रियते यापयति, धर्म च देशयति तत्किं मन्यसे शारिपुत्र केन कारणेन सा लोकधातुः सुखावतीत्युच्यते ? तत्र खलु पुनः शारिपुत्र सुखावत्या लोकधातौ नास्ति सत्त्वाना कायदुःख न चित्तदुःखम् । अप्रमाणान्येव सुखकारणानि । तेन कारणेन सा लोकधातुः सुखावतीत्युच्यते ॥ २ ॥

पुनरपर शारिपुत्र सुखावती लोकधातु. सप्तभिर्वेदिकाभिः सप्तभिस्तालपङ्क्तिभिः किङ्किणीजालैश्च समलकृता समन्ततोऽनुपरिक्षिप्ता चित्रा दर्शनीया चतुर्णां रत्नानाम् । तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य । एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहै. समलकृत तद्बुद्धक्षेत्रम् ॥ ३ ॥

पुनरपर शारिपुत्र सुखावत्या लोकधातौ सप्तरत्नमय्यः पुष्करिण्यः—तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तस्य अश्मगर्भस्य मुसारगल्वस्य सप्तमस्य रत्नस्य । अष्टाङ्गोपेतवारिपरिपूर्णाः समतीर्थकाः काकपेया सुवर्णवालुकासस्तृताः । तासु च पुष्करिणीषु समन्ताच्चतुर्दिश चत्वारि सोपानानि चित्राणि दर्शनीयानि चतुर्णां रत्नानाम्—तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य । तासा च पुष्करिणीना समन्ताद्रत्नवृक्षा जाताश्चित्रा दर्शनीयाः सप्तानां रत्नानाम्—तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्त-

M 94 स्याश्मगर्भस्य मुसारगल्वस्य सप्तमस्य रत्नस्य । तासु च पुष्करिणीषु सन्ति पद्मानि जातानि नीलानि नीलवर्णानि नीलनिर्भासानि नीलनिदर्शनानि । पीतानि पीतवर्णानि पीतनिर्भासानि पीतनिदर्शनानि । लोहितानि लोहितवर्णानि लोहितनिर्भासानि लोहितनिदर्शनानि ।

अवदातानि अवदातवर्णानि अवदातनिर्भासानि अवदातनिदर्शनानि । चित्राणि चित्रवर्णानि चित्रनिर्भासानि चित्रनिदर्शनानि शकटचक्रप्रमाणपरिणाहानि । एवरूपै. शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलकृत तद्बुद्धक्षेत्रम् ॥ ४ ॥

पुनरपरं शारिपुत्र तत्र बुद्धक्षेत्रे नित्यप्रवादितानि दिव्यानि तूर्याणि । सुवर्णवर्णा च महापृथिवी रमणीया । तत्र च बुद्धक्षेत्रे त्रिष्कृत्वो रात्रौ त्रिष्कृत्वो दिवसस्य पुष्पवर्षं प्रवर्षति दिव्याना मान्दारवपुष्पाणाम् । तत्र ये सत्त्वा उपपन्नास्ते एकेन पुरोभक्तेन कोटिशतसहस्र बुद्धाना वन्दन्ति अन्यॉल्लोकधातून् गत्वा । एकैक च तथागत कोटिशतसहस्राभि. पुष्पवृष्टिभिरभ्यवकीर्य पुनरपि तामेव लोकधातुमागच्छन्ति दिवाविहाराय । एवरूपै शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलकृत तद्बुद्धक्षेत्रम् ॥ ५ ॥

पुनरपर शारिपुत्र तत्र बुद्धक्षेत्रे सन्ति हसा. क्रौञ्चा मयूराश्च । ते त्रिष्कृत्वो रात्रौ त्रिष्कृत्वो दिवसस्य सनिपत्य सगीतिं कुर्वन्ति स्म, स्वकस्वकानि च रुतानि प्रव्याहरन्ति । तेषा प्रव्याहरतामिन्द्रियबलबोध्यङ्गशब्दो निश्चरति । तत्र तेषा मनुष्याणा त शब्द श्रुत्वा बुद्धमनसिकार उत्पद्यते, धर्ममनसिकार उत्पद्यते, सघमनसिकार उत्पद्यते । तत्किं मन्यसे शारिपुत्र तिर्यग्योनिगतास्ते सत्त्वा ? न पुनरेव द्रष्टव्यम् । तत्कस्माद्धेतो. ? नामापि शारिपुत्र M 95 तत्र बुद्धक्षेत्रे निरयाणा नास्ति, तिर्यग्योनीना यमलोकस्य नास्ति । ते पुन. पक्षिसंघास्तेनामितायुषा तथागतेन निर्मिता धर्मशब्द निश्चारयन्ति । एवरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलकृत तद्बुद्धक्षेत्रम् ॥ ६ ॥

पुनरपर शारिपुत्र तत्र बुद्धक्षेत्रे तासा च तालपङ्क्तीना तेषा च किङ्किणीजालाना वातेरिताना वल्गुर्मनोज्ञ. शब्दो निश्चरति—तद्यथापि नाम शारिपुत्र कोटिशतसहस्राङ्गिकस्य दिव्यस्य तूर्यस्य चार्यैः सप्रवादितस्य वल्गुर्मनोज्ञ. शब्दो निश्चरति, एवमेव शारिपुत्र तासा च तालपङ्क्तीना तेषा च किङ्किणीजालाना वातेरिताना वल्गुर्मनोज्ञः शब्दो निश्चरति । तत्र तेषा मनुष्याणा त शब्द श्रुत्वा बुद्धानुस्मृतिः काये सतिष्ठति, धर्मानुस्मृति. काये सतिष्ठति, सघानुस्मृति· काये सतिष्ठति । एवरूपै. शारिपुत्र बुद्धक्षेत्रगुणव्यूहै. समलकृतं तद्बुद्धक्षेत्रम् ॥७॥

तत्किं मन्यसे शारिपुत्र केन कारणेन स तथागतोऽमितायुर्नामोच्यते ? तस्य खलु पुन. शारिपुत्र तथागतस्य तेषा च मनुष्याणामपरिमितमायु प्रमाणम् । तेन कारणेन स तथागतोऽमितायुर्नामोच्यते । तस्य च शारिपुत्र तथागतस्य दश कल्पा अनुत्तरा सम्यक्सबोधिमभिसबुद्धस्य ॥ ८ ॥

तत्किं मन्यसे शारिपुत्र केन कारणेन स तथागतोऽमिताभो नामोच्यते ? तस्य खलु पुनः शारिपुत्र तथागतस्याभा अप्रतिहता सर्वबुद्धक्षेत्रेषु । तेन कारणेन स तथागतोऽमिताभो नामोच्यते । तस्य च शारिपुत्र तथागतस्याप्रमेय. श्रावकसघो येषा न सुकर प्रमाणमाख्यातु M 96 शुद्धानामर्हताम् । एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहै· समलकृत तद्बुद्धक्षेत्रम् ॥ ९ ॥

पुनरपर शारिपुत्र ये अमितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपन्ना. शुद्धा बोधिसत्त्वा अविनिवर्तनीया एकजातिप्रतिबद्धास्तेषा शारिपुत्र बोधिसत्त्वाना न सुकर प्रमाण-

माख्यातुमन्यत्राप्रमेयासख्येया इति सख्या गच्छन्ति। तत्र खलु पुनः शारिपुत्र बुद्धक्षेत्रे सत्त्वै॰ प्रणिधान कर्तव्यम्। तत्कस्माद्धेतो॰ ? यत्र हि नाम तथारूपै सत्पुरुषैः सह समवधानं भवति। नावरमात्रेकेण शारिपुत्र कुशलमूलेन अमितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपद्यन्ते। यः कश्चिच्छारिपुत्र कुलपुत्रो वा कुलदुहिता वा तस्य भगवतोऽमितायुषस्तथागतस्य नामधेय श्रोष्यति, श्रुत्वा च मनसिकरिष्यति, एकरात्र वा द्विरात्र वा त्रिरात्र वा चतूरात्र वा पञ्चरात्र वा षड्रात्र वा सप्तरात्र वाविक्षिप्तचित्तो मनसिकरिष्यति, यदा स कुलपुत्रो वा कुलदुहिता वा काल करिष्यति, तस्य काल कुर्वत॰ सोऽमितायुस्तथागत॰ श्रावकसघपरिवृतो बोधिसत्त्वगणपुरस्कृत॰ पुरतः स्थास्यति। सोऽविपर्यस्तचित्तः काल करिष्यति च। स काल कृत्वा तस्यैवामितायुषस्तथागतस्य बुद्धक्षेत्रे सुखावत्या लोकधातावुपपत्स्यते। तस्मात्तर्हि शारिपुत्र इदमर्थवश सपश्यमान एव वदामि—सत्कृत्य कुलपुत्रेण वा कुलदुहित्रा वा तत्र बुद्धक्षेत्रे चित्तप्रणिधान कर्तव्यम्॥ १०॥

M 97 तद्यथापि नाम शारिपुत्र अहमेतर्हि ता परिकीर्तयामि, एवमेव शारिपुत्र पूर्वस्या दिशि अक्षोभ्यो नाम तथागतो मेरुध्वजो नाम तथागतो महामेरुर्नाम तथागतो मेरुप्रभासो नाम तथागतो मञ्जुध्वजो नाम तथागत॰। एवप्रमुखाः शारिपुत्र पूर्वस्या दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्तः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ ११॥

एवं दक्षिणस्या दिशि चन्द्रसूर्यप्रदीपो नाम तथागतो यशःप्रभो नाम तथागतो महार्चिःस्कन्धो नाम तथागतो मेरुप्रदीपो नाम तथागतोऽनन्तवीर्यो नाम तथागत॰। एवप्रमुखाः शारिपुत्र दक्षिणस्या दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्त॰ स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ १२॥

एव पश्चिमाया दिशि अमितायुर्नाम तथागतोऽमितस्कन्धो नाम तथागतोऽमितध्वजो नाम तथागतो महाप्रभो नाम तथागतो महारत्नकेतुर्नाम तथागतः शुद्धरश्मिप्रभो नाम तथागत॰। एवप्रमुखा॰ शारिपुत्र पश्चिमाया दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्त॰ स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ १३॥

एवमुत्तराया दिशि महार्चिःस्कन्धो नाम तथागतो वैश्वानरनिर्घोषो नाम तथागतो
M 98 दुन्दुभिस्वरनिर्घोषो नाम तथागतो दुष्प्रधर्षो नाम तथागतः आदित्यसभवो नाम तथागतो जलेनिप्रभो नाम तथागत॰ प्रभाकरो नाम तथागतः। एवप्रमुखाः शारिपुत्र उत्तराया दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्त॰ स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ १४॥

एवमधस्ताया दिशि सिंहो नाम तथागतो यशो नाम तथागतो यशःप्रभासो नाम तथागतो धर्मो नाम तथागतो धर्मधरो नाम तथागतो धर्मध्वजो नाम तथागतः। एवप्रमुखाः शारिपुत्र अधस्ताया दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्त स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ १५॥

एवमुपरिष्ठाया दिशि ब्रह्मघोषो नाम तथागतो नक्षत्रराजो नाम तथागत इन्द्रकेतुध्वजराजो नाम तथागतो गन्धोत्तमो नाम तथागतो गन्धप्रभासो नाम तथागतो महार्चिस्कन्धो नाम तथागतो रत्नकुसुमसपुष्पितगात्रो नाम तथागत सालेन्द्रराजो नाम तथागतो रत्नोत्पलश्रीर्नाम तथागत सर्वार्थदर्शी नाम तथागत सुमेरुकल्पो नाम तथागत। एवप्रमुखा शारिपुत्र उपरिष्ठाया दिशि गङ्गानदीवालुकोपमा बुद्धा भगवन्त स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेन्द्रियेण सछादयित्वा निर्वेठन कुर्वन्ति। प्रतीयथ यूयमिदमचिन्त्यगुणपरिकीर्तन सर्वबुद्धपरिग्रह नाम धर्मपर्यायम्॥ १६॥

तत्किं मन्यसे शारिपुत्र केन कारणेनाय धर्मपर्याय सर्वबुद्धपरिग्रहो नामोच्यते? M 99
ये केचिच्छारिपुत्र कुलपुत्रा वा कुलदुहितरो वा अस्य धर्मपर्यायस्य नामधेय श्रोष्यन्ति, तेषा च बुद्धाना भगवता नामधेय धारयिष्यन्ति, सर्वे ते बुद्धपरिगृहीता भविष्यन्ति, अविनिवर्तनीयाश्च भविष्यन्ति अनुत्तराया सम्यक्सबोधौ। तस्मात्तर्हि शारिपुत्र श्रद्दधाध्व प्रतीयथ मा काङ्क्षयथ मम च तेषा च बुद्धाना भगवताम्। ये केचिच्छारिपुत्र कुलपुत्रा वा कुलदुहितरो वा तस्य भगवतोऽमितायुषस्तथागतस्य बुद्धक्षेत्रे चित्तप्रणिधान करिष्यन्ति, कृत वा कुर्वन्ति वा, सर्वे तेऽविनिवर्तनीया भविष्यन्त्यनुत्तराया सम्यक्सबोधौ। तत्र च बुद्धक्षेत्र उपपत्स्यन्ति, उपपन्ना वा उपपद्यन्ति वा। तस्मात्तर्हि शारिपुत्र श्राद्धैः कुलपुत्रैः कुलदुहितृभिश्च तत्र बुद्धक्षेत्रे चित्तप्रणिधिरुत्पादयितव्यः॥ १७॥

तद्यथापि नाम शारिपुत्र अहमेतर्हि तेषा बुद्धाना भगवतामेवमचिन्त्यगुणान् परिकीर्तयामि, एवमेव शारिपुत्र ममापि ते बुद्धा भगवन्त एवमचिन्त्यगुणान् परिकीर्तयन्ति। सुदुष्कर भगवता शाक्यमुनिना शाक्याधिराजेन कृतम्। सहाया लोकधातावनुत्तरा सम्यक्सबोधिमभिसबुध्य सर्वलोकविप्रत्ययनीयो धर्मो देशितः कल्पकषाये सत्त्वकषाये दृष्टिकषाय आयुष्कषाये क्लेशकषाये॥ १८॥

तन्ममापि शारिपुत्र परमदुष्कर यन्मया सहाया लोकधातावनुत्तरा सम्यक्सबोधिमभिसबुध्य सर्वलोकविप्रत्ययनीयो धर्मो देशित. सत्त्वकषाये दृष्टिकषाये क्लेशकषाय आयुष्कषाये कल्पकषाये॥ १९॥

इदमवोचद्भगवानात्तमना.। आयुष्मान् शारिपुत्रस्ते च भिक्षवस्ते च बोधिसत्त्वाः सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्॥ २०॥

सुखावतीव्यूहो नाम महायानसूत्रम्॥

[संक्षिप्तमातृका।]

१८

अवलोकितेश्वरगुण-

# कारण्डव्यूहः ।

ओ नमो रत्नत्रयाय ॥

श्रीआर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय ॥

## १. जेतवनविहारवर्णनं प्रथमं प्रकरणम् ।

S 1 एव मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवनेऽनाथ-
पिण्डदस्यारामे महता भिक्षुसघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतै सबहुलैश्च बोधिसत्त्व-
शतसहस्रैः । तद्यथा—वज्रपाणिना च बोधिसत्त्वेन महासत्त्वेन । ज्ञानदर्शनेन च बोधि-
सत्त्वेन महासत्त्वेन । वज्रसेनेन च बोधिसत्त्वेन महासत्त्वेन । गुह्यगुप्तेन च बोधिसत्त्वेन
महासत्त्वेन । आकाशगर्भेण च बोधिसत्त्वेन महासत्त्वेन । सूर्यगर्भेण च बोधिसत्त्वेन
महासत्त्वेन । अनिक्षिप्तधुरेण च बोधिसत्त्वेन महासत्त्वेन । रत्नपाणिना च बोधिसत्त्वेन
महासत्त्वेन । समन्तभद्रेण च बोधिसत्त्वेन महासत्त्वेन । महास्थामप्राप्तेन च बोधिसत्त्वेन
महासत्त्वेन । सर्वनीवरणविष्कम्भिना च बोधिसत्त्वेन महासत्त्वेन । सर्वशूरेण च बोधि-
सत्त्वेन महासत्त्वेन । भैषज्यसेनेन च बोधिसत्त्वेन महासत्त्वेन । अवलोकितेश्वरेण च
S 2 बोधिसत्त्वेन महासत्त्वेन । वज्रमतिना च बोधिसत्त्वेन महासत्त्वेन । सागरमतिना च
बोधिसत्त्वेन महासत्त्वेन । धर्मधरेण च बोधिसत्त्वेन महासत्त्वेन । पृथिवीवरलोचनेन च
बोधिसत्त्वेन महासत्त्वेन । आश्वासहस्तेन च बोधिसत्त्वेन महासत्त्वेन । मैत्रेयेण
च बोधिसत्त्वेन महासत्त्वेन । एवंप्रमुखैरशीतिकोट्यो बोधिसत्त्वा. सनिषण्णाः ।
अन्ये च द्वात्रिंशद्देवनिकाया देवपुत्रा. सनिपतिता महेश्वरनारायणदेवपुत्रपूर्वंगमा । शक्रो
देवानामिन्द्रो ब्रह्मा च सहापतिश्चन्द्रादित्यवायुवरुणादयो देवपुत्राः सनिपतितास्तस्मिन्
पर्षदि । अनेकानि च नागराजशतसहस्राणि सनिपतितानि । तद्यथा—उपलालश्च नागराज. ।
एलपत्रश्च नागराज. । तिमिंगिरश्च नागराजः । गवापतिश्च नागराजः । शतशीर्षश्च नाग-
राजः । हुलुरश्च नागराजः । बहूदकश्च नागराजः । तक्षकश्च नागराजः । गोशीर्षश्च
नागराजः । मृगशीर्षश्च नागराजः । नन्दोपनन्दौ च नागराजौ । वात्सीपुत्रश्च नागराज· ।
एवप्रमुखाण्यनेकानि नागराजशतसहस्राणि सनिपतितानि । अनेकानि च गन्धर्वराजशतसह-
स्राणि सनिपतितानि । तद्यथा—दुन्दुभिस्वरश्च गन्धर्वराजः । मनोज्ञस्वरश्च गन्धर्वराजः । सहस्र-
भुजश्च गन्धर्वराज. । सहापतिश्च गन्धर्वराजः । शरीरप्रह्लादनश्च गन्धर्वराज. । निर्नादितभूर्यश्च
गन्धर्वराजः । अलकारभूषितश्च गन्धर्वराजः । कुमारदर्शनश्च गन्धर्वराजः । सुबाहुयुक्तश्च
गन्धर्वराज. । धर्मप्रियश्च गन्धर्वराज· । एवंप्रमुखाण्यनेकानि गन्धर्वराजशतसहस्राणि सनिपति-
तानि तस्मिन् पर्षदि । अनेकानि च किन्नरराजशतसहस्राणि सनिपतितानि । तद्यथा—सुमुखश्च
S 3 किन्नरराजः । रत्नकिरीटी च किन्नरराजः । स्वातिमुखश्च किन्नरराजः । प्रहसितश्च किन्नरराजः ।

चक्रव्यूहश्च किन्नरराजः । पुष्पावकीर्णश्च किन्नरराजः । मणिश्च किन्नरराजः । प्रलम्बोदरश्च किन्नरराजः । दृढवीर्यश्च किन्नरराज. । सुयोधनश्च किन्नरराजः । शतमुखश्च किन्नरराजः । द्रुमश्च किन्नरराजः । एवप्रमुखाणि अनेकानि किन्नरराजशतसहस्राणि सनिपतितानि तस्मिन् पर्षदि । अनेकाश्चाप्सरसःशतसहस्राः सनिपतिता । तद्यथा–तिलोत्तमा नामाप्सरसा । सुव्यूहा नामाप्सरसा । सुवर्णमेखला नामाप्सरसा । विभूषिता नामाप्सरसा । कर्णधारा नामाप्सरसा । अमृतबिन्दुर्नामाप्सरसा । परिशोभितकाया नामाप्सरसा । मणिप्रस्थनामाप्सरसा । चूडका नामाप्सरसा । मृदुका नामाप्सरसा । पञ्चभूर्याभिमुखा नामाप्सरसा । रतिकरा नामाप्सरसा । काञ्चनमाला नामाप्सरसा । नीलोत्पला नामाप्सरसा । धर्माभिमुखा नामाप्सरसा । सक्रीडा नामाप्सरसा । कल्याकरा नामाप्सरसा । सुव्यूहमुखा नामाप्सरसा । केयूरधरा नामाप्सरसा । दानददा नामाप्सरसा । शशी नामाप्सरसा । एवप्रमुखाण्यनेकाप्सरसःशतसहस्राणि सनिपतितानि तस्मिन् पर्षदि । अनेकानि च नागकन्याशतसहस्राणि सनिपतितानि । तद्यथा–विभूषणधरा नाम नागकन्या । खातिमुखा नाम नागकन्या । जयश्रीर्नाम नागकन्या । विजयश्रीर्नाम नागकन्या । मुचिलिन्दा नाम नागकन्या । त्रिजटा नाम नागकन्या । विद्युल्लोचना नाम नागकन्या । खातिगिरिर्नाम नागकन्या । शतपरिवारा नाम नागकन्या । विद्युत्प्रभा नाम नागकन्या । महौषधिर्नाम नागकन्या । जलबिन्दुर्नाम नागकन्या । एकशीर्षा नाम नागकन्या । शतबाहुर्नाम नागकन्या । प्रसती नाम नागकन्या । अनाकृच्छ्रगता नाम नागकन्या । सुभूषणा नाम नागकन्या । पाण्डलमेघा नाम नागकन्या । रथाभिरूढा नाम नागकन्या । त्यागगता नाम नागकन्या । अभिन्नपरिवारा नाम नागकन्या । पुलिन्दा नाम नागकन्या । सागरकुक्षिर्नाम नागकन्या । छत्रमुखा नाम नागकन्या । धर्मपीठा नाम नागकन्या । मुखरा नाम नागकन्या । वीर्या नाम नागकन्या । सागरगम्भीरा नाम नागकन्या । मेरुश्रीर्नाम नागकन्या । एवप्रमुखाण्यनेकानि नागकन्याशतसहस्राणि सनिपतितानि तस्मिन् पर्षदि । अनेकानि च गन्धर्वकन्याशतसहस्राणि सनिपतितानि । तद्यथा–प्रियमुखा नाम गन्धर्वकन्या । प्रियंददा नाम गन्धर्वकन्या । सुदर्शना नाम गन्धर्वकन्या । वज्रश्रीर्नाम गन्धर्वकन्या । वज्रमाला नाम गन्धर्वकन्या । अनादर्शना नाम गन्धर्वकन्या । समालिनी नाम गन्धर्वकन्या । वनस्पतिर्नाम गन्धर्वकन्या । शतपुष्पा नाम गन्धर्वकन्या । मुकुलिता नाम गन्धर्वकन्या । रत्नमाला नाम गन्धर्वकन्या । मुदितपुष्पा नाम गन्धर्वकन्या । सुकुक्षिर्नाम गन्धर्वकन्या । राजश्रीर्नाम गन्धर्वकन्या । दुन्दुभिर्नाम गन्धर्वकन्या । शुभमाला नाम गन्धर्वकन्या । विभूषितालकारा नाम गन्धर्वकन्या । अभिनमिता नाम गन्धर्वकन्या । धर्मकाङ्क्षिणी नाम गन्धर्वकन्या । धर्मंददा नाम गन्ववर्वकन्या । औदुम्बरा नाम गन्धर्वकन्या । शताकारा नाम गन्धर्वकन्या । पद्मावती नाम गन्धर्वकन्या । फलंददा नाम गन्धर्वकन्या । पद्मालंकारा नाम गन्धर्वकन्या । परिशोभितकाया नाम गन्धर्वकन्या । विलासेन्द्रगामिनी नाम गन्धर्वकन्या । पृथिवींददा नाम

S 4

S 5

गन्धर्वकन्या। सिंहगामिनी नाम गन्धर्वकन्या। कुमुदपुष्पा नाम गन्धर्वकन्या। मनोरमा
नाम गन्धर्वकन्या। दानददा नाम गन्धर्वकन्या। देववचना नाम गन्धर्वकन्या। क्षान्ति-
प्रिया नाम गन्धर्वकन्या। निर्वाणप्रिया नाम गन्धर्वकन्या। रत्नाङ्कुरा नाम गन्धर्वकन्या।
इन्द्रश्रीर्नाम गन्धर्वकन्या। इन्द्रमघश्रीर्नाम गन्धर्वकन्या। प्रजापतिनिवासिनी नाम
गन्धर्वकन्या। मृगराजिनी नाम गन्धर्वकन्या। स्फुरन्तश्रीर्नाम गन्धर्वकन्या। ज्वलन्त-
शिखरा नाम गन्धर्वकन्या। रागपरिमुक्ता नाम गन्धर्वकन्या। द्वेषपरिमुक्ता नाम
गन्धर्वकन्या। मोहपरिमुक्ता नाम गन्धर्वकन्या। सुजनपरिवारा नाम गन्धर्वकन्या।
रत्नपीठा नाम गन्धर्वकन्या। आगमनगमना नाम गन्धर्वकन्या। अग्निप्रभा नाम
गन्धर्वकन्या। चन्द्रबिम्बप्रभा नाम गन्धर्वकन्या। सूर्यलोचना नाम गन्धर्वकन्या।
सुवचा नाम गन्धर्वकन्या। एवंप्रमुखाण्यनेकानि गन्धर्वकन्याशतसहस्राणि सनिपतितानि
तस्मिन् पर्षदि। अनेकानि च किन्नरकन्याशतसहस्राणि सनिपतितानि। तद्यथा—मनसा
नाम किन्नरकन्या। मानसी नाम किन्नरकन्या। वायुवेगा नाम किन्नरकन्या। वरुणवेगा
नाम किन्नरकन्या। आकाशप्लवा नाम किन्नरकन्या। वेगजवा नाम किन्नरकन्या। लक्ष्मी-
S 6 ददा नाम किन्नरकन्या। सुदंष्ट्रा नाम किन्नरकन्या। अचलश्रीर्नाम किन्नरकन्या। धातु-
प्रिया नाम किन्नरकन्या। अवलोकितलक्ष्मीर्नाम किन्नरकन्या। कुटिला नाम किन्नरकन्या।
वज्रमुष्टिर्नाम किन्नरकन्या। कपिला नाम किन्नरकन्या। सुभूषणभूपिता नाम किन्नरकन्या।
विस्तीर्णललाटा नाम किन्नरकन्या। सुजनपरिसेविता नाम किन्नरकन्या। सहापतिर्नाम
किन्नरकन्या। आकाशरक्षिता नाम किन्नरकन्या। व्यूहराजेन्द्रा नाम किन्नरकन्या।
मणिचूडा नाम किन्नरकन्या। मणिवारिणी नाम किन्नरकन्या। मणिरोचनी नाम
किन्नरकन्या। विद्वज्जनपरिसेविता नाम किन्नरकन्या। शताकरा नाम किन्नरकन्या।
आयुर्ददा नाम किन्नरकन्या। तथागतकोशपरिपालिता नाम किन्नरकन्या। धर्मधातुपरि-
रक्षिणी नाम किन्नरकन्या। सततपरिग्रहधर्मकाङ्क्षिणी नाम किन्नरकन्या। सदानुकालदर्शिनी
नाम किन्नरकन्या। नूपुरोत्तमा नाम किन्नरकन्या। लक्षणोत्तमा नाम किन्नरकन्या।
आश्वासनी नाम किन्नरकन्या। विमोक्षकरा नाम किन्नरकन्या। सदानुवृत्तिर्नाम किन्नरकन्या।
सवेगधारिणी नाम किन्नरकन्या। खड्गज्वलना नाम किन्नरकन्या। पृथिव्युपसक्रमणा नाम
किन्नरकन्या। सुरेन्द्रमाला नाम किन्नरकन्या। सुरेन्द्रा नाम किन्नरकन्या। असुरेन्द्रा नाम
किन्नरकन्या। मुनीन्द्रा नाम किन्नरकन्या। गोत्रक्षान्तिर्नाम किन्नरकन्या। योगानुगता
नाम किन्नरकन्या। बह्वाश्रया नाम किन्नरकन्या। शतायुधा नाम किन्नरकन्या। विभूषिता-
S 7 लङ्कारा नाम किन्नरकन्या। मनोहरा नाम किन्नरकन्या। एवंप्रमुखाण्यनेकानि किन्नर-
कन्याशतसहस्राणि सनिपतितानि। अनेकान्युपासकोपासिकाशतसहस्राणि सनिपतितानि,
अनेकानि च परिव्राजकनिर्ग्रन्थशतसहस्राणि सनिपतितानि॥

यदा महासनिपातश्चाभूत्, तदा अवीचौ महानरके रश्मयो निश्चरन्ति स्म।
निश्चरित्वा जेतवनविहारमागच्छन्ति स्म। सर्वे ते विहारपरिशोभिता एव दृश्यन्ते स्म। दिव्य-

मणिरत्नोपलिप्ताः स्तम्भाः परिशोभिता एव दृश्यन्ते स्म । कूटागाराः सुवर्णोपचिता दृश्यन्ते स्म । लयने लयने सुवर्णरूप्यमयानि द्वाराणि दृश्यन्ते स्म । लयने लयने सुवर्णरूप्यमयानि सोपानानि दृश्यन्ते स्म । सुवर्णरूप्यमयानि प्रासादानि, रूप्यमये प्रासादे सुवर्णमयानि स्तम्भानि दिव्यरत्नोपचितानि । सुवर्णमये प्रासादे रूप्यमयानि स्तम्भानि दिव्यरत्नोपशोभितानि । सुवर्णमये प्रासादे रूप्यमयानि स्तम्भानि दिव्यरत्नोपशोभितानि । बहिर्जेतवनस्य पुरत उद्याने नानाविधानि कल्पवृक्षाणि दृश्यन्ते स्म । सुवर्णदण्डानि रूप्यपत्राणि नानाविधालङ्कारप्रलम्बितानि । विचित्राणि चीवरवस्त्रप्रलम्बितानि । कौशिकवस्त्रप्रलम्बितानि । मुक्ताहारशतसहस्रप्रलम्बितानि । विविधमौलीकुण्डलस्रग्दामकेयूरनूपुरशतसहस्राणि प्रलम्बितानि । कर्णपृष्ठोत्तर्याणि स्तम्भानि मणिरत्नकटककेयूरकाणि प्रलम्बितानि सदृश्यन्ते स्म । तेन तत्र च रम्यावभासे तादृशानि कल्पवृक्षशतसहस्राणि प्रादुर्भूतानि । तस्मिन्नेव जेतवनविहारे वज्रमयाणि सोपानानि दृश्यन्ते स्म, द्वारकोष्ठे च मुक्तापटकलापप्रलम्बितानि । अनेकानि पुष्करिणीशतसहस्राणि प्रादुर्भूतानि । तत्र S 8
कानिचिदष्टाङ्गोपेतवारिणा परिपूर्णानि । कानिचिन्नानाविधपुष्पपरिपूर्णानि । तद्यथा—उत्पलपद्मकुमुदपुण्डरीकमान्दारवमहामान्दारववडौदुम्बरपुष्पपरिपूर्णानि । अन्यानि च पुनस्तत्र विविधानि काष्ठपुष्पाण्युत्पद्यन्ते । तद्यथा—चम्पकाशोककरवीरपाटलानिर्मुक्तकसुमनागन्धवार्षिकाणि । एतानि मनोरमाणि काष्ठपुष्पाणि प्रादुर्भूतानि । इत्येव तस्मिन् जेतवनविहारे समन्ततः परिशोभितानि दृश्यन्ते स्म ॥

इति जेतवनविहारवर्णन नाम प्रथमप्रकरणम् ॥

## अवीचिशोषणं नाम द्वितीयं प्रकरणम् ।

अथ तस्मिन्नेव पर्षन्मध्ये सर्वनीवरणविष्कम्भी नाम बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—परमाश्चर्याद्भुतप्राप्तोऽह भगवन् । कुत इमे रश्मय. समागच्छन्ति स्म ? कस्यैष तथागतस्य विषयप्रभावः ? इति । भगवानाह—नैष तथागतप्रभाव. । कुलपुत्रोऽवीचौ महानरके आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः प्रविष्टः । सत्त्वान् परिमोचयित्वा च प्रेतनगर प्रविशति । तेनेमे रश्मय उत्सृष्टा. ॥

अथ सर्वनीवरणविष्कम्भी बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—भगवन्, S 9
अवीचौ महानरके कानि सत्त्वानि सविद्यन्ते ? यत्र वीचिर्न प्रज्ञायते । तत्रास्य धर्मं देशयति—यस्याः कुड्यप्राकारपर्यन्ता अयोमयी भूमि. समनन्तरप्रज्वलितैकज्वालीभूता, विस्फुरद्रत्नकरण्डकवत् संदृश्यते । तस्मिन्नेव महानरके आक्रन्दती कुम्भी तिष्ठति । तस्यामेव कुम्भ्यामनेकानि सत्त्वकोटीनियुतशतसहस्राणि प्रक्षिप्तानि । यथा बह्वुदकाया स्थाल्या मुद्गा वा माषा वा चोर्ध्वं गच्छन्तोऽधो गच्छन्त. खिद्यन्ते पच्यन्ते, एव ते सत्त्वा

अवीचौ महानरके कायिक दुःखं प्रत्यनुभवन्ति । तत्कथं भगवन् अवीचौ महानरकेऽवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः प्रविशति ? भगवानाह—यथा कुलपुत्र राजा चक्रवर्ती दिव्यरत्नमयोद्याने प्रविशति महत्या चक्रवर्तिराज्यसमृद्ध्या, एवमेव कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तस्मिन्नवीचौ महानरके प्रविशति । न च पुनस्तस्य कायोऽन्यथाभाव गच्छति । यदा अवीचिमहानरकसमीपमुपसक्रामति, तदा अवीचिर्महानरकः शीतीभावमनुगच्छति । तदा ते यमपालपुरुषा॰ सवेगचित्ताः परमोद्विग्नाश्चिन्ता समापद्यन्ते—किमस्मिन्नवीचौ महानरकेऽशुभनिमित्त प्रादुर्भूतम् ? यदावलोकितेश्वरो बोधिसत्त्वो महासत्त्व. प्रविशति, तदा तस्मिन् शकटचक्रप्रमाणमात्राणि पद्मानि प्रादुर्भूतानि । सा च कुम्भी विस्फुटिता । तस्मिन्नेवाग्निखदाया मधोः पुष्करिणी प्रादुर्भूता ॥

S 10 अथ ते यमपालपुरुपा असिमुसलभिन्दिपालतोमरगदाचक्रत्रिशूलादीनुपसगृह्य सर्वं चावीचिपरिष्कार गृहीत्वा येन स यमो धर्मराजस्तेनोपसक्रान्ता. । उपसक्रम्य यम धर्मराजमेतदवोचन्—यत्खलु देवो जानीयात् प्रथमम्—सा चास्माक कर्मभूमिर्निरवशेष परिक्षीणा अभिरमणीया सवृत्ता सर्वसुखसमर्पिता । यमो धर्मराजस्तानुवाच—किंकारण युष्माकमपि कर्मभूमिः परिक्षीणा ?

यमपालपुरुषा ऊचुः—अपि च । यत्खलु देवो जानीयात् प्रथमम्—तस्मिन्नवीचिमहानरकेऽशुभनिमित्त प्रादुर्भूतम् । सर्वं प्रशान्त शीतीभावमुपगतम् । कामरूपी च तत्र पुरुषः प्रविष्टो जटामुकुटधरो दिव्यालकारभूषितशरीरः परममैत्रमानस. सुवर्णबिम्बमिव दृश्यते । स च तादृशः पुरुषस्तत्र प्रविष्टः । तस्य च प्रविष्टमात्राच्छकटचक्रमात्राणि पद्मानि प्रादुर्भूतानि । सा च कुम्भी विस्फुटिता । तस्मिन्नेवाग्निखदाया मधोः पुष्करिणी प्रादुर्भूता ॥

अथ स यमो धर्मराजश्चिन्तामापेदे—कस्य पुनर्देवस्याय प्रभावः ? अथ महेश्वरस्य महर्द्धिकस्य, अथवा नारायणस्य पञ्चमहासमुद्रनमस्कृतस्य, अथवा अन्येषां महर्द्धिकदेवपुत्राणामपि वरप्रदानेनेदृश फलविशेष सवृत्तम् ? ते चेह भूमावनुप्राप्ताः ? अथवा राक्षस उत्पन्नः एष महारावणप्रतिद्वन्द्वी ? एव स ततः स्थितश्चिन्तयामास । स च दिव्येन चक्षुषा व्यवलोक्य तच्च देवनिकायेन पश्यति स्म—ईदृश वरं कस्यान्यस्य ? अथ स पुनरेवावीचौ महानरके व्यवलोकयति स्म । व्यवलोक्य तस्मिन्नेवावीचौ महानरकेऽवलोकितेश्वरं बोधिसत्त्व महासत्त्वमेव पश्यति स्म ॥

S 11 अथ स यमो धर्मराजो येनावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तेनोपसंक्रान्तः । उपसक्रम्य भगवतः पादौ शिरसाभिवन्द्य स्तोत्रविशेष कर्तुमारब्धः । नमोऽस्त्ववलोकितेश्वराय, महेश्वराय, पद्मश्रिये, वरदाय, वशकराय, पृथिवीवरलोचनकराय, जगदाश्वासनकराय, शतसहस्रभुजाय, कोटीशतसहस्रनेत्राय, एकादशशीर्षाय, वडवामुखपर्यन्ताय, धर्मप्रियाय, सर्वसत्त्वपरिमोक्षणकराय, कूर्ममकरमत्स्याश्वासनकराय, ज्ञानराश्युत्तमकराय, प्रियंददाय,

रत्नश्रिये, उत्तमाय, अवीचिसंशोषणकराय, ज्ञानलक्ष्म्यलंकृताय, ज्ञानप्रियाय, सर्वदेवपूजितनमस्कृताय, वन्दिताय, अभयददाय, धर्मदीपकराय, कामरूपाय, गन्धर्वरूपाय, काञ्चनपर्वतसमारूढाय, सागरकुक्षिगम्भीरधर्माय, परमार्थयोगमनुप्राप्ताय, समुखसदर्शनकराय, अनेकसमाधिशतसहस्रावकीर्णाय, अभिरतिकराय, विच्छुरितगात्राय, ऋषिपुगवकराय, हडिनिगडबन्धनभयत्रस्तमार्गपरिमोक्षणकराय, सर्वसत्त्वाभावसयुक्ताय, बहुपरिवारसवर्तनीयाय, उपचितकराय, चिन्तामणिरत्नाय, निर्वाणमार्गोपदर्शनकराय, प्रेतनगरसमुच्छोषणकराय, छत्रभूतजगत्कराय, व्याधिपरिमोचनकराय, नन्दोपनन्दनागराजकृतयज्ञोपवीताय, अमोघपाशसदर्शनकराय, अनेकमन्त्रशतावकीर्णाय वज्रपाणिविद्रावणकराय, त्रिलोकभयकराय, यक्षराक्षसभूतप्रेतवेतालडाकिनीकूष्माण्डापस्मारसत्रासनकराय, नीलोत्पलचारुनेत्राय, गम्भीरधीराय, विद्याधिपतये, सर्वक्लेशविमोक्षणकराय, विविधबोधिमार्गोपचिताय, समारूढमोक्षमार्गप्रवराय, आश्रयचित्तबोधिमार्गोपचिताय, प्रेतगतिपरिमोक्षणकराय, परमाणुरजोपमसमाधिशतसहस्राकीर्णाय । एव यमो धर्मराजो विशेषतर स्तोतावधान कृत्वा पुनरपि S 12
यमो धर्मराजः त्रि· प्रदक्षिणीकृत्य तत्रैव प्रक्रान्तोऽभूत् ॥

इति अवीचिशोषण नाम द्वितीय प्रकरणम् ॥

## सत्त्वधातुपरिमोक्षणं तृतीयं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कदा भगवन्नागच्छति अवलोकितेश्वरो बोधिसत्त्वो महासत्त्व. ? भगवानाह—एष कुलपुत्र अवीचीमहानरकान्निष्क्रम्य प्रेतनगर प्रविष्ट. । तत्रानेकानि प्रेतशतसहस्राणि पुरस्ताद्धावन्ति स्म दग्धस्थूणाकृतिभिरस्थियन्त्रवदुच्छ्रितैः पर्वतोदरसनिभैः सूचीच्छिद्रोपममुखै. । यदावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः प्रेतनगरमुपसक्रामति, तदा स प्रेतनगर. शीतीभावमनुगच्छति, सा च वज्राशनिर्व्युपशमिता, स च द्वारपालपुरुष उद्बद्धभिण्डिपालः कालकूटव्यग्रहस्तो लोहिताक्षः । सततमस्यानुभावेन मैत्रचित्त सभावयति—न च मे ईदृशेन कर्मभूमिना कृत्यम् ॥

अथार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्त च सत्त्वनिकाय दृष्ट्वा महाकरुणाचित्तमुत्पाद्य दशभ्यो हस्ताङ्गुलीभ्यो दश वैतरणीर्निष्क्रामयति । दशभ्यः पादाङ्गुलीभ्यो दश वैतरणीर्निष्क्रामयति । अतिकरुणाभिभूतचेतसा अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य तेषा सत्त्वानामन्तिके सर्वरोमकूपेभ्योऽष्टाङ्गवारिपरिपूर्णा महानद्यो निष्क्रामन्ति । यदा च ते प्रेतसत्त्वास्तदुदकमास्वादयन्ति, तदा ते विपुलकण्ठा भवन्ति, परिपूर्णगात्राश्च भवन्ति । तेन चैते दिव्यरसरसाग्रोपेतेनाहारेण सतर्पिताश्च भवन्ति । तदा मानुषिकी चेतनामुपादायैव सासारिकी चिन्ता विचिन्तयन्ति—अहो बत ते जाम्बुद्वीपका S 13
मनुष्याः सुखिताः, ये शीतला छाया परिसेवन्ति । सुखितास्ते जाम्बुद्वीपका मनुष्या

ये मातापितरौ सततं परिग्रहमुपस्थानं कुर्वन्ति । सुखितास्ते सत्पुरुषा ये कल्याणमित्रं सततसमितमन्वेषयन्ति, परिग्रहं परिपालयन्ति । ते सत्पुरुषाः सचेतना ये महायानं सततसमितमवगाहयन्ति । ते सत्पुरुषा ये आर्यांस्तान् गोमार्गाय वासमुपवसन्ति । ते सत्पुरुषा ये धर्मदण्डिकामाकोटयन्ति । ते सत्पुरुषा ये त्रुटितस्फुटितान् विहारान् प्रतिसंस्कारं कुर्वन्ति, प्रतिष्ठापयन्ति । ते सत्पुरुषा ये पूर्विकानि स्तूपबिम्बानि त्रुटितस्फुटितानि विशीर्णभूतानि प्रतिसंस्कारं कुर्वन्ति । ते सत्पुरुषा ये धर्मभाणकाल्लेखकान् धारकान् वाचकान् सूत्रराजस्य श्रावकान् सततसमितं परिसेवन्ति चोपतिष्ठन्ति च । ते सत्पुरुषा ये तथागतप्रातिहार्याणि विविधानि च तथागतचक्रमणानि धर्मसराणि च पश्यन्ति । ते सत्पुरुषा ये प्रत्येकबुद्धचक्रमणानि पश्यन्ति । ते सत्पुरुषा येऽर्हच्चक्रमणानि पश्यन्ति । ते सत्पुरुषा ये बोधिसत्त्वविकुर्वितानि चक्रमणानि पश्यन्ति । इत्येवं ते प्रेतविषयं शरीरमनुविचिन्त्य मानसानां कामानामभावोपपत्तिं प्रति परित्यजन्ति । तदा तस्य सकाशात् 'कारण्डव्यूह'महायानसूत्ररत्नराजशब्दो निश्चरति । तदा तेषां विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा सर्वे ते सुखावत्यां लोकधातावुपपन्ना आकाङ्क्षित-
S 14 मुखा नाम बोधिसत्त्वा उपपन्नाः । अथावलोकितेश्वरो यदा ते सत्त्वधातवः परिमोक्षिताः सुपरिमुक्ताश्च, यदा ते सर्वसत्त्वा बोधिसत्त्वभूमावुपपन्नाः, तदा ततः प्रेतनगरात्पुनरपि निष्क्रामति ॥

इति सत्त्वधातुपरिमोक्षणं नाम तृतीयं प्रकरणम् ॥

---

## चन्द्राद्युत्पत्तिर्नाम चतुर्थं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—भगवन्, अद्यापि नागच्छत्यवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः ? भगवानाह—अनेकानि कुलपुत्र सत्त्वकोटिनियुतशतसहस्राणि परिपाचयति । दिने दिने स आगत्य परिपाचयति । नास्ति कुलपुत्र ईदृशं प्रतिभानं तथागतानामपि यादृशमार्यावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

अथ सर्वनीवरणविष्कम्भी आह—केन प्रकारेण भगवन् ? भगवानाह—भूतपूर्वं कुलपुत्र विपश्यी नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तेन कालेन तेन समयेनाहं सर्वनीवरणनिष्कम्भिन् सुगन्धमुखो नाम वणिक्पुत्रोऽभूवम् । तदा मे श्रुता विपश्यिनस्तथागतस्य सकाशादार्यावलोकितेश्वरस्य गुणोद्भावना ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कीदृशी त्वया भगवन् गुणोद्भावना श्रुता ? एताः सर्वाः प्रवदताम् । विघ्नराज भगवन् मे प्रबोधय, यादृशी त्वया भगवन् गुणोद्भावना आर्यावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य श्रुता ॥

भगवानाह—चक्षुषोश्चन्द्रादित्यावुत्पन्नौ, ललाटान्महेश्वर., स्कन्धेभ्यो ब्रह्मादय., हृदयान्नारायण', दंष्ट्राभ्या सरस्वती, मुखतो वायवो जाताः, धरणी पादाभ्याम्, वरुणश्चोदरात् । यदैते देवा जाता आर्यावलोकितेश्वरस्य कायात्, अथार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो महेश्वर देवपुत्रमेतदवोचत्—भविष्यसि त्व महेश्वरः कलियुगे प्रतिपन्ने । कष्टसत्त्वधातुसमुत्पन्न आदिदेव आख्यायसे स्रष्टार कर्तारम्, ते सर्वसत्त्वा बोधिमार्गेण विप्रहीणा भविष्यन्ति, य ईदृशपृथग्जनेषु सत्त्वेषु साकथ्य कुर्वन्ति ॥

आकाश लिङ्गमित्याहु' पृथिवी तस्य पीठिका ।
आलय. सर्वभूतानां लीलया लिङ्गमुच्यते ॥ १ ॥

ईदृश मया कुलपुत्र विपश्यिनस्तथागतस्य सकाशादार्यावलोकितेश्वरस्य गुणोद्भावना श्रुता ॥

तदप्यतिक्रम्य शिखी नाम तथागतोऽर्हन् सम्यक्सबुद्धो बभूव विद्याचरणसपन्न' सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान् । तेन कालेन तेन समयेनाह सर्वनीवरणविष्कम्भिन् दानशूरो नाम बोधिसत्त्वो महासत्त्वोऽभूवम् । तस्य शिखिनस्तथागतस्य सकाशादवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य गुणोद्भावना श्रुता ॥

इति चन्द्राद्युत्पत्तिर्नाम चतुर्थं प्रकरणम् ॥

---

## विविधरश्मिनिःसरणं पञ्चमं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कीदृशी भगवस्त्वया गुणोद्भावना S 16
अवलोकितेश्वरस्य श्रुता ? भगवानाह—यदा सर्वदेवा नागा यक्षा गन्धर्वा राक्षसा असुरा मरुतो गरुडा गन्धर्वा किन्नरा महोरगा मनुष्या सनिपतिता सनिषण्णा अभूवन्, तदा भगवान् । महासंनिपात दृष्ट्वा तासा पर्षदा मध्ये धर्मसाकथ्य कर्तुमारब्ध. । तदा भगवतो मुखद्वारान्नानावर्णा अनेकरश्मयो निःसरन्ति स्म । तद्यथा—नीलपीतलोहितावदातमाञ्जिष्ठस्फटिकरजतसुवर्णनानाविधरश्मयो निश्चरन्ति स्म । निश्चरित्वा च दशदिग्विदिक्षु सर्वान् लोकान् धातूनवभास्य पुनरेवागत्य त शिखिन भगवन्त त्रि.प्रदक्षिणीकृत्य भगवतो मुखद्वारे प्रविष्टाः ॥

इति विविधरश्मिनि सरण नाम पञ्चम प्रकरणम् ॥

समाप्तोऽय सर्वनीवरणाविष्कम्भिसवादो नाम प्रथमः काण्डः ॥

---

## तथागतसंवादः षष्ठं प्रकरणम् ।

अथ तस्मिन्नेव पर्षदि रत्नपाणिर्नाम बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरा- S 17
सङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य भगवन्त-

मेतदवोचत्—किं कारण भगवन्, ईदृश निमित्त प्रादुर्भूत दर्शितम्? भगवानाह—एष कुलपुत्र अवलोकितेश्वरः सुखावत्या लोकधातोरागच्छति, तस्य आगच्छमानस्येद मयेदृशं निमित्त प्रादुर्भूत दर्शितम् ॥

अथ रत्नपाणिर्नाम बोधिसत्त्व आह—कीदृशानि तानि निमित्तानि? दर्शयतु भगवान्। भगवानाह—यदा कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्व आगच्छति, तदा विविधानि कल्पवृक्षा विस्तरन्ति, चूतवृक्षा विस्तरन्ति, कुन्दपुष्पाणि सतत जायन्ते, चम्पकवृक्षा अभिनमन्ति । अतिपुष्पावकीर्णा. पुष्करिण्य प्रादुर्भवन्ति । रत्नवृक्षशतानि ततो दृश्यन्ते । विविधानि पुष्पवर्षाणि पतन्ति, रत्नवर्षाणि च प्रवर्षन्ति, विविधानि च रत्नमणिमुक्तावज्रवैदूर्यशङ्खशिलाप्रवालजातरूपरजतताम्राणि प्रवर्षन्ति, दिव्यानि च वस्त्रवर्षाणि पतन्ति । तस्मिन्नेव विहारसमीपे सप्त रत्नानि प्रादुर्भूतानि । तद्यथा—हस्तिरत्न मणिरत्न अश्वरत्न स्त्रीरत्न गृहपतिरत्न परिणायकरत्नम् । एव सप्त रत्नानि प्रादुर्भूतानि । भूमिः सुवर्णनिर्भासा सदृश्यते । यदा आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सुखावत्या लोकधातोर्निष्क्रान्तः, तदा सर्वपृथिवी षड्विकार प्रकम्पिता ॥

अथ रत्नपाणिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—कस्य निमित्तानि भगवन्? S 18 भगवानाह—एष कुलपुत्र आर्यावलोकितेश्वरो महासत्त्वो बोधिसत्त्व आगच्छति, तस्यैष शुभनिमित्तमीदृश प्रादुर्भूतम् । यदा स चलति तदा मनोरम पद्मवर्षः पतति । तदा अवलोकितेश्वरो सहस्रपत्राणि पद्मानि सुवर्णदण्डानि वैदूर्यनिर्भासानि गृहीत्वा येन भगवास्तेनोपसक्रान्तः । उपसक्रम्य भगवत॰ पादौ शिरसाभिवन्द्य भगवतस्तानि पद्मान्युपनामयति स्म—इमानि ते भगवन्नमिताभेन तथागतेनार्हता सम्यक्सबुद्धेन प्रहितानि । स तथागत॰ पृच्छति अनातङ्कता लघुता सुखस्पर्शविहारिता च । ततो भगवता पद्मानि गृहीत्वा वामपार्श्वे स्थापितानि । तदा आर्यावलोकितेश्वरस्य गुणोद्भावना कुरुते—कीदृशी त्वया अवलोकितेश्वर कर्मभूमिर्निष्पादिता सदा प्रेतेषु अवीचावुपपन्नेषु? कालसूत्ररौरवोपपन्नेषु सत्त्वेषु, हाहे तपने प्रेतायने महानरके, अग्निघटे महानरके, शाल्मलिमहानरके, अन्धकाले महानरके, शीतोदके महानरके—एव चान्येष्वपि? महानरके ये उपपन्ना॰ सत्त्वास्तेषा च कर्मभूमिं दृष्ट्वा तत्र मया सत्त्वपरिपाको मे कृत. कर्तव्यश्च । कृत्वा सर्वे च अनुत्तराया सम्यक्सबोधौ प्रतिष्ठापयितव्याः । न च तावत् त्वयानुत्तरा सम्यक्सबोधिरभिसबोद्धव्या, यावत्समन्ताद्दशभ्यो दिग्भ्यः सर्वाक्षणोपपन्नाः सत्त्वा अरूपविशेषे निर्वाणधातौ न प्रतिष्ठापिता भवेयुः ॥

अथावलोकितेश्वरो बोधिसत्त्व इद प्रश्नव्याहार कृत्वा भगवत पादौ शिरसाभिवन्द्य एकान्ते प्रक्रान्तः, प्रक्रमित्वा ज्वलन्निवाग्निपिण्ड आकाशेऽन्तर्हित. ॥

इति तथागतसवादो नाम षष्ठ प्रकरणम् ॥

## अवलोकितेश्वरपुण्यस्कन्धकथनं सप्तमं प्रकरणम् ।

अथ रत्नपाणिर्बोधिसत्त्वो भगवन्तमेतदवोचत्—परिपृच्छेयमहं भगवन् प्रश्नव्याहरण- S 19
मुद्देशम्—कीदृशोऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पुण्यसभारः? भगवानाह—शृणु कुलपुत्र । निर्देशयामि अस्यावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामग्रहणात् पुण्यसभारस्य प्रमाणम् । तद्यथा—अपि नाम कुलपुत्र केचिदेव सत्त्वा गङ्गानदीवालुकोपमास्तथागता अर्हन्तः सम्यक्सबुद्धाः दिव्यकल्पपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजघण्टापताकाभिर्विविधाभिः, चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरुपस्थिता भवन्ति, यश्च तेषा तथागताना पुण्यस्कन्धः प्रभवति, अवलोकितेश्वरस्यैकवालाग्रे स पुण्यस्कन्धः । तद्यथा—अपि नाम कुलपुत्र द्वादशमासिकेन सवत्सरेण चतुर्महाद्वीपेषु रात्रिंदिवमविच्छिन्न देवो वर्षति, तच्छक्यमेकैक बिन्दु गणयितुम् । न तु कुलपुत्र अवलोकितेश्वरस्य शक्य मया पुण्यसभार गणयितुम् । तद्यथापि नाम कुलपुत्र महासमुद्रश्चतुरशीतियोजनसहस्राणि गाम्भीर्येण, अप्रमेयो वैपुल्येन, वडवामुखपर्यन्तम्, तन्मया शक्यमेकैक बिन्दु गणयितुम् । न तु कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य शक्यते पुण्यसभार गणयितुम् । तद्यथापि नाम कुलपुत्र चतुर्महाद्वीपेषु ये केचिच्चतुष्पादा सिंहव्याघ्रऋक्षतरक्षुमृगोष्ट्रशृगालादयो गोगर्दभाः पशव हस्तिनोऽश्वा महिषा मार्जारादयः, एतेषु चतुष्पदेषु शक्यते मयैकैक रोम गणयितुम् । न तु कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य शक्यते पुण्यसभार गणयितुम् । तद्यथापि नाम कुलपुत्र कश्चिदेव
कुलपुत्रो वा कुलदुहिता वा परमाणुरजोपमास्तथागता अर्हतः सम्यक्सबुद्धा दिव्यसौवर्ण- S 20
रत्नमयान् स्तूपान् कारयेद्धस्तशतसहस्रप्रमाणम्, कारयित्वा चैकदिने ध्यानावरोपण कुर्यात्, तच्छक्य मया कुलपुत्र तेषा सौवर्णरजतमयाना तथागतानां करणेषु पुण्यस्कन्ध गणयितुम् । न तु कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य शक्यते पुण्यसभार गणयितुम् । तद्यथापि नाम कुलपुत्र शक्यते मया शीर्षवनस्यैकैक पत्राणि गणयितुम्, न त्ववलोकितेश्वरस्य शक्यते मया पुण्यसभार गणयितुम् । तद्यथापि नाम कुलपुत्र चतुर्महाद्वीपेषु स्त्रीपुरुषदारकदारिकास्ते सर्वे स्रोतापत्तिफले सकृदागामिफलेऽनागामिफलेऽर्हत्त्वे प्रत्येकबोधौ नियोजयेयम् । यश्चैतेषु पुण्यस्कन्ध, अवलोकितेश्वरस्य पूर्ववद्वालाग्रे स पुण्यस्कन्धः ॥

इत्यवलोकितेश्वरपुण्यस्कन्धकथन नाम सप्तम प्रकरणम् ॥

---

## वैनेयधर्मोपदेशः अष्टमं प्रकरणम् ।

अथ रत्नपाणिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—न मे भगवन् क्वचिदीदृशः अचिन्त्यस्तथागताना पुण्यस्कन्धो दृष्टो वा श्रुतो वा प्रागेव बोधिसत्त्वभूतस्य, यादृशो भगवतोऽवलोकितेश्वरस्य बोधिसत्त्वस्य पुण्यस्कन्धः । भगवानाह—यत्खलु कुलपुत्र मम सदृशाः गङ्गानदीवालुकोपमास्तथागता अर्हन्तः सम्यक्सबुद्धा भवेयुः, ते चैकस्थाने

धारयेयुः सत्काराय दिव्यकल्पचीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारै', ते च
तथागता अर्हन्त. सम्यक्सबुद्धा. सर्वथैकत्र सनिपात्यन्ते । सर्वे अवलोकितेश्वरस्य बोधि-
S 21 सत्त्वस्य महासत्त्वस्य न शक्नुवन्ति पुण्यस्कन्ध गणयितुम् । प्रागेव कुलपुत्र अहमेकाकी
अस्मिन् लोकधातौ विहरामि, तत्कथ शक्नुया तस्य पुण्यस्कन्ध वाचा व्याहर्तुम् ? अपि
च कुलपुत्र सर्वे तथागता दशभ्यो वाग्भि' एव वाचमभाषन्त—ते सत्त्वा' सुखिता लोके
भवन्ति, ये अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयमनुस्मरन्ति । ते जरामरण-
व्याधिशोकपरिदेवदु.खदौर्मनस्येभ्यः परिमुक्ता भवन्ति, ते आपश्चिमसासारिक दु ख
नानुभवन्ति, ते शुक्लपाण्डरपटा इव राजहसा प्लुतवायुवेगा इव गच्छन्ति सुखावती-
लोकधातुममिताभस्य तथागतस्य समुख धर्मश्रवणाय । धर्मं श्रुत्वा च सासारिक दु ख
तेषा काये न बाधते, न च रागद्वेषमोहेन जरामरणम्, न च तेषा क्षुत्पिपासा दुःख
काये न बाधते, न च ते गर्भावासदु खमनुस्मरन्ति, तस्मिन्नेव पद्मे जायन्ते । धर्मरसेन
पूर्यमाणा. सततपरिग्रह व्यवस्थापिताः तावदस्मिंल्लोकधातौ तिष्ठन्ति, यावदवलोकितेश्वरस्य
बोधिसत्त्वस्य दृढप्रतिज्ञा न परिपूरिता भवति—सर्वसत्त्वा सर्वदु.खेभ्य. परिमोक्षिताः
यावदनुत्तरायाः सम्यक्सबोधौ न प्रतिष्ठापिता भवन्ति ॥

अथ रत्नपाणिर्बोधिसत्त्वो भगवन्तमेतदवोचत्—कतमेन कालेन भगवतोऽस्य
दृढप्रतिज्ञा परिपूरयति, सर्वसत्त्वाश्च मोक्षमार्गे प्रतिष्ठापिता भवेयु. ? भगवानाह—बहुभिः
कुलपुत्र कारणैः सत्त्वाः कारणात् ससारे ससरन्ति, देवता सत्त्वान् परिपाचयति, तेषा
सत्त्वाना बोधिमार्गमुपदर्शयति । येन येन रूपेण वैनेयाः सत्त्वा', तेन तेन रूपेण धर्मं
S 22 देशयति । तथागतवैनेयाना सत्त्वाना तथागतरूपेण धर्मं देशयति । प्रत्येकबुद्धवैनेयानां
सत्त्वाना प्रत्येकबुद्धरूपेण धर्मं देशयति । अर्हत्त्ववैनेयाना सत्त्वानामर्हत्त्वरूपेण धर्मं
देशयति । बोधिसत्त्ववैनेयाना सत्त्वाना बोधिसत्त्वरूपेण धर्मं देशयति । महेश्वरवैनेयाना
सत्त्वाना महेश्वररूपेण धर्मं देशयति । नारायणवैनेयाना सत्त्वाना नारायणरूपेण धर्मं
देशयति । ब्रह्मवैनेयाना सत्त्वाना ब्रह्मरूपेण धर्मं देशयति । इन्द्रवैनेयानां सत्त्वानामिन्द्र-
रूपेण धर्मं देशयति । आदित्यवैनेयाना सत्त्वानामादित्यरूपेण धर्मं देशयति । चन्द्रवैने-
याना सत्त्वाना चन्द्ररूपेण धर्मं देशयति । अग्निवैनेयाना सत्त्वानामग्निरूपेण धर्मं देशयति ।
वरुणवैनेयाना सत्त्वाना वरुणरूपेण धर्मं देशयति । वायुवैनेयाना सत्त्वाना वायुरूपेण
धर्मं देशयति । नागवैनेयाना सत्त्वाना नागरूपेण धर्मं देशयति । विघ्नपतिवैनेयानां
सत्त्वाना विघ्नपतिरूपेण धर्मं देशयति । यक्षवैनेयाना सत्त्वाना यक्षरूपेण धर्मं देशयति ।
वैश्रवणवैनेयाना सत्त्वाना वैश्रवणरूपेण धर्मं देशयति । राजवैनेयानां सत्त्वाना राजरूपेण
धर्मं देशयति । राजभटवैनेयाना सत्त्वाना राजभटरूपेण धर्म देशयति । मातृपितृवैने-
याना सत्त्वाना मातृपितृरूपेण धर्म देशयति । यथा यथा वैनेयाना सत्त्वाना तथा तथा

रूपेण धर्म देशयति । एवं कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सत्त्वान् धर्मं देशयति, परिपाचयति, निर्वाणभूमिमुपदर्शयति ॥

इति वैनेयधर्मोपदेशो नाम अष्टम प्रकरणम् ॥

---

## असुराश्वासनं नवमं प्रकरणम् ।

अथ रत्नपाणिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—परमाश्चर्याद्भुतप्राप्तोऽहं भगवन् । न च मे कदाचिदस्माभिरीदृशो विषयो दृष्टो वा श्रुतो वा, यादृशोऽवलोकिते- S 23 श्वरस्य बोधिसत्त्वस्य महासत्त्वस्य विपय । तादृशस्तथागतानामपि न सविद्यते ॥

भगवानाह—अस्ति कुलपुत्र अस्मिन्नेव जम्बुद्वीपे वज्रकुक्षिर्नाम गुहा । अत्र अनेकान्यसुरकोटीनियुतशतसहस्राणि प्रतिवसन्ति स्म । तत्र कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वोऽसुररूपेणासुराणा धर्मं देशयति । इम च कारण्डव्यूहमहायानसूत्ररत्नराजमुद्देशयति । धर्मश्रवणायागतानसुरानेव च कथयति स्म—असुराणा धर्मं शृण्वन्तु भवन्तः । ये चान्येऽसुरपर्षदस्ते मैत्रचित्ताः शान्तचित्ताः दयाचित्ता. सत्त्वानामन्तिके हितसुखचित्ता भाव समन्वाहृत्य इम कारण्डव्यूह धर्मपर्याय श्रोतव्यम् ॥

अथ तेऽसुराः कृतकरपुटा अवलोकितेश्वरस्यान्तिकमिम धर्मपर्याय शृण्वन्ति स्म । ते सुखिता लोके ये ईदृश चिन्तामणिसदृश कारण्डव्यूह महायानसूत्ररत्नराजमभिमुखीकुर्वन्ति, शृण्वन्ति, श्रुत्वा चाभिश्रद्दधास्यन्ति, प्रतीष्यन्ति, लिखिष्यन्ति, लिखापयिष्यन्ति, धारयिष्यन्ति, वाचयिष्यन्ति, पूजयिष्यन्ति, चिन्तयिष्यन्ति, परेभ्यश्च विस्तरेण सप्रकाशयिष्यन्ति, भावयिष्यन्ति, परमप्रीत्या गौरवेणाध्याशयेन च नमस्कुर्वन्ति । तेषा च पञ्चानन्तर्याणि कर्माणि क्षपयन्ति, क्षपयित्वा परिशुद्धकाया भविष्यन्ति, जातिस्मराश्च । मरणकाले द्वादश तथागता उपसक्रमिष्यन्ति, ते च सर्वे तथागता आश्वासयिष्यन्ति—मा भैषीः कुलपुत्र, त्वया कारण्डव्यूह महायानसूत्ररत्नराज श्रुतम् । विविधास्तेऽर्थमार्गाः सज्जीकृताः सुखावतीगमनाय च । तत्र सुखावत्या लोकधातौ तवार्थे विचित्रं च ते छत्र सिंहासन सज्जीकृतम्, दिव्यमौलीकुण्डलस्रग्दाममीदृशस्य निमित्तम्, मरणकालसमयपरिपन्थित एव सुखावतीमनु- S 24 गच्छति । एव स रत्नपाणे प्रतिविशिष्टतर पुण्यफल दर्शयन्नवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो निर्वाणिकी भूमिमुपदर्शयति स्म । असुराणां निर्वाणपथमुपदर्शित सर्वपापमतिनिवारणार्थमनुत्तरे बोधिमार्गे प्रतिष्ठापनार्थम् ॥

अथ रत्नपाणिर्बोधिसत्त्वो महासत्त्वो भगवतः पादौ शिरसाभिवन्द्य तत्रैव प्रक्रान्तः॥

इति असुराश्वासन नाम नवमं प्रकरणम् ॥

---

## काञ्चनमयभूम्याद्युपस्थानं दशमं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—अतिदुर्लभ भगवन् अस्यावलोकितेश्वरस्य विकुर्वितानि श्रूयन्ते गुणोद्भावनानि च । भगवानाह—अपि च कुलपुत्र तस्माद्

वज्रकुक्षेर्यदा निष्क्रान्तः, काञ्चनमय्या भूम्या प्रविष्टः, तदा गुणोद्भावना शृणु । तदपि पूर्वतरप्रवचनम् । तदपि समतिक्रम्य विश्वभूर्नाम तथागतोऽर्हन् सम्यक्सबुद्धो बभूव विद्याचरणसपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणा च बुद्धो भगवान् । तेन कालेन तेन समयेन अह सर्वनीवरणविष्कम्भी बोधिसत्त्व क्षान्तिवादी ऋषिरभूत् गिरिगह्वरान्तस्कर्वटस्थानवासी, मनुष्याणामवचरे पृथिवीप्रदेशे व्यहरन् । तदा कालानुकाल मया तस्य विश्वभुवः तथागतस्य सकाशात् गुणोद्भावना अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य श्रुता विविधसर्वसत्त्वपरिपाचनम् । अस्ति सर्वनीवरणविष्कम्भिन् सा काञ्चनमयी नाम भूमिरस्ति यदुत्तरस्यां काञ्चनमय्या भूम्या गत्वा अवलोकितेश्वरो
S 25 बोधिसत्त्वो महासत्त्वोऽधोमुखाना सत्त्वाना धर्मं देशयति स्म । आर्याष्टाङ्गिकमार्गं निर्वाणमुपदर्शयति । स ततः काञ्चनमय्या भूम्या निष्क्रमित्वा रूप्यमय्या भूम्या प्रविशति । तत्र स पश्यति चतुष्पादिकानि सत्त्वानि पुरुषपुद्गलानि । दृष्ट्वा तेषामवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो सर्वसत्त्वानामेव धर्म देशयति—शृण्वन्तु भवन्तः सर्वे पुरुषपुद्गला अभिमुख धर्मपर्याय प्रचलमानसुचेतसा निर्वाणिकम् । सत्वरमनुविचिन्तयत ॥

अथ ते सर्वे पुरुषा अवलोकितेश्वरस्य पुरतः स्थित्वा एतदवोचन्—आश्वासय त्वम् । अन्धभूताना सत्त्वाना मार्गमुपदर्शको भव । अत्राणाना सत्त्वाना त्राण भव । अशरणाना सत्त्वाना शरण परायणं मातापितृभूतो भव । तमोभिभूताना सत्त्वाना प्रनष्टमार्गाणा दीपभूतो भव । सचेतक, महाकरुणया मोक्षमार्गस्योपदर्शक, सुखितास्ते सत्त्वा ये तव सतत परिग्रह नाममनुस्मरन्ति, उदीरयन्ति च । इद च समागाढतर दुःख न कदाचित्प्रत्यनुभवन्ति, मुञ्चन्ति ते हीदृश दुःख यावद्यादृश वय प्रत्यनुभवामः ॥

अथ स तेषा सत्त्वाना कारण्डव्यूह नाम महायानसूत्ररत्नराज कर्णपुटे निश्चारयति स्म । ते च सत्त्वा अमु धर्मपर्याय श्रुत्वा अन्योन्यविहितश्रोतृकर्णपुटा निश्चरन्ति स्म । तदपि ते पुरुषाः श्रुत्वा अवैवर्तिकभूमिनिष्पादिताः परमसुखसमर्पिताः सस्कृताः ॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तस्या रूप्यमय्या निष्क्रम्यान्यतराया भूम्या प्रविशति सत्त्वपरिपाकाय महाकरुणासपीडितहृदयोऽयोमय्या भूम्या यत्र स राजा
S 26 बलिरसुरेन्द्रो बद्धः । स तस्यैव सकाशमुपसक्रान्तः । उपसक्रम्य च राज्ञो बलेरसुरेन्द्रस्य दूरतश्चक्षुर्दर्शनं याति स्म सुवर्णबिम्बमिव रश्मिभिः प्रमुञ्चमानैर्नानावर्णैः ॥

इति काञ्चनमयभूम्याद्युपस्थान नाम दशम प्रकरणम् ॥



## बलिसमाश्वासनमेकादशमं प्रकरणम् ।

अथ स राजा बलिरसुरेन्द्रोऽवलोकितेश्वर बोधिसत्त्व महासत्त्व दूरत एवागच्छन्त पश्यति स्म । दृष्ट्वा च सान्तःपुरपरिवारैः सार्धमनेकैरसुरशतसहस्रैः कुब्जवामनकादिभिः सहस्रपरिवारैर्गत्वा अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पादयोर्निपत्येदमुदानयति स्म—

अद्य मे सफल जन्म जीवित पुण्यमेव च ।
अद्य मे हीदृश चैव परिपूर्ण मनोरथम् ॥ १ ॥
अद्य मे आशय· पूर्णः परिशुद्धश्च दु.खत· ।
यन्मया दर्शने सम्यग् दृष्टा लोकैकबान्धवः ॥ २ ॥
तदा मे सर्वसौख्य च कामे सतिष्ठते पुनः ।
सौख्या भवन्ति ते सत्त्वा सर्वदु खविवर्जिताः ॥ ३ ॥
ससारबन्धनान्मुक्तास्तिष्ठन्ति सुखमोदकाः ।
ममापि दर्शनेनैव सर्वे स्फुटितबन्धनाः ।
दूराद्दूरतर यान्ति गरुडस्येव पन्नगाः ॥ ४ ॥

अथ स राजा बलिस्तस्य भगवतोऽवलोकितेश्वरस्य पादयो. प्रणिपत्य रत्नपीठकं दत्त्वा दशनखाञ्जलिं कृत्वैवमाह—

अपि च । भगवन्, निषीदस्व अस्मिन्नासने, अनुग्रहं कुरु, पापरताना जात्यन्धभूताना परदारगमनप्रसक्ताना प्राणातिपातोद्युक्ताना परप्राणाहिंसकाना जरामरणभयभीतानामुद्विग्नमानसानां ससारदुष्टवार्ताना त्राता भव । अनाथाना मातापितृभूतो भव । S 27
दुष्टदारुणचण्डभूताना भगवन् त्राता भव । परमदारुणदुष्टप्रशमको भव । एषामस्माक बन्धनबद्धाना तव दर्शनेन सर्वबन्धनादयः परिमुक्ताः, स्फुटिताः दूराद्दूरतर पलायन्ति । त्वद्दर्शनमात्रेण यानि तानि राज्ञश्चक्रवर्तिनश्च शुभकर्मजातानि चक्रवर्तिसुखानि मम सविद्यन्ते, तत्स भगवन् तादृश धर्ममार्गमुपदर्शय, येनैव पुनरेव बन्धनदुःख न प्रत्यनुभवेम । न च पुनरिमानि यानि सर्वबन्धनानि चक्षुषु आभासमागच्छेयु. ॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो राजान बलिमसुरेन्द्रमेवमाह—ये महाराज सत्त्वानामन्तिके अविहिंसाचित्तमुत्पादयन्ति, तथागतशासने पिण्डपात्रमनुप्रयच्छन्ति, कारोपकार बहुतर कुर्वन्ति, न च तेषा केचित्सत्त्वाः स्वप्नेनापि पीडयन्ति । अमु च कारण्डव्यूह महायानसूत्ररत्नराज लिखन्ति, लिखापयन्ति, अन्ततो नामधेयमपि, अस्माद्धर्मपर्याय शृण्वन्ति, अस्य बोधिसत्त्वस्यैकमपि पिण्डपात्रमनुप्रयच्छन्ति, तेषा च धर्मभाणकानामस्य धर्मपर्यायस्य धारकाना वाचकाना लेखकाना सश्रावकाणाम्, अस्य च तथागतस्य धर्मपर्यायमुद्दिश्य एकदिवसमपि पुरोभक्तमपि पिण्डपात्रमनुप्रदास्यति, ते सर्वे चक्रवर्तिराज्यलाभिनो भविष्यन्ति । न च कदाचित्क्षुत्पिपासादु·ख प्रत्यनुभविष्यन्ति । न च कदाचिन्नरकबन्धनदु खं प्रत्यनुभविष्यन्ति । न च प्रियविप्रयोगदुःखम् । अपि च सर्वदु.खेभ्यो विमुच्यन्ते । सुखावतीलोकधातुमनुगमिष्यन्ति, तस्य च भगवतोऽमिताभस्य तथागतस्य पुरतः समुख धर्म श्रुत्वा व्याकरणमनुप्राप्स्यन्ति । अपि च महाराज । श्रूयतां S 28
दानफलम् । तद्यथापि नाम कुलपुत्र ये तथागतस्यार्हतः सम्यक्संबुद्धस्य तिष्ठतः परिनिर्वृतस्य वा पिण्डपात्रमनुप्रयच्छन्ति, तेषामिद पुण्यस्कन्ध प्रवक्ष्यामि । तद्यथापि नाम कुलपुत्र

द्वादशगङ्गानदीवालुकोपमा मम सदृशा बोधिसत्त्वा महासत्त्वा भवेयुः, ते चैकस्थाने धारयेयुर्दिव्यकल्पतत्पुण्यप्रमाणमुद्ग्रहीतु सर्वसुखोपधानेन समुपतिष्ठमानाः, तेऽपि सर्वे समग्रीभूता न शक्यन्ते एकस्य पिण्डपात्रप्रदानस्य कुशलमूलसंभारस्य पुण्यस्कन्ध गणयितुम्। प्रागेवाहमेकाकी अस्मिन्नसुरभवने विहरामि। तद्यथापि नाम कुलपुत्र शक्यते मया परमाणुरजसा प्रमाणमुद्ग्रहीतुम्। न तु कुलपुत्र शक्य मया पिण्डपात्रस्य पुण्यस्कन्धं गणयितुम्। तद्यथापि नाम कुलपुत्र चतुर्षु महाद्वीपेषु स्त्रीपुरुषदारकदारिकादयस्ते सर्वे कृषिकर्मान्ते उद्युक्ता भवेयुः। ते चतुर्महाद्वीपेषु नान्य कृषि कारयेयुः। कालेन काल नागराजानो वर्षधारामनुप्रयच्छन्ति। ते च सर्षपान् निष्पाद्यन्ते। तच्चैकद्वीपखल कुर्यात्। सर्वे ते स्त्रीपुरुषदारकदारिकादयः शकटैर्भारैर्मुटैः पीठकैरुष्ट्रैर्गोभिर्गर्दभै सर्वे ते मर्दयित्वा तस्मिन् महाखलके महान्त राशिं कुर्यात्। गोभिर्गर्दभादिभिर्मर्दयित्वा महान्त राशिं निष्पादयित्वा। तच्छक्यं कुलपुत्र एकमेक फल गणयितुम्। न तु कुलपुत्र शक्यते पिण्डपात्रस्य पुण्यस्कन्ध गणयितुम्। तद्यथापि नाम कुलपुत्र सुमेरुः पर्वतराजः चतुरशीतियोजनसहस्राणि अधस्तादुपगतः ऊर्ध्वेण चतुरशीतियोजनसहस्राण्युच्छ्रयेण च। स कुलपुत्र भूर्जराशिर्भवेत्।
S 29 महासमुद्रो मेलन्दुकपरिमण्डल भवेत्। ये चतुर्द्वीपनिवासिनः पुरुषदारकदारिकास्ते च सर्वे लेखका भवेयु। तच्च सुमेरुपर्वतराजान्तपर्यन्त लिखित भवेत्। तच्च कुलपुत्र शक्य मयैकैकाक्षर गणयितुम्। न तु कुलपुत्र शक्यते पिण्डपात्रस्य पुण्यस्कन्ध गणयितुम्। तद्यथापि नाम कुलपुत्र लेखकाः सर्वे ते दशभूमिप्रतिष्ठिता बोधिसत्त्वा भवेयुः पर्यापन्नाः। यच्च तेषा दशभूमिप्रतिष्ठिताना बोधिसत्त्वाना महासत्त्वाना पुण्यस्कन्ध तमेकस्य पिण्डपात्रस्य पुण्यस्कन्धं गणयितुम्। तद्यथापि नाम कुलपुत्र गङ्गाया नद्या वालुकासमुद्रस्य च शक्य मया एकैक वालुका गणयितुम्, न तु कुलपुत्र शक्यते मया पिण्डपात्रस्य पुण्यस्कन्ध गणयितुम्। तद्यथापि नाम कुलपुत्र शक्यते मया सर्वमतुरास्ना (?) प्रमाणमुद्ग्रहीतुम्। न शक्य मया कुलपुत्र पिण्डपात्रस्य पुण्यस्कन्धं गणयितुम्॥

अथ बलिरसुरेन्द्रः इद च तस्य भगवतोऽवलोकितेश्वरस्यान्तिकात्पिण्डपात्रकुशलभूतस्य सुक्षेत्रावरूढबीजपात्रभूतस्य निर्देश्यमानस्य तत्सर्वमनुमोद्य साश्रुदुर्दिनवदनो गद्गदकण्ठः बाष्पपरिपूर्ण उच्छ्वसन् अवलोकितेश्वरं बोधिसत्त्व महासत्त्वमेतदवोचत्—कीदृश मया भगवन् बलिना कर्म कृत दान दत्तम्, येनेहैव जन्मनि बन्धनमनुप्राप्तम्? सान्तःपुरपरिवारेण कुक्षेत्रे मया दान दत्तम्। तस्यैव तत्कर्मणः फलमनुभवामि। अथवा सर्वज्ञक्षेत्रे भस्ममुष्टिमुपक्षिप्तमपि अमृत परिनिष्पद्यते। मयाज्ञानेन यज्ञ यजितम्। यदा मया च भगवन् तैर्थिकदृष्टिपर्यापन्नेन मानग्रस्तमानसेन च यज्ञ यजता महादानसमुच्छ्रयं
S 30 कर्तुमारब्धम्, तदा मे तत्र यज्ञे वामनकरूपेण याचनको हिंस्रः समागतः। तस्य मे मौलीकुण्डलस्रग्दामानि रत्नाभरणानि ह्यश्वरथादीनि मुक्त्वा रत्नकवचानि मरकतप्रलम्बितानि

चामरप्रलम्बितानि मुक्ताहाराणि मुक्तिकाजालप्रलम्बितानि मुक्तिकाजालप्रतिच्छन्नानि मुक्तिकाकलापजालाङ्गुलीकानि सौवर्णघण्टिकारूप्यनिबद्धानि रणरणायमानानि,( अन्यानि च ) कपिलासहस्राणि रूप्यपादानि सौवर्णशृङ्गानि मुक्ताजालप्रलम्बितानि मुक्तिकाजालप्रतिच्छन्नानि अर्घपात्रसमायुक्तानि नानाविचित्रघण्टारत्नसमायुक्तानि, तादृक्षाणि कपिलासहस्राणि, ( अन्यानि च ) कुमारीणा शतसहस्राणि परमया गुर्वरुणपुष्कलतया समन्वागताना नानाविचित्राणा कन्यालक्षणसमलकृताना परमरूपशोभमानामप्सरसामपि प्रतिस्पर्धिनीना दिव्यालकारविभूषिताना मौलीकुण्डलस्रग्दामपरिक्षेपिकाणा केयूरकटकनूपुरकटिमेखलाहस्तोत्तर्या कर्णपृष्ठोत्तर्या हस्ताङ्गुलीयसमायुक्ताना सरसरायमाणमालासमायुक्ताना नानारङ्गोपरक्तवस्त्रप्रावृतानाम्, ( अन्यानि ) रत्नपीठशतसहस्राण्यनेकानि सुवर्णराशिरूप्यराशीनि रत्नराशीनि स्थापितानि। अनेकानि च वस्त्राभरणानि स्थापितानि। अनेकानि च गोकुलशतानि सगोपालसमायुक्तानि सज्जीकृतानि। अनेकान्यन्नपानशताना स्थापितानि। दिव्यरसरसाग्रोपेतान्याहाराणि सज्जीकृतानि। अनेकानि सुवर्णरूप्यमयानि दण्डानि रत्नसयुक्तानि सतत व्यवस्थापितानि। अनेकानि सुवर्णरूप्यमयानि सिंहासनानि रत्नसयुक्तानि च। दिव्यानि चामरदण्डानि छत्राण्युपानहानि रत्नपरिवेष्टितानि। अनेकानि सुवर्णमयानि रूप्यमयानि मौलिकुण्डलस्रग्दामसहस्राणि रत्नोपचितानि। तस्मिन् स मया राज्ञा शतसहस्रान् सनिपतितान् ब्राह्मणशतसहस्र संनिपतितम्। अनेकानि क्षत्रियशतसहस्राणि सनिपतितानि। तदाह भगवन् एव स्थानस्थिताना यथासनिपतिताना दृष्ट्वा विस्मयमापन्नः। त्रीणि वाराणि एकच्छत्रा पृथिवी कृतवान्। तत्र मया पात्रभूतेष्विद दान दातुमारब्धम्। एतत्पौर्विक पाप प्रतिदेशयामि—क्षत्रियभार्याणा गुर्विणीना यावद्धृदय स्फुटयित्वा कुमारकुमारिका जीविताद्व्यपरोपिताः। ततस्ते च महाक्षत्रियाः सर्वे मया हडनिंगडबन्धनैर्बद्धा नीत्वा ताम्रगुहायामनेकानि क्षत्रियशतसहस्राणि पञ्चबन्धनबद्धानि कृत्वा स्थापितानि पञ्चपाण्डवप्रभृतीनि। तस्यामेव यक्षगुहायामुपयमानि कीलकानि शृङ्खलासमायुक्तानि तेषा क्षत्रियाणा हस्तपादानि बद्ध्वा स्थापितानि। तदा मे सर्वद्वाराणि जृम्भीकृतानि। प्रथम द्वार काष्ठमयम्, द्वितीय द्वार खदिरमयम्, तृतीय द्वारमयोमयम्, चतुर्थ द्वार ताम्रमयम्, पञ्चम द्वार रूप्यमयम्, षष्ठ द्वार सुवर्णमयम्, सप्तम द्वार रत्नमयम्। एतानि सप्त द्वाराणि। एकैकद्वारे पञ्च पञ्च शतानि कपाटानि यन्त्रसमायुक्तानि। तस्मिन् सुवर्णमये द्वारे सप्तपर्वतान्युपर्युपरि स्थापितानि। एकैकस्मिन् द्वारे एकैकपर्वतानि उपर्युपरि स्थापितानि। ततोऽह पश्चाद्दशरथपुत्रमन्वेषयामि। क्वचिद्दिवसे मक्षिकारूपेण, क्वचिद्दिवसे भ्रमररूपेण, क्वचिद्दिवसे वराहरूपेण, क्वचिद्दिवसे मानुषरूपेण। रूप कृत्वा दिने दिने मृगपक्ष्यादिना नानाजन्तुरूपेण। न च समुख त समनुपश्यामि। तदा मेऽनुविचिन्तयित्वा यज्ञः प्रारब्धः॥ S 31

तदात्र मे दशरथपुत्रेणावतारप्रेक्षिणा गत्वा तेन द्वारस्थापिताः सप्त पर्वता उत्पाटिताः। उत्पाटयित्वा लघुनीवान्यप्रदेशे छोरयित्वा उच्चैःशब्देन तेषा क्षत्रियाणा- S 32

मारोचयति स्म युधिष्ठिरनकुलसहदेवभीमसेनार्जुनकौरवादिभिः। अन्ये राजानः शब्दमनुश्रुत श्रुत्वा समाश्वास्य स्वस्थकाया व्यवस्थिता। स च तानेवमाह–जीवन्तो युष्माकमथवा मृता ? ते कथयन्ति–जीवामो भगवन्। तेन महावीर्येण पुरुषेण सर्वाणि तानि द्वाराणि भग्नानि। यावत्ताम्रगुहाया पश्यति, सर्वे ते राजानो बन्धनबद्धाः। दृष्ट्वा च नारायण सर्वे ते परस्पर विचिन्तयन्ति–अथ बलिरसुरेन्द्रो मृतः कालगतः ? अथवा पुनरपि मरणकालोऽस्माक भूत. ? अथ ते कथयन्ति–वरमस्माक सग्रामभूमीमरण न तु बन्धनबद्धाना मरणम्। यदा बन्धनबद्धा· काल कुर्याम, तदा क्षत्रियधर्ममस्माक विनश्यति। यदा सग्रामभूमौ काल कुर्याम, तदा स्वर्गोपगा वय भवेम॥

अथ ते राजान सर्वे स्वक स्वक गृह गताः। तदा रथयोग्यान्यश्वानि स्वकस्वकानि सज्जीकृतानि। यदा ते रथ सज्जीकुर्वन्ति महार्हाणि शस्त्राणि, तदा दशरथपुत्रेण वामनकरूपमभिनिर्माय मृगाजिनेनोत्तर्य वेणुदण्डमुपगृह्य पीठिकामुपगृह्य संप्रस्थितो मत्सकाशम्। द्वारमागतः। द्वारपालैरनुबद्ध.–मा प्रविश वामनक ब्राह्मण इति। स कथयति–दूरादेवाहमागतः। अथ स द्वारपालस्तमेतदवोचत्–ब्राह्मण। कतमस्या भूमेस्त्वमागत. ? स तमाह–चन्द्रद्वीपाद्राजर्षिरहमागत.। अथ स द्वारपालपुरुषो गत्वा बलिमारोचयति–देव, आगतस्ते
S 33 वामनको ब्राह्मणः। अथ स बलिस्तमेतदवोचत्–कीदृश वस्तु याचते ? अथ स द्वारपालस्तमेतदवोचत्–देव न तमनुजानामि। अथ स बलिस्तमेतदवोचत्–गच्छन्तु भवन्तः, आनीयता ब्राह्मणः। स तैर्द्वारपालपुरुषैराहूयोक्त.–प्रविश महाब्राह्मण। स प्रविष्ट·, रत्नपीठमनुप्रदत्तम्। शुक्रस्तत्रैव व्यवस्थित·। स च तस्योपाध्याय इति ख्यायते। स त बलिमेतदवोचत्–एष कालपुरुषोऽत्रप्रविष्ट., अवश्य ते विघातो भविष्यति। बलिस्तमेतदवोचत्–कथ जानासि भगवन् ? शुक्र उवाच–जानाम्यह तस्य निमित्तानि चिह्नानि च दृष्ट्वा। बलिराह–किमुपायं वय कुर्याम. ? अथ नारायणेन विचिन्त्य अवश्य दानस्य विप्रतिसार भविष्यति। तेन मे सरस्वती मुखे न्यस्ता, तदा स कथयति–आगच्छ ब्राह्मण। कीदृशमभिप्रायो भवत· ? स प्रविश्यैतदवोचत्–द्विपदभूमी याचयामि। बलिरुवाच–यदि त्वं ब्राह्मण द्विपद याचसे, मया त्रीणि पदानि तेऽनुप्रदत्तानि। स प्रतिग्रह तस्योपगृह्य स्वस्तिमुपवद्यानुगृहीत तेन तिलपानीयसुवर्णसहितम्। ततस्तेन वामनकरूपमन्तर्धापितम्। अथ शुक्रो बलिमेतदवोचत्–राजन् कथित मया कालपुरुष एष प्रविष्टः। न च त्वया प्रमाण कृत वचनम्। तस्यैतत् कर्मफलमनुभव। तेनात्मान महाप्रमाणीकृतम्। तस्य चन्द्रादित्यौ स्कन्धौ व्यवस्थितौ। गृहीत्वासौ निगडचक्रधनुस्तोमरभिण्डिपालासन्नद्य (?)॥

S 34 अथ बलिरसुरेन्द्रोऽधोमुखं प्रपतितः स्मृतिभ्रष्टः थरथरायमान· स्थितः। किं कृत्य ( ? ) स्वहस्तेन मया विष भक्षितम्। द्विपदानि परिपूरितानि। तृतीय पद न सविद्यते। तदा स कथयति–तृतीयस्य पदं न सविद्यते। यन्मम प्रतिग्रह याचितम्, कीदृश पाप करोम्यहम् ? अथ नारायणस्तमेतदवोचत्–यत्राह स्थापयामि तत्र त्वया स्थातव्यम्।

अथ स बलिरसुरेन्द्रस्तमेतदवोचत्—यादृश त्वयाज्ञप्त तादृश करोम्यहम्। सत्य कुरुषे[2] स कथयति—सत्य सत्य करोम्यहम् । तेन सत्यपाशैर्बद्धः। सा च यज्ञभूमिर्विनाशिता। तानि च भाण्डान्युच्छिष्टीकृतानि। ता अपि च कुमारिकाः पाण्डवैः कौरवैर्विध्वसिता.। तानि च सुवर्णमयानि सिंहासनानि दिव्यानि च्छत्राण्युपानहानि रत्नपरिवेष्टितानि च वस्त्राभरणानि च सुवर्णघण्टानि सुवर्णकटकानि रत्नखचितानि कपिलानि कौरवपाण्डवैर्विध्वसितानि। सा च यज्ञभूमिर्विनाशिता॥

अथ स बलिरसुरेन्द्रो यज्ञभूमेर्निष्क्रान्तः शरीरचिन्तामापेदे—दाता बलिरुदारयज्ञमुपास्य। कालदानस्य दत्तस्य बन्धनमेव लब्धम्। नमोऽस्तु देवाय। यथैव कर्ता सर्ता स नीत्वा पातालमुपस्थापित सान्तःपुरपरिवारः। आख्यात हि मया भगवन्—भूतपूर्वं कुरुक्षेत्रे मया दान दत्त तस्यैतत्कर्मफलमनुभवामि। तथा त्राता भवाहि मे भगवन्नाथ, न भूयो दु खमाप्नुयाम्॥

अथ बलिस्त भगवन्तमार्यावलोकितेश्वर बोधिसत्त्व महासत्त्व स्तोत्रविशेषै. स्तोतु- S 35 मारब्धः—त्राण भवाहि शुभपद्महस्त। पद्मश्रियालकृतशुद्धकाय। अमिताभमूर्ते शिरसा नमामि। जटार्धमध्ये चिन्तामणिमुकुटधराय। शुभपद्महस्ताय। पद्मश्रिया समलकृताय। जटामुकुटधराय। सर्वज्ञवशीकृताय। बहुसत्त्वाश्वासनकराय। हीनदीनानुकम्पाय। दिवाकरवररोचनकराय। पृथिवीवररोचनकराय। भैषज्यराजोत्तमाय। सुशुद्धसत्त्वाय। परमयोगमनुप्राप्ताय। मोक्षप्रवराय मोक्षप्रियाय। चिन्तामणिवत्सदृशाय। धर्मगञ्जपरिपालनकराय। षट्पारमितानिर्देशनकराय। सुचेतनकराय। इद स्तोत्र मया कृतमवलोकितेश्वरस्य। सुखितास्ते सत्त्वा ये तव नामधेयमनुस्मरन्ति। मुच्यन्ते ते कारसूत्रै रौरवोपपन्नेषु अवीच्युपपन्नेषु प्रेतनगरोपपन्नेषु ये तव नामधेयमनुस्मरन्ति। मुच्यन्ते ते बहव पापदुःखात्। सुचेतनास्ते सत्त्वा ये तव नामधेयमनुस्मरन्ति। गच्छन्ति ते सुखावतीलोकधातुम्। अमिताभस्य तथागतस्य धर्ममनुस्मरन्ति शृण्वन्ति॥

अथ आर्यावलोकितेश्वरो बलेरिन्द्रस्य व्याकरणमनुप्रयच्छति स्म—भविष्यसि त्वमसुरेन्द्र श्रीर्नाम तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान्। सर्वे तेऽसुरा वैनेया भविष्यन्ति। तत्र तव बुद्धक्षेत्रे न रागशब्दो न द्वेषशब्दो न मोहशब्दो भविष्यति। षडक्षरी महाविद्या लब्धलाभा भविष्यति। तेन तस्य धर्मदक्षिणा उपनामिता। शतसहस्रमूल्य मुक्ताहारमुपनामित मौलीकुण्डल च नानारत्नसमुचितमुपनामित च॥

अथ आर्यावलोकितेश्वरो धर्मदेशना कर्तुमारब्धः—शृणु महाराज। नित्ये ध्रुवे शाश्वते मानुष्यके ये चिन्तयन्ति सततपरिग्रह महाभोगान्यनुविचिन्तयन्ति दासीदासकर्मकरपौरुषेयान्, यानि च महार्हाणि वस्त्रशय्यासनानि, ये च महार्हा निधानधनधानधनधान्यकोष- S 36 कोष्ठागारा., अज्ञानास्ते सत्त्वा ये पुत्रदारदारिकामनुविचिन्तयन्ति भार्या मातापितरौ।

एभिर्वस्तुभिर्ये सक्तास्ते स्वप्नोपमा इव दृश्यन्ते। मरणकालसमये न कश्चित्तेषा त्राता भवति। यदा प्राणोद्धरण भवति, तदा जम्बुद्वीप विपरीत पश्यति। अथ महतीं वैतरणीं पूयशोणितपरिपूर्णां पश्यन्ति। ये च महार्हा वृक्षास्तान् प्रदीप्तान् सप्रज्वलितानेकज्वालीभूतान् पश्यन्ति। दृष्ट्वा च समापद्यन्ते। ततो यमपालपुरुषैः कालपाशैर्बद्धा नीयन्ते। त्वरित त्वरित क्षुरधारोपचिते महापथे पादा विशीर्यन्ते। उत्क्षिप्ते पादे येऽन्याः पादाः प्रादुर्भवन्ति, अनेकैः काकगृध्रश्वानादिभिर्भक्ष्यन्ते। महती नारकीया वेदना प्रत्यनुभवन्ति। ततः क्षुरधारोपचितान्महापथादवतीर्य यत्र षोडशाङ्गुलिप्रमाणानि कण्टकानि तत्रानीयते, तत एकैकपादे पञ्च पञ्चशतानि कण्टकानि प्रविशन्ति। स चाक्रन्दति—विषयपापरतेन सत्त्वेन कर्म कृतम्॥

अथ ते यमपालपुरुषा एवमाहुः—मार्षाः, न त्वया तथागतस्य पिण्डपात्रं निर्यातितम्। न च त्वया धर्मगण्डीमाकोट्यमाना श्रुता। न बुद्धनाम गृहीतम्। न च त्वया क्वचिद्दानानि दीयमानानि दृष्ट्वानुमोदितानि। न च त्वया क्वचित् प्रदेशे स्तूपबिम्बानि प्रदक्षिणीकृतानि। स कथयति—अश्राद्धोऽभूव पापरतो बुद्धधर्मसघपरिवर्जित. पापमित्रपरिगृहीतः कल्याणमित्रपरिवर्जितश्च। ते कथयन्ति—तस्यैतत्कर्मफलमनुभवसे। स तैर्यमपालकैर्नीयते चैतत्कर्मभूमिमुपदर्शयितुम्॥

S 37 अथ ते यमपुरुषा नीत्वा कालसूत्रे महानरके क्षिपन्ति। शिक्षा चैकैकशक्तिशत काये विध्यन्ति तदपि जीवति, द्वितीय शक्तिशत काये विध्यन्ति तदपि जीवति, तृतीय शक्तिशत काये विध्यन्ति तदपि जीवति। यदा काल न कुर्वन्ति तदाग्निखदामध्ये क्षिपन्ति। तदपि काल न कुर्वन्ति। ततस्ते तप्तायोगुडामुखे विष्कम्भन्ते दह्यन्ते। तेषामोष्ठमपि दन्तानि विशीर्यन्ते, तालूनि विस्फुटन्ते, कण्ठम्पि तालुमपि हृदयमपि यन्त्रवत्कला निगडायमाना सर्व त काय दह्यन्ते। एवमेव हा राजन् न कश्चित् त्राता भविष्यति परलोके। तस्मात्तर्हि त महाराज यत्नेन पुण्य कर्तव्यम्। एव सानुलोमिकीं धर्मदेशना कृत्वा च त राजान बलिमसुरेन्द्रमेवमाह—अप्रमत्तेन भवितव्यम्, न पुनः कदाचित्प्रमादचारिणा भवितव्यम्। एव च बहुदोषदुष्टोऽय गृहावास· परमदारुणनरकभूमिप्रपातनः। तस्मात्तर्हि महाराज अप्रमत्तेन भवितव्य पापभीरुणा। परलोक दर्शितम्। अपि च महाराज। ममान्तिकाद्धर्मदेशना शृण्वतो निरवशेषाणि पापस्कन्धानि न च सुपरिशुद्धानि। सर्वदुःखतरगाढबन्धनै. परिमुक्त.। सुखावतीलोकधातुगमनाय तव पन्थान परिशुद्धम्। तत्र च तव सप्तरत्नमय पद्मासन प्रादुर्भूत भविष्यति। यत्र रत्नपद्मे निषद्य तस्य भगवतोऽमिताभस्य तथागतस्यार्हतः सम्यक्सबुद्धस्यान्तिकात् इम सर्वदुःखपापस्कन्ध पापशमन सर्वदुर्गतिसाधन अनन्तमणिमहापुण्यनिर्देश कारण्डव्यूहमहायान सूत्ररत्नराज त्वं श्रोष्यसि, श्रुत्वा च तत्रैव व्याकरणमनुप्राप्स्यसे अनुत्तराया सम्यक्संबोधौ, तावत्सुपरिशुद्धबोधिचित्तालकार नाम बोधिसत्त्वजन्म प्रतिलप्स्यसे। यावदनुत्तरा सम्यक्सबोधिमभिसबुद्धो भविष्यसि॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तस्य च बलेरसुरेन्द्रस्य इम सर्व- S 38
दुर्गतिपरिशोधन बोधिसत्त्वालकारकारण्डव्यूह नाम धर्मालोक देशयित्वा त राजान बलिमसुरेन्द्र समाश्वास्य इदमवोचत्—गमिष्याम्यहम् । अस्मिन् जेतवने महाविहारेऽद्य महासनिपातो भवति ॥

इति बलिसमाश्वासन नामैकादश प्रकरणम् ॥

## यक्षादिसमाश्वासनं द्वादशं प्रकरणम् ।

ततोऽवलोकितेश्वरेण बोधिसत्त्वेन महासत्त्वेन रश्मय उत्सृष्टाः । अनेकानि नानावर्णानि नीलपीतलोहितावदातानि माञ्जिष्ठस्फटिकरजतवर्णानि । गत्वा च विश्वभुवस्तथागतस्य पुरतो व्यवस्थितानि । तदा ते देवा नागा यक्षा राक्षसा असुरा गरुडा किन्नरा महोरगा मनुष्याः सनिपतिताः । अनेकानि बोधिसत्त्वशतानि सनिपतितानि ॥

अथ तेषा बोधिसत्त्वानां मध्ये गगनगञ्जो नाम बोधिसत्त्व उत्थायासनादेकांसमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—कुतो भगवन् रश्मय आगच्छन्ति ? भगवानाह—एष कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बलेरसुरेन्द्रस्य भवने विहरति, तेन तस्मान्निष्क्रामित्वा अमी रश्मयः प्रमुक्ताः । ततोऽमी रश्मय आगच्छन्ति, पुनस्तस्यैव सकाशं गताः ॥

अथ गगनगञ्जो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—केनोपायेन पश्येयमहमवलोकितेश्वरं बोधिसत्त्व महासत्त्वम् ? भगवानाह—एष कुलपुत्र इहैवागच्छत्यवलोकिते-
श्वरः । यदा अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बलेरसुरेन्द्रस्य भवनान्निष्क्रान्तः, तदा S 39
जेतवने महाविहारे दिव्यानि पुष्पवर्षाणि पतन्ति, दिव्यानि कल्पवृक्षशतानि परमशोभनीयानि, रत्नालंकारशतसहस्राणि प्रलम्बितानि, मुक्ताहारशतसहस्राणि प्रलम्बितानि, काशिकवस्त्रसच्चीवराणि प्रलम्बितानि, लोहितदण्डानि सुवर्णरूप्यपत्राणि अनेकानि पुष्पवृक्षशतानि अनेकानि पुष्करिणीशतानि पुष्पपरिपूर्णानि परमशोभनीयानि प्रादुर्भूतानि ॥

अथ गगनगञ्जो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—नागच्छति भगवन्नवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः ? भगवानाह—एष कुलपुत्र ततो बलेरसुरेन्द्रस्य भवनान्निष्क्रम्य परमभीषणीय तमोन्धकार नाम पृथिवीप्रदेश यक्षराक्षसाना भूमिं अमनुष्यावचरमपृथिवीप्रदेश तत्र गच्छति । यत्र कुलपुत्र चन्द्रादित्यौ न ज्ञायेते, तत्र च पृथिवीप्रदेशे वरदो नाम चिन्तामणिरत्नराजोऽस्ति । स च तत्रावभास कुरुते । अनेकानि यक्षराक्षसशतसहस्राणि तस्मिन् द्वीपे प्रतिवसन्ति । यदावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः प्रतिवसति, तदा दर्शनमात्रात्सर्वयक्षराक्षसाः परमहृष्टतुष्टाः प्रमुदितहृदया भवन्ति । अथ तेऽवलोकितेश्वरस्य पुरस्ताद्धावन्ति, निर्धावन्ति, धावित्वा पादयोः प्रणिपत्य सभाषयन्ति—मा त्व भगवन् श्रान्तक्लान्तो यस्त्वं चिरकालेन दृष्टः, यस्त्वमस्या तमोन्धकाराया भूमौ विहरसि ।

स कथयति—अनेकानि कर्तव्यानि मे। न च मयैकसत्त्वस्यार्थे आत्मभावः परिनिष्पादितः। अपि तु सर्वसत्त्वानामन्तिके मया महाकरुणाचित्ततोत्पादयितव्या॥

S 40 अथ ते सर्वे यक्षराक्षसा दिव्यसुवर्णरत्नमयं सिंहासनं प्रसमयन्ति तस्यावलोकितेश्वरस्यार्थे विचित्रैः पुष्पमयैः सछादितम्, यत्र च भगवान्निषद्य धर्मं देशयति। स तैर्यक्षराक्षसैर्नीत्वा तत्र दिव्यसुवर्णरत्नमये सिंहासने विश्रामितः। ततः अवलोकितेश्वरस्तेषां यक्षराक्षसानां धर्मं देशयति—शृण्वन्तु भवन्तः। आर्यकारण्डव्यूहस्य महायानसूत्ररत्नराजस्य चतुष्पादिकामपि गाथां ये श्रोष्यन्ति, श्रुत्वा च धारयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति, योनिशश्च मनसि करिष्यन्ति, तेषामिदं पुण्यस्कन्धसंचोदनो भविष्यति। तद्यथापि नाम कुलपुत्राः शक्यं मया परमाणुरजसा प्रमाणमुद्ग्रहीतुम्, न तु कुलपुत्राः शक्यं मया कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य पुण्यस्कन्धं गणयितुम्। तद्यथापि नाम कुलपुत्राः शक्यं मया महासमुद्रस्यैकमुदकबिन्दुं गणयितुम्, न तु कुलपुत्राः शक्यं मया कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य चतुष्पादिकाया अपि गाथायाः पुण्यस्कन्धं गणयितुम्। तद्यथापि नाम कुलपुत्राः द्वादशगङ्गानदीवालुकोपमास्तथागता अर्हन्तः सम्यक्संबुद्धा द्वादशकल्पानेकस्थाने धारयेयुः, चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः, तेऽपि तथागताः सर्वे सहिता भूत्वा कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य चतुष्पादिकाया अपि गाथायाः पुण्यस्कन्धं गणयितुं न शक्नुवन्ति स्म, प्रागेवाहमेकाकी तमोन्धकारभूमौ विहरामि॥

तद्यथापि नाम कुलपुत्राश्चतुर्महाद्वीपेष्वेकैकद्वीपप्रमाणं गृहं विहारं वा कारयेद्दिव्यसुवर्णरत्नमयम्, तत्र गृहे विहारे वा स्तूपसहस्रं कुर्यात्, तेषां चैकदिने धात्वावरोपणं
S 41 कुर्यात्, यच्च तेषां धात्वावरोपणेषु पूजायां पुण्यस्कन्धम्, ततो बहुतरं कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य चतुष्पादिकाया अपि गाथायाः पुण्यस्कन्धम्। तद्यथापि नाम कुलपुत्राः पञ्च महानद्यो सहस्रनदीपरिवारा महासमुद्रमुपसंक्रामन्ति, एवमेव कुलपुत्रा अस्य कारण्डव्यूहमहायानसूत्ररत्नराजस्य चतुष्पादिकामपि गाथां शृण्वतां पुण्यौघप्रवाहमुपप्रवहति॥

अथ ते यक्षराक्षसा अवलोकितेश्वरमेतदवोचन्—ये सत्त्वाः कारण्डव्यूहं महायानसूत्ररत्नराजं लिखापयिष्यन्ति, तेषां कीदृशं पुण्यस्कन्धं भवति? स आह—अप्रमेयं तेषां कुलपुत्राः पुण्यस्कन्धं प्रभवति। ये कारण्डव्यूहं महायानसूत्ररत्नराजं लिखापयन्ति, तैश्चतुरशीतिधर्मस्कन्धसहस्राणि लिखापितानि भवन्ति। ते राजानो भवन्ति, चक्रवर्तिनश्चतुर्द्वीपेश्वरा भवन्ति। ते सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां जनयन्ति। ये सततपरिग्रहं कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य नाममनुस्मरन्ति, मुच्यन्ते ते ईदृशात्संसारिकाद्दुःखात्। जातिजराव्याधिमरणशोकपरिदेवनादुःखदौर्मनस्योपायासपरिमुक्ता भवन्ति। यत्र यत्रोपपद्यन्ते, तत्र तत्र जातौ जातौ जातिस्मरा भवन्ति।

तेषा च कायात् गोशीर्षचन्दनगन्धो वास्यति । नीलोत्पलगन्धिनो मुखा भवन्ति । परिपूर्णगात्राश्च भवन्ति । महानग्ना अपरिमाणपुण्यबलसमन्वागताश्च ते सत्पुरुषा भविष्यन्ति । न कदाचित् यक्षत्व न राक्षसत्व न प्रेतत्व न पिशाचत्व न पूतनात्व न कटपूतनात्व न मनुष्यदारिद्र्य प्रत्यनुभविष्यन्ति । गङ्गानदीवालुकासमाना बुद्धाना भगवता सेवापुण्यस्कन्धेन समन्वागता भविष्यन्ति । येऽपि केचित् कुलपुत्रा सत्त्वा अस्मात् कारण्डव्यूह- S 42
महायानसूत्ररत्नराजादेकाक्षरमपि नामधेयमपि चतुष्पादिकामपि गाथा लिखापयिष्यन्ति, तेषा पञ्चानन्तर्याणि कर्माणि निरवशेष परिक्षय गमिष्यन्ति । ते चाभिरूपा भविष्यन्ति । प्रासादिका भविष्यन्ति । दर्शनीयाश्च भविष्यन्ति । बहुजनप्रियमनापदर्शनेन च भविष्यन्ति । तेषा न कश्चित् काये व्याधि. प्रभविष्यति । न चक्षुरोग न श्रोत्ररोग न घ्राणरोग न जिह्वारोग न कायरोगम् । न हीनाङ्गानि भविष्यन्ति । न प्रत्यन्तिकेषु जनपदेषु प्रत्याजायन्ते । न म्लेच्छेषु न पापकुलेषु नोरभ्रिकेषु न कौक्कुटिकेषु न जल्येषु (?) प्रत्याजायन्ते । सुपरिशुद्धकायाश्च ते सत्पुरुषा भविष्यन्ति ॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्व एव तेषा यक्षराक्षसाना तमोन्धकारवासिना सर्वेषा चानुलोमिका धर्मदेशना कृतवान् । ते यक्षराक्षसास्ता धर्मदेशना शुभा श्रुत्वा केचित् स्रोतआपत्तिफले प्रतिष्ठिता· । केचित् सकृदागामिफले, केचिदनागमिफले, केचिदर्हत्त्वे, केचित् प्रत्युत्वबोधौ प्रतिष्ठिता. ॥

अतो येनार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्व. तेनोपसक्रम्य पादयो. प्रणिपत्य एवं कथयन्ति—इहैव भगवन् विहरस्व, मान्यत्र स्थाने क्वचिद्गच्छ, वयं ते उपस्थानपरिचर्यां करिष्यामः, वय च तवान्तिके अस्मिन्नेव तमोन्धकारभूमौ तवार्थाय दिव्यानि सौवर्णमयानि चङ्क्रमणानि करिष्यामः । मा भगवन्नन्यत्र प्रदेश गच्छस्व, वय तवादर्शनात् कथ तिष्ठामः ? अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्ताश्च यक्षराक्षसानेतदवोचत्—अनेकानि च मया कुलपुत्राः सत्त्वानि बोधिमार्गे नियोजयितव्यानि । अथ ते सर्वे यक्षराक्षसा करे S 43
कपोल दत्त्वा चिन्तापरा व्यवस्थिताः । ते परस्परमेवमाहु·—गमिष्यति अयमस्माकमवलोकितेश्वरो बोधिसत्त्वो महासत्त्वोऽन्यतर पृथिवीप्रदेशम्, तद्वय धर्मसाकथ्यविप्रहीणा भविष्याम· । किमस्माभि कर्तव्यम् ? अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तस्यास्तमोन्धकाराया भूम्याः सप्रस्थितः । अथ ते तमोन्धकारप्रतिवासिनो यक्षराक्षसास्तस्य भगवतोऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पृष्ठत. पृष्ठत· समनुबद्धा गच्छन्ति स्म । अथ अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तानेतदवोचत्—प्रतिनिवर्तयध्वम् । दूरतमेवमाह (?) ॥

ते यक्षराक्षसा· पादौ शिरसा वन्दित्वा त्रिःप्रदक्षिणीकृत्य तत्रैव च प्रक्रान्ताः ॥

इति यक्षादिसमाश्वासन नाम द्वादश प्रकरणम् ॥



## देवभवनभ्रमणं त्रयोदशं प्रकरणम् ।

अथार्यावलोकितेश्वरो ज्वलदिवाग्निपिण्डमाकाशेऽन्तर्हितः । ततो देवभवन गत्वा शुद्धावासकायिकदेवपुत्राणा सकाशमुपसक्रान्तः । उपसक्रम्य ब्राह्मणरूपमात्मानमभिनिर्मायागमत् । तत्र देवनिकायेषु सुकुण्डलो नाम देवपुत्रो दरिद्रो दुश्चित्तश्चेति । अथ आर्यावलोकितेश्वरः स तेन ब्राह्मणरूपेण तस्य देवपुत्रस्य सकाशमुपसक्रान्तः । उपसक्रम्य सर्वेषा देवाना दारिद्र्यदु.खव्युपशमाय त देवपुत्रमेतदवोचत्—बुभुक्षितोऽह तृषितश्चेति । अथ स देवपुत्रो रुदस्त ब्राह्मणमेतदवोचत्—न च मे ब्राह्मण किंचित्सविद्यते । ब्राह्मणोऽव्वोचत्—
S 44 अवश्य त्वया मम किंचिद्दातव्यम् । अथ स देवपुत्रो विमान प्रविश्य सर्वभाण्ड निरभ्यवेक्षितुमारब्धः । स च परिपतित निवेशनं दिव्यैर्महार्है रत्नभाण्डैः परिपूर्ण दक्षिणपार्श्वम्, अन्यानि च भाण्डानि दिव्यरसरसाग्रोपेतैराहारै. परिपूर्णानि वामपार्श्वे विमानस्य वस्त्राभरणैः सर्वपुष्पगन्धादिभि परिपूर्णानि ॥

अथ स देवपुत्र एतद् दृष्ट्वैव चिन्तामापेदे—अवश्यमय स सत्पात्रो द्वारे स्थितो यस्य दर्शनमात्रेणापीदृशी लक्ष्मीर्ममानुप्राप्ता । अथ स देवपुत्रस्तं ब्राह्मणमाहूयैवमाह—एहि ब्राह्मण, इद विमान प्रविश । स च ब्राह्मणस्तेन देवपुत्रेण विमाने प्रविश्य तैर्दिव्यरत्नै. प्रतिपादितः, दिव्यै रसरसाग्रोपेतैराहारैर्भोजितः, दिव्यैर्वस्त्रैः प्रवारित. । स भुक्त्वा च स्वस्तिकारमनुकुरुते । अथ स देवपुत्रस्त ब्राह्मणमेतदवोचत्—भो ब्राह्मण, कतमाया भूम्यास्त्वमागत ? ब्राह्मण आह—जेतवननाममहाविहारादहमागत· । अथ स देवपुत्रस्तमेतदवोचत्—कीदृशी सा भूमिः ? अथ स ब्राह्मणो देवपुत्रमेतदवोचत्—तथागताध्युषिता सा भूमी रमणीया दिव्यमणिरत्नपरिखचिता परिशोभिता । परिभोगाय च तद्भूमौ दिव्यकल्पवृक्षाः प्रादुर्भूताः, मनोरमाणि पुष्पाणि प्रादुर्भवन्ति, विविधाः पुष्करिण्यो दृश्यन्ते, विविधाश्च शीलवन्तो गुणवन्तो दक्षिणीया दृश्यन्ते विश्वभुवः । तथागतस्यानेकानि प्रातिहार्याणि दृश्यन्ते । एव सा परमरमणीया देवपुत्र भूमिः । अथ स देवपुत्रस्त ब्राह्मणमेतदवोचत्—अवश्य त्वया ब्राह्मण सत्य प्रत्याहारः कर्तव्यः । अथवा त्वं देवोऽसि, मनुष्योऽसि वा ? न च मनुष्यस्येदृश निमित्त भवति यादृश तव निमित्त भवति ।
S 45 अथ स ब्राह्मणस्तमेतदवोचत्—न देवः, अपि तु मानुषोऽह बोधिसत्त्वभूतः । एव हीनदीनानुकम्पको बोधिमार्गमुपदर्शक । अथ स देवपुत्रस्तस्मै मौलिकुण्डलमुपनामयति, उपनामयित्वा च स देवपुत्र इमा गाथा भाषित( वान् )—

अहो गुणमय क्षेत्र सर्वदोषविवर्जितम् ।
अद्यैव वापित बीज अद्यैव फलसपदम् ॥

अथ स देवपुत्र इमा गाथा भाषित्वा तत्रैव प्रक्रान्तः ॥

इति देवभवनभ्रमण नाम त्रयोदश प्रकरणम् ॥

## सिंहलभ्रमणं चतुर्दशं प्रकरणम् ।

अथ स ब्राह्मण. तस्माद्देवनिकायादवतीर्य सिहलद्वीप प्रत्युद्गतः । गत्वा च राक्षसीना पुरतो व्यवस्थितः कामरूपमात्मानमभिनिर्माय प्रासादिकम् । अथ ता राक्षस्योऽन्योन्यमेवमाहु –अयमीदृशः परमकामरूपी पुरुषो दृश्यते । अथ त दृष्ट्वा च तदा तासां राक्षसीना कामचित्तमुत्पन्नम् । तदा तस्य सकाशमुपसक्रम्यैतदवोचन्–भवास्त्व भजस्व अस्माक कुमारीयौवनम्, न चास्माक स्वामी सविद्यते । त्व च भो पुरुष, अस्वामिकाना स्वामी भव । अगतिकाना गतिर्भव । अपरायणाना परायणो भव । अत्राणांना त्राण भव । अद्वीपाना द्वीपो भव । अन्धानामालोको भव । इमानि तेऽन्नगृहाणि पानगृहाणि वस्त्रगृहाणि विविधानि विचित्राणि शयनानि उद्यानरमणीयानि पुष्किरिणीरमयाणि ॥

स कथयति–मदीयमाज्ञप्त यदि कुरुते, तत्सर्व युष्माक यथाभिप्राय करिष्यामि । ताश्च तमाहु –कथ वय तवाज्ञा न करिष्यामः ? तेन तासामार्याष्टाङ्गिकमार्गमुपदर्शितम् । S 46 दश कुशलानि कर्मपथान्युपदर्शितानि । आगमचतुष्टय चाधीतम् । अथ ता राक्षस्यस्तस्य पुरुषस्यान्तिकादार्याष्टाङ्गिकमार्गं गृहीत्वा दश कुशलानि च सस्मर्य, सत्यचतुष्टय प्राप्त्वा, आगमसत्यचतुष्टयाधीताः, काश्चित्स्रोतापत्तिफलमनुप्राप्ता·, सकृदागामिफल चानुप्राप्ता , अनागामिफल चानुप्राप्ता., यावत्काश्चिदर्हत्त्व काश्चित्प्रत्येकबोधिमनुप्राप्ता., तदा तासा राक्षसीना रागदु ख न बाधते । द्वेषदु ख न बाधते । मोहदुःख न बाधते । आघातचित्त न भवति । न च कस्यचिज्जीवितान्तराय कुर्वन्ति । अभिरता धर्मेषु व्यवस्थिताः, शिक्षासवरमुपगृहीताः । एव चाहु –पुनरपि न प्राणातिपात कुर्वाम. । यादृशेन जाम्बुद्वीपका मनुष्या जीवन्ति अन्नेन पानेन, तादृशजीविकया वय जीवामः । पुनरपि राक्षसीवृत्तिं न कुर्वाम· । उपासकसवर धारयिष्याम इति । तादृश शिक्षासवरमुपगृहीत्वा तस्यैव पुरुषस्य पुरतोऽनिमिषैर्नयनैः प्रेक्षमाणाः प्रस्थिता. ॥

इति सिंहलभ्रमण नाम चतुर्दश प्रकरणम् ॥

---

## वाराणसीभ्रमणं पञ्चदशं प्रकरणम् ।

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तस्मात्सिंहलद्वीपादवतीर्य वाराणस्या महानगर्यामुच्चारप्रस्रावस्थाने गतो यत्रानेकान्यनेकानि कृमिकुलशतसहस्राणि प्रतिवसन्ति । ततोऽवलोकितेश्वरो बोधिसत्त्वो महासत्त्व उपसक्रम्य तत्रास तानि प्राणिशतसहस्राणि दृष्ट्वा आत्मान भ्रमररूपमभिनिर्माय घुणघुणायमाणम् । तदेषा शब्द निश्चारयति–नमो बुद्धाय, नमो धर्माय, नम सघाय इति । तच्छ्रुत्वा ते च सर्वे प्राणका नमो बुद्धाय नमो धर्माय S 47 नम· सघायेति नाममनुस्मारयन्ति । ते च सर्वे बुद्धनामस्मरणमात्रेण विंशतिशिखरसमुद्गत सत्कायदृष्टिशैल ज्ञानवज्रेण भित्त्वा सर्वे ते सुखावत्या लोकधातावुपपन्ना. सुगन्धमुखा नाम बोधिसत्त्वा बभूवु. । सर्वे ते भगवतोऽमिताभस्य तथागतस्यान्तिकादिद कारण्डव्यूह नाम महायान श्रुत्वा अनुमोद्य च नानादिग्भ्यो व्याकरणानि प्रतिलब्धानि ॥

अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो सत्त्वपरिपाक कृत्वा तस्या वाराणस्या महानगर्याः प्रक्रान्तः ॥

इति वाराणसीभ्रमण नाम पञ्चदश प्रकरणम् ॥

## मगधभ्रमणं षोडशं प्रकरणम् ।

तदा स मगधाभिमुख प्रत्युद्गच्छति । स मगधविषयमनुप्राप्तः । यावत् सत्त्वान् पश्यन्ति स्म परस्पर मासभक्षण कुर्वाणान् । अथ आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्तानेवमाह–कस्माद्भो., यूय अन्योन्य मास भक्षयथ ? ते चाहु.–नाद्यैव मासभक्षणम्, विंशतिवर्षाणि परिपूर्णानि कान्तारस्य च प्रतिपन्नस्य च । नात्र किंचिदन्नपान संविद्यते । तस्माद्वय अन्योन्य विरोध कुर्वाणा जीविता । एव कृत्वा मासभक्षण कुर्वाम ॥

अथ अवलोकितेश्वरो बोधिसत्त्वश्चिन्तामापेदे–केनोपायेनाह सत्त्वान् सर्वान् सुखोपधानैस्तस्मात्कान्तारान्महादारुणादकालमरणात्परिमोचयेय सतर्पयेयम् ? अथावलोकितेश्वरो
S 48 विविधानि वर्षाणि प्रवर्षितुमारब्ध. । प्रथममुदकवर्षम् । यदा उदकेन सतर्पिताः प्रीणितगात्राश्च भवन्ति, तदा पश्चाद्दिव्यानि पिष्टकानि रसरसाग्रोपेतानि तेनाहारेण परिपूर्णानि । यदाहारेण संतर्पिता भवन्ति तदा धान्यवर्षाणि पतन्ति, अन्यानि च तिलतण्डुलकोलमुद्गमाषकलावमसूरयवगोधूमशालिधान्यकुलत्थादीनि पतन्ति स्म । विविधानि च वस्त्राभरणानि च प्रवर्षन्ति स्म । यदा यदा तेषा सर्वेषा सत्त्वाना केऽप्यभिप्राया भवन्ति, तदा तदा तेषा सत्त्वानामभिप्राया अनुसिध्यन्ते । अथ ते मागधका सत्त्वास्तदिद विचित्रं स्वात्मसुख दृष्ट्वा दुःख च व्युपशान्तम्, तदा परमविस्मयमापन्नाः । ते च सर्वे एकस्थाने विश्रान्ता', विश्रमित्वा परस्परमेवमाहु–कस्य देवस्याय प्रभावः ? ततस्तेषा पुरुषाणा मध्ये जीर्णो वृद्धो महल्लकः कुब्जो गोपाणसीवक्रोऽधिभग्नो दण्डपरायणः अनेकवर्षशतसहस्रायुषिकः। स तेषा मध्ये स्थित्वा कथयति–न युष्माकमन्यदेवस्य कस्यचिदीदृश. प्रभावो भवति विरहितादवलोकितेश्वरस्य । ततस्ता पर्षदः पृच्छन्ति–कीदृश तस्य निमित्तमवलोकितेश्वरस्य ? अथ स पुरुष आर्यावलोकितेश्वरस्य गुणोद्भावना भाषितुमारब्ध.–

शृणुत कुलपुत्रा । अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वोऽन्धभूताना दीपभूत., सूर्यतापदग्धाना छत्रीभूत., तृषोपद्रुताना नदीभूतः, भयभीतानामभयदद., व्याधिपरिपीडिताना वैद्यभूत , दुःखिताना सत्त्वाना मातापितृभूतः, अवीच्युपपन्नाना सत्त्वानां निर्वाणप्रदर्शक' । ईदृशानि भवन्तस्तस्य गुणविशेषाणि । सुखितास्ते सत्त्वा लोके ये तस्य नाम-
S 49 मनुस्मरन्ति । ते आपश्चिम सासारिक दु ख परिवर्जयन्ति । सचेतनास्ते पुरुषपुंगवा ये अवलोकितेश्वरस्य सततपरिग्रह पुष्पधूप निर्यातयन्ति । येऽवलोकितेश्वरस्य पुरतश्चतुरस्र मण्डलक कुर्वन्ति, ते राजानो भवन्ति चक्रवर्तिन. सप्तरत्नसमन्वागताः । तद्यथा–चक्ररत्नम्, अश्वरत्न हस्तिरत्न मणिरत्न स्त्रीरत्न गृहपतिरत्न परिणायकरत्नम् । एव सप्त रत्नानि, एभि' सप्तरत्नैः समन्वागता भवन्ति । ये चावलोकितेश्वरस्यैकमपि पुष्प निर्यातयन्ति, ते

सुगन्धिकाया भवन्ति । यत्र यत्रोपपद्यन्ते तत्र तत्र परिपूर्णकायाश्च भवन्ति । एव स पुरुषो गुणविशेष कृतवान् । ताश्च पर्षदः स्वकस्वकेषु भवनेषु प्रत्युद्गताः, अनन्तविमला नाम कायपरिशुद्धि. [ ता ] प्रतिलभन्ते स्म । अथ स जीर्णपुरुषः आनुलोमिकी धर्मदेशना कृत्वा स्वक गृह निवेशन प्रत्युद्गत । अथावलोकितेश्वरस्तत्रैवाकाशेऽन्तर्हित. ॥

अथ स आकाशे चिन्तामापेदे—विश्वभूस्तथागतो मे चिरकाल दृष्टः, सोऽनुपूर्वेण जेतवन विहारमनुप्रविष्ट. । यावत्पश्यति अनेकानि देवनागयक्षगन्धर्वासुरगरुडकिन्नर-महोरगमनुष्यामनुष्यशतसहस्राणि । अनेकानि च बोधिसत्त्वशतसहस्राणि सनिपतितानि ॥

अथ गगनगञ्जो बोधिसत्त्वो भगवन्तमेतदवोचत्—कतमोऽय भगवन् बोधिसत्त्व आगच्छति ? भगवानाह—एष कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्व आगच्छति । अथ गगनगञ्जो बोधिसत्त्वः तूष्णीभावेन व्यवस्थित । अथावलोकितेश्वरो बोधिसत्त्वस्त भगवन्त त्रिः प्रदक्षिणीकृत्य वामपार्श्वे विश्रान्त· ॥

अथ स पुन. श्रान्त विदित्वा भगवान् पृच्छति—श्रान्तस्त्व कुलपुत्र । कीदृशी S 50
कर्मभूमिस्त्वया निष्पादिता ? तेन तस्य भूतपूर्वं वर्णितम्—सदा प्रेतेष्ववीच्युपपन्नेषु कालसूत्ररौरवोपपन्नेषु हाहे तपने महानरके, सितोदके महानरके, असिच्छेदे महानरके, सवरे महानरके । एषु महानरकेषु ये सत्त्वा उपपन्नास्तेषा च कर्मभूमिः सत्त्वाना-मपरिपाककृता कर्तव्या, कृत्वा चानुत्तराया सम्यक्सबोधौ प्रतिष्ठापयितव्या· । ईदृशो मया सत्त्वपरिपाक· कृतः । अथ गगनगञ्जो बोधिसत्त्वो महासत्त्व परमविस्मयमापन्नः—न च मे बोधिसत्त्वभूतस्य ईदृश विषय दृष्ट श्रुत वा, तथागतानामीदृश विषय न सविद्यते ॥

अथ गगनगञ्जो बोधिसत्त्वोऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतः स्थित्वा अवलोकितेश्वरमेवमाह—मा त्व श्रान्त. । क्लिष्टस्त्वम् । स आह—न चाह युष्माक मध्ये श्रान्तो न क्लिष्टः । तौ परस्पर साकथ्य कृत्वा तूष्णींभावेन व्यवस्थितौ ॥

अथ भगवान् षट्पारमितानिर्देश धर्म देशयितुमारब्धः—शृण्वन्तु कुलपुत्रा. । प्रथमं बोधिसत्त्वभूतेन दानपारमिता परिपूरयितव्या । एव शीलपारमिता क्षान्तिपारमिता धै(वी)र्यपारमिता ध्यानपारमिता प्रज्ञापारमिता परिपूरयितव्या । इमा चानुलोमिका धर्म-देशना कृत्वा तूष्णींभावेन व्यवस्थितः । अथ ताः पर्षद. स्वकस्वकस्थानेषु प्रक्रान्ताः, ते च बोधिसत्त्वा. स्वकस्वकेषु बुद्धक्षेत्रेषु प्रक्रान्ता· ॥

अय कारण्डव्यूहमहायानसूत्ररत्नराजस्य प्रथमो निर्व्यूहः सर्वकर्मविशोधनोऽनुत्तर-बोधिमार्गप्रतिष्ठापक. समाप्तः ॥ १ ॥

——०——

# द्वितीयो निर्व्यूहः ।

## अश्वराजवर्णनं प्रथमं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—आख्याहि भगवन् अवलोकितेS 51 श्वरस्य भूतपूर्वं कृतमेते समाधय., यैरवलोकितेश्वर. समापन्न । भगवानाह—अप्रमेयैरसख्येयै. समाधिकोटिनियुतशतसहस्रै. समापन्नोऽवलोकितेश्वर , येषा समाधीना ( न ) शक्य सर्वतथागतै. पर्यन्तमधिगन्तुम् । अथ सर्वनीवरणविष्कम्भी आह—निर्देशय भगवस्तानि समाधीनि सर्वसत्त्वानुकम्पया । भगवानाह—तद्यथापि नाम कुलपुत्र आकारकरो नाम समाधिः, प्रभाकरो नाम समाधिः, वज्रोद्गतो नाम समाधि, सूर्यप्रभो नाम समाधि', विकिरिणो नाम समाधि', केयूरो नाम समाधिः, ध्वजाग्रो नाम समाधि', अलकारो नाम समाधि', व्यूहराजो नाम समाधि, दशदिग्व्यवलोकनो नाम समाधिः, चिन्तामणिवरलोचनो नाम समाधि., धर्मधरो नाम समाधि., समुद्रावरोहणो नाम समाधि', अभिनमितो नाम समाधि., उष्णीषकुण्डलो नाम समाधि', चन्द्रवरलोचनो नाम समाधि., बहुजनपरिवारो नाम समाधि', देवकुण्डलरोचनो नाम समाधिः, कल्पद्वीपो नाम समाधिः, प्रातिहार्यसदर्शनो नाम समाधिः, पद्मोत्तमो नाम समाधिः, अवीचिसशोषणो नाम समाधिः, रुचिरो नाम समाधिः, देवमण्डलो नाम समाधिः, अमृतबिन्दुर्नाम समाधिः, प्रभामण्डलो नाम समाधिः, समुद्रावगाहनो नाम समाधिः, विमाननिर्व्यूहो नाम समाधिः, कलविङ्कS 52 स्वरो नाम समाधिः, नीलोत्पलगन्धो नाम समाधिः, आरूढो नाम समाधि', वज्रकुचो नाम समाधि., द्विरदरतो नाम समाधिः, सिंहविक्रीडितो नाम समाधि., अनुत्तरो नाम समाधिः, दमनो नाम समाधिः, चन्द्रोत्तर्यो नाम समाधिः, आभासकरो नाम समाधि., शतकिरणो नाम समाधिः, विच्छुरितो नाम समाधिः, प्रभाकरो नाम समाधि , स्वाकारकरो नाम समाधि', असुरसचोदनो नाम समाधिः, भवसशोधनो नाम समाधिः, निर्वाणसचोदनो नाम समाधिः, महाद्वीपो नाम समाधिः, द्वीपराजो नाम समाधि', भवोत्तारकरो नाम समाधिः, अक्षरकरो नाम समाधिः, देवाभिमुखो नाम समाधिः, योगकरो नाम समाधिः, परमार्थदर्शनो नाम समाधि', विद्युन्नाम समाधि', नामव्यूहो नाम समाधि , सिंहविजृम्भितो नाम समाधिः, स्वातिमुखो नाम समाधि., आगमनागमनो नाम समाधि., बुद्धिविस्फुरणो नाम समाधिः, स्मृतीन्द्रियसवर्धनो नाम समाधिः, अधिमुक्तो नाम समाधि., जयवाहनो नाम समाधिः, मार्गसदर्शनो नाम समाधि' । एभिः कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः समाधिभिः समन्वागतः । तस्यैककरोमविवरे समाधिशतसहस्राणि सन्ति । अय कुलपुत्र अवलोकितेश्वरस्य परमपुण्यसभार. । ईदृशस्तथागताना पुण्यसभारो न सविद्यते, प्रागेव बोधिसत्त्वभूतस्य ॥

भूतपूर्वं कुलपुत्र अहं सिंहलराजो नाम बोधिसत्त्वभूतोऽभूवम्। ततोऽहं सिंहलद्वीपयात्रां सप्रस्थित.। पञ्चभिर्वणिक्पुत्रशतैः सार्धं शकटैर्भारैर्मूटैः पिठरैरुष्ट्रैर्गोभिर्गर्दभादिभिः प्रभूत पण्यमारोप्य सिंहलद्वीप सम्प्रस्थितः। ततोऽनुपूर्वेण ग्रामनगरनिगमपर्णपत्तनेषु चचूर्य- S 53 माण सिंहलद्वीपमनुप्राप्तः, येन निपुण तद्यानपात्र प्रतिपादितम्। तदा मे कर्णधारा आहु:—कथय कथय युष्माकं कतमद्वीपेषु गमनायेद्दशा वायवो वान्ति ? अथवा रत्नद्वीपेषु वायवो वान्ति, अथवा राक्षसद्वीपेषु वायवो वान्ति ? अथ कर्णधार एवमाह—यत्खलु देवो जानीयात्—सिंहलद्वीपेषु वायवो वान्ति। अथ तद्यानपात्रमारुह्य सिंहलद्वीप संप्रस्थितः॥

ततोऽहं सिंहलद्वीपनिवासिनीभी राक्षसीभि. सप्रस्थितो विदित्वा अकालवायव उत्सृष्टाः। तच्च तद्यानपात्र खण्डखण्डं विशीर्णम्। ते च वणिक्पुरुषा उदके पतिता बाहुबलेन सतर्तुमारब्धाः। ततस्तीरस्य समीपमनुप्राप्ता॥

ततो राक्षसीना पञ्च शतानि निष्क्रान्तानि किलकिलायमानानि। कुमारीरूपमभिनिर्माय तदा कूलस्य समीपमनुप्राप्ता.। उत्तार्य शाटकानि दत्त्वा उदकेभ्य उत्क्षिप्ताः। ते च स्वकीयानि वस्त्राणि शरीरे लग्नानि गृहीत्वा निष्पीडितुमारब्धाः। निष्पीडयित्वा ते तस्मात्स्थानादतिक्रम्य अन्यप्रदेशे महतश्चम्पकवृक्षस्य तले विश्रान्ताः। विश्रमित्वा परस्पर साकथ्य कर्तुमारब्धाः—कोऽस्माकमुपाय. सविद्यते ? ते कथयन्ति—नास्माक उपायस्य स्थानम्। एव साकथ्य कृत्वा तूष्णींभावेन व्यवस्थिताः। अथ तेषा राक्षस्यः पुरुषाणा पुरतः स्थित्वैवमाहु.—स्वागतम्। भवन्त आगच्छताम्, अस्वामिकाना स्वामी भव। अगतिकाना गतिको भव। अद्वीपाना द्वीपो भव। अनालयनाना अपरायणाना आलयो भव, परायणो भव। इमानि तेऽन्नगृहाणि पानगृहाणि यानगृहाणि वस्त्रगृहाणि कटककेयूराणा S 54 मौलीकुण्डलाना गृहाणि उद्यानरमणीयानि पुष्किरिणीरमणीयानि सतिष्ठन्ति। ताभी राक्षसीभिरेकैक पुरुष गृहीत्वा स्वक स्वक निवेशन प्रत्युद्गता.। या च तासा राक्षसीना वृद्धतरा, तयाहं स्वकीय निवेशन नीत्वा दिव्यरससाग्रोपेतेनाहारेण सतर्पितः। सतर्पयित्वा क्रीडितुमारब्धा। स तु ततो मानुष्यकेन सौख्येन सतर्पितः। एव द्वित्रिसप्तदिनान्यतिक्रान्तानि। स रात्रौ शयितः। एव यावत्पश्यति रतिकरहसन तदाह विस्मयमापन्नः। न कदाचित्स्यान्मया दृष्ट वा श्रुतं वा प्रज्वलितमेव रतिकरहसनम्, तदैव मया तस्य प्रत्याहारः कृतः—किं कारण त्व हससे ? इय सिंहलद्वीपनिवासिनी राक्षसी। सा तव जीवितान्तराय करिष्यति। तदा मे तस्य प्रत्याहारः कृतः—त्व जानासि राक्षसीति ? स कथयति—यदि न प्रतीयसि, दक्षिणपन्थलिका गृहीत्वा अनुविचरन् गच्छ। तत्राय स नगरमूर्ध्वमुच्च गवाक्षतोरणविप्रहीण चाप्रतिहतम्। तत्रानेकानि वणिग्जनानि भक्षयित्वा अस्थीनि प्रक्षिप्तानि। अन्ये च जीवन्तो अन्ये च मृताः। यदि न प्रतीयसि, तदपि मार्गं गच्छ। गत्वा च मार्गं निरीक्षस्व, तदा मे श्रद्धास्यसि। तदा तस्यास्तेन मोहजाला नाम निद्राति सा॥

अथ स बोधिसत्त्वो रात्रिप्रथमयामे समये तस्या राक्षस्या· सकाशादुत्थाय सप्रस्थित. । चन्द्रावभास खड्ग सज्जीकृतम् । उपगृह्यानुविचरस्ता दक्षिणपन्थलिका गृहीत्वा सप्रस्थित· । अनुपूर्वेणायस नगरमनुप्राप्त , समन्तेन परिक्रमति । न च द्वाराणि गवाक्षाणि समनुपश्यति । अथ तस्मिन्नायसे नगरे महान् यश्चम्पकवृक्षस्तत्रैवारुह्य ततो मया तेषा-
S 55 मुत्कासनशब्द. कृत । ततो मे वणिक्पुरुषाः कथयन्ति—यत्खलु महासार्थवाहो जानीयात्—वय राक्षसीभिरायसे नगरे प्रक्षिप्ता· । तदा दिने दिने शत पुरुषाणा गृहीत्वा भक्षयन्ति । तान् भक्षयित्वा अस्थीन्यत्रैवायसे नगरे क्षिपन्ति । तेन तस्य भूतपूर्व वर्णितम् । तदाह चम्पकवृक्षादवतीर्य पुनरेव दक्षिणा पन्थलिका गृहीत्वा अनुविचरन् त्वरित आगच्छामि स्म । ततो प्रविष्ट. ॥

अथ रतिकरो मामेतदवोचत्—दृष्टस्ते सार्थवाह मद्वचनम् ? उक्तं च मया—दृष्ट युष्माक सत्य साकथ्यकृतम् । तदा मेऽस्य प्रत्याहार· कृत·—सत्यमेव, क उपायोऽस्माकम् ? अथ स रतिकर एतदवोचत्—अस्ति मे महासार्थवाहोपायम्, येनोपायेन सिंहलद्वीपात् स्वस्तिक्षेमाभ्या जम्बूद्वीप निर्गच्छसि । पुनरेव जम्बुद्वीपमपसरसि । अथ स रतिकरो मामेतदवोचत्—अस्ति तस्मिन्नेव द्वीपे महासमुद्रतीरे देवबालाहो नामाश्वराजो हीनदीनानुकम्पकः । स च बालाहोऽश्वराज· सर्वश्वेतानामौषधी भुक्त्वा सुवर्णवालुकास्थले आवर्तनपरिवर्तनसपरिवर्तन कृत्वा शरीर प्रच्छोडयति, प्रच्छोडयित्वा प्रत्याहार कुरुते—क· पारगामी, कः पारगामी कः पारगामीति ? त्वयैव वक्तव्यम्—अह देव पारगामीति । एवं साकथ्य कृत्वा सा राक्षसी समीपमुपगम्य सार्धं शयित एव प्रतिविबुद्धा । सा कथयति—आर्यपुत्र, कथ ते शरीरं शीतलम् ? तदा मया तस्या मृषावाद प्रत्याहार कृतम् । बहिर्नगरस्य उच्चारप्रस्रवेण निष्क्रान्तोऽहम्, तत· शरीरं शीतलम् । इत्युक्त्वा सा पुनरपि शयिता । तत. प्रातः सूर्यस्य चाभ्युद्गमनकालसमये उत्थाय तेषा वणिक्पुरुषाणामारोचयति स्म—आगच्छन्तु भवन्तो बहिर्नगरस्य गच्छाम. । ते सर्वे सहिताः समग्रा बहिर्नगरस्य
S 56 सप्रस्थिताः । ते च बहिर्नगरस्य गत्वा एकान्ते विश्रान्ताः साकथ्य कर्तुमारब्धाः—कस्य कीदृशी भार्या स्नेहवती ? केचित्कथयन्ति—अतिस्नेह न कुरुते । केचित्कथयन्ति—मम दिव्यरसरसाग्रोपेतैराहारै. सधारयति । केचित् कथयन्ति—नानाविधैर्वस्त्रैर्मम सधारयति । केचित्कथयन्ति—मम दिव्यमौलीकुण्डलस्रग्दामानि धारयति । केचित्कथयन्ति—नास्माक कायदौर्बल्यम् । केचित्कथयन्ति—मम विविधानि चन्दनकर्पूरकस्तूरिकादीनि धारयति । एव तै. साकथ्य कृतम् । तदा तेषा वणिक्पुरुषाणा प्रत्याहार करोति स्म—न युष्माक युक्तमिदं यद्वय राक्षसीभि. प्रसक्ता. । इति श्रुत्वा ते विह्वलीभूता. एवमाहु.—सत्य महासार्थवाह, राक्षसी सिंहलद्वीपनिवासिनीति । तदा तेषा मया प्रत्याहारः कृतः—सत्यं सत्य बुद्धधर्मसघेभ्यः, नेय मानुषी, राक्षसी । अथ ते वणिक्पुरुषाः कथयन्ति—कास्माकं गति· ? किं परायणम् ? तदा तेषा मया प्रत्याहारः कृतः—अस्माक गति. शरणं परायणम् ?

वणिक्पुरुषा' कथयन्ति—उपदर्शय सार्थवाह । अथ स तेषामेवमाह—अस्ति युष्माक सिंहलद्वीपे बालाहो नाम अश्वराज' । स च हीनदीनानुकम्पकः । स सर्वश्वेतानामौषधीर्भुक्त्वा सुवर्णवालुकास्थले आवर्तन करोति । कृत्वा च शरीर प्रच्छोडयित्वा वाणी प्रत्याहरेदिति—कः पारगामी क. पारगामी क' पारगामीति । तत्रास्माभिर्गन्तव्यम्—वय पारगामिन इति । अथ ते वणिक्पुरुषा ऊचुः—कतमे दिने गच्छामो वयम् ? स प्रत्याहार कर्तुमारब्धः—तृतीये दिवसेऽवश्य गन्तव्यम् । पुरुषेण सबल कर्तव्यमिति । ते क्रियाकार कृत्वा पुनरेव तन्नगरं प्रविष्टाः स्वकस्वक निवेशनमुपगता । ताभी राक्षसीभिः सभाषिता.— S 57
श्रान्तस्त्वम्, दृष्टास्ते तान्युद्यानरमणीयानि पुष्करिणीशतानि रमणीयानि ? स कथयति—न च ते किंचिद् दृष्टम् । अथ सा राक्षसी तमेतदवोचत्—सन्ति आर्यपुत्र विविधान्यस्मिन् सिंहलद्वीपे उद्यानरमणीयानि पुष्करिणीरमणीयानि विविधविचित्रपुष्पपरिपूर्णानि । अनेकानि च पुष्करिणीशतानि रमणीयानि । स प्रत्याहार कर्तुमारब्ध.—तृतीये दिवसे गमिष्यामीत्यत. सबल कर्तव्यम् । उद्यानभूमिदर्शनायोपसक्रमिष्यामि । तानि च विविधानि पुष्करिणीशतानि रमणीयानि उद्यानशतानि पुष्पपरिपूर्णानि पश्यामि । तानि च विविधानि पुष्पाणि गृहीत्वा आगमिष्यामि । सा कथयति स्म—आर्यपुत्र । एव करोम्यहम् । ततस्तेन शरीरमनुविचिन्त्य । ( ? ) अथ राक्षस्यो जानन्ति योग तेनास्माक ( ? ) जीवितान्तराय करिष्यन्ति । ईदृश शरीरमनुविचिन्त्य तूर्णींभावेन व्यवस्थितः । तस्य तया प्रणीताप्रणीतान्याहाराण्यनुप्रदत्ता । भुक्त्वा च उच्छ्वासं छोरितम् । सा कथयति राक्षसी—आर्यपुत्र किं कारण उच्छ्वास छोरितम् ? अथ स तामेतदवोचत्—स्वदेशाभिरता जाम्बुद्वीपका मनुष्याः । सा आह—किं करोष्यार्यपुत्र स्वकीयेन विषयेन ? अस्मिन्नेव सिंहलद्वीपे विविधान्यन्नगृहाणि पानगृहाणि वस्त्रगृहाणि विविधान्युद्यानरमणीयानि पुष्करिणीरमणीयानि । विविधसुखमनुभवसे । किं जम्बुद्वीपमनुशोचसे ? तदाह तूर्णीभावेन व्यवस्थित । स त दिवसमतिक्रान्तः । द्वितीये दिवसे प्रणीतान्याहाराणि सत्वरमनुप्रदत्तानि सज्जीकृतानि । तृतीये दिवसे प्रत्यूषकालसमये सर्वे ते S 58
सप्रस्थिता । ते च बहिर्नगरस्य निष्क्रान्ताः । निष्क्रमित्वा क्रियाकार कर्तुमारब्धाः । न पुनः केनचित् पुनरेव सिंहलद्वीपो निरीक्षितव्य' । त्वरितमस्माभिर्गन्तव्यम् । ईदृश क्रियाकार कृत्वा संप्रस्थिताः त्वरित त्वरितमेव लघु लघ्वेव गच्छन्ति । अनुपूर्वेण यत्र स बालाहकोऽश्वराजस्तत्रानुप्राप्ताः । यावत्पश्यन्ति बालाहमश्वराजम् । त सर्वश्वेतानामौषधीमास्वादयति । आस्वादयित्वा सुवर्णवालुकास्थले आवर्तन करोति । कृत्वा च शरीरं प्रच्छोडयति । यदा शरीर प्रच्छोडयति तदा सिंहलद्वीप चलति स्म । त्रीणि वाक्यानि प्रत्याहरति स्म—क पारगामी, कः पारगामी, क' पारगामीति ? अथ स बालाहोऽश्वराजस्तानेतदवोचत्—भो वणिक्पुरुषाः । यदा शरीरं प्रच्छोडयामि, न तदा युष्माक केनचित्सिंहलद्वीपो निरीक्षितव्यः । न केनचिच्चक्षुर्विस्फुरितव्यम् । ते तादृश क्रियाकार कृत्वा । तदाह प्रथमतरमारूढः,

पश्चात्पञ्चशतानि वणिग्जनाः । यदा ते आरूढाः, तदा सिंहलद्वीपनिवासिन्यो राक्षस्यः किलकिलायमानाः पृष्ठतो धावन्ति स्म रुदन्त्यः करुणकरुणैर्विलापैः । ततस्तैः रुदच्छब्दं श्रुत्वा प्रतिनिवर्त्य निरीक्षितुमारब्धम् । तैर्निरीक्ष्यन्ते । तदा तेऽधोमुखा उदके पतन्ति स्म । यदा ते उदके पतिताः, तदा राक्षस्य उत्क्षिप्य मांसं भक्षयन्ति स्म । तदाहमेकाकी जम्बूद्वीपमेव प्रत्युद्गतः । तदा तीरस्य समीपे बालाहमश्वराजं त्रिः प्रदक्षिणीकृत्य तत्रैव प्रक्रान्तः । ततोऽहं संप्रस्थितः । स्वकीयं निवेशनमनुपूर्वेणानुप्राप्तः । तदा मे मातापितरौ कण्ठे
S 59 परिष्वज्य रोदितुमारब्धौ । ततो बाष्पेण पटलानि विस्फुटितानि । ततो द्रष्टुमारब्धौ । ततो मातापितृभ्यां सार्धं विश्रान्तः । तेन तेषां सर्वं भूतपूर्वं वृत्तान्तमाख्यातम् । ततस्तौ मातापितरौ कथयतः स्म—जीवस्तु पुत्र त्वमनुप्राप्तः । नास्माकं द्रव्येण कृत्यम् । जराकाले यष्टिभूतोऽन्धकारे मार्गस्योपदर्शकः, मरणकाले पिण्डदाता, मृतस्य सनाथीकरणीयम् । यथा शीतलो वातो नाम पुत्रः आह्लादकरः । एतद्वचनं मातापितरौ चाख्यातम् । ईदृशं मया सर्वनीवरणविष्कम्भिन् सार्थवाहबोधिसत्त्वभूतेन दुःखमनुभूतम् ॥

तद्यथापि नाम सर्वनीवरणविष्कम्भिन् बालाहकः तमश्वराजभूतेनावलोकितेश्वरेण बोधिसत्त्वेन महासत्त्वेन तादृशादहं मृत्युभयात्परिमोक्षितः । तद्यथापि नाम सर्वनीवरणविष्कम्भिन् न शक्नोम्यवलोकितेश्वरस्य पुण्यसंभारं गणयितुम् । अल्पमात्रमिदं साकथ्यं कृतं एकैकरोमविवरस्य ॥

इति अश्वराजवर्णनं नाम प्रथमं प्रकरणम् ॥



## रोमविवरणावर्णनं द्वितीयं प्रकरणम् ।

तद्यथापि नाम सर्वनीवरणाविष्कम्भिन् सुवर्णं नाम रोमविवरम् । तत्रानेकानि गन्धर्वकोटिनियुतशतसहस्राणि प्रतिवसन्ति स्म । तेन च सांसारिकेन दुःखेन न बाध्यन्ते । परमेण सौख्येन संतर्पिता भवन्ति । दिव्यानि वस्तूनि प्रादुर्भवन्ति । तत्र न च ते रागेण बाध्यन्ते । न च मोहेन बाध्यन्ते । न च द्वेषेण बाध्यन्ते । न च ते आघातचित्तमुत्पादयन्ति । न च तेषां हिंसाचित्तमुत्पद्यते । ते सततसमितमार्याष्टाङ्गिकमार्गमुपदार्शिता भवन्ति । सततकालं धर्माभिकाङ्क्षिणो भवन्ति । तद्यथापि नाम सर्वनीवरणविष्कम्भिन्
S 60 सुवर्णनामरोमविवरे अवभासं नाम चिन्तामणिरत्नम् । यदा ते गन्धर्वा अभिप्रायं चिन्तयन्ति, तदा तेषामभिप्रायोऽनुसिध्यति । तदा सुवर्णरोमविवरादतिक्रम्य कृष्णो नाम रोमविवरः । तत्रानेकानि ऋषिकोटिनियुतशतसहस्राणि प्रतिवसन्ति । केचिदेकाभिज्ञाः, केचिद् द्वयभिज्ञाः, केचित् त्र्यभिज्ञाः, केचिच्चतुरभिज्ञाः, केचित्पञ्चाभिज्ञाः, केचित्षडभिज्ञाः । तस्मिंश्च रोमविवरे रूप्यमयी भूमिः, कनकमयाः पर्वताः, रूप्यमयाः शृङ्गाः, पद्मरागैरुपचिताः पर्वताः, तादृशाः सप्तसप्ततिपर्वताः । एकैकपर्वतेऽशीतिसहस्राणि ऋषीणां प्रतिवसन्ति । तेषां च ऋषीणामीदृशाः पर्णकुटिरकल्पवृक्षाणि दृश्यन्ते । लोहितदण्डाः

सुवर्णरूप्यपत्रा रत्नावभासिताः । एकैकपार्श्वे रोमविवरे चतस्रः पुष्करिण्यः । केचिदष्टाङ्गोपेतेन वारिणा परिपूर्णाः, केचित्पुष्पपरिपूर्णाः । तस्मिन्नुपचारसमीपे दिव्या अगुरुद्रुमवृक्षाः, सुगन्धाश्चन्दनवृक्षाः, परिशोभिताः कल्पवृक्षाः सदृश्यन्ते । दिव्यालंकारप्रलम्बिता मौलीकुण्डलप्रलम्बिता हारार्धहारप्रलम्बिताः केयूरनूपुरस्रग्दामप्रलम्बिताः सौवर्णपत्रा. । तत्रैकैककल्पवृक्षे गन्धर्वशत विश्रान्तम् । यदा ते वाद्यप्रत्याहारमुदीरयन्ति, तदा मृगपक्ष्यादयः संवेगमापद्यन्ते—सुखदु खमिद सासारिकाणा सत्त्वानाम् । कथ जम्बुद्वीपे दुःखमनुभवन्ति ? जातिजरामरण पश्यन्ति ? इष्टप्रियवियोगमप्रियसप्रयोग पश्यन्ति ? मानुष्यकाणि बहूनि दुःखानि प्रत्यनुभवन्ति ? इत्येव ते मृगपक्षिणः सवेगमनुविचिन्त्य यदा कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य नामानुस्मरन्ति, तदा तेषा दिव्यरसरसाग्रोपेता आहाराः प्रादुर्भवन्ति । दिव्यानि च सौगन्धिकानि वस्तूनि प्रादुर्भवन्ति । दिव्यानि वस्त्राणि प्रादुर्भवन्ति । यदा तेऽभिप्रायमनुविचिन्तयन्ति, तदाभिप्रायाः सिध्यन्ति ॥ S 61

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—परमाश्चर्याद्भुतप्राप्तोऽह भगवन् । भगवानाह—किं कारण कुलपुत्र परमविस्मयमापन्नः ? अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—यदा भगवन् कारण्डव्यूहस्य महायानसूत्ररत्नराजस्य नामानुस्मरन्ति, तदाभिप्राया अनुसिध्यन्ति । यस्य नामधेयमात्रेण ईदृशानि वस्तूनि प्रादुर्भवन्ति, सुखितास्ते सत्त्वा ये कारण्डव्यूह महायानसूत्ररत्नराज श्रोष्यन्ति लिखापयिष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति, योनिश च मनसि करिष्यन्ति । ये कारण्डव्यूहस्य महायानसूत्रराजस्यैकाक्षरमपि लिखापयिष्यन्ति, ते इद सासारिक दुःख न पश्यन्ति । न च ते चण्डालकुक्कुरकुलेषु जायन्ते । न च ते हीनेन्द्रिया भवन्ति । न च ते खञ्जकुब्जकोर्ध्वनासगण्डलम्बोष्ठाश्च सत्त्वा. कुष्ठिनश्च सन्तः । न च तेषा काये व्याधिः संक्रमते । आरोग्यबलवत्प्रीणितेन्द्रियाश्च भवन्ति । अथ भगवान् साधुकारमदात् । साधु साधु सर्वनीवरणविष्कम्भिन्, यस्त्वमीदृश प्रतिभान करोषि । अनेकानि देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्या उपासकोपासिकासहस्राणि सनिपतितानि—त्वयेदृश धर्मसाकथ्यं कृतम् । यतस्त्वयेदृशो वैपुल्यप्रतिभानः कृत. ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—यदा भगवन्निदं प्रश्नमनिर्दिष्टं तदा देवपुत्राणामभेद्या श्रद्धोत्पन्ना । अथ भगवान् साधुकारमदात्—साधु साधु कुलपुत्र, S 62 यस्त्वमेव पुनः पुनस्तथागतमध्येषसे । तद्यथापि नाम सर्वनीवरणविष्कम्भिन् कृष्णान्नाम रोमविवरादवतीर्य रत्नकुण्डलो नाम रोमविवर. । तत्रानेकानि गन्धर्वकन्याकोटिनियुतशतसहस्राणि प्रतिवसन्ति । ताश्च गन्धर्वकन्या अभिरूपाः दर्शनीयाः परमया शुभवर्णपुष्कलतया समन्वागता दिव्यालकारविभूषितशरीरा अप्सरसामिव प्रतिस्पार्धिन्यः तादृश्यः, परमशोभनाः । न च ता रागदुःखेन बाध्यन्ते । न च द्वेषदु.खेन बाध्यन्ते । न च मोहदुःखेन बाध्यन्ते । न च तासा काये किंचिन्मानुषीदुःखं सविद्यते । ताश्च गन्धर्वकन्यास्त्रिकाल-

मवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नाममनुस्मरन्ति । यदा त्रिकालमनुस्मरन्ति, तदा तासा सर्ववस्तूनि प्रादुर्भवन्ति ॥

अथ सर्वनीवरणाविष्कम्भी भगवन्तमेतदवोचत्—गमिष्याम्यह भगवन् । तानि रोमविवराणि द्रष्टुकामोऽहम् । भगवानाह—अग्राह्यास्ते कुलपुत्र रोमविवरा असंस्पर्शाः । यथा आकाशधातुरग्राह्योऽसस्पर्श', एवमेव ते कुलपुत्र रोमविवरा अग्राह्या असंस्पर्शाः । तेषु रोमविवरेषु समन्तभद्रो बोधिसत्त्वो महासत्त्वस्तेषा रोमविवराणा द्वादश वर्षाणि परिभ्रमितः, न च तेन तानि रोमविवराणि दृष्टाणि । यस्यैकैकरोमविवरे स्थित बुद्धशतम्, तेनापि न दृष्टानि, प्रागेवान्ये बोधिसत्त्वभूताः ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—यदा भगवन् समन्तभद्रेण बोधिसत्त्वेन महासत्त्वेन न दृष्ट द्वादशवर्षाणि परिभ्रमता, न च तेन तानि रोमविवराणि
S 63 दृष्टानि, अस्यैकैकरोमविवरे स्थितं बुद्धशत तेनापि न दृष्टम्, तदा तेषा रोमविवराणामन्ततोऽहमपि किं गमिष्यामि ? आह—कुलपुत्र, मयापि तस्य रोमविवर वीक्षमाणेन परिमार्गयमाणेन न दृश्यते । सर्वनीवरणविष्कम्भिन् कुलपुत्र, अयं मायावी असाध्यः सूक्ष्म एवमनुदृश्यते । निरञ्जनो रूपी महापी(?) शतसहस्रभुज' कोटिशतसहस्रनेत्रो विश्वरूपी एकादशशीर्षः महायोगी निर्वाणभूमिव्यवस्थितः सुचेतनो महाप्राज्ञ. भवोत्तारकः कुलीनोऽनादर्शी प्राज्ञो निर्देशस्तथाच्छायाभूतः सर्वधर्मेषु, एवमेव कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो न श्रुतो न केनचिद् दृश्यते । तस्य स्वभावका अन्यथार्तगता न पश्यन्ति, प्रागेव समन्तभद्रादयोऽन्ये च बोधिसत्त्वा. । अचिन्त्योऽय कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः प्रातिहार्याणि समुपदर्शयति । अनेकानि च बोधिसत्त्वकोटिनियुतशतसहस्राणि परिपाचयति, सत्त्वांश्च तान् बोधिमार्गे प्रतिष्ठापयति । प्रतिष्ठापयित्वा सुखावतीलोकधातुमनुगच्छति । अमिताभस्य तथागतस्यान्तिके धर्ममनुशृणोति ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—केनोपायेन भगवन् पश्यामि अहमवलोकितेश्वर बोधिसत्त्व महासत्त्वम् ? भगवानाह—यदि कुलपुत्र इहैव सहालोकधातुमागच्छति मम दर्शनाय वन्दनाय पर्युपासनाय । अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—अनुजानाम्यहं भगवन्, अवलोकितेश्वरो बोधिसत्त्वो महासत्त्व आगच्छति ? भगवानाह—यदा कुलपुत्र सत्त्वपरिपाको भवति, तदावलोकितेश्वरः प्रथमतरमागच्छति ॥

S 64 अथ सर्वनीवरणविष्कम्भी बोधिसत्त्वः करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—किं मया पापरतेन चिरकालजीविकया तेनावलोकितेश्वरदर्शनविप्रहीणेनान्धभूतेन तमोनुप्राप्तमार्गसप्रस्थितेन ? अथ सर्वनीवरणविष्कम्भी बोधिसत्त्वः पुनरपि भगवन्तमेतदवोचत्—कतमस्मिन् काले भगवन्नवलोकितेश्वर आगच्छति ? अथ भगवानपीदं वचन श्रुत्वा हसति, व्यवहसति च—अकालस्ते कुलपुत्र अवलोकितेश्वरस्यागमनकालसमयः । तद्यथापि नाम कुलपुत्र ततो रोमविवरादवतीर्य अमृतबिन्दुर्नाम रोमविवरः, तत्रानेकानि देवपुत्र कोटिनियुत-

शतसहस्राणि प्रतिवसन्ति । केचिदेकभूमिका , केचिद् द्विभूमिकाः, केचित्त्रिभूमिकाः,
केचिच्चतुर्भूमिकाः, केचित्पञ्चभूमिका., केचित् षड्भूमिकाः, केचित्सप्तभूमिकाः, केचिदष्ट-
भूमिका', केचिन्नवभूमिका', केचिद्दशभूमिकाः प्रतिष्ठिता बोधिसत्त्वा महासत्त्वा वसन्ति ।
तद्यथापि नाम सर्वनीवरणविष्कम्भिन् अस्मिन्नमृतबिन्दौ रोमविवरे षष्टिपर्वताः सुवर्णरूप्य-
मयाः । एकैकपर्वतः षष्टियोजनासहस्राण्युच्छ्रयेण । तदेषां पर्वताना नवनवतिशृङ्गसहस्राणि
दिव्यसुवर्णरत्नोपचितानि । पार्श्वे केचिदेकचित्तोत्पादिका बोधिसत्त्वा. प्रतिवसन्ति । तेषु
पर्वतराजिषु अनेकानि गन्धर्वकोटिनियुतशतसहस्राणि प्रतिवसन्ति, ये तस्मिन् रोमविवरे
सततसमित निर्नादितं सूर्यं धारयति । तद्यथापि नाम सर्वनीवरणविष्कम्भिन् तस्मिंश्चामृत-
बिन्दौ रोमविवरे अनेकानि विमानकोटिनियुतशतसहस्राणि रत्नपरिखचितानि शोभनीयानि
दर्शनीयानि विचित्राणि मुक्ताहारशतसहस्राणि प्रलम्बितानि । तेषु विमानेषु बोधिसत्त्वा
विश्रमित्वा धर्मसांकथ्य कुर्वन्ति । ततो विमानान्निष्क्रम्य स्वकस्वकानि चंक्रमणानि प्रत्युद्गताः । S 65
चंक्रमे चंक्रमे सप्तति सप्तति पुष्करिण्यः केचिदष्टाङ्गोपेतेन वारिणा परिपूर्णा', केचि-
द्विविधपुष्पपरिपूर्णाः, उत्पलपद्मकुमुदपुण्डरीकसौगन्धिकमान्दारवमहामान्दारवपुष्पपरिपूर्णाः ।
तेषु चक्रमेषु मनोरमाः कल्पवृक्षाः लोहितवर्णाः सुवर्णरूप्यपत्रा दिव्यालकारप्रलम्बिता मौली-
कुण्डलस्रग्दामप्रलम्बिता हारार्धहारप्रलम्बिताः केयूरप्रलम्बिताः । तदन्ये विविधालंकारप्र-
लम्बिताः । तेषु चक्रमेषु रात्रौ ते बोधिसत्त्वाश्चक्रमन्ति, विविध च महायानमनुस्मरन्ति, नैर्वाणिकीं
भूमिमनुविचिन्तयन्ति । सांसारिकं दुःखमनुविचिन्तयन्ति । नरकनिर्यास चिन्तयन्ति । सचिन्त-
यित्वा मैत्रीं भावयन्ति । एवमेव सर्वनीवरणविष्कम्भिन् तस्मिन् रोमविवरे ईदृशा बोधिसत्त्वा
वसन्ति । ततोऽमृतवित्तबिन्दुरोमविवरादवतीर्य वज्रमुखो नाम रोमविवरः, तत्रानेकानि किन्नर-
शतसहस्राणि प्रतिवसन्ति । अङ्गदकुण्डलकेयूरविचित्रमाल्याभरणानुलेपनपरमशोभनानि
दृश्यन्ते । सततकालं बुद्धधर्मसघाभिप्रसन्नाः एकाग्रधर्ममैत्रीविहारिकाः क्षान्तिसभाविता
निर्वाणचिन्तकाः सवेगमानुष्यकाः । ईदृशास्ते कुलपुत्र किन्नरा धर्माभिरताः । तस्मिन्नेव
रोमविवरे अनेकानि पर्वतविवराणि शतसहस्राणि । केचिद्वज्रमयाः केचित्पद्मरागमयाः
केचिदिन्द्रनीलमयाः केचित्सप्तरत्नमया. । ईदृशानि च तत्र कुलपुत्र रोमविवरे सद्धर्मनिमित्तानि
च दृश्यन्ते । तत्र रोमविवरे अनेकाः कल्पवृक्षाः, अनेकविद्रुमवृक्षाश्चन्दनवृक्षाः सौगन्धिकवृक्षाः, S 66
अनेकानि पुष्करिणीशतसहस्राणि, दिव्यानि विमानानि, स्फटिकरजतसंयुक्ताः परमशोभनीयाः
रमणीयाः प्रासादाः । यत्र ईदृशानि विमानानि प्रादुर्भवन्ति, तेषु विमानेषु किन्नरा विश्रान्ताः ।
विश्रमित्वा धर्मसांकथ्य कुर्वन्ति । यदुत दानपारमितासाकथ्य कुर्वन्ति । ध्यानपारमितासाकथ्य
कुर्वन्ति । प्रज्ञापारमितासांकथ्यं कुर्वन्ति । एवं षट्पारमितासाकथ्यं कृत्वा स्वकस्वकानि
चक्रमणानि चक्रमन्ति । केचित्सुवर्णमयाश्चक्रमाः । तेषु चंक्रमेषु सामन्तकेषु कल्पवृक्षा लोहित-
दण्डाः सौवर्णरूप्यपत्रा दिव्यालङ्कारप्रलम्बिताः मौलिकुण्डलस्रग्दामप्रलम्बिता हारार्धहार-
प्रलम्बिता रत्नहारप्रलम्बिताः । ते च कल्पवृक्षास्तस्मिंश्चक्रमे कूटागारवत्सस्थिताः, कूटागार-

सद्देशेषु तेषु चक्रमेषु किन्नराश्चंक्रमन्ति । चक्रम्यमाणाः सांसारिकं सत्यमनुविचिन्तयन्ति–अहो
दु:खम् । जातिर्दु:खम् । अहो दु:खम् । जरामरणदु:खम् । अहो दु:खम् । तदपि दारिद्र्यदु खम् ।
इष्टप्रियवियोगाप्रियावियोगदु.खम् । तदपि कष्टतर दु.खम् । ये चावीचावुपपन्ना रौरवोपपन्नाः,
कालसूत्रोपपन्नाः, हाहवे महानरके उपपन्नाः, प्रतापने नरके उपपन्नाः, अग्निघटेषूपपन्नाः,
वज्रशैलेषूपपन्नाः, प्रेतनगरोपपन्नाः, तदेषां सर्वसत्त्वाना दु खतरम् । एव च ते किन्नरा-
श्चित्तेन चिन्तयन्ति । चिन्तयित्वा नैर्वाणिकी भूमीं चिन्तयन्ति । एवमेव कुलपुत्र किन्नरा
धर्माभिरताः सततकालमवलोकितेश्वरस्य नामानुस्मरन्ति । यदा ते नामानुस्मरन्ति, तदा
तेषा सर्वोपकरणैरुपस्थिता भवन्ति । एव दुर्लभः कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो
S 67 महासत्त्वः सर्वसत्त्वाना मातापितृभूतः सर्वसत्त्वेष्वभयददः । सर्वसत्त्वेषु मार्गोपदर्शकः ।
सर्वसत्त्वेषु कल्याणमित्रः । एव कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्व. । दुर्लभ
कुलपुत्र तस्य नामग्रहणम् । ये. च तस्य षडक्षरीमहाविद्यानामानुस्मरन्ति, तदा तेषु
रोमविवरेषु जायन्ते । न च पुनरेव ससारे ससरन्ति । रोमविवराद्रोमविवरमुपसक्रामन्ति ।
तेषा तेषु रोमविवरेषु तावत्तिष्ठन्ति यावन्नैर्वाणिकी भूमिमन्वेषन्ते ॥

इति रोमविवरवर्णन नाम द्वितीयं प्रकरणम् ॥

## षडक्षरीमहाविद्यामाहात्म्यवर्णनं तृतीयं प्रकरणम् ।

अथ सर्वनीवरणविष्कभी भगवन्तमेतदवोचत्–कुतो भगवन् षडक्षरी महाविद्या
प्राप्यते ? भगवानाह–दुर्लभा कुलपुत्र सा षडक्षरी महाविद्या । न च तथागता जानन्ति
प्रागेव बोधिसत्त्वभूताः । अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्–यद्भगवन् तथागता
अर्हन्तः सम्यक्सबुद्धा न जानन्ति ? भगवानाह–कुलपुत्र सा षडक्षरी महाविद्या त्वव-
लोकितेश्वरस्य परमहृदयम् । यश्च परमहृदय जानाति स मोक्ष जानाति । अथ सर्वनीवरण-
विष्कम्भी भगवन्तमेतदवोचत्–अस्ति भगवन् केचित्सत्त्वा ये षडक्षरीं महाविद्या जानन्ति ?
भगवानाह–न कश्चिज्जानीते कुलपुत्र । षडक्षरी महाविद्या राज्ञी । एषा दुरासदा अप्रमेया
योगिनस्तथागता जानन्ति प्रागेव बोधिसत्त्वभूताः । अस्या कुलपुत्र षडक्षरीमहाविद्यायाः
कारणेन सर्वे तथागताः षोडशकल्याणसख्येयाः परिभ्रमिताः प्रागेव बोधिसत्त्वभूताः
कुतो जानन्ति ? अय स परमहृदयः अवलोकितेश्वरस्य । योऽप्ययं परिभ्रमति जगन्मण्डले,
S 68 कश्चिज्जानीते षडक्षरी महाविद्याम् । पुण्यवन्तस्ते सत्त्वा ये षडक्षरीं महाविद्या सततपरिग्रह
जपाभियुक्ता भवन्ति । तस्या जपकाले तु नवनवतिगङ्गानदीवालुकोपमास्तथागताः
सनिपतन्ति, परमाणुरजोपमा बोधिसत्त्वा. संनिपतन्ति, षट्पारमिता द्वारस्था भवन्ति ।
अन्ये च द्वात्रिंशद्देवनिकायाः देवपुत्राः सनिपतिताः । चत्वारश्च महाराजानश्चतस्रो
दिशो रक्षन्ति । सागरश्च नागराजः । अनवतप्तश्च नागराज. । तक्षकश्च नागराजः ।
वासुकिर्नागराजः–एवप्रमुखान्यनेकानि नागराजकोटीनियुतशतसहस्राणि धरणीं परि-
रक्षन्ति । अन्ये च भौमा यक्षाः । अन्ये चावकाश रक्षन्ति । तस्य कुलपुत्रस्य एकैकरोम-

विवरे तथागतकोट्यो विश्रमन्ति, विश्रमित्वा साधुकारमनुप्रयन्ति–साधु साधु कुलपुत्र, यस्त्वमीदृश चिन्तामणिरत्नलब्धलाभोऽसि। विमोक्षितास्ते सप्तकुलवशा जातिपरपरया। ये च तव कुलपुत्र कुक्षिगताः प्राणिन', सर्वे तेऽवैवर्तिका बोधिसत्त्वा भविष्यन्ति। यः कश्चिदिमा धारयेत् षडक्षरीं महाविद्या कायगता कण्ठगता वा, स कुलपुत्र वज्रकायशरीर इति वेदितव्यः, धातुस्तूप इति वेदितव्यः, तथागतज्ञानकोटिरिति वेदितव्यः। यः कश्चित्कुलपुत्रो वा कुलदुहिता वा इमां षडक्षरीं महाविद्यां जपन्ति सोऽक्षयप्रतिभानो भवति। ज्ञानराशिविशुद्धो भवति। महाकरुणया समन्वागतो भवति। स दिने दिने षट्पारमिता. परिपूरयति। विद्याधरचक्रवर्त्यभिषेक प्रतिलभते। यस्य कस्यचिदुच्छ्वस्योच्छ्वासप्रश्वासं ददाति मैत्र्या वा द्वेषेण वा, सर्वे तेऽवैवर्तिकाधिसत्त्वा भवन्ति, क्षिप्रं चानुत्तरा सम्यक्सबोधिमभिसबुध्यन्ते। ये केचिद्वस्त्रस्पर्शनेनापि स्पृशन्ति, सर्वे ते चरमभविका बोधिसत्त्वा भवेयुः। दर्शनमात्रेण स्त्री वा पुरुषो वा दारिका वा मृगपक्षिणो गोमहिषगर्दभादयश्च चक्षुर्दर्शनेनापि पश्यन्ति, सर्वे ते चरमभविका बोधिसत्त्वा भवेयुः, जातिजराव्याधिमरणदुःखप्रियविप्रयोगविहीणा भवेयुः। अचिन्त्या योगिनश्च भवेयुः। एवं तु षडक्षरीं महाविद्यां जपमानस्य संचोदनो भवति॥ S 69

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्–कथ भगवन् लभेयमहं षडक्षरीं महाविद्याम्? सोऽचिन्त्यो योगाना चाप्रमेयध्यानाना च अपरिस्थितश्चानुत्तराया सम्यक्सबोधौ, निर्वाणस्योपदर्शकः, मोक्षस्य प्रवेशनम्, रागद्वेषस्य व्युपशमनम्, धर्मराजस्य च परिपूरणम्, उन्मूलन च ससारस्य पञ्चगतिकस्य, सशोषण च नारकाणां क्लेशानाम्, समुद्धातनमुत्तारणं च तिर्यग्योनिगतानाम्, आस्वादो धर्माणां च परिपूरणम्, सर्वज्ञज्ञानस्य अक्षयं निर्देशं श्रोतुमिच्छामि। भगवन् यो मे षडक्षरीं महाविद्यामनुप्रयच्छति, तस्य चतुर्द्वीपान् सप्तरत्नपरिपूर्णान्निर्यातयितुम्। यदि भगवन् लिख्यमानायापि भूर्जं न सविद्यते, न मसिः, न च करमम्। मदीयेन शोणितेन मसिं कुर्यात्, चर्ममुत्पाट्य भूर्जं कुर्यात्, अस्थि भङ्क्त्वा च करमं कुर्यात्, तदापि भगवन् मम नास्ति खेद शरीरस्य। स च मे मातापितृभूतो भवेत् गुरूणामपि गुरुश्च॥

अथ भगवान् सर्वनीवरणविष्कम्भिण बोधिसत्त्वमेतदवोचत्–स्मराम्यह कुलपुत्र अस्याः षडक्षरिमहाविद्याया. कारणेन परमाणुरजोपमान् लोकधातून् परिभ्रमितः। अनेकानि तथागतकोटिनियुतशतसहस्राणि मया पर्युपासितानि। न च तेषां तथागताना सकाशात्सचालबापि (?) श्रुता। तदा रत्नोत्तमो नाम तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च बुद्धो भगवान्। S 70 तस्य मया पुरस्तादश्रूणि प्रमुक्तानि। तदा तेन तथागतेनार्हता सम्यक्सबुद्धेनाभिहितम्–मा कुलपुत्र एवं करुणकरुणान्यश्रूणि प्रमुञ्च। गच्छ कुलपुत्र येन पद्मोत्तमो नाम लोकधातुः। तत्र पद्मोत्तमो नाम तथागतोऽर्हन् सम्यक्संबुद्धः। स इमा षडक्षरीं

महाविद्यामनुजानाति । तस्य कुलपुत्र अह रत्नोत्तमस्य तथागतस्यान्तिकात् प्रक्रान्तः ।
येन पद्मोत्तमस्य तथागतस्य बुद्धक्षेत्र तेनोपसक्रान्तः । उपसक्रम्य भगवतः पादौ शिरसा
वन्दित्वा पुरस्तात्प्राञ्जलीभूत्वोक्तम्—लभेयमह भगवन् पद्मोत्तम षडक्षरीं महाविद्या राज्ञीं
यस्या नामानुस्मरणमात्रेण सर्वपापानि क्षयन्ते, दुर्लभा बोधिं प्रतिलभते, येनार्थेनाह
क्लिष्टोऽनेकानि लोकधातूनि । इहैवागत्वा मा व्यर्थश्रमो भवेयम् । तदा पद्मोत्तमस्तथागत
इमा षडक्षरी महाविद्यागुणा सस्मारयति स्म—तद्यथापि नाम कुलपुत्र शक्यते
परमाणुरजःप्रमाणमुद्गृहीतुम्, न तु कुलपुत्र शक्यते षडक्षरिमहाविद्याया एकजापस्य
पुण्यस्कन्ध गणयितुम् । शक्यते मया कुलपुत्र चतुःसमुद्रस्यैकैका वालुका गणयितुम्,
न तु कुलपुत्र शक्यते मया षडक्षरिमहाविद्याया एकजापस्य पुण्यस्कन्ध गणयितुम् ।
तद्यथापि नाम कुलपुत्र कश्चिदेव पुरुषो भवेत् । स गृह पूर्णं योजनसहस्रं
कुर्यात् द्विगुण पञ्चयोजनशतानि । त तिलफलैः परिपूर्णं कुर्यात् । यत्र सूचीविवर
न सविद्यते, तत्र पुरुषो द्वारे स्थापितोऽजरामरः । स कल्पशतस्यातिक्रान्तस्य
S 71 अस्यैकतिलफल बहिर्द्वारे प्रक्षिपेत् । तदनेन पर्यायेण त गृहसमूहप्रतिष्ठितास्तिलाः परि-
क्षयपर्यवदान यावत्कालेन व्रजेयुः, तच्छक्यते मया गणयितुम् । न तु कुलपुत्र शक्यते
षडक्षरिमहाविद्यायाः एकजापस्य पुण्यस्कन्ध गणयितुम् । तद्यथापि नाम कुलपुत्र चतुर्द्वीपे
नानाविधानि कृषिं कारयन्ति यवगोधूमशालिमुद्गमाषादयस्तिलकोलकुलत्थादिभिः, तत्र
कालेन काल नागराजानो वर्षधारामनुप्रयच्छन्ति । तानि शस्यानि निष्पाद्यन्ते, ततस्ते
परिपक्काः परिछिद्यन्ते । एव जम्बुद्वीप खल कुर्यात्, ततस्ते शकटैर्भारैर्मुटैः पिठकैर्गोभि-
र्गर्दभादिभिर्लङ्घयित्वा तस्मिन् खलाभ्यन्तरे प्रक्षिपेरन्, तानि गोभिर्गर्दभैर्मर्दयित्वा महान्तं
राशिं निष्पाद्यते । शक्यते मया कुलपुत्र एकैकानि फलानि गणयितुम्, न तु कुलपुत्र
शक्यते मया षडक्षरिमहाविद्याया एकजापस्य पुण्यस्कन्ध गणयितुम् । तद्यथापि नाम
कुलपुत्र इमा महानद्यो जम्बुद्वीपे प्रवहन्ति रात्रौ दिवा च । तद्यथा गङ्गा सीता यमुना
सिन्धुः शतद्रुः चन्द्रभागा ऐरावती सुमागन्धा हिमरती कलशोदरी चेति । एकैकनदी पञ्च-
सहस्रपरिवारा । रात्रौ च दिवा च महासमुद्रे प्रवहन्ति । एवमेव षडक्षरिमहाविद्याया
एकजापस्य पुण्यस्कन्धः प्रवहति । तत्रासा महानदीना शक्यते मया एकैकबिन्दु
गणयितुम् । न च कुलपुत्र शक्यते मया षडक्षरिमहाविद्याया एकजापस्य पुण्य-
स्कन्ध गणयितुम् । तद्यथापि नाम कुलपुत्र चतुर्द्वीपेषु चतुष्पाज्जातीना गोगर्दभमहिषाश्व-
हस्तिनः, श्वजम्बुकच्छागलपशवः, तथा सिंहव्याघ्रतरक्षुमृगमर्कटशशकादयः; एषा मयैकैकानि
रोमाणि शक्यते गणयितुम्, न तु कुलपुत्र षडक्षरिमहाविद्यायाः शक्यते एकजापस्य
S 72 पुण्यस्कन्ध गणयितुम् । तद्यथापि नाम कुलपुत्र वज्राङ्कुशो नाम पर्वतराजो नवनवति-
योजनसहस्राण्युच्छ्रयेण चतुरशीतियोजनसहस्राण्यधस्तात् । तस्य पर्वतराजस्य वज्राङ्कुशस्यैक
पार्श्वं चतुरशीतियोजनसहस्रम् । तस्य च पार्श्वे पर्वतराजस्य जरामरः पुरुषो भवेत् । स

कल्पस्यातिक्रान्तस्य एकवार काशिकवस्त्रेण परिमार्जयेत् । एवं कृत्वा तस्य परिक्षय पर्यवदानं भवेत्, एतत्कालेषु वर्षमासदिनमुहूर्तनाडीकला: यावत् श्वासा., तेषा प्रमाणं कर्तुं शक्यम्, न तु षडक्षरिमहाविद्यायाः शक्यते एकजापस्य पुण्यस्कन्धं गणयितुम् । तद्यथापि नाम कुलपुत्र महासमुद्र चतुरशीतियोजनसहस्र गाम्भीर्येण, अप्रमेय वैपुल्येन वडवामुखपर्यन्त शक्यते मया शताग्रभिन्नया वालाग्रकोट्या एकैक बिन्दुं गणयितुम् । न तु कुलपुत्र शक्यते मया षडक्षरिमहाविद्यायाः पुण्यस्कन्ध गणयितुम् । तद्यथापि नाम कुलपुत्र शक्यते मया शीर्षवनस्य एकैकपत्राणि गणयितुम्, न तु षडक्षरिमहाविद्यायाः शक्यते एकजापस्य पुण्यस्कन्ध गणयितुम् । तद्यथापि नाम कुलपुत्र चतुर्द्वीपनिवासिन· स्त्रीपुरुषदारकदारिकास्ते सर्वे दशभूमिप्रतिष्ठिता बोधिसत्त्वा भवेयु. । यत्तेषां बोधिसत्त्वाना पुण्यस्कन्धम्, तत· षडक्षरिमहाविद्याया एकजापस्य पुण्यस्कन्धम् । तद्यथापि नाम कुलपुत्र द्वादशमासिकेन सवत्सरेण अधिमासिकेन त्रयोदशमासिकेन वा सवत्सरेण तथा संवत्सरगणनया पूर्णं कल्प देवो रात्रौ दिवा वर्षति, तच्छक्यते मया कुलपुत्र एकैक बिन्दु गणयितुम् । न तु कुलपुत्र षडक्षरिमहाविद्याया एकजापस्य पुण्यस्कन्ध गणयितुम् । एव कुलपुत्र बहवो मत्सदृशा· तथागतकोटय एकस्थानधारिता दिव्य कल्प चीवरपिण्डपात्रशयनासनग्लान- S 73
प्रत्ययभैषज्यपरिष्कारै· सर्वोपकरणोपस्थाने नोपस्थिता भवेयु· । न च तथागताः शक्नुवन्ति षडक्षरिमहाविद्यायाः पुण्यस्कन्ध गणयितुम् । प्रागेवाहमेकाकी अस्मिँल्लोकधातौ विहरामि । अचिन्त्यध्यानपदेन समुत्थानेनाहं कुलपुत्र भावनायोगमनुयुक्तः । स च सूक्ष्मो धर्म, अव्यक्तो धर्मः, अनागतो धर्म, परमहृदयप्राप्त· । अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्योपायकुशलैर्धर्मैः प्रतिष्ठित· । एव कुलपुत्र षडक्षरिमहाविद्याया उपायकौशल्य प्राप्तुमहमपि कुलपुत्र अनेकानि लोकधातुकोटीनियुतशतसहस्राणि परिभ्रमितः । गत्वा चामिताभस्य तथागतस्य पुरस्तात्प्राञ्जलीभूत्वा धर्मवेगेनाश्रूणि प्रमुक्तानि, तथामिताभस्तथागतो जानाति अनागतप्रत्युत्पन्नम् ॥

तेन ममाभिहितम्–कुलपुत्र, षडक्षरीं महाविद्यां राज्ञीमिच्छसि भावनायोगमनुयुक्तः? मयोक्तम्–इच्छामि सुगत। यथा तृषार्त. पानीयमन्वेषते, एवमह भगवन् षडक्षरीं महाविद्या समन्वेषमाणोऽनेकलोकधातूनुपसक्रान्तः। पर्युपासितानि मेऽनेकानि तथागतकोटीनियुतशतसहस्राणि, न कस्यचित्सकाशान्मया लब्धा षडक्षरी महाविद्या राज्ञी। त्व भगवन् त्राता भव, शरण परायणम् । विकलेन्द्रियस्य चक्षुर्भूतो भव । नष्टमार्गस्य दर्शको भव । सूर्यतापदग्धाना छत्रभूतो भव । चतुर्महापथे शालवृक्ष इव भव । धर्मपरितृषिस्यानन्तधर्ममार्गमुपदर्शको भव । सुप्रतिष्ठितचेतसो वज्रकवचभूतो भव ॥

अथामिताभस्य तथागतार्हत. सम्यक्सबुद्धस्य अवलोकितेश्वरस्य बोधिसत्त्वस्य S 74
महासत्त्वस्य लम्बिकरुतेन स्वरेण निर्घोषेणारोचयति–पश्य कुलपुत्र अय पद्मोत्तमस्तथा-

गतोऽर्हन् सम्यक्सबुद्धः षडक्षरीमहाविद्यायाः कारणेनानेकलोकधातुकोटीनियुतशतसहस्राणि परिभ्रमितः । ददस्व कुलपुत्र षडक्षरीं महाविद्यां राज्ञीम् । तथागत एव परिभ्रमति ॥

इति षडक्षरिमहाविद्यामाहात्म्यवर्णन तृतीय प्रकरणम् ॥

## षडक्षरिमहाविद्यामण्डलवर्णनं चतुर्थं प्रकरणम् ।

अथ अवलोकितेश्वरो भगवन्तमेतदवोचत्—अदृष्टमण्डलस्य न दातव्या कथं भगवत्पद्माङ्कमुद्रामनुगृह्णाति ? कथ मणिधरा मुद्रा सजानीते ? कथ सर्वराजेन्द्रा सजानीते ? मण्डलपरिशुद्धिं कथ सजानीते ? मण्डलस्येद निमित्त चतुरस्र पञ्चहस्तप्रमाण सामन्तकेन मध्ये मण्डलस्यामिताभ लिखेत् । इन्द्रनीलचूर्णं पद्मरागचूर्णं मरकतचूर्ण स्फाटिकचूर्णं सुवर्णरूप्यचूर्णान्यमिताभस्य तथागतस्य काये सयोजयितव्यानि । दक्षिणे पार्श्वे महामणिधरो बोधिसत्त्वः कर्तव्यः । वामपार्श्वे षडक्षरी महाविद्या कर्तव्या चतुर्भुजा शरत्काण्डगौरवर्णा, नानालकारविभूषिता । वामहस्ते पद्म कर्तव्यम् । दक्षिणहस्ते अक्षमाला कर्तव्या । द्वौ हस्तौ सप्रयुक्तौ सर्वराजेन्द्रा नाम मुद्रा कर्तव्या । तस्याः षडक्षरिमहाविद्यायाः पादमूले विद्याधरं प्रतिस्थापयितव्यम् । दक्षिणहस्ते धूपकटच्छुक कर्तव्य धूमायमानम् । वामहस्ते नानाविधालकारपरिपूर्णं पिटकं कर्तव्यम् । तस्य च मण्डलस्य चतुर्द्वारेषु चत्वारो महाराजाः S 75 कर्तव्याः, नानाप्रहरणगृहीताः कर्तव्या· । तस्य मण्डलचतुष्कोणेषु चत्वार· पूर्णकुम्भाः नानामणिरत्नसचिताः । यः कश्चित्कुलपुत्रो वा कुलदुहिता वा इच्छति मण्डल प्रवेष्टुम्, तेन सर्वगोत्रस्यापरपरस्य नामानि लिखितव्यानि, लिखित्वा च हस्ते गृहीतव्यानि च । मण्डले प्रथमतर तानि नामानि प्रक्षिपेत् । ते सर्वे चरमभविका बोधिसत्त्वा भवन्ति । सर्वमानुष्यकेण दुःखेन विप्रहीणा भविष्यन्ति, क्षिप्र चानुत्तरा सम्यक्सबोधिमभिसबुध्यन्ते । तत आचार्येण अस्थाने नैव दातव्या । अथवा श्रद्धाधिमुक्तकस्य दातव्या । अथवा महायानश्रद्धाधिमुक्तकस्य दातव्या । न च तीर्थिकस्य दातव्या ॥

अथामिताभस्तथागतोऽर्हन् सम्यक्संबुद्धोऽवलोकितेश्वरमेतदवोचत्—यदि कुलपुत्र इन्द्रनीलचूर्णं पद्मरागचूर्णं सुवर्णरूप्यचूर्णं दरिद्रस्य कुलपुत्रस्य कुलदुहितुर्वा न सविद्यन्ते तानि चूर्णानि, भगवन्नानारङ्गाणि सप्रयोक्तव्यानि ? नानारङ्गाणि संप्रयोक्तव्यानि नानापुष्पैर्नानागन्धै· । यदि कुलपुत्र तदपि न सविद्यते देशान्तरगतस्य स्थानपदच्युतस्य, तदाचार्येण मानसिक मण्डल चिन्तितव्यम् । आचार्येण मन्त्रमुद्रालक्षणान्युपदर्शयितव्यानि ॥

इति षडक्षरिमहाविद्यामण्डलवर्णन चतुर्थं प्रकरणम् ॥

## महाविद्योपदेशो नाम पञ्चमं प्रकरणम् ।

अथ पद्मोत्तमस्तथागतोऽर्हन् सम्यक्सबुद्धो अवलोकितेश्वरमेतदवोचत्—ददस्व मे S 76 कुलपुत्र षडक्षरी महाविद्या राज्ञीम्, येनाहमनेकसत्त्वकोटीनियुतशतसहस्राणि दुःखात्परिमोचयेयम् । यथा ते क्षिप्रं चानुत्तरा सम्यक्सबोधिमभिसबुध्यन्ते ॥

अथ अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः पद्मोत्तमस्य तथागतस्यार्हतः सम्यक्संबुद्धस्येमा षडक्षरीं महाविद्यामनुप्रयच्छति—

॥ * ॥ + ॥ ० ॥ + ॥ ॐ मणिपद्मे हूं ॥ + ॥ ० ॥ + ॥ * ॥

यस्मिन् काले इय षडक्षरी महाविद्या अनुप्रदत्ता, तदा चत्वारो द्वीपाः सदेवभवनपर्यन्ताः कदलीपत्रेव संचलिताः, क्षुब्धाश्चत्वारो महासमुद्राः सर्वविघ्नविनायकाः। निष्पलायन्ते यक्षराक्षसकुम्भाण्डा महाकालमातृगणसहिताः॥

अथ पद्मोत्तमेन तथागतेन भुजगसदृश बाहु प्रसार्य अवलोकितेश्वरस्य शतसहस्रमूल्य मुक्ताहारम्, तेन गृहीत्वा अमिताभस्य तथागतस्यार्हतः सम्यक्सबुद्धस्योपनामितम्। तेन गृहीत्वा तस्य पद्मोत्तमस्य तथागतस्यार्हतः सम्यक्संबुद्धस्योपनामितम्। अथ पद्मोत्तमस्तथागतोऽर्हन् सम्यक्संबुद्ध इमा षडक्षरीं महाविद्या गृहीत्वा येन पत्रोत्तमो नाम लोकधातुस्तेनोपसक्रान्तः। एव कुलपुत्र मया भूतपूर्वं पद्मोत्तमस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशाच्छ्रुतम्॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कथं भगवन् लभेय षडक्षरीं महाविद्या राज्ञीं प्राप्तयोगस्य[2] यथा हि भगवन्नमृतस्य लब्धास्वादास्तृप्तिं न लभन्ते, एवमह भगवन् षडक्षरिमहाविद्याश्रुतमात्रेण तृप्तिं न लभाम। पुण्यवन्तस्ते सत्त्वा य इमा षडक्षरीं महाविद्या जपन्ति शृण्वन्ति चिन्तयन्ति अध्याशयेन धारयन्ति॥

भगवानाह-कुलपुत्र, यश्चेमा षडक्षरीं महाविद्या लिखापयेत्, तेन चतुरशीतिधर्मस्कन्धसहस्राणि लिखापितानि भवन्ति। परमाणुरजोपमानां तथागतानामर्हता सम्यक्सबुद्धाना दिव्यसौवर्णरत्नमयान् स्तूपान् कारयेत्, कारयित्वा एकदिने धात्वावरोपण कुर्यात्। यश्च तेषा फलविपाकः, स षडक्षरिमहाविद्याया एकस्याक्षरस्य फलविपाकः। अचिन्त्योऽगुणाना सुप्रतिष्ठितो मोक्षः। यः कुलपुत्रो वा कुलदुहिता वा इमा षडक्षरी महाविद्या जपेत्, स इमान् समाधीन् प्रतिलभते। तद्यथा—मणिधरो नाम समाधिः, नरकतिर्यक्संशोधन नाम समाधिः, वज्रकवचो नाम समाधिः, सुप्रतिष्ठितचरणो नाम समाधिः, सर्वोपायकौशल्यप्रवेशनो नाम समाधिः, विकिरिणो नाम समाधिः, सर्वबुद्धक्षेत्रसंदर्शनो नाम समाधिः, सर्वधर्मप्रवेशनो नाम समाधिः, ध्यानालंकारो नाम समाधिः, धर्मरथाभिरूढो नाम समाधिः, रागद्वेषमोहपरिमोक्षणो नाम समाधिः, अनन्तवत्सो नाम समाधिः, षट्पारमितानिर्देशो नाम समाधिः, महामेरुधरो नाम समाधिः, सर्वभवोत्तारणो नाम समाधिः, सर्वतथागतव्यवलोकनो नाम समाधिः, सुप्रतिष्ठितासनो नाम समाधिः। एवप्रमुखानामष्टोत्तरसमाधिशत प्रतिलभते, य इमा षडक्षरी महाविद्या धारयति॥ S 77

इति षडक्षरिमहाविद्योपदेशो नाम पञ्चमं प्रकरणम्॥

---

## महाविद्यामण्डलवर्णनं षष्ठं प्रकरणम् ।

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कुत्राहं भगवन् गच्छेय यत्र षडक्षरीं S 78 महाविद्याराज्ञीं लभेयम् ? भगवानाह—अस्ति कुलपुत्र वाराणस्यां महानगर्यां धर्मभाणको य इमां षडक्षरीं महाविद्यां धारयति वाचयति योनिशश्च मनसि कुरुते । आह—गमिष्याम्यहं भगवन् वाराणसीं महानगरीं तस्य धर्मभाणकस्य दर्शनाय वन्दनाय पर्युपासनाय । भगवानाह—साधु साधु कुलपुत्र, एवं कुरुष्व । दुर्लभस्ते कुलपुत्र धर्मभाणकस्तथागतसमो द्रष्टव्यः, पुण्यकूट इव द्रष्टव्यः । सर्वतीर्थो गङ्गेव द्रष्टव्यः । अवितथवादीव द्रष्टव्यः । भूतवादीव द्रष्टव्यः । रत्नराशिरिव द्रष्टव्यः । वरदश्चिन्तामणिरिव द्रष्टव्यः । धर्मराज इव द्रष्टव्यः । जगदुत्तारण इव द्रष्टव्य. । न च कुलपुत्र त्वया धर्मभाणकं दृष्ट्वा विचिकित्साचित्तमुत्पादयितव्यम् । मा त्वं कुलपुत्र बोधिसत्त्वभूमेश्च्युत्वा अदाये प्रपत्स्यसे । स च धर्मभाणकः शीलविपन्नः आचरविपन्नो भार्यापुत्रदुहितृभि. परिवृतः काषायोच्चारप्रस्रावपरिपूर्णः असंवृत्तेर्यापथः ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—यथाज्ञप्त भगवता । अथ सर्वनीवरणविष्कम्भी बोधिसत्त्वो महासत्त्व अनेकैर्बोधिसत्त्वपर्षद्गृहस्थै प्रव्रजितैर्दारकदारिकादिभिः सम्प्रस्थितः । तस्य धर्मभाणकस्य पूजाकर्मणे दिव्यानि छत्राणि दिव्यानि उपानहानि मौलीकुण्डलस्रग्दामकेयूरहारार्धहाररत्नहारस्कन्धोपरिष्वजानिकपृष्ठोत्तर्याणि अङ्गुष्ठविभेदिकानि अन्यानि च विविधानि वस्त्राणि चीवराध्युषितानि विद्याधरसचोदितानि काशिकवस्त्राण्यग्निशौचवस्त्राणि च अन्यानि च विविधानि वस्त्राणि पुष्पाणि । तद्यथा—उत्पलपद्मकुमुदपुण्डरीकमान्दारवमहामान्दारवाणि मञ्जूषकमहामञ्जूषकाणि चौदुम्बराणि अन्यानि विविधानि काष्ठपुष्पाणि चम्पककरवीरपाटलानि मुक्तकवार्षिकाणि शकुनकाध्युषितानि । सुमनानवमालिक-S 79 चक्रवाकोपशोभितानि । शालिकौत्सुक्यानि शतपत्रिकाणि नीलपीतलोहितावदातमाञ्जिष्ठस्फटिकरजतवर्णानि । अन्यानि च स्थलजलजानि पुष्पाणि विविधानि गृहीत्वा येन वाराणसी महानगरी तेनोपजगाम । अनुपूर्वेण वाराणसी महानगरीमनुप्राप्तः । येन स धर्मभाणकस्तेनोपसक्रान्तः । उपसक्रम्य पादौ शिरसाभिवन्द्य स तेन दृष्टः शीलविपन्न आचारविपन्नोऽसवृतेर्यापथः । तेन तानि छत्राण्युपानहानि वस्त्राभरणानि गन्धमाल्यविलेपनान्युपढौकितानि । तैर्वस्त्राभरणै. गन्धमाल्यैश्च महतीं पूजां कृत्वा तस्य धर्मभाणकस्य पुरस्तात्प्राञ्जलीभूतः तद्विज्ञमिदमवोचत्—अहो धर्मनिधानास्वादकोऽमृतनिधिरित्र सचय अनवगाहोऽसि, सागरो यथा भाजनभूतोऽसि सर्वमानुष्यभूतेषु एव ते । तव सकाशाद्धर्मं देशयतः देवा नागा यक्षा गन्धर्वा असुरा गरुडा. किन्नरा महोरगा मनुष्यामनुष्याः सर्वे ते सनिपतिताः । तव धर्मश्रवणकाले महावज्रसमये धर्मपर्यायं निर्दिशसि परिमोक्षयसि । बहवः सत्त्वा ये ससारे बन्धनबद्धाः । पुण्यवन्तस्ते सत्त्वाः येऽस्यां वाराणस्यां महानगर्यां वसन्ति, पश्यन्ति, तव सततं परिग्रहं कुर्वन्ति । दर्शनमात्रेण सर्वपापानि निर्दहसि । यथाग्निर्दहति वनान्तरम्,

एवं त्वं दर्शनेन सर्वपापानि दहसि। जानन्ते तव तथागता अर्हन्त. सम्यक्सबुद्धाः। अन्ये
चानेकबोधिसत्त्वकोटीनियुतशतसहस्राणि तव पूजाकर्मण उपसंक्रामन्ति। ब्रह्माविष्णु- S 80
महेश्वरचन्द्रादित्यवायुवरुणाग्नयो यमश्च धर्मराजोऽन्ये च चत्वारो महाराजानः॥

अथ स धर्मभाणकस्तस्यैतदवोचत्—मा त्व कुलपुत्र कौकृत्यमुत्पादयसि। कति माषाः क्लेशा औपभोगिका ससारस्य नैमित्तिकाः प्रजामण्डलस्योत्पादिकाः। ये च कुलपुत्राः षडक्षरी महाविद्याराज्ञीं जानन्ते, न च ते रागेण द्वेषेण मोहेन सलिप्यन्ते। यथा जाम्बूनदस्य सुवर्णस्य न सज्जते मलम्, एवमेव कुलपुत्र यस्य षडक्षरी महाविद्या कायगता, न तस्य कायेन न रागेण न द्वेषेण न मोहेन सलिप्यते॥

अथ सर्वनीवरणविष्कम्भी गाढं पादे परिष्वज्यैनमेतदवोचत्—विकलेन्द्रियस्य चक्षुर्भूतो भव। नष्टमार्गस्योपदर्शको भव। धर्मपरितृषितस्य धर्मरसेन सतर्पय मे त्वम्। अनुत्तरासम्यक्संबोधिविप्रहीणस्य बोधिबीज मे ददस्व। धर्माणामवकाश ददस्व। सुप्रतिष्ठितरूपाणा कायपरिशुद्धिं ददस्व। अभेद्याना कुशलाना प्रतिलम्भ इति सर्वजना' कथयन्ति वाक्य मधुरोपचयम्। एव गुरुर्ददस्व मे षडक्षरीं महाविद्याराज्ञीं येनाह क्षिप्रमनुत्तरा सम्यक्सबोधिमभिसबुद्धो भवेयम्। द्वादशाकार धर्मरन्ध्र(चक्र?)मावर्तयेयम्। सर्वसत्त्वाना सासारिक दुःखं परिमोचयेयम्। षडक्षरीमहाविद्याराज्ञीलब्धलाभो भवेयम्। ददस्व मे षडक्षरीं महाविद्याराज्ञीम्। त्राता भव, शरण परायणम्। अद्वीपाना द्वीपो भव॥

अथ स धर्मभाणकस्तस्यैतदवोचत्—दुर्लभ षडक्षरिमहाविद्याराज्या असमवज्रपदम्। S 81
अभेद्यवज्रपदम्। अनुत्तरज्ञानदर्शनपदम्। अक्षयज्ञानपदम्। निरुत्तरपदम्। मोक्षप्रवेशनपदम्। तथागतज्ञानविशुद्धिपदम्। रागद्वेषमोहससारदुःखपरिवर्जनपदम्। सर्वोपायकौशल्यपदम्। ध्यानविमोक्षसमाधिसमापूर्तिपदम्। सर्वधर्मप्रविशनपदम्। नित्यकालदेवताभिकाङ्क्षिपदम्। ये च कुलपुत्रा नानास्थानेषु दीक्षन्ते। मोक्षार्थेषु नानापटेषु दीक्षन्ते। तद्यथा इन्द्रपट श्वेतपट ध्युषितपटम्। दिवसनिरीक्षका महेश्वरेषु दीक्षन्ते। बैल्मवेगरुद्रेषु नग्नश्रमणेषु च। एषु स्थानेषु दीक्षन्ते। न तेषा मोक्षं सविद्यते। अनादिगतिकानामपि नापि नाशो भवति। सर्वदेवगणाश्च ब्रह्मविष्णुमहेश्वराः शक्रश्च देवानामिन्द्रश्चन्द्रादित्यौ वायुवरुणादयो यमश्च धर्मराजो चत्वारश्च महाराजानः, ते नित्यकाल षडक्षरीं महाविद्याराज्ञी प्रार्थयन्ति॥

अथ सर्वनीवरणविष्कम्भी तमाह—कथ वय षडक्षरी महाविद्याराज्ञीं लभेमहि येन वय क्षिप्रवरा भवामः? धर्मभाणकस्तमुवाच—तद्यथापि नाम सर्वनीवरणविष्कम्भिन् प्रज्ञापारमितानिर्जाताः सर्वतथागताः। तत्प्रज्ञापारमिता सर्वतथागताना च नेत्रीत्याख्यायते। सापि च षडक्षरी महाविद्याराज्ञी प्रणमते कृताञ्जलिपुटा भवन्ती, प्रागेव तथागता अर्हन्तः सम्यक्सबुद्धा बोधिसत्त्वगणाः। इद कुलपुत्र तण्डुलवत्सार महायानस्य किंचिदसौ बहुमहायानसूत्रं गेय व्याकरणगाथानिदानेतिवृत्तजातकवैपुल्याद्भुतधर्मोपदेशकः प्राप्यन्ते(?)

कुलपुत्र जपितमात्रेण शिव मोक्षम्, किंबहुना अन्यकुशलमिति। किंवा तु समभ्यगतं सारमुपगृह्णन्ति शालिनस्तथा सारमित्यनुगृह्णन्ति, नीत्वा स्वकीये निवेशने भाण्डानि
S 82 परिपूर्णानि कृत्वा स्थापयित्वा दिवसानुरूपेण सूर्यतापेन परिशोषयित्वा मुसलप्रहारैर्विभेदयन्ति, ततश्चतुर्वर्षाणि परित्यजन्ति। किं सारमिति व्यवस्थितम्? तण्डुलसारमिति। एवमेवान्ये योगाः तुषसदृशाः। सर्वयोगाना चेय षडक्षरी महाविद्या राज्ञी तण्डुलमिति भूता द्रष्टव्या। यस्याः कारणेन कुलपुत्र बोधिसत्त्वाः श्रावयन्तो भ्रमन्ति दानपारमितार्थिनः, शीलपारमितार्थिनः, क्षान्तिपारमितार्थिन. वीर्यपारमितार्थिनः, ध्यानपारमितार्थिनः, प्रज्ञापारमितार्थिनः। एकजापेन कुलपुत्र षट्पारमिताः परिपूरयन्ति। यस्य कस्यचिद्वस्त्रस्पर्शनेनापि अवैवर्तिकभूमिं प्रतिलभन्ते। एवमेवास्याः षडक्षरी महाविद्या राज्ञी, दुर्लभमस्या नामग्रहणम्। एकवारनामग्रहणेन सर्वे तथागताश्चीवरपिण्डपात्रशय्यासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वोपस्थानैरुपस्थिता भवन्ति॥

अथ सर्वनीवरणविष्कम्भी धर्मभाणकमेतदवोचत्—ददस्व मे षडक्षरिमहाविद्याराज्ञीम्। अथ स धर्मभाणकः संचिन्त्य सचिन्त्य व्यवस्थितः। ततो आकाशे छन्दो (शब्दो?) निश्चरति स्म—ददस्व आर्य षडक्षरीं महाविद्याराज्ञीम्। अय बोधिसत्त्वभूतोऽनेकदुष्कराभियुक्तः। पुनः स धर्मभाणकः संचिन्तयति स्म—कुत. शब्दो निश्चरति। ततः स पुनरप्याकाशाच्छब्दो निश्चरितः—ददस्वार्य षडक्षरीं महाविद्याराज्ञीम्। अय बोधिसत्त्वोऽनेकदुष्कराभियुक्तः॥

अथ स धर्मभाणक आकाशं व्यवलोकयति स्म। यावत्पश्यति शरत्काण्डगौरवर्णं
S 83 जटामुकुटधर सर्वज्ञशिरसिकृतं शुभपद्महस्त पद्मश्रियालकृत शरीरम्। स तादृशं रूपं दृष्ट्वा सर्वनीवरणविष्कम्भिण बोधिसत्त्वमेतदवोचत्—अनुज्ञातस्ते कुलपुत्र अवलोकितेश्वरेण बोधिसत्त्वेन षडक्षरीं महाविद्याराज्ञीम्॥

तेन ससंभ्रमेण कृताञ्जलिपुटेन भूत्वा उद्गृहीतुमारब्ध.—

॥ * ॥ ० ॥ + ॥ ॐ मणिपद्मे हूं ॥ + ॥ ० ॥ * ॥

इयं च समनन्तरदत्तमात्रेण षड्विकार पृथिवी प्रकम्पिता। इमे समाधयः सर्वनीवरणविष्कम्भिनः प्रतिलब्धाः। तद्यथापि नाम कुलपुत्र सूक्ष्मजनो नाम समाधिः, मैत्रीकरुणामुदितो नाम समाधिः, योगाचारो नाम समाधिः, मोक्षप्रवेशव्यवस्थानो नाम समाधिः, सर्वालोककरो नाम समाधिः, व्यूहराजो नाम समाधिः, धर्मधरो नाम समाधिः। इमे समाधयः प्रतिलब्धाः। उद्गृहीतमात्रेण सर्वनीवरणविष्कम्भिणा बोधिसत्त्वेन तस्योपाध्यायस्य दक्षिणोपनामयितुमारब्धा—चत्वारो द्वीपाः सप्तरत्नपरिपूर्णाः॥

अथ स धर्मभाणकस्तस्यैतदवोचत्—एकस्याक्षरस्यापि न भवति दक्षिणा, प्रागेव षडक्षरिमहाविद्यायाः। न च गृह्णामि कुलपुत्र त्वत्सकाशात्। त्व च बोधिसत्त्वभूत

आर्योऽनार्योऽसि मा वैनेयश्च त्वं कुलपुत्र । तेन तस्य शतसहस्रमूल्यमुक्ताहारमुपनामितम्। स कथयति—कुलपुत्र, मद्वचनेन शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्योपनामयितव्यम् ॥

अथ सर्वनीवरणविष्कम्भी तस्य धर्मभाणकस्य पादौ शिरसा वन्दित्वा प्रक्रान्तः परिपूर्णलाभो लब्धमनोरथः । येन जेतवनविहारस्तेनोपसक्रान्त. । उपसंक्रम्य भगवतः पादौ S 84
शिरसाभिवन्द्यैकान्ते व्यवस्थितोऽभूत् ॥

इति षडक्षरिमहाविद्यामण्डलवर्णन षष्ठ प्रकरणम् ॥

## सप्तमं प्रकरणम् ।

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धस्तमेतदवोचत्—लब्धलाभस्त्वं कुलपुत्र ? स आह—यथा भगवान् ज्ञान सजानीते । ततः सप्तसप्तति· सम्यक्संबुद्धकोटयः सनिपतिताः। तैश्चापि तथागतैरिय धारणी भाषितुमारब्धा—

नमः सप्ताना सम्यक्संबुद्धकोटीनाम् ।

॥ × ॥ ० ॥ ॐ चले चुले चुन्ये स्वाहा ॥ ० ॥ × ॥

इयं सप्तसप्ततिसम्यक्संबुद्धकोटिभिरुक्ता नाम धारणी ॥

ततो रोमविवरादवतीर्य सूर्यप्रभो नाम रोमविवरः। तत्रानेकानि बोधिसत्त्वकोटिनियुतशतसहस्राणि प्रतिवसन्ति। तस्मिन् सूर्यप्रभे रोमविवरे द्वादशशतसहस्राणि कनकमयानां पर्वतानां प्रतिवसन्ति। तस्मिन् पर्वते द्वादश शृङ्गशतानि। तेषा पर्वताना पार्श्वानि पद्मरागोपचितानि पार्श्वे दिव्यमणिरत्नखचितानि। परमशोभमानान्युद्यानानि परमशोभितानि विचित्राणि सुरमणीयानि । दिव्यपुष्करिणीरमणीयानि च कूटागारशतसहस्राणि, दिव्यसुवर्णरत्नमयानि मुक्ताफलदामकलापप्रलम्बितानि, मुक्ताहारशतसहस्राणि प्रलम्बितानि। तेषा कूटागाराणामधो सारदो नाम चिन्तामणिरत्नम्, यत्तेषा बोधिसत्त्वाना सर्वोपकरणैरुपस्थान करोति । S 85
तदा ते बोधिसत्त्वास्तेषा कूटागारेषु प्रविशन्ति । प्रविष्टाश्च षडक्षरीमहाविद्यामनुस्मरन्ति । त चावलोकितेश्वरं पश्यन्ति। दृष्ट्वा च तस्य चित्तप्रसाद जनयन्ति । जनयित्वा च ते बोधिसत्त्वास्तेभ्यः कूटागारेभ्यो निष्क्रामन्ति । निष्क्रम्य केचिच्चङ्क्रमेषु चङ्क्रमन्ति । केचिन्मणिरत्नमयेषूद्यानेषु, केचित्पुष्करिणीषु गच्छन्ति, केचित्पद्मरागमयेषु पर्वतेषु गच्छन्ति। गत्वा च पर्यङ्कमाभुज्य ऋजुकाय प्रणिधाय अभिमुखा स्मृतिमुपस्थाप्य। ईदृशास्ते कुलपुत्र बोधिसत्त्वास्तस्मिन् रोमविवरे प्रतिवसन्ति । ततः कुलपुत्र रोमविवरादवतीर्य इन्द्रराजो नाम रोमविवरः। तत्रानेकान्यवैवर्तिकबोधिसत्त्वकोटिनियुतशतसहस्राणि प्रतिवसन्ति। तस्मिन्निन्द्रराजरोमविवरेऽशीतिसहस्राणि पर्वतानामभूवन् दिव्यसुवर्णरत्नमयानि । तत्तेषां पर्वतानां मध्ये पद्मावभासो नाम चिन्तामणिरत्नम्। यदा यदा ते बोधिसत्त्वाश्चिन्तयन्ति, तदा तदा तेषामभिप्रायोऽनुसिध्यति । अथ ते बोधिसत्त्वास्तेषु पर्वतराजेषु विहरन्ति। न च तेषां सासा-

रिक दुःख विद्यते। न च ते सासारिकैः क्लेशैर्लिप्यन्ते। सर्वकाल निर्वाणचिन्ता व्यवस्थिता। न च तेषामन्या चिन्ता शरीरे सविद्यते। ततः कुलपुत्र रोमविवरादवतीर्य महोषधीर्नाम रोमविवरः। तत्रानेकानि प्रथमचित्तोत्पादिकबोधिसत्त्वकोटिनियुतशतसहस्राणि प्रतिवसन्ति। तस्मिन् कुलपुत्र रोमविवरे नवनवतिसहस्राणि पर्वतानाम्। केचिद् वज्रमयाः, केचिद्रूप्यमयाः, केचित्सुवर्णमयाः, केचिदिन्द्रनीलमया', केचित्पद्मरागमयाः, S 86 केचिन्मरकतमयाः, केचित्स्फटिकमया., केचिद्रजतमयाः, ईदृशास्ते पर्वतराजानः। एकैकस्मिन् मर्वतेऽशीतिशृङ्गसहस्राणि विविधरत्नखचितानि परमशोभनीयानि विविधचित्राणि रमणीयानि। तेषु शृङ्गेषु गन्धर्वा' प्रतिवसन्ति। सततकालं रोमविवरान्निनादित तूर्य धारयन्ति। ये ते प्रथमचित्तोत्पादिका बोधिसत्त्वास्ते शून्यतानिमित्त चिन्तयन्ति। अहो दुःखम्, जरा दु खम्, मरणं दुःखम्, इष्टप्रियसप्रयोगवियोगो दुःखम्, अवीच्युपपन्नाना दु'खम्, प्रेतनगरोपपन्नाना सत्त्वानां दुःखम्। इद काये सवेगमनुविचिन्त्य तदा ते पर्यङ्कमाभुज्य ऋजुकाय प्रणिधाय प्रतिमुखा स्मृतिमुपस्थाप्य तेषु पर्वतराजेषु विहरन्ति। तत' कुलपुत्र रोमविवरादवतीर्य चित्तराजो नाम रोमविवरः। तत्रानेकानि प्रत्येकबुद्धकोटिनियुतशतसहस्राणि प्रतिवसन्ति, ये ज्वलनतपनविद्योतनवर्षणप्रातिहार्याणि कुर्वन्ति। तस्मिन् रोमविवरे शतसहस्राणि पर्वतानाम्। ते सर्वे पर्वतराजाः सप्तरत्नमयाः। तेषु पर्वतराजेषु विविधानि कल्पवृक्षाणि सौवर्णदण्डानि रूप्यपत्राण्यनेकरत्नखचितानि विविधालकारप्रलम्बितानि मौलीकुण्डलस्रग्दामप्रलम्बितानि केयूरहारार्धहारप्रलम्बितानि काशिकवस्त्रप्रलम्बितानि सौवर्णरूप्यघण्टारुणरुणायमानानि। तादृशैः कल्पवृक्षैः पर्वतराजेषु प्रत्येकबुद्धा विहरन्ति। अनेकानि सूत्रगेयव्याकरणगाथोदानेतिवृत्तकजातकवैपुल्याङ्गात् धर्मोपदेश परस्परमीदृश सांकथ्य कुर्वन्ति। तदा सर्वनीवरणविष्कम्भी ततो रोमविवरादवतीर्य सर्वपश्चिमोऽय रोमविवरः ध्वजाग्रो नाम रोमविवरः। स रोमविवरोऽशीतियोजनसहस्राणि। तस्मिन् रोमविवरेऽशीतिपर्वतसहस्राण्यभूवन्, विविध- S 87 रत्नपरिखचितविचित्राणि। तेषु पर्वतराजेषु अनेकाः कल्पवृक्षाः, अनेकाश्चन्दनवृक्षाः शतसहस्राः, अगुरुवृक्षाः शतसहस्राः। तस्मिन् रोमविवरे वज्रमयी भूमि.। तस्मिन् रोमविवरे नवनवतिकूटागारशतसहस्राणि दिव्यसौवर्णमयानि मुक्ताहारपटदामकलापप्रलम्बितानि घण्टामालाप्रलम्बितानि चन्द्रकान्तिरत्नावभासितानि। तत्तेषु कूटागारेषु तथागतविग्रहा निषण्णाः। ते जाम्बूद्वीपकाना मनुष्याणां च धर्म देशयन्ति। यदुत षट्पारमितानिर्देश निर्दिशन्ति। दानपारमितानिर्देश निर्दिशन्ति। शीलपारमितानिर्देश निर्दिशन्ति। क्षान्तिपारमितानिर्देशं निर्दिशन्ति। वीर्यपारमितानिर्देशं निर्दिशन्ति। ध्यानपारमितानिर्देश निर्दिशन्ति। प्रज्ञापारमितानिर्देश निर्दिशन्ति। एव विविधा धर्मदेशना कृत्वा जाम्बुद्वीपकाना मनुष्याणा कालेन कालं धर्मं देशयन्ति। एव ते कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य रोमविवराणि यावत्पश्यन्ति। तस्मिन्नेव जेतवनविहारे

देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यमहेश्वरनारायणपूर्वंगमानि देवपुत्राणि संनिपतितानि । अनेकानि बोधिसत्त्वकोटिनियुतशतसहस्राणि संनिपतितानि ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—किं भगवन् । यानि रोमविवराणि, सविद्यन्ते वा ? भगवानाह—ततः कुलपुत्र रोमविवरादतिक्रम्य अवलोकितेश्वरस्य दक्षिण पादाङ्गुष्ठ यत्र ते चत्वारो महासमुद्रा· परिभ्रमन्ति, न च जानन्त्यवगाहयन्ति । यदा दक्षिण-पादाङ्गुष्ठादुदक निष्क्रामति, तदा वडवामुखे पतन्ति । तदा भस्मराशिमनुगच्छन्ति । एवमेव S 88 कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्याधिष्ठान सविद्यते । अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—तदपि भगवन् रोमविवर सविद्यते ? भगवानाह—तदपि कुलपुत्र न सविद्यते ॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—नागच्छति भगवन्नवलोकितेश्वरः ? भगवानाह—आगच्छति कुलपुत्र अवलोकितेश्वरः । अस्मिन्नेव जेतवनमहाविहारे मम दर्शनाय वन्दनाय पर्युपासनाय, महेश्वरस्य देवपुत्रस्य सहाया लोकधातौ व्याकरण-मुद्देशाय च ॥

अथावलोकितेश्वरेण बोधिसत्त्वेन महासत्त्वेन रश्मय उत्सृष्टा नीलपीतलोहितावदात-माञ्जिष्ठस्फटिकरजतवर्णाः । ते च रश्मयो जेतवनमागच्छन्ति । आगत्य भगवन्तं त्रिः प्रदक्षिणी-कृत्य पुनरेव जेतवनाद्विहारान्निष्क्रम्य अवीचिं महानरक गच्छन्ति । तत्र गत्वा अवीचिमहानरक शीतिभावमुपनयन्ति । अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कुतो भगवन् रश्मय आगच्छन्ति कुत्र गच्छन्ति ? भगवानाह—एव कुलपुत्र अवलोकितेश्वरेण नानाविधा रश्मय उत्सृष्टाः । ते चास्मिन् जेतवने विहारमागच्छन्ति । आगत्य च मां त्रिः प्रदक्षिणीकृत्य अवीचिं महानरक गच्छन्ति । गत्वा चावीचिमहानरक शीतिंभाव कुर्वन्ति । तस्मिन् जेतवने विहारे शुभनिमित्तानि प्रादुर्भूतानि । दिव्यानि चम्पकवृक्षाणि प्रादुर्भूतानि । दिव्याः पुष्करिण्यः प्रादुर्भूताः । तत्र जेतवनविहारे दिव्यसौवर्णनिर्भासा दृश्यन्ते । ईदृशो जेतवनविहारो दृश्यते ॥ S 89

अथावलोकितेश्वरः सुखावतीलोकधातोर्निष्क्रम्य येन जेतवनविहारस्तेन सप्रस्थितः । अनुपूर्वेण जेतवनविहारं सप्राप्त । अथ तस्मिन् जेतवनविहारे प्रविष्टो भगवतः पादौ शिरसाभिवन्द्य एकान्ते स्थितः । तदा कलविङ्करुतस्वराभिनिर्घोषेण भगवानारोचयति—आगतस्त्व कुलपुत्र ? कृतस्ते सत्त्वपरीपाक· ? अथावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—यथाज्ञप्तो भगवता । एव च मया कर्मभूमिर्निष्पादिता । अथ भगवान् साधुकारमदात्—साधु साधु कुलपुत्र, यस्त्वया ईदृशा कर्मभूमिर्निष्पादिता । अथावलोकि-तेश्वरो भगवन्त पद्मान्युपनामयति—इमानि ते भगवन्नमिताभेन तथागतेन प्रहितानि । पृच्छत्यल्पाबाधतां च अल्पातङ्कता च लघूत्थानता च सुखस्पर्शविहारता च । ततो भगवता गृहीत्वा वामपार्श्वे स्थापितानि ॥

अथ महेश्वरो देवपुत्रो येन भगवांस्तेनोपसक्रान्तः, उपसक्रम्य भगवतः पादौ शिरसा-भिवन्द्य भगवन्तमेतदवोचत्—लभेयाह भगवन् व्याकरणनिर्देशस्य समुद्देशम् ? भगवानाह—

गच्छ कुलपुत्र, अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वस्ते व्याकरणं दास्यति। अथ महेश्वरो देवपुत्रोऽवलोकितेश्वरस्य पादयोर्निपत्य स्तोत्रविशेषं कर्तुमारब्धः–

नमोऽस्त्ववलोकितेश्वराय महेश्वराय पद्मधराय पद्मासनाय पद्मप्रियाय शुभपद्महस्ताय पद्मश्रिये परिवृताय जगदाख्रादनकराय पृथिवीवरलोचनकराय प्रह्लादनकराय ॥

एव महेश्वरो देवपुत्रो गत्वा अवलोकितेश्वरस्य स्तोत्रविशेषं कृत्वा तूर्ष्णीभावेन व्यवस्थितः। अथ अवलोकितेश्वरस्तमेतदवोचत्–किं कारणं त्व कुलपुत्र तूष्णीभावेन व्यवस्थितः? अथ महेश्वरो देवपुत्रस्तमेतदवोचत्–ददस्व मे व्याकरणमनुत्तराया सम्यक्संबोधौ। अवलोकितेश्वरस्तमेतदवोचत्–भविष्यसि त्वं कुलपुत्र विवृताया लोकधातौ भस्मेश्वरो नाम तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान्। अथ सा उमादेव्युपसंक्रम्यावलोकितेश्वरस्य पादौ शिरसा वन्दित्वा अवलोकितेश्वरस्य स्तोत्राभिधानं कर्तुमारब्धा–

नमोऽस्त्ववलोकितेश्वराय महेश्वराय प्राणंददाय पृथिवीवरलोचनकराय शुभपद्मश्रिये परिवृताय निर्वाणभूमिसप्रस्थिताय सुचेतनकराय धर्मधराय ॥

एवं सा उमादेवी स्तोत्राभिधान कृत्वा अवलोकितेश्वरस्य प्रत्याहारं कर्तुमारब्धा–

परिमोचय मे स्त्रीभावाज्जुगुप्सनीयात्। कलिमलपरिपूर्णगर्भावासदुःखात् सततपरिग्रहसगृहीतात् परिमोक्षय माम्। अथावलोकितेश्वरस्तामेतदवोचत्–भविष्यसि त्वं भगिनि उमेश्वरो नाम तथागतोऽर्हन् सम्यक्सबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान्। हिमवतः पर्वतराजस्य दक्षिणे पार्श्वे तव लोकधातुर्भविष्यति। अथ सा उमादेवी व्याकरणमनुप्राप्ता ॥

भगवानाह–पश्य सर्वनीवरणविष्कम्भिन्। व्याकृता उमादेवी अवलोकितेश्वरेण बोधिसत्त्वेन महासत्त्वेन, सर्वे तेऽनुत्तराया सम्यक्संबोधौ ॥

अय कुलपुत्र महेश्वरनिर्व्यूहो नाम ख्यात इति ॥

---

## [ अष्टमं प्रकरणम्। ]

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्–आगतो भगवन्नवलोकितेश्वरः। यथान्धभूतेन चक्षुरनुप्राप्तम्, एव भगवन्नवलोकितेश्वरोऽनुप्राप्तः। अद्य मे सफल जन्म। अद्य मे आशा परिपूर्णा। अद्य मे परिशोधितो बोधिमार्ग.। स चेतनसधर्मकायनिर्वाणोपदर्शकम् ॥

अथ सर्वनीवरणविष्कम्भी पुनरेव भगवन्तमेतदवोचत्–अद्यास्माक भगवन् देशय त्वमवलोकितेश्वरस्य गुणविशेषम् ॥

भगवानाह–तद्यथापि नाम सर्वनीवरणविष्कम्भिन् चक्रवालमहाचक्रवालौ पर्वतराजानौ। मुचिलिन्दमहामुचिलिन्दौ पर्वतराजानौ। कालमहाकालौ पर्वतराजानौ। ससृष्टमहाससृष्टौ पर्वतराजानौ। प्रलम्बोदरः पर्वतराजा। अनादर्शकः पर्वतराजा।

कृत्स्नागतः पर्वतराजा। जालिनीमुख पर्वतराजा। शतशृङ्ग. पर्वतराजा। भवनश्च पर्वतराजा। महामणिरत्न: पर्वतराजा। सुदर्शनश्च पर्वतराजा। अकालदर्शनश्च पर्वतराजा। एतेषु पर्वतराजेष्वेकैक लोकधातुषु शक्यते मया पर्वतराजानां पलानि वा पलशतानि वा पलसहस्राणि वा पलकोटीनियुतशतसहस्राणि वा सख्यामपि कलामपि गणनामपि शक्यते मया कुलपुत्र गणयितुम्। न तु कुलपुत्र अवलोकितेश्वरस्य शक्यते पुण्यसभारं गणयितुम्। तद्यथापि नाम कुलपुत्र शक्यते मया परमाणुरजसा प्रमाणमुद्ग्रहीतुम्, न तु कुलपुत्र अवलोकितेश्वरस्य शक्यते पुण्यसंभार गणयितुम्। तद्यथापि नाम कुलपुत्र शक्यते मया S 92 महासमुद्रस्यैकैक बिन्दु गणयितुम्, न तु कुलपुत्र अवलोकितेश्वरस्य शक्यते मया पुण्यसमारं गणयितुम्। तद्यथापि नाम कुलपुत्र शक्यते मया शीर्षवनस्यैकैकानि पत्राणि गणयितुम्, न तु कुलपुत्र अवलोकितेश्वरस्य शक्यते पुण्यसभार गणयितुम्॥

तद्यथापि नाम कुलपुत्र सुमेरुः पर्वतराजो भूर्यराशिर्भवेत्। महासमुद्र. मेरण्डुमण्डल भवेत्। चतुर्द्वीपनिवासिन. स्त्रीपुरुषदारकदारिकादय सर्वे ते लेखका भवेयुः। स च सुमेरुपर्वतराजोऽनन्तो लिखितो भवेत्। शक्यते मयैकैकाक्षर गणयितुम्। न त्ववलोकितेश्वरस्य शक्यते पुण्यसभार गणयितुम्। तद्यथापि नाम सर्वनीवरणविष्कम्भिन् द्वादश गङ्गानदीवालुकोपमास्तथागता अर्हन्त सम्यक्सबुद्धाश्चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारै सर्वोपकरणै. समुपस्थिता भवेयुः। यश्च तेषा तथागतानामुपस्थाने पुण्यस्कन्ध, तत कुलपुत्र अवलोकितेश्वरस्यैकवालाग्रे पुण्यस्कन्ध.। तद्यथापि नाम सर्वनीवरणविष्कम्भिन् अवलोकितेश्वरः अनेकै. समाधिशतै· समन्वागत.। तद्यथा—प्रभजनो नाम समाधि·। विभूषणकलो नाम समाधिः। अभूषणकरो नाम समाधिः। विद्युल्लोचनो नाम समाधिः। क्षपणो नाम समाधिः। महामनस्वी नाम समाधिः। आकारकरो नाम समाधि·। वज्रमाला नाम समाधि·। वरदो नाम समाधि.। शतवीर्यो नाम समाधि.। अन्धव्यूहो नाम समाधिः। प्रतिभानकूटो नाम समाधि·। राजेन्द्रो नाम समाधिः। वज्रप्राकारो नाम समाधिः। वज्रमुखो नाम समाधिः। सदावरदायको नाम समाधिः। इन्द्रियपरिमोचनो नाम समाधि.। द्वेषपरिमोचनो नाम समाधिः। चन्द्रवर- S 93 लोचनो नाम समाधिः। दिवाकरवरलोचनो नाम समाधिः। धर्माभिमुखो नाम समाधिः। वज्रकुक्षिर्नाम समाधि.। सुदर्शको नाम समाधिः। निर्वाणकरो नाम समाधिः। अनन्तरश्मिनिष्पादनकरो नाम समाधिः। योगकरो नाम समाधिः। विकिरिणो नाम समाधिः। जम्बुद्वीपवरलोचनो नाम समाधिः। बुद्धक्षेत्रवरलोचनो नाम समाधिः। मैत्र्याभिमुखो नाम समाधिः। प्रज्ञाप्रतिभासितो नाम समाधि.। सुदन्तो नाम समाधिः। अक्षराक्षरो नाम समाधिः। अवीचिसशोषणो नाम समाधिः। सागरगम्भीरो नाम समाधि·। शतपरिवारो नाम समाधि.। मार्गसदर्शनो नाम समाधि.। एभि. कुलपुत्र अवलोकितेश्वरः समन्वागत.॥

तद्यथापि नाम सर्वनीवरणविष्कम्भिन् भूतपूर्वं कुलपुत्र ऋकुच्छन्दो नाम तथागतोऽर्हन् सम्यक्सबुद्धो लोक उदपादि विद्याचरणसपन्नः सुगतो लोकविदनुत्तर. पुरुषदम्यसारथिः शास्ता देवाना च मनुष्याणा च बुद्धो भगवान्। तेन कालेन तेन समयेन अह दानशूरो नाम बोधिसत्त्वोऽभूवम्। तदा एतस्य तथागतस्य पुर· स्थित्वा ईदृशमवलोकितेश्वरसमन्तभद्रयोः समाधिविग्रहो मया दृष्ट.। भद्रादिभिश्चान्यैर्बोधिसत्त्वैर्महासत्त्वै. समाधिविग्रहो दृष्ट.। यदा समन्तभद्रो बोधिसत्त्वो वज्रोद्गत नाम समाधिं समापेदे, तदावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो विविधमाधिसमाधिं समापेदे। यदा समन्तभद्रश्चन्द्रवरलोचन नाम समाधिं समापेदे, तदावलोकितेश्वरः सूर्यवरलोचन नाम समाधिं समापेदे। यदा समन्तभद्रो विच्छुरित नाम S 94 समाधिं समापेदे, तदावलोकितेश्वरो गगनगञ्ज नाम समाधिं समापेदे। यदा समन्तभद्र आकारकर नाम समाधिं समापेदे, तदावलोकितेश्वर इन्द्रमतिं नाम समाधिं समापेदे। यदा समन्तभद्रो भद्रराज नाम समाधिं समापेदे, तदा अवलोकितेश्वरः सागरगम्भीर नाम समाधि समापेदे। यदा समन्तभद्र. सिंहविष्कम्भित नाम समाधिं समापेदे, तदावलोकितेश्वर. सिंहविक्रीडित नाम समाधिं समापेदे। यदा समन्तभद्रो वरदायक नाम समाधिं समापेदे, तदावलोकितेश्वरः अवीचिसशोषण नाम समाधिं समापेदे। यदा समन्तभद्रः सर्वरोमविवराण्युद्घाटयति, तदावलोकितेश्वर. सर्वरोमविवराण्यपावृणोति। तदा समन्तभद्रस्तमेतदवोचत्—साधु साध्ववलोकितेश्वर, यस्त्वमीदृश प्रतिभानवान्। अथ ऋकुच्छन्दस्तथागतस्तमेतदवोचत्—अल्प त्वया कुलपुत्र अवलोकितेश्वरस्य प्रतिभान दृष्टम्। यादृशमवलोकितेश्वरस्य प्रतिभान तादृश तथागताना न सविद्यते। ईदृश मया कुलपुत्र ऋकुच्छन्दस्य तथागतस्य सकाशाच्छ्रुतम्॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—देशयतु मे भगवान् कारण्डव्यूह महायानसूत्ररत्नराज येन वय धर्मरसेनापूर्यमाणाः सतृप्ताः भवेम। भगवानाह—ये कुलपुत्र कारण्डव्यूहमहायानसूत्ररत्नराजस्य नाम श्रोष्यन्ति, तेषा पूर्वकानि कर्मावरणानि न सविद्यन्ते। ये परदारगमनप्रसक्ता औरभ्रिककर्मोद्युक्ता., ये मातापितृघातका अर्हद्घातस्तूपभेदकास्तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादकाः, ईदृशाना पापरताना सत्त्वाना तदपि कारण्डव्यूहो S 95 महायानसूत्ररत्नराजः सर्वपापपरिमोक्षण कुरुते॥

अथ सर्वनीवरणविष्कम्भी भगवन्तमेतदवोचत्—कथ जानाम्यह भगवन् कारण्डव्यूह महायानसूत्ररत्नराज सर्वपापपरिमोक्षण कुरुते? भगवानाह—अस्ति कुलपुत्र सुमेरोः पर्वतराजस्य दक्षिणपार्श्वे सप्तभिः सम्यक्सबुद्धैर्मलनिर्मलौ तीर्थौ परिकल्पितौ। एतर्हि मया विकल्पितौ। यथा पाण्डुलवस्त्र नीलमनुगच्छन्ति, स पापराशिरिव द्रष्टव्य·। एवमेव कुलपुत्र इद कारण्डव्यूह महायानसूत्ररत्नराज सर्वपापानि दहति। शुशुक्लभाव कुरुते। तद्यथापि नाम सर्वनीवरणविष्कम्भिन् वर्षाकालसमये सर्वाणि तृणगुल्मौषधिवनस्पतय सर्वे नीलाभि(रूपा) भवन्ति। अथ शतमुखो नाम नागराज भवनादवतीर्य सर्वास्ता तृणगुल्मौषधिवनस्पतीर्दहति। एवमेवाय कुलपुत्र कारण्डव्यूह महायानसूत्ररत्नराज सर्वपापानि दहति, शुक्लभाव कुरुते। सुखितास्ते सत्त्वा भविष्यन्ति, य इम कारण्डव्यूह महायानसूत्र रत्नराज

श्रोष्यन्ति। न ते कुलपुत्र पृथग्जना इति वक्तव्या.। अवैवर्तिका बोधिसत्त्वा इव द्रष्टव्याः। तेषा च मरणकारणसमये द्वादश तथागता उपसक्रम्य आश्वासयन्ति–मा भैषीः कुलपुत्र। त्वया कारण्डव्यूह महायानसूत्ररत्नराज श्रुतम्। न त्वया पुनरेव ससार ससरितव्यम्। न पुनरपि तेषा जातिजरामरण भविष्यति। तत इष्टप्रियविप्रयोगो प्रियसप्रयोगो न भविष्यति। गमिष्यसि त्व कुलपुत्र सुखावतिलोकधातुम्। अमिताभस्य तथागतस्य सकाशाद्धर्ममनुश्रोष्यसि। एव कुलपुत्र तेषा सत्त्वाना सुखमरण भविष्यति। अथावलोकितेश्वरो भगवत पादौ शिरसा- S 96
भिवन्द्य एकान्ते प्रक्रान्तः। अथ सर्वनीवरणविष्कम्भिस्तूष्णीभावेन व्यवस्थित। ते च देवा नागा यक्षा गन्धर्वा असुरा गरुडा· किन्नरा महोरगा मनुष्यामनुष्या प्रक्रान्ता·॥

यदा ते प्रक्रान्तास्तदायुष्मानानन्दो भगवन्तमेतदवोचत्–देशयतु मे भगवानस्माक शिक्षासवरम्। भगवानाह–ये भिक्षव उपसपदाभावमिच्छन्ति, तै प्रथमतर गत्वा आवास सम्यगवलोकयितव्यम्। व्यवलोकयित्वा भिक्षुक(?)मारोचयितव्य शुद्ध्यते भदन्त नानावास न च यत्र नानावासेऽस्थीनि संविद्यन्ते। उच्चारप्रस्तावे न सविद्येते। परिशुद्ध्यति। एव भदन्त नानावासमर्हति उपसपदाभावो भिक्षूणाम्॥

भगवानाह–दु·शीलेन भिक्षुणा नोपसपादयितव्यम्। न च ज्ञप्तिर्दातव्या। किं बहुना? भिक्षवो दुःशीलेन भिक्षुणा नानावास न कर्तव्यम्, प्रागेव ज्ञप्तिचतुर्थम्। एते हि शासनदूषका.। दु·शीलाना भिक्षूणा शीलवता दक्षिणीयाणा मध्ये आवासो न दातव्य.। तेषा बहिर्विहारे आवासो दातव्य.। तथा सघालापो न दातव्यः। न च तेषा साघिकी भूमिमर्हति। न च तेषा किंचिद्भिक्षुभाव सविद्यते॥

अथ खल्वायुष्मानानन्दो भगवन्तमेतदवोचत्–कतमे काले भगवन्नीदृशादक्षिणीया भविष्यन्ति? भगवानाह–तृतीये वर्षशतगते मम परिनिर्वृतस्य तथागतस्य ईदृशादक्षिणीया भविष्यन्ति, ये विहारे गृहिसज्ञा धारयिष्यन्ति। ते दारकदारिकापरिवृता भविष्यन्ति। ते साघिक मञ्चपीठ वशिकोपबिम्बोपधानक शयनासन असत्परिभोगेन परिभोक्ष्यन्ते। S 97
ये च साघिकोपचारे उच्चार प्रस्राव कुर्वन्ति, ते वाराणस्या महानगर्यामुच्चारप्रस्रावे गूढमृत्तिकोदरे प्राणिनो जायन्ते। ये साघिक दन्तकाष्ठमसत्परिभोगेन परिभुञ्जन्ते, ते कूर्ममकरमत्स्येषु जायन्ते। ये साघिक तिलतण्डुलकोद्रवकुलत्थधान्यादीनसत्परिभोगेन परिभुञ्जन्ते, ते प्रेतनगरेषूपपद्यन्ते। हीनेन्द्रिया दग्धस्थूणाकृतिभिरस्थिपत्रवदुच्छ्रितैः स्वकेशरोमप्रतिच्छन्नै. पर्वतोदरसनिभै. सूचीछिद्रोपममुखैः काये ईदृश ते दुःख प्रत्यनुभवन्ति। ये साघिकस्यान्नपानादेरन्यायेन परिभोग कुर्वन्ति, तेऽल्पश्रुतेषु कुलेषु जायन्ते। हीनेन्द्रियाश्च जायन्ते। खञ्जकुब्जकाणवामनाश्च जायन्ते। परमुखयाचनकाश्च जायन्ते। ततश्चोत्तरि व्याधिताश्च जायन्ते। पूयशोणित काये वहन्ति। स्वकीय-लोमसकुचितकाया उत्तिष्ठन्ति, तदा मासपिण्डा भूमौ पतन्ति। अस्थीनि दृश्यन्ते। एव ते बहूनि वर्षशतानि कायिक दुःख प्रत्यनुभवन्ति। ये साघिकीं भूमिमसत्परिभोगेन परिभुञ्जन्ते, ते द्वादश कल्पान् रौरवे महानरके उपपद्यन्ते। तेषा तप्तान्ययोगुडानि मुखे

विष्कम्भान्ते दह्यन्ते । ओष्ठमपि, दन्ता अपि विशीर्यन्ते । तालूनि स्फुटन्ति दह्यन्ते ।
कण्ठमपि ताल्वपि हृदयमपि । अन्यान्यपि सर्वेण सर्वं दह्यन्ते, अवशेष गच्छन्ति । तदा
भिक्षव. कर्मवायवो वान्ति येन ते मृताः पुरुषाः पुनरेव जीवन्ति । ततः पुनरपि यमपालैः
पुरुषै. सगृह्यन्ते । तत' तेषा कर्मोपगाना कर्मवशाना महती जिह्वा प्रादुर्भवति । तत्र
जिह्वायामुपरि हलशतसहस्रं कृष्यते । एव ते बहूनि वर्षशतानि बहूनि वर्षसहस्राणि
S 98 बहूनि वर्षशतसहस्राणि नारक दु ख प्रत्यनुभवन्ति । ततश्च्युत्वा अग्निघटे महानरके
उपपत्स्यन्ते । ततस्ते यमपालपुरुषा गृहीत्वा च तस्य जिह्वाया सूचीशतसहस्र विध्यन्ति ।
तदपि कर्मवशाज्जीवन्ति, तत उत्क्षिप्य अग्निखदामध्ये क्षिपन्ति । तस्यामग्निखदायामुत्क्षिप्य
महतीं वैतरणीं क्षिपन्ति, तदपि काल न कुर्वन्ति, तदन्यनरकेषूपपद्यन्ते । एव परिक्रमता
तेषा त्रयः कल्पा. परिक्षीयन्ते । ततश्च्युत्वा जम्बुद्वीपे जायन्ते दरिद्राः जात्यन्धाः ।
तस्मात्ते ह्यनिन्दान्युत्तराणि साघिकानि वस्तूनि रक्षितव्यानि ॥

ये भिक्षव. शिक्षासवरसवृताश्च भवन्ति, तैः इमानि त्रीणि चीवराणि धारयितव्यानि । एक चीवर सघस्य विश्वासेन सघपरिभोगाय, तथा द्वितीय चीवर राजकुलद्वारगमनाय च, तृतीय चीवरं ग्रामनगरनिगमपल्लीपत्तनेषु च । इमानि त्रीणि चीवराणि भिक्षवो धारयितव्यानि । ये शीलवन्तो गुणवन्तः प्रज्ञावन्तस्तैर्भिक्षव इमानि शिक्षापदानि मया प्रज्ञप्तानि धारयितव्यानि । असत्परिभोगेन भिक्षवो न परिभोक्तव्यं साघिक वस्तु अग्निघटोपमम् । साघिक वस्तु विषोपमम् । साघिक वस्तु वज्रोपमम् । साघिकं वस्तु भारोपमम् । विषस्य प्रतीकार कर्तुं शक्यते, न तु साघिकस्य वस्तुनः प्रतीकारं कर्तुं शक्यते ॥

अथायुष्मानानन्दो भगवन्तमेतदवोचत्—आज्ञप्तानि भगवता शिक्षापदानि, ये भिक्षवो
धारयन्ति, ते प्रतिमोक्षसवरसवृता भवन्ति । विनयाभिमुखा भवन्ति । कोशाभिमुखा भवन्ति ।
S 99 शिक्षाकुशला भवन्ति । तानि च भगवत. शिक्षापदानि भवन्ति ॥

आयुष्मानानन्दो भगवत. पादौ शिरसा वन्दित्वा प्रक्रान्त. । अथ ते महाश्रावकाः स्वक स्वक बुद्धक्षेत्र प्रक्रान्ताः । ते च देवा नागा यक्षा गन्धर्वा असुरा गरुडा. किन्नरा महोरगा मनुष्या., सर्वे ते प्रक्रान्ताः ॥

इति शिक्षासंवरो नाम द्वादश(?) प्रकरणम् ॥

इदमवोचद्भगवान्, ते च बोधिसत्त्वाः सा च सर्वावती पर्षत् सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

अय कारण्डव्यूहमहायानसूत्ररत्नराजस्य धारणिव्यूहः महेश्वरः समाप्तः ॥

आर्यकारण्डव्यूहो महायानसूत्ररत्नराजः समाप्तः ॥

* * * * *

ये धर्म हेतुप्रभवा हेतुस्तेषा तथागतो ह्यवदत् ।
तेषा च यो निरोध एव वादी महाश्रमणः ॥

# १९ अर्थविनिश्चयसूत्रम् ।

Dr P L Vaidya, General Editor, Poona

The *Arthaviniścayasūtra* included in this volume and being published for the first time, was discovered by me in the Oriental Institute, Baroda, during my frequent visits to that place in 1957-59 for preparing a Critical Edition of the Ayodhyā Kānda of the Rāmāyana, now in course of publication This Sūtra is mentioned in MVy 65 81 , Tohoku Catalogue No 317 , Nanjio, 1015, 928 , was translated into Tibetan by Jinamitra, Prajñākaramati and Ye-śes-sde It is one of the important sūtras of Mahāyāna Buddhism as it contains all important terms of Mahāyāna School, and as such must have been used as a manual for the use of young monks under training Haribhadra in his *Āloka* on *Astasāhasrikā* on page 324 of GOS Edition and on page 433 of our Edition in BST No 4, refers to this sūtra as follows —

स्वस्मिन्नर्थविनिश्चयादिसूत्रे दृश्यमानत्वात्सूत्रपर्यापन्नम्

The Ms in the Oriental Institute bears Library No 13242 It has 25 folios 30 cm by 15 cm, with 10 lines to a page and about 33 letters to a line It is written in Devanāgarī on Nepalese paper, white on one side and yellow on the other The dandas as well as margins are marked in red ink It once belonged to the Vajrācārya Monastery in Kathamandu The postscript of the Ms states that it was copied in Devanāgarī from an old palm lief Ms in Newari script belonging to the Bir Library in Kathamandu, Nepal, and bearing No 26 तेश्रापत्र 268. The original as well as the present paper Ms gives the title of the sūtra in Tibetan also, and further states –

अस्य सर्व वृत्तान्त अभिनिष्क्रमणनामसूत्रे विद्यते इति तिब्बतभाषया कथितम्

This copy bears स १०४८ कार्तिक शुक्ल अष्टमी सपूर्ण कृत, which must be the year of Nepalese era corresponding to A D 1858

The copyist has done his job fairly well There seem to be gaps in the origial Ms , and the copyist has left blank spaces marked by dots to indicate the same The Ms is defective in places as it omits certain items It is, however, easy to control the text by reference to other works where the same subject-matter is treated, but I have given here the text as I found it in the Ms. used by me,

Subsequent to my discovery of the above-mentioned Ms, I came to learn of an earlier but fragmentary edition of the work by Alfonsa Ferrari, a pupil of Dr Tucci of Rome, who published the fragments in the Journal "Reale Accademia d'Italia," Rome, 1944

I also learn from Mr N H Santani, M A, formerly Research Assistant in the Department of Buddhistic Studies in Delhi University and now Lecturer in the Banaras Hindu University, that he has been working on this very text and its commentary based on the photos brought from Tibet by Mahapandit Rahula Sankrtyayana and deposited in the K P Jayaswal Institute, Patna. I further learn that Mr Santani also procured a few more Mss of the sūtra as well as its commentary in Nepal If he brings out an edition of this sūtra and its commentary, it is possible to improve upon my text In the meanwhile, I am presenting the text of the Sūtra as it is preserved in the Baroda Ms



## १९ अर्थविनिश्चयसूत्रम् ।

(1 *b*) श्रीमञ्जुगुरवे[ श्रिये ] नमः ।

भग[१]वानाह—कश्चासौ भिक्षवोऽर्थविनिश्चयो नाम धर्मपर्यायः ? यदुक्तम्—प[१]ञ्च स्कन्धाः । प[२]ञ्चोपादानस्कन्धा. । अ[३]ष्टादश धातवः । द्वाद[४]शायतनानि । द्वाद[५]शाङ्ग[ः] प्रतील्यसमुत्पाद· । च[६]त्वारि आर्यसत्यानि । द्वा[७]विंशति इन्द्रियाणि । च[८]त्वारि ध्यानानि । [ चतस्र आ[९]रूप्यसमापत्तयः ][२] । च[१०]त्वारो ब्रह्मविहाराः । च[११]तस्रः प्रतिसविदः । च[१२]तस्रः समाधिभावनाः । च[१३]त्वारि स्मृत्युपस्थानानि । च[१४]त्वारि सम्यक्प्रहाणानि । च[१५]त्वार ऋद्धिपादाः । प[१६]ञ्चेन्द्रियाणि । प[१७]ञ्च बलानि । स[१८]प्त बोध्यङ्गानि । आ[१९]र्याष्टाङ्गमार्गः । षोड[२०]शाकारा आनापानानुस्मृतिः । च[२१]त्वारि स्रोतापत्त्यङ्गानि । द[२२]श तथागतबलानि च[२३]त्वारि वैशारद्यानि । चत[२४]स्र· प्रतिसविदः । अष्टाद[२५]श आवेणिकबुद्धधर्माः । द्वा[२६]त्रिंशन्महापुरुषलक्षणानि । अ[२७]शील्यनुव्यञ्जनानि । अय भिक्षवोऽर्थविनिश्चयस्य धर्मपर्यायस्योद्देशः ॥

[ १ ] तत्र भिक्षवः कतमे पञ्च स्कन्धाः ? तद्यथा—रूपस्कन्धः । वेदनास्कन्धः । सञ्ज्ञास्कन्ध· । सस्कारस्कन्ध· । विज्ञानस्कन्धः । इमे भिक्षवः पञ्च स्कन्धाः ॥

[ २ ] तत्र भि(2*a*)क्षव· कतमे पञ्चोपादानस्कन्धाः ? तद्यथा—रूपोपादानस्कन्धः । वेदनोपादानस्कन्ध. । सञ्ज्ञोपादानस्कन्ध· । सस्कारोपादानस्कन्धः । विज्ञानोपादानस्कन्धः । इमे भिक्षव. पञ्चोपादानस्कन्धाः ॥

[ ३ ] तत्र भिक्षवः कतमेऽष्टादश धातव· ? तद्यथा—चक्षुधातुः । रूपधातुः । चक्षुर्विज्ञानधातु । श्रोत्रधातुः । शब्दधातु. । श्रोत्रविज्ञानधातु. । घ्राणधातु. । गन्धधातुः । घ्राणविज्ञानधातु. । जिह्वाधातु. । रसधातु । जिह्वाविज्ञानधातुः । कायधातुः । स्पर्शधातु. । कायविज्ञानधातुः । मनोधातु. । धर्मधातु. । मनोविज्ञानधातु· । इमे भिक्षव उच्यन्तेऽष्टादश धातवः ॥

[ ४ ] तत्र भिक्षवः कतमानि द्वादशायतनानि ? यदुत चक्षुरध्यात्मिकमायतनम् । रूपमध्यात्मिकमायतनम् । श्रोत्रमध्यात्मिकमायतनम् । शब्दो बाह्यमायतनम् । घ्राणमध्यात्मिकमायतनम् । गन्धो बाह्यमायतनम् । जिह्वा अध्यात्मिकमायतनम् । रसो बाह्यमायतनम् । कायोऽध्यात्मिकमायतनम् । स्पर्शो बाह्यमायतनम् । मन अध्यात्मिकमायतनम् । धर्मो बाह्यमायतनम् । इमानि भिक्षव उच्यन्ते द्वादशायतनानि ॥

[ ५ ] तत्र भिक्षवः (2*b*) कतमो द्वादशाङ्ग· प्रतील्यसमुत्पादः ? अविद्याप्रत्ययाः सस्काराः । सस्कारप्रत्यय विज्ञानम् । विज्ञानप्रत्यय नामरूपम् । नामरूपप्रत्यय षडायतनम् । षडायतनप्रत्ययः स्पर्शः । स्पर्शप्रत्यया वेदना । वेदनाप्रत्यया तृष्णा । तृष्णाप्रत्ययादुपादानम् । उपादानप्रत्ययाद्भव. । भवप्रत्ययाज्जाति· । जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मन-

---

१ The Baroda Ms (B) has no usual introductory section of a Buddhist Sūtra २ B om चतस्र आरूप्यसमापत्तय

स्योपायासाः सभवन्ति । एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति ॥ अविद्यानिरोधात्सस्कारनिरोधः । सस्कारनिरोधाद्विज्ञाननिरोधः । विज्ञाननिरोधान्नामरूपनिरोधः । नामरूपनिरोधात्षडायतननिरोध । षडायतननिरोधात्स्पर्शनिरोध. । स्पर्शनिरोधाद्वेदनानिरोध । वेदनानिरोधात्तृष्णानिरोध. । तृष्णानिरोधादुपादाननिरोधः । उपादाननिरोधाद्भवनिरोधः । भवनिरोधाज्जातिनिरोधः । जातिनिरोधाज्जरामरणशोकपरिदेवदु.खदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति ॥

[ अ ] तत्र कतमा अविद्या ? यत्तत्पूर्वान्तेऽज्ञानम् । अपरान्तेऽज्ञानम् । पूर्वा[न्ता]परान्तेऽज्ञानम् । अध्यात्म अज्ञानम् । बहिर्धा अज्ञानम् । अध्यात्मबहिर्धा अज्ञानम् । कर्मण्यज्ञानम् । विपाकेऽज्ञानम् । ( 3a ) कर्मविपाकेऽज्ञानम् । सुकृतेऽज्ञानम् । दुष्कृतेऽज्ञानम् । सुकृतदुष्कृतेषु धर्मेष्वज्ञानम् । हेतावज्ञानम् । फलेऽज्ञानम् । हेतुफलेऽज्ञानम् । हेतुसमुत्पन्नेषु धर्मेष्वज्ञानम् । प्रतीत्यसमुत्पादेऽज्ञानम् । प्रतीत्यसमुत्पन्नेषु धर्मेष्वज्ञानम् । बुद्धेऽज्ञानम् । धर्मेऽज्ञानम् । सघेऽज्ञानम् । दु खेऽज्ञानम् । समुदयेऽज्ञानम् । निरोधेऽज्ञानम् । मार्गेऽज्ञानम् । कुशलेऽज्ञानम् । अकुशलेऽज्ञानम् । कुशलाकुशलेषु धर्मेष्वज्ञानम् । सावद्येऽज्ञानम् । अनवद्येऽज्ञानम् । सावद्यानवद्येषु धर्मेष्वज्ञानम् । सेवितव्येऽज्ञानम् । असेवितव्येऽज्ञानम् । सेवितव्यासेवितव्येषु धर्मेष्वज्ञानम् । सास्रवेऽज्ञानम् । अनास्रवेऽज्ञानम् । सास्रवानास्रवेषु धर्मेष्वज्ञानम् । सस्कृतेऽज्ञानम । असस्कृतेऽज्ञानम् । सस्कृतासंस्कृतेषु धर्मेष्वज्ञानम् । अतीतेऽज्ञानम् । अनागतेऽज्ञानम् । प्रत्युत्पन्नेऽज्ञानम् । अतीतानागतप्रत्युत्पन्नेषु धर्मेष्वज्ञानम् । षट्सु वा स्पर्शायतनेषु यथाभूतमज्ञानमदर्शनमनभिसमयस्तमः समोहोऽविद्यान्धकारम् । इयमुच्यतेऽविद्येति ॥

[ आ ] अविद्याप्रत्यया. सस्कारा इति । सस्काराः कतमे ? त्रयः सस्कारा.—कायसस्कार. वाक्सस्कारः ( 3b ) मन.सस्कारश्च । तत्र कायसस्कारः कतमः ? आश्वासः प्रश्वास. । कायिको ह्येष धर्म, कायनिश्रितः कायप्रतिबद्ध । काय निश्रित्य वर्तते । तस्मादाश्वासप्रश्वासाः कायसस्कार इत्युच्यते ॥ वाक्सस्कार. कतम· ? वितर्कयित्वा विचारयित्वा वाच भाषते, नावितर्कयित्वा, नाविचार्य । तस्माद्वितर्कविचारो वाक्सस्कार इत्युच्यते ॥ मनःसस्कारः कतमः ? रक्तस्य या चेतना, चित्तस्य च, तेनास्य या चेतना । चैतसिको ह्येष धर्मः । चित्तनिश्रितः चित्तप्रतिबद्ध· । चित्त निश्रित्य प्रवर्तते । तस्माच्चेतना मनःसस्कार इत्युच्यते ॥

[ इ ] सस्कारप्रत्यय विज्ञानमिति । विज्ञान कतमत् ? षड् विज्ञानकाया. । कतमे षट् ? तद्यथा—चक्षुर्विज्ञानम् । श्रोत्रविज्ञानम् । घ्राणविज्ञानम् । जिह्वाविज्ञानम् । कायविज्ञानम् । मनोविज्ञानम् । इमे षड् विज्ञानकायाः ॥

[ ई ] विज्ञानप्रत्यय नामरूपमिति । तत्र नामरूपम्—नाम चत्वारोऽरूपिण· स्कन्धाः । कतमे चत्वारः ? वेदनास्कन्धः । सज्ञास्कन्धः । सस्कारस्कन्धः । विज्ञानस्कन्धः । इद

नाम। रूप कतमत् ? यत्किंचिद्रूपम्, तच्चत्वारि महाभूतानि। चत्वारि च (4a) महाभूतान्युपादाय। तद्यथा—पृथिवीधातु॰। अब्धातुः। तेजोधातु॰। वायुधातुः॥ पृथिवीधातुः कतम ? यद्गुरुत्व च कर्कशत्व च। अब्धातु॰ कतम ? यद् द्रवत्वमभिष्यन्दनत्व च। तेजोधातु॰ कतमः ? यदुष्णत्वं परिपाचनत्व च। वायुधातु॰ कतम. ? यदाकुञ्चनः प्रसारणः लघुसमुदीरणत्व च। यदिद रूप पूर्वक [च] नाम, तदुभयमेकत्राभिसक्षिप्य नामरूपमित्युच्यते॥

[उ] नामरूपप्रत्यय षडायतनमिति। षडायतन कतमत् ? चक्षुरायतनम्। श्रोत्रायतनम्। घ्राणायतनम्। जिह्वायतनम्। कायायतनम्। मनआयतनम्। इदमुच्यते षडायतनम्॥

[ऊ] षडायतनप्रत्ययः स्पर्श इति। स्पर्शः कतम॰ ? षट् स्पर्शकाया.—चक्षु -सस्पर्श॰। श्रोत्रसस्पर्श॰। घ्राणसस्पर्श। जिह्वासंस्पर्शः। कायसस्पर्श। मन सस्पर्श.। [अयमुच्यते स्पर्श॰]॥

[ए] स्पर्शप्रत्यया वेदना। वेदना कतमा ? षड् वेदना। कतमे(मा ?) षट् ? चक्षु॰सस्पर्शजा वेदना सुखा दु खा अदु.खासुखा च। श्रोत्रसस्पर्शजा वेदना सुखा दु॰खा अदु.खासुखा च। घ्राणसस्पर्शजा वेदना सुखा (4b) दुःखा अदुःखासुखा च। जिह्वासस्पर्शजा वेदना सुखा दु.खा अदुःखासुखा च। कायसस्पर्शजा वेदना सुखा दुःखा अदु.खासुखा च। मन.सस्पर्शजा वेदना सुखा दुःखा अदु.खासुखा च। इयमुच्यते वेदना॥

[ओ] वेदनाप्रत्यया तृष्णा। कतमा तृष्णा ? षट् तृष्णाकायाः। कतमे षट् ? रूपतृष्णा। शब्दतृष्णा। गन्धतृष्णा। रसतृष्णा। स्पर्शतृष्णा। धर्मतृष्णा। [इयमुच्यते तृष्णा]॥

[क] तृष्णाप्रत्ययमुपादानम्। उपादान कतमत् ? चत्वारि उपादानानि। कतमानि चत्वारि ? तृष्णोपादानम्। शीलव्रतोपादानम्। आत्मवेदनोपादानम्। [इदमुच्यते उपादानम्]॥

[ख] उपादानप्रत्ययो भव इति। भवः कतमः ? त्रयो भवा। कतमे त्रयः ? कामभव॰। रूपभव॰। आरूप्यभवश्च। तत्र कामभवः कतमः ? तद्यथा—नरकाः। तिर्यञ्चप्रेता॰। असुरा.। षट् कामावचरा देवा.॥ तद्यथा—अष्टौ महानरका.। कतमेऽष्टौ ? तद्यथा—उष्णा महानरका.। सजीव.। कालसूत्र.। सघात॰। द्वौ च रौरवौ। तपनः। प्रतापन॰। अवीचिश्च। इति॥ महानरकाः॥ तद्यथा—अर्बुद.। निरर्बुद.। अटट.। (5a) हहवः। हुहुव.। उत्पल.। पद्म.। महापद्म॰॥ कतमे षट् देवाः ? चातुर्महाराजिका देवा.। त्रायस्त्रिंशा। यामा.। तुषिता.। निर्माणरतयः। परनिर्मितवशवर्तिनो देवा.॥ तत्र रूपभव. कतम ? तद्यथा—ब्रह्मकायिकाः। ब्रह्मपुरोहिता। महाब्रह्माणः। परीत्ताभाः। अप्रमाणाभाः। आभास्वरा.। परीत्तशुभा॰। अप्रमाणशुभा॰। शुभकृत्स्नाः। अनभ्रका.। पुण्यप्रसवाः। अबृहाः। अतपा.। अबृहाः। सुदर्शना.। अकनिष्ठाश्चेति॥ आरूप्यधातवः कतमाः ? तद्यथा—

आकाशानन्त्यायतनम् । विज्ञानानन्त्यायतनम् । आकिंचन्यायतनम् । नैवसंज्ञानासंज्ञायतनम् ॥ आरूपिणां देवानां चित्तमात्रमध्यायिनां चातुर्विधा उपपत्तिः । अयमुच्यते उपादानप्रत्ययो भवः ॥

[ ग ] भवप्रत्यया जातिरिति । जातिः कतमा ? या तेषां तेषां सत्त्वानां तस्मिंस्तस्मिन् सत्त्वनिकाये जातिः, संजातिः, अवक्रान्तिः, अभिनिर्वृत्तिः, स्कन्धानां प्रादुर्भावः, आयतनानां प्रतिलम्भः, जीवितेन्द्रियस्योद्भवः । [ इयमुच्यते जातिः । ] ॥

[ घ ] ( जातिप्रत्ययं जरामरणम् । जरा कतमा ? ) निकायसभागतायास्तस्या यत् खालित्यं पालित्यं वलीप्रचु( 5*b* )रता जीर्णता भुग्नता कुब्जगोपानसीवक्रता खुरुखुरुश्वासप्रश्वासश्च तिलकालकोपहतगात्रता पुरतः प्राग्भारकायता दण्डावष्टम्भता इन्द्रियाणां परिपाकः परिभेदः संभाराणां पुराणीभावो जर्जरीभावः धन्धत्वं मन्दत्वं हानिः परिहाणिः । इयमुच्यते जरा ॥ तत्र मरणं कतमत् ? यत्तेषां सत्त्वानां तस्माच्छविकायाच्च्युतिः च्यवनता भेदोऽन्तर्धानं मरणं कालक्रिया आयुषो हानिः उष्मणो हानिः जीवितेन्द्रियस्य निरोधः स्कन्धानां निक्षेपः । इदमुच्यते मरणम् ॥ यदेतन्मरणं पूर्विका च जरा, तदुभयमेकत्राभिसंक्षिप्य जरामरणमित्युच्यते ॥ अयं भिक्षवो द्वादशाङ्गप्रतीत्यसमुत्पादस्याय विभङ्ग इति ॥

[ ६ ] तत्र कतमानि चत्वार्यार्यसत्यानि ? तद्यथा—दुःखमार्यसत्यम् । दुःखसमुदयमार्यसत्यम् । दुःखनिरोधमार्यसत्यम् । दुःखनिरोधगामिनी प्रतिपदा आर्यसत्यम् ॥ तत्र दुःखमार्यसत्यं कतमत् ? तद्यथा—जातिर्दुःखम् । जरा दुःखम् । व्याधिर्दुःखम् । मरणं दुःखम् । प्रियविप्रयोगो दुःखम् । ( 6*a* ) अप्रियसंयोगो दुःखम् । रूपं दुःखम् । वेदना दुःखम् । संज्ञा दुःखम् । संस्कारा दुःखम् । विज्ञानं दुःखम् । यदपीत्थं पर्येष्यमाणं न लभ्यते तदपि दुःखम् । संक्षेपेण पञ्चोपादानस्कन्धा दुःखम् । इदमुच्यते दुःखमार्यसत्यम् ॥ तत्र दुःखसमुदयमार्यसत्यं कतमत् ? तद्यथा—येयं तृष्णा पौनर्भविकी नन्दीरागसहगता तत्रतत्राभिनन्दिनी, इदमुच्यते दुःखसमुदयमार्यसत्यम् ॥ तत्र कतमद्दुःखनिरोधमार्यसत्यम् ? यदस्या एव तृष्णायाः पौनर्भविक्या नन्दीरागसहगतायास्तत्रतत्राभिनन्दिन्या अशेषतः प्रहाणं प्रतिनिःसर्गो व्ययीभावः क्षयो विरागो निरोधो व्युपशमोऽस्तगमः, इदमुच्यते दुःखनिरोधमार्यसत्यम् ॥ तत्र दुःखनिरोधगामिनी प्रतिपदा आर्यसत्यं कतमत् ? यदुत सम्यग्दृश्या(ष्ट्यादि?)भिरार्याष्टाङ्गमार्गः । तद्यथा—कश्चित्पुरुषो ज्वराभिभूतः कुशलसंपद्दृष्टकर्माणं श्रुतशास्त्रं वैद्यमुपसंक्रम्य कथयेदेवम्—ज्वरेऽशान्तिभूतोऽस्मि । अस्योपशमायौषधमुपदिश्यमानमिच्छामीति । स तस्य भिषक् प्राङ् निदानं पृच्छेत्—किं त्वया भुक्तं पीतं चेति । आतुरस्तस्य कथयेत्—मया हि दधि त्रपुषं भक्षि( 6*b* )तम्, अन्नपानं तक्रं पीतमिति । स तस्य भिषग् विशेषणमुपदिश्य औषधमुपदिशेत् । एवमेव जात्यादिमहाज्वरसंतापिताः साधवो महाचित्तभिषजं महाकारुणिकं नाथं तथागतमुपसंक्रम्य दुःखज्वरापहं धर्मं पृच्छेयुः । तेभ्यो भगवान् निदानं समुदयाख्यमाख्याय आर्याष्टाङ्गो मार्गो महौषधं शान्तिकरं निर्वाण-

मुपदिशेत् । क्लेशातुरोऽप्येन मार्गं भावयन् नचिरात्सर्वदुःखक्षयमवाप्य निर्वाणपुर गत्वा परिशान्तिमवाप्नोतीति ॥ एतानि खलु भिक्षवश्चत्वार्यार्यसत्यानि ॥

[ ७ ] तत्र भिक्षवः कतम आर्याष्टाङ्गमार्ग· ? तद्यथा—सम्यग्दृष्टि· । सम्यक्सकल्प । सम्यग्वाक् । सम्यक्कर्मान्त. । सम्यगाजीव. । सम्यग्व्यायाम । सम्यक्स्मृतिः । सम्यक्समाधिरिति ॥ तत्र भिक्षव· कतमा सम्यग्दृष्टि. ? अस्त्यय लोक, अस्ति परलोक., अस्ति पिता, अस्ति दत्तम्, अस्ति हुतम्, अस्ति इष्टानिष्टसुकृतदुष्कृताना कर्मणा फलविपाक., सन्ति लोके सम्यग्गता. सम्यक्प्रतिपन्ना इति । इय भिक्षव सम्यग्दृष्टि· ॥ सम्यक्सकल्प कतमः ? बुद्धत्वादिपरिणामित (7*a*) दानम्, शील च चक्रवर्त्यादिपरिणामितम् । अय भिक्षवः सम्यक्सकल्पः ॥ सम्यग्वाक् कतमा ? इह भिक्षव पारुष्यानृतपैशुन्यसभिन्नप्रलापवर्जिता अनमृतवाक् । इयमुच्यते सम्यग्वाक् ॥ सम्यक्कर्मान्तः कतम ? कायवाङ्मनसा दशकुशलेषु कर्मपथेषु व्यापार । तत्र कायिक त्रिविधम्—प्राणातिपाताददत्तादानात्काममिथ्याचाराद्विरति । वाचिक चतुर्विधम्—अनृतपारुष्यपैशुन्यसभिन्नप्रलापाद्विरति· । मानसिक त्रिविधम्—अभिध्याव्यापादमिथ्यादृष्ट्या विरतिः ॥ तत्र प्राणातिपातः कतमः ? प्राणी च भवति, प्राणिसंज्ञी च भवति, वधकचित्त चोत्पादयति, जीविताद्व्यपरोपयति । अयमुच्यते भिक्षवः प्राणातिपात. । अन्यत्र प्रमाददादृष्टाद्वा अप्राणिवध· ॥ तत्र अदत्तादान कतमत् ? स्तेयचित्तस्य परद्रव्यस्वीकरणमदत्तादानम्, अन्यत्र मातापितृभ्रातृस्वजनमित्रद्रव्यस्य स्वल्पस्यानुपरोधिनो ग्रहणमदत्तादानम् ॥ तत्र काममिथ्याचार. कतमः ? परस्त्री[ णा ]मुपभोगो भर्तृराजामातापितृरक्षितानाम् । अथवा अस्थान( 7*b* )गम्यादेशकालेषु विप्रतिपत्तिः कायिक( की ) । एव त्रिविध. ॥ अनृत कतमत् ? साक्षिप्रश्नेऽयथाभूतान् वितथवचनमनहिता वा अर्हन्नस्मीति परिहास्यवस्तु, इदमुच्यते अनृतम् ॥ पैशुन्य कतमत् ? अभूतेन सत्येन वा भेदकरणवचन पैशुन्यम् ॥ पारुष्य कतमत् ? परदु·खचिकीर्षोर्यदनिष्टवचनश्रावणदुःखमस्य भवतु, इत्यनया बुद्ध्या यद् निष्ठुरवचनश्रावण क्रियते, तत्पारुष्यम् ॥ सभिन्नप्रलापः कतम. ? राजकथा चौरकथा द्यूतकथा मद्यकथा स्त्रीकथा आख्यायिकाकथा । अयमुच्यते सभिन्नप्रलापः । वाचिकमेव चतुर्विधम् ॥ अभिध्या कतमा ? परद्रव्यस्वीकरणेच्छया अन्यस्य द्रव्याणि तानि मम स्युरितीयमुच्यते अभिध्या ॥ व्यापादः कतम. ? परस्य जीवितव्यपरोपणमवच्छेदनपीडनादिचिन्तनम् । अयमुच्यते व्यापाद. ॥ मिथ्यादृष्टि. कतमा ? नास्त्यय लोक., नास्ति परलोक इत्यादि पूर्ववत् । एतन्मानस त्रिविधम् । इयमुच्यते मिथ्यादृष्टि. ॥ अथ सम्यगाजीवः कतमः ? भिक्षो( 8*a* )स्तावत् कुहना लपना नैमित्तिकत्व नैष्पेषिकत्व लाभेन लाभप्रतिकाङ्क्षा सम्यगाजीवः । कुहनालपनादय. । तत्र कुहना कतमा ? भिक्षुर्दानपतिं दृष्ट्वा पर्यङ्क बद्ध्वा पथि शून्यागारे निषीदति ध्यायी—भिक्षुरर्हन्निति लाभसत्कारो मे भविष्यति, एवमादिका कुहनेत्युच्यते ॥ तत्र लपना कतमा ? इह भिक्षुर्लाभसत्कारनिमित्तमेव त्व मे माता, त्व मे दुहितेति, एवमन्यान्यपि प्रियवचनानि

ब्रवीति । एवमादिका लपनेत्युच्यते ॥ तत्र नैमित्तिकत्व कतमत् ? भिक्षुस्तावत् पिण्डपात्र परिभुक्त्वा सकृदसकृद् यद् ब्रूते–यादृशोऽय पिण्डपातः, तादृशोऽन्येषु उपासकगृहेषु न लभ्यते । अलाभसत्कारचित्तस्य तु वदतो नैव दोष । इदमुच्यते नैमित्तिकत्वम् ॥ तत्र नैष्पेपिकत्व कतमत् ? भिक्षुस्तावद् यत्र गृहे पिण्डपात्रं न लभते, दापयितुकामश्च भवति, तत्र ब्रूते–अदानपतयो निरय गच्छन्ति । यूयमपि अदानपतय. व्यक्त निरयगामिन., इति नरकभयभीतेभ्य पिण्डपात्रमनु प्रयच्छति, त च लब्ध्वा परिभुङ्क्ते । इदमुच्यते (8b) नैष्पषिकत्वम् ॥ तत्र लाभेन लाभप्रतिकाङ्क्षा कतमा ? भिक्षुस्तावदात्मीयेन धनेन शोभनानि चीवराणि चोपक्रीय उपासकेभ्यो दर्शयति–ईदृशानि वय वस्त्राणि दानपतिभ्यो लभामहे इति । तेनाञ्जितानि वस्त्राणि प्रयच्छन्ति । तानि परिभुङ्क्ते । इयमुच्यते भिक्षोर्लाभेन लाभप्रतिकाङ्क्षा । अय भिक्षवो मिथ्याजीव, तस्माद्विरति. सम्यगाजीवः ॥ इह खलु भिक्षवः उपासकस्य मिथ्याजीव. कतम ? विषविक्रयः । शस्त्रविक्रयः । सत्त्वविक्रय. । मद्यविक्रयः । मासविक्रय । अप्रवेक्षिततिलसर्षपपीडनम् । अयमुपासकस्य मिथ्याजीवः । अस्माद्विरति । अयमुच्यते भिक्षवः सम्यगाजीव.॥ सम्यग्व्यायामः कतम ? अभिवादनबहुलप्रत्युपस्थानाञ्जलि· सामीचीकर्मकरणम् । अयमुच्यते भिक्षवः सम्यग्व्यायामः ॥ सम्यक्स्मृतिः कतमा ? इह खलु भिक्षवो भिक्षु स्त्रिय दृष्ट्वा उत्पन्ने रागे बाह्यात्मिकयोः शरीरयोरशुभाकारेण यथाभूतदर्शी भवति–सन्त्यस्मिन् काये केशा रोमाणि नखा दन्ता रजोमलत्वङ्मासम्, अस्थिस्नायुसिरा वृक्का हृदयम् (आ)मक आमा(9a)शयः पक्वाशय अन्त्राणि अन्त्रगुणा ओदरीयक यकृत् पुरीषमश्रु स्वेद. खेलकः सिंघाणको वसा लसीका मज्जा मेदः पित्त श्लेष्मा पूय शोणित मस्तकलुङ्गमुच्चारप्रस्रवैः पूर्ण नानाप्रकारकमशुचिरिति । इयमुच्यते भिक्षवः सम्यक्स्मृतिः ॥ (सम्यक्समाधिः कतमः ? चत्वारि ध्यानानि । इह भिक्षवो भिक्षुः विविक्त कामै. विविक्त पापकैरकुशलैर्धर्मैः सवितर्कं सविचार विवेकज प्रीतिसुख प्रथमध्यानमुपसंपद्य विहरति । स वितर्कविचारव्युपशमादध्यात्मसप्रसादाच्चेतस एकोतिभावादवितर्कमविचार समाधिज प्रीतिसुख द्वितीयध्यानमुपसपद्य विहरति । स प्रीतेर्विरागादुपेक्षको विहरति स्मृतः सप्रजानन्, सुख च कायेन प्रतिसवेदयते–यत्तदार्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारी–तृतीयं ध्यानमुपसपद्य विहरति । स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात् पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तगमाददुःखासुखमुपेक्षास्मृतिपरिशुद्ध चतुर्थध्यानमुपसपद्य विहरति । इमानि खलु भिक्षवश्चत्वारि ध्यानानि । अयमुच्यते सम्यक्समाधि. ॥) अयमु(9b)च्यते भिक्षवः आर्याष्टाङ्गो मार्ग. ॥

[ ८ ] द्वाविंशतीन्द्रियाणि कतमानि ? यदुत चक्षुरिन्द्रिय श्रोत्रेन्द्रिय घ्राणेन्द्रिय जिह्वेन्द्रिय कायेन्द्रिय मनेन्द्रिय पुरुषेन्द्रिय स्त्रीन्द्रिय दुःखेन्द्रिय सुखेन्द्रिय सौमनस्येन्द्रिय दौर्मनस्येन्द्रिय उपेक्षेन्द्रिय श्रद्धेन्द्रिय वीर्येन्द्रिय समाधीन्द्रिय स्मृतीन्द्रिय ज्ञानेन्द्रिय जीवितेन्द्रियम्, अनाज्ञातमाज्ञास्यामीन्द्रियम्, आज्ञेन्द्रियम्, आज्ञातावीन्द्रियम् । इमानि भिक्षव द्वाविंशतीन्द्रियाणि ॥

[ ९ ] तत्र भिक्षवश्चत्वारि ध्यानानि कतमानि? इह भिक्षवो भिक्षुर्विविक्तं कामैः विविक्त पापकैरकुशलैर्धर्मैः सवितर्कं सविचार विवेकज प्रीतिसुख प्रथम ध्यानमुपसपद्य विहरति। स वितर्कविचाराणा व्युपशमादध्यात्मसप्रसादाच्चेतस एकोतिभावादवितर्कमविचार समाधिज प्रीतिसुख द्वितीय ध्यानमुपसपद्य विहरति। स प्रीतेर्विरागादुपेक्षको विहरति, स्मृत· सप्रजन्य च (सप्रजानन्) सुखं कायेन प्रतिसवेदयते—यत्तदार्या आचक्षते उपेक्षक· स्मृतिमान् सुखविहारी—तृतीय ध्यानमुपसपद्य विहरति। स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात् पूर्वमेव सौमनस्यदौर्मनस्ययोरस्तगमाद(10$a$)दु·खासुखमुपेक्षास्मृतिपरिशुद्ध चतुर्थं ध्यान-मुपसपद्य विहरति ॥ इमानि भिक्षवश्चत्वारि ध्यानानि[1] ॥

[ १० ] तत्र कतमे चत्वारो ब्रह्मविहारा·? इह भिक्षवो भिक्षुर्मैत्रीसहगतेन चित्तेन अवैरेण असपत्नेन अव्याबाधेन विपुलेन महद्गतेन अप्रमाणेन सुभावितेन एकाद्दिसम विमुच्य स्फुरित्वा उपसपद्य विहरति, तथा द्वितीयम्, तथा तृतीयम्, तथा चतुर्थम्, इति ऊर्ध्वमधस्तिर्यक् सर्वशः सर्वावन्तमिम लोक मैत्रीसहगतेन चित्तेन अवैरेण असपत्नेन अव्याबाधेन विपुलेन महद्गतेन अद्वयेन अप्रमाणेन सुभावितेन एका दिशमधिमुच्य स्फुरित्वा उपसपद्य विहरति। एव करुणासहगतेन, मुदितासहगतेन, उपेक्षासहगतेन चित्तेन अवैरेण असपत्नेन अव्याबाधेन विपुलेन महद्गतेन अद्वयेन अप्रमाणेन सुभावितेन एका दिशमधिमुच्य स्फुरित्वा उपसपद्य विहरति। इमे चत्वारो ब्रह्मविहाराः ॥

[ ११ ] तत्र कतमाश्चतस्र· प्रतिसविदः? अस्ति दु·खा प्रतिपद् धन्धाभिज्ञा। अस्ति दुःखा प्रतिपत् क्षिप्राभिज्ञा। अस्ति सुखा प्रतिपद् धन्धाभिज्ञा। अस्ति सुखा प्रतिपत् क्षिप्राभिज्ञा। तत्र कतमा (10$b$) सा दु·खा प्रतिपद् धन्धाभिज्ञा? इहैकत्यः प्रकृत्यैव तीव्ररागो भवति, तीव्रद्वेषो भवति, तीव्रमोहो भवति। सोऽभीक्ष्ण तीव्ररागज दुःखदौर्मनस्य प्रतिसवेदयति। सोऽभीक्ष्ण तीव्रद्वेषतया द्वेषज दु खदौर्मनस्य प्रतिसवेदयति। सोऽभीक्ष्णं तीव्रमोहतया मोहज दु·खदौर्मनस्य प्रतिसवेदयति। तस्येमानि पञ्च लोकोत्तराणि इन्द्रियाणि धन्धानि भवन्ति मृदूनि सशीघ्रवाहीनि। कतमानि पञ्च? यदुत श्रद्धेन्द्रियं वीर्येन्द्रिय स्मृतीन्द्रिय समाधीन्द्रिय प्रज्ञेन्द्रियम्। स एपा पञ्चाना लोकोत्तराणमिन्द्रियाणा मृदुत्वा-दशीघ्रवाहित्वाच्च धन्धमेवानन्तर्यसमाधिं स्पृशति यदुत आस्रवाणा क्षयाय[2]। इय दुःखा प्रतिपद्धन्धाभिज्ञा। तत्र कतमा दु खा प्रतिपत्क्षिप्राभिज्ञा? इहैकत्यः प्रकृत्यैव तीव्ररागो भवति, तीव्रद्वेषो भवति, तीव्रमोहो भवति। सोऽभीक्ष्ण तीव्ररागतया रागज दुःखदौर्मनस्य प्रतिसवेदयति। [3]अभीक्ष्ण तीव्रद्वेषतया द्वेषज दुःखदौर्मनस्य प्रतिसवेदयति। अभीक्ष्ण

१ A section on चतस्र आरूप्यसमापत्तय which should come after ध्यानानि is missing in Baroda Ms They are आकाशानन्त्यायतनम्, विज्ञाना-नन्त्यायतनम्, आकिंचन्यातनम् and नैवसज्ञानासज्ञायतनम् २ B ह्यषाय for क्षयाय ३ B repeats this sentence.

तीव्रमोहतया मो( 11*a* )हज दु·खदौर्मनस्य प्रतिसवेदयति । तस्येमानि पञ्च लोकोत्तराणि इन्द्रियाणि अधिमात्राणि भवन्ति तीक्ष्णानि शीघ्रवाहीनि । कतमानि पञ्च ? यदुत श्रद्धेन्द्रिय वीर्येन्द्रिय स्मृतीन्द्रिय समाधीन्द्रिय प्रज्ञेन्द्रियम् । स एषा पञ्चाना लोकोत्तराणामिन्द्रियाणामधिमात्रत्वाच्छीघ्रवाहित्वाच्च क्षिप्रमेवानन्तर्य समाधिं स्पृशति यदुत आस्रवाणा क्षयाय। इय दु·खा प्रतिपत्क्षिप्राभिज्ञा ॥ तत्र कतमा सुखा प्रतिपद्धन्धाभिज्ञा ? इहैकत्य· प्रकृत्यैव अल्परागो भवति, अल्पद्वेषो भवति । सोऽ(ल्प)रागतया नाभीक्ष्ण रागज दु.खदौर्मनस्य प्रतिसवेदयति । अल्पद्वेपतया नाभीक्ष्ण द्वेषज दु.खदौर्मनस्य प्रतिसवेदयति । अल्पमोहतया नाभीक्ष्ण मोहज दु खदौर्मनस्य प्रतिसवेदयति । तस्येमानि पञ्च लोकोत्तराणीन्द्रियाणि धन्धानि भवन्ति मृदूनि न तीक्ष्णानि न शीघ्रवाहीनि । कतमानि पञ्च ? यदुत श्रद्धेन्द्रिय वीर्येन्द्रिय स्मृतीन्द्रिय समाधीन्द्रिय प्रज्ञेन्द्रियम् । स एषा पञ्चानामिन्द्रियाणा धन्धत्वान्मृदुत्वादशीघ्रवाहित्वाच्च धन्धमेवा( 11*b* )नन्तर्यं समाधिं स्पृशति यदुतास्रवाणा क्षयाय । इय सुखा प्रतिपद्धन्धाभिज्ञा ॥ तत्र कतमा सुखा प्रतिपत्क्षिप्राभिज्ञा ? इहैकत्यः प्रकृत्यैवाल्परागो भवति, अल्पद्वेषोऽल्पमोह. । सोऽल्परागतया नाभीक्ष्ण रागज दु·खदौर्मनस्य प्रतिसवेदयति । अल्पद्वेषतया नाभीक्ष्ण द्वेषज दुःखदौर्मनस्य प्रतिसवेदयति । अल्पमोहतया नाभीक्ष्ण मोहज दुःखदौर्मनस्य प्रतिसवेदयति । तस्येमानि पञ्च लोकोत्तराणीन्द्रियाण्यधिमात्राणि तीक्ष्णानि शीघ्रवाहीनि । कतमानि पञ्च ? यदुत श्रद्धेन्द्रिय वीर्येन्द्रिय स्मृतीन्द्रिय समाधीन्द्रिय प्रज्ञेन्द्रियम् । स एषा पञ्चानामिन्द्रियाणामधिमात्रत्वात् तीक्ष्णत्वाच्छीघ्रवाहित्वाच्च क्षिप्रमेवानन्तर्यं समाधिं स्पृशति यदुत आस्रवाणा क्षयाय । इयमुच्यते सुखा प्रतिपत्क्षिप्राभिज्ञा । ईमा[1] भिक्षवः चतस्रः प्रतिसविदः ॥

[ १२ ] तत्र कतमाश्चतस्रः समाधिभावना. ?[2]·· अस्ति भिक्षवः समाधिभावना आसेविता भाविता बहुलीकृता ज्ञानदर्शनप्रतिलाभाय सवर्तते । अस्ति समाधिभावना आसेविता भाविता बहुलीकृता प्रज्ञाप्रतिलम्भाय ( 12*a* ) सवर्तते । तत्र कतमा समाधिभावना आसेविता भाविता बहुलीकृता कामरागप्रहाणाय संवर्तते ? इह भिक्षवो भिक्षुरिममेव कायमूर्ध्वं पादतलादध. केशमस्तकादिपर्यन्त यथास्थित तथाप्रणिहित पूर्णं नानाप्रकारस्याशुचेर्यथाभूत सम्यक् प्रज्ञया प्रत्यवेक्षते—यदुत अय काय. अनुपूर्वेण समुदागतोऽपूर्वविनाशी परमाणुसचयः सुषिर उन्नामोन्नामनान्मानवव्रणसुमुखरोमकूपस्रावी वल्मीकवदाशीविषनिवास· । आशीविषतत्कृतज· । अज्ञानशत्रुमकृतविन्मित्रद्रोही(?) । कुमित्रवद्विसवादकः । फेनपिण्डवत्प्रकृतिदुर्बल. । उदकबुद्बुदवदुत्पन्नभग्नविलीन· । मरीचिवद्विप्रलम्भक· । कदलीवद्विनिभुज्यमानासारक । मायेव वञ्चनात्मकः । राजवदाज्ञावङ्गल·(?) । शत्रुवदवतारप्रेक्षी । चौरवदविश्वसनीयः । अमित्रवदहितैषी । वधकवत्प्रज्ञाजीवितान्तरायकृत् । शून्यग्रामवन्मारविरहित·(?) । कुलालभाण्डवदनपर्यन्तः । नानाशुचिपरिपूर्णः । मेदस्थालीवदशुचिस्रावी ।

१ B इमानि, २ A portion seems to be missing

अहिवन्निष्पन्दक्रूरः । कुणपवत्तीक्ष्णगन्धी । वर्च्चःकुटीवदमेध्याकरः । व्रवत्यदुनास (12b)-हिष्णुः(?) । शल्यवत्तुदनार्थः । दुष्टस्वामिवद्दुरुपचारः । जीर्णगृहवत्प्रतिसंस्कारधार्यः । जीर्णयानपात्रवत्प्रतिसंस्कारमलवाह्यः । आमकुम्भवदम्ब्वनुपाल्यः । दुष्टमित्रवन्नित्यान्वरक्षः । नदीतटवृक्षवच्चलाचलः । महानदीस्रोतवन्मरणसमुद्रपर्यवसानः । आगन्तुकासारवत्सर्वदुःखनिकेतः । अनाथशालावदपरिगृहीतः । चोरकपाटवदुत्कोटिसाध्यः । प्रत्यन्तनगरवन्नित्योपसृष्टः । वालुकानगरवत्सीदनात्मकः । अग्निवदतृप्तः । समुद्रवद्दुष्पूरः । सर्वकरण्डवत् पत्रपरिहार्यः । बालदारक[व]त्सततपरिपाल्यः । भिन्नभाजनमिव सततपरिहार्यः । कुदेववन्नित्योपसृष्टः । सविषभाजनमिव परिवर्जनीयः । याचितकभाण्डमिव क्षणप्रयोजनार्थः । शकटमिव भारोद्वहतीर्थः । केवलं धर्मबुद्धिना बोद्ध(वोढ?)व्यम् ॥ पुनरपरं भिक्षवो भिक्षुणा इदं शरीरमाद्युत्तरकारणतः परीक्षितव्यम् । मातापितृशुक्ररुधिरसमुत्थानमिह शरीरस्य आ[द्य]-कारणम् । उत्तरमाहारपरिमाणादिकम् । कवलिकाहारो ग्रस्तमात्रः श्लेष्माशयं गच्छति । श्लेष्माशयं प्राप्य श्लेष्मणा द्रवीकृतोऽत्यन्ताशुचिर्भवति । श्लेष्मतः पित्ताशयं गच्छति । पित्ताशयं प्राप्य पच्यमानः उष्णीभूत्वा वाय्वाशयं गच्छति । पक्त्वा वाय्वाशयं प्राप्तो (13a) वायुना विभज्यते पृथक् मलं, [पृ]थक् सारं । खलान्मूत्रपुरीषादयो मलाः । साराच्छोणितं परि[ण]मति, शोणितान्मांसम्, मांसान्मेदः, मेदसोऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातः शुक्रम् । तदेवमाद्युत्तरकारणादशुचि शरीरमिति पश्यता भिक्षुणा इदं शरीरं नवभिरस्थिशतैः सषष्ठैः समुच्छ्रितं कुदारुगृहवत् त्रिभिः शत्विस(?)शतैः संघातितम्, चतुर्भिः शिराजालशतैः सनतम्, पञ्चभिर्मांसपेशीशतैः प्रलिप्तम्, (यक्तिः शिराशतैः सघातम्?), सप्तभिः शिराशतैर्विनतम्, नवभिः स्नायुशतैर्निबद्धम्, धमन्या गवाक्षीकृतम्, सप्तोत्तरेण मर्मशतेन भिन्नभाजनमिव जर्जरेण कोटीशतसहस्रैरशीतिभिश्च तृणवच्छन्नम्, पञ्चेन्द्रियच्छिद्रम्, सप्तझय(सप्ताशय?)मशुचिपूर्णम् । मस्तिष्कस्याञ्जलिना, मेदसोऽञ्जलिना, त्रिभिर्वसाञ्जलिभिः, षड्भिरञ्जलिभिः श्लेष्मणः, षड्भिरञ्जलिभिः पित्तस्य, वायुना कृत्स्नमेवापकर्पितम् । शोणितस्याढकेन, पुरीषप्रस्थैः षड्भिः वायरेवदेभि(?) समैः पृथक्पृथक् पूर्णम् । सप्तभिस्त्वग्भिः परिवृतम्, रसैः षड्भिः । पित्तस्य वायुना कायाग्निनाविष्टाग्निहोत्रजङ्गयादजस्र (?) कुदान्तम्, शरीरावयवैः सर्वैरेव दुर्दर्शनम्, दुर्गन्धि (13b) प्रतिस्वभावम् । कोऽत्राभिमानो बहुमानभावः? केवलं याचितकभाण्डमिव क्षणप्रयोजनार्थं शकटमिव भारोद्वहनाय धर्मबुद्धिना बोद्ध(वोढ)व्यम् ॥

एवंविधकायमवेक्ष्य राशिमशुचेः, रूपाभिमानी वसत्यत्तेयः (?) ।
प्रज्ञायमानः स हि बालबुद्धिः विष्टपठ (?) याति वहं न चेता ॥
प्रियप्रकारं वहतेनायात् द्रक्षन्विवक्तुं वहते सदा च ।
कायः सुचोक्षः कृमिवच्च जन्तोः कुतोऽत्र रागो बहुमानता वा ॥

इत्येवमादि प्रत्यवेक्षन्निति। तद्यथा भिक्षव उभयतो द्वारविनिर्मुक्त' कोष्ठागारः पूर्णो नानाप्रकारजातस्य धान्यतिलसर्षपमुद्गयवमाषाणाम्। तच्चक्षुष्मान् पुरुषो व्यवलोकयन् जानीयात्–इमानि शूकधान्यानि, इमानि फलधान्यानि। एवमेव भिक्षवो भिक्षुरिममेव कायं यथास्थित यथाप्रणिहित यावत् प्रत्यवेक्षते। इय समाधिभावना आसेविता बहुलीकृता कामरागप्रहाणाय सवर्तते। तत्र भिक्षव कतमा समाधिभावना आसेविता भाविता बहुलीकृता दृष्टधर्मसुखविहाराय सवर्तते? इह भिक्षवो भिक्षुररण्यगतो वा वृक्षमूलगतो वा शून्यागारगतो (14a) वा इममेव कायमध्यात्म प्रत्यात्म विवेकात् न प्रीतिसुखेनाभिष्यन्दयति, परिपूरयति, परिप्रीणयति, परिस्फुटयति, तस्य नास्ति सर्वत. कायादस्फुट भवत्यस्फरणीय यदुत अध्यात्मज विवेकजेन प्रीतिसुखेन। तद्यथापि नाम भिक्षवः उत्पलानि वा पद्मानि वा कुमुदानि वा पुण्डरीकानि वा उदके जातानि उदके मग्नानि, सर्वाणि तानि शीतलेन वारिणाभिष्यन्दितानि परिष्यन्दितानि परिपूरितानि परिप्रीणितानि परिस्फुरितानि। एवमेव भिक्षुररण्यगतो वा वृक्षमूलगतो वा शून्यागारगतो वा इममेव कायमध्यात्म प्रत्यात्म विवेकजेन प्रीतिसुखेनाभिष्यन्दयति परिष्यन्दयति परिपूरयति परिस्फुरयति परिप्रीणयति, तस्य नास्ति सर्वत कायमस्फुट भवत्यस्फरणीय यदुत अध्यात्मक विवेकजेन प्रीतिसुखेन। इय समाधिभावना आसेविता भाविता बहुलीकृता दृष्टधर्म( सुख )विहाराय संवर्तते॥ तत्र भिक्षव कतमा समाधिभावना आसेविता भाविता बहुलीकृता ज्ञानदर्शनेन प्रतिलाभाय संवर्तते? इह भिक्षवो भिक्षुणा आलो( 14b )कसज्ञा साधु च सुष्ठु च परिगृहीता भवति सुमनसि कृता सुदृष्टा सुप्रतिबद्धा च दिवससज्ञाधिष्ठित समप्रभास चित्त भावयति यथा दिवा तथा रात्रौ, यथा रात्रौ तथा दिवा, यथा पूर्वं तथा पश्चात्, यथा पश्चात्तथा पुरा, यथैवाधस्तथैवोर्ध्वम्, यथैवोर्ध्वं तथा अध.–इति विवृतेन चेतसा पर्य( व )नद्धेन दिवससज्ञाधिष्ठित समप्रभास चित्त भावयति। तद्यथापि नाम भिक्षवो ग्रीष्माणा पश्चिमे मासे व्यभ्रे दिने विगतबलाहके नभसि मध्याह्नकालसमये आलोकपरिशुद्धो भवति पर्यवदातप्रभास्वर', न तस्मा(?)न्धकारसमये तद्भवति। एवमेव भिक्षवो भिक्षुणा आलोकसज्ञा साधु च सुष्ठु च सुगृहीतो भवति अदृष्टा सुप्रतिबन्धोनवमसज्ञा-वेस्थिता (?) समप्रभास चित्त भावयति यथा दिवा तथा रात्रौ यथा रात्रौ तथा दिवा, यथा पूर्वं तथा पश्चात्, यथा पश्चात्तथा पुरा, यथैवोर्ध्व तथैवाधो यथैवाधस्तथैवोर्ध्वमिति विवृतेन चेतसा अपर्यवनद्धेन दिवससंज्ञाधिष्ठितेन समप्रभास चित्त भावयति। इय समाधिभावना आसेविता भाविता बहुलीकृता ज्ञानदर्शनप्रतिभानला( 15a )भाय सवर्तते॥ तत्र कतमा (समा)धिभावना आसेविता भाविता बहुलीकृता प्रज्ञाप्रतिलम्भाय सवर्तते? इह भिक्षुररण्यगतो वा वृक्षमूलगतो वा शून्यागारगतो वा सुखस्य (दु.खस्य) च प्रहाणात् पूर्वमेव सौमनस्यदौर्मनस्ययो-

---

१ B तृष्णा° for दृष्ट°

रस्तगमाद्दुःखासुखमुपेक्षास्मृतिपरिशुद्ध चतुर्थं ध्यानमुपसपद्य विहरति। इय समाधिभावना आसेविता भाविता बहुलीकृता प्रज्ञाप्रतिलम्भाय सवर्तते ॥ इमाश्चतस्रः समाधिभावनाः ॥

[ १३ ] तत्र कतमानि भिक्षवश्चत्वारि स्मृत्युपस्थानानि ? इह भिक्षवो भिक्षुरध्यात्म काये कायानुदर्शी विहरति आतापी सप्रजानन् स्मृतिमान् विनीय लोके अभिध्यादौर्मनस्ये। बहिर्धा काये कायानुदर्शी विहरति, अध्यात्मबहिर्धा काये कायानुदर्शी विहरति आतापी सप्रजानन् अनुस्मृतिमान् विनीय लोके अभिध्यादौर्मनस्ये । अध्यात्मवेदनासु बहिर्धावेदनासु अध्यात्मबहिर्धा वेदनासु वेदनानुदर्शी विहरति आतापी सप्रजानन् स्मृतिमान् विनीय लोके अभिध्यादौर्मनस्ये । अध्यात्मचित्ते बहिर्धाचित्ते अध्यात्मबहिर्धा चित्तानुदर्शी विहरति आतापी सप्रजानन् स्मृतिमान् वि( 15b )नीय लोके अभिध्यादौर्मनस्ये । अध्यात्मधर्मेषु बहिर्धाधर्मेषु अध्यात्मबहिर्धाधर्मेषु धर्मानुदर्शी विहरति आतापी सप्रजानन् स्मृतिमान् विनीय लोके अभिध्यादौर्मनस्ये । इतीमानि चत्वारि स्मृत्युपस्थानानि ॥

[ १४ ] तत्र कतमानि भिक्षवश्चत्वारि सम्यक्प्रहाणानि ? इह भिक्षवो भिक्षुरनुत्पन्नानां पापकानामकुशलाना धर्माणामनुत्पादाय छन्द जनयति, व्यायच्छति, वीर्यमारभते, चित्त सप्रतिगृह्णाति, सम्यक् प्रणिदधाति । उत्पन्नानामकुशलाना धर्माणा प्रहाणाय छन्द जनयति, व्यायच्छति, वीर्यमारभते, चित्त प्रगृह्णाति, सप्रणिदधाति। अनुत्पन्नाना कुशलाना धर्माणामुत्पादाय छन्दं जनयति, व्यायच्छति, वीर्यमारभते, चित्त प्रगृह्णाति, सम्यक् प्रणिदधाति । उत्पन्नाना कुशलाना धर्माणा स्थितये भावनायै असमोषाय अपरिहाणाय भूयोभावाय वृद्धिविपुलतायै पारिपूर्यै छन्द जनयति, व्यायच्छति, वीर्यमारभते, चित्त प्रतिगृह्णाति सम्यक् प्रणिदधाति । इमानि चत्वारि सम्यक्प्रहाणानि ॥

[ १५ ] तत्र कतमे चत्वार ऋद्धिपादाः ? इह भिक्षवो भिक्षु. छन्दसमाधि(16a)प्रहाणसंस्कारसमन्वागतमृद्धिपाद भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् । एषा वीर्यमभिलीन भविष्यति नाभिगृहीतम् ॥ २ ॥ चित्तसमाधिप्रहाणसंस्कारसमन्वागतमृद्धिपाद भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणत मा मे चित्तमतिलीन भविष्यति नाभिगृहीतम् ॥ ३ ॥ मीमासासमाधिप्रहाणसस्कारसमन्वागतमृद्धिपाद भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणत मा मे मीमासा नातिलीना भविष्यति नाभिगृहीतम् ॥ ४ ॥ इमे भिक्षवश्चत्वार ऋद्धिपादाः ॥

[ १६ ] तत्र भिक्षवः कतमानि पञ्चेन्द्रियाणि ? यदुत श्रद्धेन्द्रियं वीर्येन्द्रिय स्मृतीन्द्रिय समाधीन्द्रिय प्रज्ञेन्द्रियम् । तत्र कतमच्छ्रद्धेन्द्रियम् ? यया श्रद्धया चतुरो धर्मान् श्रद्दधाति । कतमाश्चतुर. ? ससारावचरालौकिकीं सम्यग्दृष्टिं दधाति । स कर्मविपाकप्रतिशरणो भवति । यद्यदेव कर्म करिष्यामि कल्याण वा पापकं वा, तस्य कर्मणो विपाकं प्रतिसवेदयामि । स जीवितहेतोर( 16b )पि पापक कर्म नाभिसस्करोति । इदमुच्यते श्रद्धेन्द्रियम् ॥ तत्र कतमद्वीर्येन्द्रियम् ? यान् धर्मान् श्रद्धेन्द्रियेण श्रद्दधाति, तान् धर्मान्

वीर्येन्द्रियेण समुदानयति । इदमुच्यते वीर्येन्द्रियम् ॥ तत्र कतमत् स्मृतीन्द्रियम् ? यान् धर्मान् वीर्येन्द्रियेण समुदानयति, तान् धर्मान् स्मृतीन्द्रियेण[१] ॥ विप्रणाशयति । इदमुच्यते समाधीन्द्रियम् ॥ तत्र कतमत् प्रज्ञेन्द्रियम् ? यान् धर्मान् समाधीन्द्रियेण एकाग्रीकरोति, तान् धर्मान् प्रज्ञेन्द्रियेण प्रतिविध्यति । स तेषु धर्मेषु प्रत्यवेक्षणजातीयो भवति । इदमुच्यते प्रज्ञेन्द्रियम् ॥ इमानि भिक्षवः पञ्चेन्द्रियाणि ॥

[ १७ ] तत्र भिक्षवः कतमानि पञ्च बलानि ? यदुत श्रद्धाबल वीर्यबलं स्मृतिबल समाधिबल प्रज्ञाबलम् । इमे च भूत्यार्थे क्लेशैरनवमृद्यत्वात् (?) । इमानि भिक्षवः पञ्च बलानि ॥

[ १८ ] तत्र भिक्षव कतमानि सप्त बोध्यङ्गानि ? यदुत स्मृति(सं)बोध्यङ्ग धर्मप्रविचयसबोध्यङ्ग गाम्भीर्यसबोध्यङ्ग प्रीतिसबोध्यङ्ग प्रस्रब्धिसबोध्यङ्ग समाधिसबोध्यङ्ग उपेक्षासबोध्यङ्गम् ॥ इह भिक्षवो भिक्षुः स्मृतिसबोध्यङ्ग भावयति विवेक(17$a$)निश्रितं विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ एव धर्मप्रविचयसबोध्यङ्ग भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ वीर्यसंबोध्यङ्ग भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ प्रीतिसबोध्यङ्ग भावयति विवेकनिश्रित विरागनिश्रितं निरोधनिश्रित व्यवसर्गपरिणतम् ॥ प्रस्रब्धिसबोध्यङ्ग भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ समाधिसबोध्यङ्ग भावयति विवेकनिश्रित विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ उपेक्षासबोध्यङ्ग भावयति विवेकनिश्रितं विरागनिश्रित निरोधनिश्रित व्यवसर्गपरिणतम् ॥ इमानि भिक्षवः सप्त सबोध्यङ्गानि ॥

[ १९ ] तत्र[३] भिक्षवः कतम आर्याष्टाङ्ग(मार्गः) ? तद्यथा—सम्यग्दृष्टिः सम्यक्सकल्प. सम्यग्वाक् सम्यक्कर्मान्तः सम्यगाजीव. सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधि । अयमुच्यते भिक्षव आर्याष्टाङ्गमार्गः ॥ तत्र कतमा सम्यग्दृष्टि. ? या (17$b$) लोकोत्तरा नात्मदृष्टिसमुत्थिता न स नजीवन् सोषणपुरुषनपुद्गलनमनुजनमानवदृष्टिसमुत्थिता नोच्छेदशाश्वतदृष्टिसमुत्थिता न भवविभवदृष्टिसमुत्थिता न कुशलाव्याकृतदृष्टिसमुत्थिता, या च न ससारनिर्वाणदृष्टिसमुत्थिता । इयमुच्यते सम्यग्दृष्टिः ॥ तत्र कतमः सम्यक्सकल्पः ? यै. संकल्पै रागद्वेषमोहक्लेशाः समुत्तिष्ठन्ति, तान् सकल्पान् न सकल्पयति । यैः (स)कल्पैः शीलसमाधिप्रज्ञाविमुक्तिदर्शनस्कन्धाः समुत्तिष्ठन्ति, तान् संकल्पान् संकल्पयति । अयमुच्यते सम्यक्सकल्पः ॥

तत्र कतमा सम्यग्वाक् ? यया रागे नात्मान न पराश्च तापयति, नात्मान न पराश्च क्लेशयति, नात्मान परान्नानुपहन्ति, तया समाहितयुक्तया वाचा समन्वागतो भवति, यया सम्यग्वा समवदति, इयमुच्यते सम्यग्वाक् ॥ तत्र कतमः सम्यक्कर्मान्तः ? यत्कर्म कृष्णं कृष्णविपाकम्, तत्कर्मणा नाभिसस्करोति, यत्कर्म कृष्णशुक्ल कृष्णशुक्ल-

१ B notes a lacuna fiom its archtype २ B कतमानि ३ The contents of this paia partly repeat those of Sec 7

विपाकम्, तत्कर्म नाभिसस्करोति, यत्कर्म कृष्णशुक्लविपाक कृष्ण(कृत्स्न?) (कर्म) (18a)· क्षयाय सवर्तते, तत्कर्माभिसस्करोति । सत्कर्माभिसस्करोति, सत्कर्मप्रतिशरणकर्मान्तः, अयमुच्यते सम्यक्कर्मान्तः ॥ तत्र कतमः सम्यगाजीवः? यदार्थवशेन गुणसलेखादुत्सर्जनता न कुहनता न लपनता न नैष्पेषिकता सूवतारवाचाशीलता(?) परलोकेषूशकुता(?) आत्मलोकसंतुष्टिः अनवयता आर्यान्तज्ञाताजीविता, अयमुच्यते सम्यगाजीवः ॥ तत्र कतम· सम्यग्व्यायाम·? यो व्यायामो मिथ्या, यो अज्ञानरागद्वेषमोहक्लेशानुशायितः, त व्यायाम नेच्छति । यो व्यायाम· सम्यगार्यमार्गसत्यावतारो निर्वाणगामी प्रतिपदर्षयति, त व्यायाम समनुगच्छति । अयमुच्यते सम्यग्व्यायाम· ॥ तत्र कतमा सम्यक्स्मृति·? या सूपस्थिता अप्रकम्प्या ऋजुका अकुटिला ससारद्वेषादीनवदर्शिका निर्वाणपथप्रणेत्री स्मृति· स्फरण आर्यमार्गासमोषः । इयमुच्यते सम्यक्स्मृतिः ॥ तत्र कतमः सम्यक्समाधि·? य· सम्यक्त्वेन समाधि· । यस्मिन् समाधौ स्थितः सर्वसत्त्वप्रमोक्षाय सम्यक् स्थितत्व नियाममवक्रामति, अयमु( 18b )च्यते सम्यक्समाधिः ॥ अयमुच्यते आर्याष्टाङ्गो मार्ग· ॥

[ २० ] तत्र कतमा भिक्षवः षोडशाकारा आनापानस्मृति·? ह्रस्वं वा आश्वसन् दीर्घं वा, आश्वसामीति यथाभूत प्रजानाति । दीर्घं वा प्रश्वसन् दीर्घं प्रश्वसामीति यथाभूत प्रजानाति । ह्रस्वमाश्वसन् ह्रस्वमाश्वसामीति यथाभूतं प्रजानाति । ह्रस्व वा प्रश्वसन् ह्रस्व प्रश्वसामीति यथाभूतं प्रजानाति । कायप्रतिसवेदी आश्वसन् कायप्रतिसवेदी आश्वसामीति यथाभूतं प्रजानाति । कायप्रतिसवेदी प्रश्वसन् कायप्रतिसवेदी प्रश्वसामीति यथाभूत प्रजानाति । कायसंस्कारप्रतिसवेदी आश्वसन् कायसस्कारप्रतिसवेदी आश्वसामीति यथाभूत प्रजानाति । कायसस्कारप्रतिसवेदी आश्वसन्, कायसस्कारप्रतिसवेदी वा प्रश्वसन् यथाभूत प्रजानाति । सर्वकायप्रतिसवेदी आश्वसन् सर्वकायप्रतिसवेदी आश्वसामीति यथाभूत प्रजानाति । सर्वकायप्रतिसवेदी प्रश्वसन् सर्वकायप्रतिसवेदी वा प्रश्वसामीति यथाभूत प्रजानाति । सर्वकायसस्कारप्रतिसवेदी आश्वसन् सर्वकायसस्कारप्रतिसवेदी ( 19a ) प्रश्वसन् सर्वकाय( सस्कार )प्रतिसवेदी प्रश्वसामीति यथाभूत प्रजानाति । प्रस्रभ्यन्ति मे कायसस्कारा आश्वसन् प्रस्रभ्यन्ति मे कायसस्कारा आश्वसामीति यथाभूत प्रजानाति । प्रस्रभ्यन्ति मे कायसस्कारा· प्रश्वसन् प्रस्रभ्यन्ति मे कायसंस्काराः प्रश्वसामीति यथाभूत प्रजानाति । प्रीतिप्रतिसवेदी आश्वसन् प्रीतिप्रतिसवेदी आश्वसामीति यथाभूत प्रजानाति । प्रीतिप्रतिसवेदी प्रश्वसन् प्रीतिप्रतिसवेदी ( प्रश्वसामीति ) यथाभूत प्रजानाति । सुखप्रतिसवेदी आश्वसन् सुखप्रतिसवेदी आश्वसामीति यथाभूत जानाति । सुखप्रतिसंवेदी प्रश्वसन् सुखप्रतिसवेदी प्रश्वसामीति यथाभूत प्रजानाति । चित्तप्रतिसवेदी आश्वसन् चित्तप्रतिसवेदी आश्वसामीति यथाभूत प्रजानाति । चित्तप्रतिसंवेदी प्रश्वसन् चित्तप्रतिसंवेदी ( प्रश्वसामीति ) यथाभूत प्रजानाति । चित्तसंस्कारप्रतिसवेदी आश्वसन् चित्तसस्कारप्रतिसवेदी आश्वसामीति यथाभूतं

प्रजानाति। चित्तसंस्कारप्रतिसंवेदी प्रश्वसन् चित्तसंस्कारप्रतिसंवेदी प्रश्वसामीति यथाभूतं प्रजानाति। प्रस्रभ्यन्ति मे चित्त( 19b )संस्काराः ( आश्वसन् ) आश्वसामीति यथाभूतं प्रजानाति। प्रस्रभ्यन्ति मे चित्तसंस्काराः प्रश्वसन् प्रश्वसामीति यथाभूतं प्रजानाति। अभिमोदति मे चित्तमाश्वसन् अभिमोदति मे चित्तमाश्वसामीति यथाभूतं प्रजानाति। अभिमोदति मे चित्तं प्रश्वसन् अभिमोदति मे चित्तं प्रश्वसामीति यथा( भूतं प्रजानाति )। विमुच्यति मे चित्तमाश्वसन् विमुच्यति मे चित्तमाश्वसामीति यथाभूतं प्रजानाति। विमुच्यति मे चित्तं प्रश्व(सन् विमु)च्यति मे चित्तं प्रश्वसामीति यथाभूतं प्रजानाति। समाहितं मे चित्तमाश्वसन् समाहितं मे चित्तमाश्वसामीति यथाभूतं प्रजानाति। समाहितं मे चित्तं प्रश्वसन् समाहितं मे चित्तं प्रश्वसामीति यथाभूतं प्रजानाति। एवमनित्यानुदर्शी विरागानुदर्शी निरोधानुदर्शी प्रतिनिःसर्गानुदर्शी आश्वसन् प्रतिनिःसर्गानुदर्शी आश्वसामीति यथाभूतं प्रजानाति। प्रतिनिःसर्गानुदर्शी वा प्रश्वसन् प्रतिनिःसर्गानुदर्शी प्रश्वसामीति यथाभूतं प्रजानाति। इय भिक्षवः षोडशाकारा आनापानस्मृतिः॥

[ २१ ] तत्र कतमानि चत्वारि स्रोतआपत्त्यङ्गानि? इह भिक्षवः श्रावकोऽवेत्य बुद्धे प्रसादेन समन्वागतो भवति—इत्य( 20a )पि स भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवानिति। धर्मेऽवेत्य प्रसादेन समन्वागतो भवति—स्वाख्यातो भगवता धर्मः सांदृष्टिको निर्ज्वरः आकालिकः औपनायिकः इहपश्यकः प्रत्यात्मवेदनीयो विज्ञैर्यदुत नदनिमदनपधेयासा (?) प्रतिविनय आलयसमुद्घातो धर्मोपच्छेदः शून्यतानुपलम्भः तृष्णाक्षयो निरोधो निर्वाणम्। संघेऽवेत्य प्रसादेन समन्वागतो भवति—सुप्रतिपन्नो भगवतः आर्यश्रावकसंघो न्यायप्रतिपन्नः सप्रतिपन्नः सामीचिप्रतिपन्नो धर्मानुधर्मप्रतिपन्नोऽनुधर्मचारी। सन्ति संघे स्रोतापत्तिफलसाक्षात्क्रियायै प्रतिपन्नकाः। सन्ति संघे स्रोतापन्नाः। सन्ति संघे सकृदागामिफलसाक्षात्क्रियायै प्रतिपन्नकाः। सन्ति संघे सकृदागामिनः। सन्ति संघे अनागामिफलसाक्षात्क्रियायै प्रतिपन्नकाः। सन्ति संघे अनागामिनः। सन्ति संघे अर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकाः। सन्ति संघे अर्हन्तः। यदुत चत्वारि पुरुषयुगानि, अष्टौ पुरुषपुद्गलाः। एष भगवतः श्रावकसंघः श्रद्धा( 20b )संपन्नः श्रुतसंपन्नः समाधिसंपन्नः प्रज्ञासंपन्नः विमुक्तिसंपन्नः विमुक्तिज्ञानदर्शनसंपन्नः आहवनीयः प्राहवनीयः अञ्जलीकरणीयः सामीचिकरणीयः अनुत्तरं पुण्यक्षेत्रं दर्शनीयो लोकस्य यदुत आर्यकान्तैः शीलैः समन्वागतो यानि शीलानि अखण्डानि अच्छिद्राणि अधूतीनि अशबलानि अकल्मषाणि भुजिष्याणि अपरामृष्टानि सुसमस्तानि विज्ञप्रशस्तानि जयसंपन्नानि अगर्हितानि विज्ञैरिति। इमानि चत्वारि स्रोतआपत्त्यङ्गानि॥

[ २२ ] कतमानि भिक्षवो दश तथागतबलानि? तथागतः स्थानं च स्थानतो यथाभूतं प्रजानाति, अस्थानं चास्थानतो यथाभूतं प्रजानाति। इदं प्रथमं तथागतस्य

तथागतबलम् । अतीतानागतप्रत्युत्पन्नाना कर्मधर्मसमादानानां विपाक यथाभूतं प्रजानाति । परसत्त्वाना परपुद्गलानामनेकाधिमुक्तिकाना विपाक यथाभूत प्रजानाति । अनेकलोकधातुकलोकाना नानाधातुकलोकमिति यथाभूत प्रजानाति । परसत्त्वानामिन्द्रियाणा परापरज्ञता यथाभूत प्रजानाति । सर्वत्रगामिनी प्र(21*a*)तिपद तत्रतत्रगामिनी यथाभूत प्रजानाति । परसत्त्वानामिन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्तीना सक्लेश-व्यवदानानि यथाभूत प्रजानाति । साकार साङ्ग. .शसनिमित्तमनेकविध पूर्वनिवासमनुस्मरति । एकामपि जातिमनुस्मरति, द्वे तिस्रश्चतस्रो यावदनेकान्यपि जातिकोटीनियुतशतसहस्राण्यनुस्मरतीति विस्तर. । स दिव्येन चक्षुषा अतिक्रान्तमानुष्यकेण सत्त्वान् पश्यति च्यवमानानुपपद्यमानानपि । कायवाङ्मनसा सुचरितदुश्चरितैः सुगतिदुर्गतिषूपपद्यमानानीति विस्तरः । आस्रवक्षयादनास्रवा चेतोविमुक्तिं प्रज्ञया यथाभूत प्रजानाति । इमानि भिक्षवो दश तथागतबलानि ॥

[ २३ ] कतमानि भिक्षवस्तथागतस्य चत्वारि वैशारद्यानि ? इह भगवान् सम्यक्संबुद्ध इत्यात्मान प्रजानीते । इमे त्वया धर्मा नाभिसबुद्धा इत्यत्र कश्चिद्वाद समारोपयेत् सदेवके लोके समारके सब्रह्मके सश्रमणब्राह्मणिकाया प्रजाया सदेवमानुषायाम् । निमित्तमेतदनुसमनुपश्यति । निमित्त समनुपश्यस्तथागतो भगवान् क्षेमप्राप्तो अभयप्राप्त (21*b*) आर्षभ स्थान प्रजानाति । सम्यक्पर्षद्गतः सिंहनाद नदति । ब्राह्म चक्र प्रवर्तयति अप्रवर्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा केनचिद्वा पुनर्लोके सहधर्मेणेति । ये पुनस्तथागतैर्नान्तरायिका धर्मा आख्याताः तानप्रतिसेवमानस्य नानमन्तरायेत् ( ? ) यत्र कश्चिद्वादमारोपयेत् इति विस्तरः । या वा अनेन प्रतिपदाख्याता आर्या नैर्याणिका हीनां प्रतिरषावमाणो ( ? ) न निर्यायात् दकेतरः ( ? ) सम्यग्दु.खनाशाय इत्यत्र. . कश्चित्पूर्ववत् । क्षीणास्रवस्य सतमात्मान प्रतिजानतः इमे आस्रवा अपरिक्षीणा इत्यत्र कश्चिद्वादमारोपयेत् सदेवलोके समारके सश्रमणब्राह्मणिकाया प्रजाया सदेवमानुषाया निमित्तमेव न समनुपश्यति । निमित्त( म )समनुपश्यन् तथागतः स्थामप्राप्तो विहरति अभयप्राप्त आह-( र्ष ? )भ स्थान प्रजानाति । सम्यक्पर्षद्गतः सिंहनाद नदति, ब्राह्म चक्रं प्रवर्तयति अप्रवर्तित श्रमणेन वा ब्राह्मणेन वा केनचिद्वा पुनर्लोके सहधर्मेणेति । इमानि भिक्षवो भगवतस्तथागतस्य चत्वारि वैशारद्यानि ॥

[ २४ ] कतमास्तथागतस्य (22*a*) चतस्रः प्रतिसविद' ? यदुत अर्थप्रतिसवित् धर्मप्रतिसवित् निरुक्तिप्रतिसंवित् प्रतिभानप्रतिसवित् । इमा भिक्षवश्चतस्र प्रतिसविदः ॥

[ २५ ] कतमे भिक्षवोऽष्टादशावेणिका बुद्धधर्माः ? नास्ति तथागतस्य स्खलितम्, नास्ति रवितम्, नास्ति मुषितस्मृतिता, नास्ति ( अ ? )समाहित चित्तम्, नास्ति नानात्वसञ्ज्ञा, नास्त्यप्रतिसंख्यायोपेक्षा, नास्ति छन्दस्य हानिः, नास्ति वीर्यस्य हानिः, नास्ति स्मृतेर्हानिः, नास्ति प्रज्ञाहानि', नास्ति विमुक्तेर्हानि', त्रिविमुक्तिज्ञानदर्शनानि, अतीतेऽध्वन्यसङ्गमप्रतिहतं

ज्ञानदर्शनम्, अनागतेऽध्वन्यसङ्गमप्रतिहत ज्ञानदर्शनम्, प्रत्युत्पन्नेऽध्वन्यसङ्गमप्रतिहत ज्ञानदर्शनम्, सर्वकायकर्मज्ञानपूर्वक सज्ञापरिवर्त , सर्ववाक्कर्मज्ञानपूर्वगम ज्ञानानुपरिवर्तः, सर्वमनःकर्मज्ञानपूर्वगम ज्ञानानुपरिवर्तः । इमे भिक्षवस्तथागतस्य अष्टादशावेणिका धर्माः ॥

[ २६ ] तत्र कतमानि तथागतस्य द्वात्रिंशन्महापुरुषलक्षणानि ? सुप्रतिष्ठितपादता तथागतस्येदं महापुरुषलक्षणम । अधस्तात् पादतलयोश्चक्राङ्कि( 22*b* )तपादतलता । आयतपार्ष्णिसगतपादता । दीर्घाङ्गुलिता । जालहस्तपादता । मृदुतरुणहस्तपादता । सप्तोत्सदशरीरता । ऐणेयजङ्घता । कोशगतबस्तिगुह्यता । सिंहपूर्वार्धकायता । चितान्तरासता । सुसवृतस्कन्धता । अनुन्नामता । प्रलम्बबाहुता । विशुद्धनेत्रता । कम्बुग्रीवता । सिंहहनुता । समचत्वारिंशद्दन्तता । समाविरलदन्तता । सुशुक्लदन्तता । प्रभूततनुजिह्वता । रसरसाग्रता । ब्रह्मस्वरकलविङ्करुतस्वरता । अभिनीलनेत्रता । गोपक्ष्मनेत्रता । सूक्ष्मच्छविता । सुवर्णवर्णच्छविता । एकैकरोमकूपता । उत्तुङ्गप्रदक्षिणावर्तरोमता । इन्द्रनीलकेशता । सुशुक्लभ्रमुखान्तरोर्णललाटता । उष्णीषशिरस्कता । न्यग्रोधपरिमण्डलसमन्तप्रासादिकता । महानारायणबलसमन्तप्रासादिकता । तथागतस्येद महापुरुषस्य महापुरुषलक्षणम् । इमानि भिक्षवस्तथागतस्य महापुरुषलक्षणानि ॥ सुप्रतिष्ठितौ पादौ—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वं दृढसमादानतया निर्वृत्तम् । अधस्तात्पादतलयोश्चक्राङ्कितपा (23*a*) दतलता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे परसत्त्वाजिह्मकरणतया निर्वृत्तम् । आयतपादपार्ष्णिसगतपादता—तथागतस्येद महापुरुषलक्षण पूर्वे मातापितरौ सत्कृत्य चरणे शुश्रूषतयाभिनिर्वृत्तम् । दीर्घाङ्गुलिकता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे धर्मारक्षावरणगुप्तिकरणया निर्वृत्तम् । जालहस्तपादता—तथागतस्येदं महापुरुषस्य महापुरुषलक्षण पूर्वे परिवाराभेदनतया निर्वृत्तम् । मृदुतरुणहस्तपादता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे विविधप्रावरणान्नप्रदानतया निर्वृत्तम् । सप्तोत्सदशरीरता—तथागतस्येद महापुरुषस्य महापुरुषलक्षणं परकिंकरणीयसौमुख्यकरणतया निर्वृत्तम् । ..विशुद्धनेत्रता—तथागतस्येदं महापुरुषस्य महापुरुषलक्षणं पूर्वे दशकुशलकर्मपथातप्तसमादानतया निर्वृत्तम् । कम्बुग्रीवता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे ग्लानेषु विविधभैषज्यान्नप्रदानतया निर्वृत्तम् । सिंहहनु( 23*b* )ता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे कुशलमूलप्रयोगतया निर्वृत्तम् । समचत्वारिंशद्दन्तता—तथागतस्येद महापुरुषस्य महापुरुषलक्षणं पूर्वे सत्त्वसमाश्वासनप्रयोगतया निर्वृत्तम् । अविरलदन्तता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे भिन्नसत्त्वसंधानतया निर्वृत्तम् । समदन्तता—तथागतस्येदं महापुरुषस्य महापुरुषलक्षण पूर्वे मनापमणिप्रदानतया निर्वृत्तम् । सुशुक्लदन्तता—तथागतस्येद महापुरुषस्य महापुरुषलक्षणं पूर्वे स्वारक्षितकायवाङ्मनस्कर्मतया निर्वृत्तम् । प्रभूत(तनु)जिह्वता—तथागतस्येदं महापुरुषस्य महापुरुषलक्षणं पूर्वं सत्यभाषणतया निर्वृत्तम् । रसरसाग्रता—तथागतस्य (महा)पुरुषस्य महापुरुषलक्षण

पूर्वेष्वप्रमाणपुण्यस्कन्ध त्वात्मनतापरमाभिप्रपच्छन्नतया निर्वृत्तम् । ब्रह्मकलविङ्करुतस्वरता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे स्निग्धवचनसत्त्वानावनता(?) आनन्दवचनश्रवणतया निर्वृत्तम् । अभिनीलनेत्रता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण (24*a*) पूर्वे मैत्रवत्सत्त्वसरक्षणतया निर्वृत्तम् । गोपक्ष्मनेत्रता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे अ(प्र?)कृतिमातया निर्वृत्तम् । सूक्ष्मच्छविता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे धर्मसंगीतिचित्तसरक्षणकर्मण्यतया निर्वृत्तम् । सुवर्णवर्णच्छविता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे शय्यासनास्तरणमनापवचनप्रदानतया निर्वृत्तम् । एकैकरोमकूपता—तथागतस्येद महापुरुषस्य महापुरुपलक्षण पूर्वे सगणिकापरिविर्जनतया निर्वृत्तम् । प्रदक्षिणावर्तरोमता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे आचार्योपाध्यायकल्याणमित्रानुशासनिप्रदक्षिणग्राहितया निर्वृत्तम् । इन्द्रनीलकेशता—तथागतस्येद महापुरुषस्य महापुरुषलक्षणं पूर्वे सर्वप्राणानुकम्पनतया निहतलोष्टदण्डशस्त्रतया निर्वृत्तम् । सुशुक्लभ्रमुखान्तरोर्णललाटता—तथागतस्येद महापुरुषस्य महापुरुषलक्षण पूर्वे वर्णार्हाना वर्णभाषणतया निर्वृत्तम् । उष्णीषशिरस्कता—तथागतस्येद महा(24*b*)-पुरुषस्य महापुरुषलक्षण पूर्वे गुरुगौरवप्रणामतया निर्वृत्तम् । न्यग्रोधपरिमण्डलसमन्तप्रासादिकता—तथागतस्येदं महापुरुषस्य महापुरुषलक्षण पूर्वे आत्मनः परसत्त्वानां च समाधौ नियोजनतया निर्वृत्तम् । शरीरसमन्तप्रासादिकता—तथागतस्येद महापुरुपस्य महापुरुषलक्षण पूर्वे तथागतबिम्बकरणतया भिन्नस्तूपप्रतिसस्कारतया परेषा च भीतानामाश्वासनसधानतया च निर्वृत्तम् । अप्रमाणै. कुशलमूलैश्च तेषु धर्मेषु वशवर्तित्वात् तथागतस्य द्वात्रिंशन्महापुरुषलक्षणानि काये निर्वृत्तानि ॥

[२७] कतमानि अशीत्यनुव्यञ्जनानि ? ताम्रनखाश्च बुद्धा भगवन्त', स्निग्धनखाश्च उत्तुङ्गनखाश्च वृत्ताङ्गुलिनखाश्च चिताङ्गुलयश्च अनुपूर्वाङ्गुलयश्च गूढशिराश्च निर्ग्रन्थिशिराश्च गूढगुल्फाश्च सिंहविक्रान्तगामिनश्च नागविक्रान्तगामिनश्च हसविक्रान्तगामिनश्च वृषभविक्रान्तगामिनश्च प्रदक्षिणगामिनश्च चारुगामिनश्च अवक्रगात्राश्च वृत्तगात्राश्च अनुपूर्वगात्राश्च पृथुगुरुमण्डलाश्च परिपूर्णव्यञ्जनाश्च सम(25*a*)क्रमाश्च शुचिगात्राश्च मृदुगात्राश्च विशुद्धगात्राश्च उत्सदगात्राश्च सुसहतगात्राश्च सुविभक्तप्रत्यङ्गाश्च वितिमिरशुद्धलोचनाश्च वृत्तकुक्षयश्च मृष्टकुक्षयश्च अभग्नकुक्षयश्च क्षामोदराश्च गम्भीरनाभयश्च आवर्तनाभयश्च समन्तप्रासादिकाश्च शुचिसमाचाराश्च व्यपगततिलकगात्राश्च तूलसदृशसुकुमारपाणयश्च स्निग्धपाणिरेखाश्च गम्भीरपाणिरेखाश्च निरेखाश्च अल्पायतवदनाश्च बिम्बप्रतिबिम्बअप्रतिबिम्बदशनवदनाश्च मृदुजिह्वाश्च ताम्रजिह्वाश्च गजगर्जितजीमूतघोषाश्च मधुरगुरुमञ्जुस्वराश्च वृत्तदंष्ट्राश्च तीक्ष्णसमदंष्ट्राश्च अनुपूर्वदंष्ट्राश्च तुङ्गनासाश्च शुचिनासाश्च विशालनयनाश्च आयतलेखनाश्च वि(कसि)तपद्मनयनाश्च नीलोत्पलदलनयनाश्च व्यायतपीनचक्षुषश्च आयतभ्रुवश्च समरोमभ्रुवश्च स्निग्धभ्रुवश्च पीनायतकर्णाश्च समकर्णाश्च अनुपहतकर्णाश्च

सुपरिणतललाटाश्च सुपरिपूर्णाश्च भ्रमरसदृशकेशाश्च वृत्तकेशाश्च शुक्लकेशाश्च असंलुढितकेशाश्च अपरुषकेशाश्च सु( 25b )परिकेशाश्च श्रीवत्सस्वस्तिकनन्द्यावर्तचक्रवज्रपद्ममत्स्यादिलाञ्छनपादतलाश्च बुद्धा भगवन्तो भवन्ति । इमानि भिक्षवस्तथागतस्य अशीत्यनुव्यञ्जनानि काये निर्वृत्तानि ॥

यदुक्तं भगवता—धर्मं वो भिक्षवो देशयिष्यामि आदौ कल्याण मध्ये कल्याणं पर्यवसाने कल्याण स्वर्थं सव्यञ्जनम्, केवल परिपूर्ण परिशुद्ध पर्यवदात ब्रह्मचर्यं प्रकाशयामि—यदुत अर्थविनिश्चय नाम धर्मपर्यायमिति यतो यदुक्तमिदं तत् प्रत्युक्तम् । भिक्षवोऽरण्यायतनानि शून्यागाराणि पर्वतकन्दरगिरिगुहापलालव्रजानि अभ्रावकाशश्मशानवनप्रस्थानि . भिक्षवो मा प्रमाद्यध्वम् । मा पश्चाद्विप्रतिसारिणो भविष्यथ । इदमस्माकमनुशासनम् ॥

अस्मिन् खलु धर्मपर्याये भाष्यमाणे पञ्चाना भिक्षुशतानामास्रवेभ्यश्चित्तानि विमुक्तानि ॥

इदमवोचद्भगवान् । आत्तमनसस्ते च भिक्षवः सा च सर्वावती पर्षत् सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

आर्य–अर्थविनिश्चयो नाम धर्मपर्यायः समाप्तः ॥

# २० धर्मसंग्रहः[1] ।

॥ नमो रत्नत्रयाय ॥

रत्नत्रय नमस्कृत्य सर्वसत्त्वहितोदयम् ।
कथ्यते मोहनाशाय धर्मसारसमुच्चयः ॥

१. तत्र प्रथम तावत् त्रीणि रत्नानि । तद्यथा—बुद्धो धर्मः सघश्चेति ॥

२ त्रीणि यानानि । [तद्यथा—] श्रावकयानम्, प्रत्येकबुद्धयानम्, महायान चेति ॥

३. पञ्च बुद्धाः । तद्यथा—वैरोचनः, अक्षोभ्यः, रत्नसभवः, अमिताभः, अमोघसिद्धिश्चेति ॥

४. चतस्रो देव्यः । तद्यथा—रोचनी, मामकी, पाण्डुरा, तारा चेति ॥

५ पञ्च रक्षाः । तद्यथा—प्रतिसरा, साहस्रप्रमर्दनी, मारीची, मन्त्रानुसारिणी, शीलवती चेति ॥

६ सप्त तथागताः । तद्यथा—विपश्यी, शिखी, विश्वभूः, ऋकुच्छन्दः, कनकमुनिः, काश्यपः, शाक्यमुनिश्चेति ॥

७. चत्वारो लोकपालाः । तद्यथा—धृतराष्ट्रः, विरूपाक्षः, विरूढकः, कुबेरश्चेति ॥

८. अष्टौ लोकपालाः । तद्यथा—इन्द्रः, यमः, वरुणः, कुबेरः, ईशानः, अग्निः, नैर्ऋतः, वायुरिति ॥

९. दश लोकपालाः । अष्टलोकपालाधिकस्मूर्ध्वं ब्रह्मा अधः कृष्णः ॥

१०. चतुर्दश लोकपालाः । तद्यथा—दशलोकपालसकलम्, चन्द्रः, सूर्यः, पृथ्वी, असुरः ॥

११. दश क्रोधाः । तद्यथा—यमान्तकः, प्रज्ञान्तकः, पद्मान्तकः, विघ्नान्तकः, अचरटर्किराज., नीलदण्डः, महाबलः, उष्णीषः, चक्रवर्ती, सम्भराजश्चेति ॥

१२. अष्टौ बोधिसत्त्वाः । तद्यथा—मैत्रेयः, गगनगञ्जः, समन्तभद्रः, वज्रपाणिः, मञ्जुश्रीः, सर्वनिवरणविष्कम्भी, क्षितिगर्भः, खगर्भश्चेति ॥

१३. षड्योगिन्यः । तद्यथा—वज्रवाराही, यामिनी, सचारणी, सत्रासनी, चाण्डिका चेति ॥

१४ सप्तविधा अनुत्तरपूजा । तद्यथा—वन्दना, पूजना, पापदेशना, अनुमोदना, अध्येषणा, बोधिचित्तोत्पादः, परिणामना चेति ॥

---

१ Text as fixed by K. Kasawara, and edited by F. Max Muller and H Wenzel, in Anecdota Oxoniensia, Aryan Series, Vol I Part V Oxford, 1885

१५. त्रीणि कुशलमूलानि । बोधिचित्तोत्पादः, आशयविशुद्धिः, अहंकारममकारपरित्यागश्चेति ॥

१६. चत्वारो ब्रह्मविहाराः । मैत्री, करुणा, मुदिता, उपेक्षा चेति ॥

१७. षट् पारमिताः । दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता चेति ॥

१८. दश पारमिता. । षट्पारमितासकलम्, उपायम्, प्रणिधिः, बलम्, ज्ञान चेति ॥

१९. चत्वारि सग्रहवस्तूनि । दानम्, प्रियवचनम्, अर्थचर्या, समानार्थता चेति ॥

२०. पञ्चाभिज्ञाः । दिव्यचक्षुः, दिव्यश्रोत्रम्, परचित्तज्ञानम्, पूर्वनिवासानुस्मृतिः, ऋद्धिश्चेति ॥

२१. चत्वार्यार्यसत्यानि । तद्यथा—दुःखम्, समुदयः, निरोधः मार्गश्चेति ॥

२२. पञ्च स्कन्धाः । रूपम्, वेदना, सज्ञा, सस्कारा, विज्ञान चेति ॥

२३. लोकोत्तरपञ्चस्कन्धाः । शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धा इति ॥

२४. द्वादशायतनानि । चक्षुःश्रोत्रघ्राणजिह्वाकायमनआयतनानि रूपगन्धशब्दरसस्पर्शधर्मायतनानि चेति ॥

२५. अष्टादश धातवः ॥ चक्षुःश्रोत्रघ्राणजिह्वाकायमनोरूपगन्धशब्दरसस्पर्शधर्मधातवः चक्षुर्विज्ञानश्रोत्रविज्ञानघ्राणविज्ञानजिह्वाविज्ञानकायविज्ञानमनोविज्ञानधातवश्चेति ॥

२६. तत्रैकादश रूपस्कन्धाः ॥ चक्षुः, श्रोत्रम्, घ्राणम्, जिह्वा, कायः, रूपम्, शब्दः, गन्धः, रस, स्पर्शः विज्ञप्तिश्चेति ॥

२७. वेदना त्रिविधा । सुखा, दुःखा, अदुःखासुखा चेति ॥

२८. सज्ञास्कन्धः । निमित्तोद्ग्रहणात्मिका ॥

२९. सस्कारा द्विविधाः । तत्र चित्तसप्रयुक्तसस्काराः, चित्तविप्रयुक्तसस्काराश्चेति ॥

३० चित्तसप्रयुक्तसंस्काराश्चत्वारिंशत् । तद्यथा—वेदना, सज्ञा, चेतना, छन्दः, स्पर्शः, मतिः, स्मृतिः, मनस्कारः, अधिमोक्षः, समाधिः, श्रद्धा, अप्रमादः, प्रश्रब्धिः, उपेक्षा, ह्रीः, अपत्रपा, अलोभः, अद्वेषः, अहिंसा, वीर्यम्, मोहः, प्रमादः, कौसीद्यम्, अश्राद्ध्यम्, स्त्यानम्, औद्धत्यम्, अह्रीकता, अनपत्रपा, क्रोधः, उपनाहः, शाठ्यम्, ईर्ष्या, प्रदानः, म्रक्षः, मात्सर्यम्, माया, मदः, विहिंसा, वितर्कः, विचारश्चेति ॥

३१ तत्र चित्तविप्रयुक्तसंस्कारास्त्रयोदश । प्राप्तिः, अप्राप्तिः, सभागता, असज्ञिकम्, समाप्तिः, जीवितम्, जातिः, जरा, स्थितिः, अनित्यता, नामकायः, पदकायः, व्यञ्जनकायश्चेति ॥

३२. त्रीण्यसस्कृतानि । तद्यथा—आकाशः, प्रतिसख्यानिरोधः, अप्रतिसंख्यानिरोधश्चेति ॥

३३. षड् विषयाः । तद्यथा—रूपम्, शब्दः, गन्धः, रसः, स्पर्शः, धर्मश्चेति ॥

३४. तत्र रूपं विषयस्वभावम्। नीलम्, पीतम्, लोहितम्, अवदातम्, हरितम्, दीर्घम्, ह्रस्वम्, परिमण्डलम्, उन्नतम्, अवनतम्, सातम्, विसातम्, अच्छम्, धूमः, रजः, महिका, छाया, आतपः, आलोकः, अन्धकारश्चेति ॥

३५ अष्टाविंशतिविधः शब्दः। सप्त पुरुषवाक्शब्दा, सप्त पुरुषहस्तादिशब्दाः। एत एव (मनोज्ञा)मनोज्ञभेदेनाष्टाविंशतिः ॥

३६. रसः षड्विधः। तद्यथा—मधुरः, अम्ल, लवण, कटुः, तिक्तः, कषायश्चेति ॥

३७ चत्वारो गन्धाः। तद्यथा—सुगन्धः, दुर्गन्धः, समगन्ध., विषमगन्धश्चेति ॥

३८ एकादश स्प्रष्टव्यानि। पृथ्वी, आपः, तेजः, वायुः, श्लक्ष्णत्वम्, कर्कशत्वम्, लघुत्वम्, गुरुत्वम्, शीतम्, जिघत्सा, पिपासा चेति ॥

३९. पञ्च महाभूतानि। पृथ्वी, आपः, तेज., वायुः, आकाशश्चेति ॥

४०. पञ्च भौतिकानि। रूपम्, शब्दः, गन्धः, रसः, स्पर्शश्चेति ॥

४१. विंशतिः शून्यताः। तद्यथा—अध्यात्मशून्यता, बहिर्धाशून्यता, अध्यात्मबहिर्धाशून्यता, शून्यताशून्यता, महाशून्यता, परमार्थशून्यता, संस्कृतशून्यता, असंस्कृतशून्यता, अत्यन्तशून्यता, अनवराग्रशून्यता, अनवकारशून्यता, प्रकृतिशून्यता, सर्वधर्मशून्यता, लक्षणशून्यता, अलक्षणशून्यता, भावशून्यता, अभावशून्यता, स्वभावशून्यता, अभावस्वभावशून्यता, परभावशून्यता चेति ॥

४२. द्वादशाङ्गप्रतीत्यसमुत्पादः। अविद्या, संस्काराः, विज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरामरणम्, शोकपरिदेवदुःखदौर्मनस्योपायासाश्चेति ॥

४३ सप्तत्रिंशद्बोधिपाक्षिका धर्माः। चत्वारि स्मृत्युपस्थानानि ॥ ४ ॥ चत्वारि सम्यक्प्रहाणानि ॥ ८ ॥ चत्वार ऋद्धिपादाः ॥ १२ ॥ पञ्चेन्द्रियाणि ॥ १७ ॥ पञ्च बलानि ॥ २२ ॥ सप्त बोध्यङ्गानि ॥ २९ ॥ आर्याष्टाङ्गिकमार्गश्चेति ॥ ३७ ॥

४४. तत्र कतमानि स्मृत्युपस्थानानि? तद्यथा—काये कायानुदर्शीस्मृत्युपस्थानम्, वेदनायां वेदनानुदर्शीस्मृत्युपस्थानम्, चित्ते चित्तानुदर्शीस्मृत्युपस्थानम्, धर्मे धर्मानुदर्शीस्मृत्युपस्थानम् ॥

४५. कतमानि चत्वारि सम्यक्प्रहाणानि? तद्यथा—उत्पन्नाना कुशलमूलाना संरक्षणम्। अनुत्पन्नाना समुत्पाद। उत्पन्नानामकुशलानां धर्माणा प्रहाणम्। अनुत्पन्नाना पुनरनुत्पादश्चेति ॥

४६ चत्वार. ऋद्धिपादाः। तद्यथा—छन्दसमाधिप्रहाणाय संस्कारसमन्वागत ऋद्धिपादः। एव चित्तऋद्धिपादः। वीर्यऋद्धिपाद.। मीमांसासमाधिप्रहाणाय संस्कारसमन्वागतऋद्धिपादश्चेति ॥

४७. पञ्चेन्द्रियाणि। तद्यथा—श्रद्धासमाधिवीर्यस्मृतिप्रज्ञेन्द्रियं चेति॥

४८. पञ्च बलानि। श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाबलं चेति॥

४९. सप्त बोध्यङ्गानि। तद्यथा—स्मृतिसबोध्यङ्गम्, धर्मविचयसबोध्यङ्गम्, वीर्यसंबोध्यङ्गम्, प्रीतिसबोध्यङ्गम्, प्रश्रब्धिसबोध्यङ्गम्, समाधिसबोध्यङ्गम्, उपेक्षासबोध्यङ्गमिति॥

५०. आर्याष्टाङ्गिकमार्गः॥ सम्यग्दृष्टिः, सम्यक्सकल्पः, सम्यग्वाक्, सम्यक्कर्मान्तः, सम्यग्व्यायामः, सम्यक्स्मृतिः, सम्यक्समाधिश्चेति। एते सप्तत्रिंशद्बोधिपाक्षिका धर्माः॥

५१. चतस्रः प्रतिसविदः। तद्यथा—धर्मप्रतिसवित्, अर्थप्रतिसंवित्, निरुक्तिप्रतिसंवित्, प्रतिभानप्रतिसविच्चेति॥

५२ चतस्रो धारण्यः। तद्यथा—आत्मधारणी, ग्रन्थधारणी, धर्मधारणी, मन्त्रधारणी चेति॥

५३. चत्वारि प्रतिशरणानि। तद्यथा—अर्थप्रतिशरणता न व्यञ्जनप्रतिशरणता। ज्ञानप्रतिशरणता न विज्ञानप्रतिशरणता। नीतार्थप्रतिशरणता न नेयार्थप्रतिशरणता। धर्मप्रतिशरणता न पुद्गलप्रतिशरणता चेति॥

५४. षडनुस्मृतयः। बुद्धानुस्मृतिः, धर्मानुस्मृतिः, संघानुस्मृतिः, त्यागानुस्मृतिः, शीलानुस्मृतिः, देवानुस्मृतिश्चेति॥

५५. चत्वारि धर्मपदानि। तद्यथा—अनित्याः सर्वसस्काराः। दुःखाः सर्वसंस्काराः। निरात्मानः सर्वसंस्काराः। शान्त निर्वाण चेति॥

५६. दशाकुशलानि। तद्यथा—प्राणातिपातः, अदत्तादानम्, काममिथ्याचारः, मृषावादः, पैशुन्यम्, पारुष्यम्, संभिन्नप्रलापः, अभिध्या, व्यापादः, मिथ्यादृष्टिश्चेति॥

५७. गतयः षट्। तद्यथा—नरकः, तिर्यक्, प्रेतः, असुरः, मनुष्यः, देवश्चेति॥

५८. षड् धातवः। पृथ्वी, आपः, तेजः, वायुः, आकाशः, विज्ञानं चेति॥

५९. अष्टौ विमोक्षाः। तद्यथा—रूपी रूपाणि पश्यति शून्यम्। अध्यात्मारूपसंज्ञी बहिर्धारूपाणि पश्यति शून्यम्। आकाशानन्त्यायतन पश्यति शून्यम्। विज्ञानानन्त्यायतनं पश्यति शून्यम्। आकिंचन्यायतन पश्यति शून्यम्। नैवसंज्ञानासञ्ज्ञायतन पश्यति शून्यम्। संज्ञावेदयितनिरोधं पश्यति शून्य चेति॥

६०. पञ्चानन्तर्याणि। तद्यथा—मातृवधः, पितृवधः अर्हद्वधः, तथागतदुष्टचित्तरुधिरोत्पादः, सघभेदश्चेति॥

६१. अष्टौ लोकधर्माः॥ लाभः, अलाभः, सुखम्, दुःखम्, यशः, अयशः, निन्दा, प्रशसा चेति॥

६२. नवाङ्गप्रवचनानि। तद्यथा—सूत्रम्, गेयम्, व्याकरणम्, गाथा, उदानम्, जातकम्, वैपुल्यम्, अद्भुतधर्मः, उपदेशश्चेति॥

६३. द्वादश धूतगुणाः। पैण्डपातिकः, त्रैचीवरिकः, खलुपश्चाद्भक्तिकः, नैषधिकः, यथासंस्तरिकः, वृक्षमूलिकः, एकासनिकः, आभ्यवकाशिकः, आरण्यकः, श्माशानिकः, पांशुकूलिकः, नामन्तिकश्चेति ॥

६४. दश भूमयः। प्रमुदिता, विमला, प्रभाकरी, अर्चिष्मती, सुदुर्जया, अभिमुखी, दूरंगमा, अचला, साधुमती, धर्ममेघा चेति ॥

६५ समन्तप्रभा, निरुपमा, ज्ञानवती। एताः सहितास्त्रयोदश भूमयः ॥

६६. पञ्च चक्षूंषि। मांसचक्षुः, धर्मचक्षुः, प्रज्ञाचक्षुः, दिव्यचक्षुः, बुद्धचक्षुश्चेति ॥

६७. षट् क्लेशाः। रागः, प्रतिघः, मानः, अविद्या, कुदृष्टिः, विचिकित्सा चेति ॥

६८. पञ्च दृष्टयः। सत्कायदृष्टिः, अन्तग्राहदृष्टिः, मिथ्यादृष्टिः, दृष्टिपरामर्शः, शीलपरामर्शः ॥

६९. चतुर्विंशतिरुपक्लेशाः। तद्यथा–क्रोधः, उपनाहः, म्रक्षः, प्रदाशः, ईर्ष्या, मात्सर्यम्, शाठ्यम्, माया, मदः, विहिंसा, ह्रीः, अनपत्रपा, स्त्यानम्, अश्राद्धयम्, कौसीद्यम्, प्रमादः, मुषितस्मृतिः, विक्षेपः, असंप्रजन्यम्, कौकृत्यम्, मिद्धम्, वितर्कः, विचारश्चेति ॥

७०. पञ्चाहाराः। ध्यानाहाराः, कवलीकाराहाराः, प्रत्याहाराः, स्पर्शाहाराः, सचेतनिकाहाराश्चेति ॥

७१. पञ्च भयानि। आजीविकाभयम्, शोकभयम्, मरणभयम्, दुर्गतिभयम्, पर्षद्सांद्यभय[1] चेति ॥

७२. चत्वारि ध्यानानि। तद्यथा–सवितर्कं सविचारं विवेकज प्रीतिसुखमिति प्रथमध्यानम्। अध्यात्मप्रमोदनात्प्रीतिसुखमिति द्वितीयम्। उपेक्षास्मृतिसंप्रजन्यं सुखमिति तृतीयम्। उपेक्षास्मृतिपरिशुद्धिरदुःखासुखा वेदनेति चतुर्थं ध्यानमिति ॥

७३. त्रयो विमोक्षाः। शून्यता, अनिमित्तः, अप्रणिहितश्चेति ॥

७४. बोधिसत्त्वाना दश वशिताः। आयुर्वशिता, चित्तवशिता, परिष्कारवशिता, धर्मवशिता, ऋद्धिवशिता, जन्मवशिता, अधिमुक्तिवशिता, प्रणिधानवशिता, कर्मवशिता, ज्ञानवशिता चेति ॥

७५. बोधिसत्त्वाना दश बलानि। तद्यथा–अधिमुक्तिबलम्, प्रतिसङ्ख्यानबलम्, भावबलम्, क्षान्तिबलम्, ज्ञानबलम्, प्रहाणबलम्, समाधिबलम्, प्रतिभानबलम्, पुण्यबलम्, प्रतिपत्तिबल चेति ॥

७६. तथागतस्य दश बलानि। तद्यथा–स्थानास्थानज्ञानबलम्, कर्मविपाकज्ञानबलम्, नानाधातुज्ञानबलम्, नानाधिमुक्तिज्ञानबलम्, सत्त्वेन्द्रियपरापरज्ञानबलम्, सर्वत्रगामिनीप्रतिपत्तिज्ञानबलम्, ध्यानविमोक्षसमाधिसमापत्तिसंक्लेशव्यवदानव्युत्थानज्ञानबलम्, पूर्वनिवासानुस्मृतिज्ञानबलम्, च्युत्युत्पत्तिज्ञानबलम्, आस्रवक्षयज्ञानबल चेति ॥

१ पर्षच्छारद्यभयम्

७७. चत्वारि वैशारद्यानि । तद्यथा—अभिसंबोधिवैशारद्यम्, आस्रवक्षयज्ञानवैशारद्यम्, नैर्वाणिकमार्गावतरणवैशारद्यम् [ अन्तरायिकधर्मानन्यथात्वनिश्चितव्याकरणवैशारद्यं ] चेति ॥

७८. पञ्च मात्सर्याणि । धर्ममात्सर्यम्, लाभमात्सर्यम्, आवासमात्सर्यम्, कुशलमात्सर्यम्, वर्णमात्सर्यं चेति ॥

७९. अष्टादशावेणिका बुद्धधर्माः । तद्यथा—नास्ति तथागतस्य स्खलितम् । नास्ति रवितम् । नास्ति मुषितस्मृतिता । नास्त्यसमाहितचित्तम् । नास्ति नानात्वसंज्ञा । नास्त्यप्रतिसङ्ख्यायोपेक्षा । नास्ति छन्दपरिहाणिः । नास्ति वीर्यपरिहाणिः । नास्ति स्मृतिपरिहाणिः । नास्ति समाधिपरिहाणिः । नास्ति प्रज्ञापरिहाणिः । नास्ति विमुक्तिपरिहाणिः । नास्ति विमुक्तिज्ञानदर्शनपरिहाणि' । सर्वकायकर्मज्ञानपूर्वंगमज्ञानानुपरिवृत्तिः । सर्ववाक्कर्मज्ञानपूर्वंगमज्ञानानुपरिवृत्तिः । सर्वमनस्कर्मज्ञानपूर्वंगमज्ञानानुपरिवृत्तिः । अतीतेऽध्वन्यसङ्गमप्रतिहतज्ञानम् । प्रत्युत्पन्नेऽध्वन्यसङ्गमप्रतिहतज्ञानदर्शनं चेति ॥

८०. चत्वारो माराः । तद्यथा—स्कन्धमारः, क्लेशमारः, देवपुत्रमारः, मृत्युमारश्चेति ॥

८१. चत्वारि श्रद्धाङ्गानि । तद्यथा—आर्यसत्यम्, त्रिरत्नम्, कर्म, कर्मफल चेति ॥

८२. नवानुपूर्वसमाधिसमापत्तयः । तद्यथा—चत्वारि ध्यानानि, चतस्र आरूप्यसमापत्तयः, निरोधसमापत्तिश्चेति ॥

८३. द्वात्रिंशल्लक्षणानि । तद्यथा—चक्राङ्कितपाणिपादतलता । सुप्रतिष्ठितपाणिपादतलता । जालावलबद्धा(वनद्धा ?)ङ्गुलिपाणिपादतलता । मृदुतरुणहस्तपादतलता । सप्तोत्सदता । दीर्घाङ्गुलिता । आयतपर्ष्णिता । ऋजुगात्रता । उत्सङ्गपादता । उर्ध्वाग्ररोमता । ऐणेयजङ्घता । प्रलम्बबाहुता । कोषगतबस्तिगुह्यता । सुवर्णवर्णता । शुक्लच्छविता । प्रदक्षिणावर्तैकरोमता । ऊर्णालकृतमुखता । सिंहपूर्वान्तकायता । सुसंवृत्तस्कन्धता । चितान्तरांसता । रसरसाग्रता । न्यग्रोधपरिमण्डलता । उष्णीषशिरस्कता । प्रभूतजिह्वता । सिंहहनुता । शुक्लहनुता । समदन्तता । हसविक्रान्तगामिता । अविरलदन्तता । समचत्वारिंशद्दन्तता । अभिनीलनेत्रता । गोपक्ष्मनेत्रता चेति ॥

८४. अशीत्यनुव्यञ्जनानि । तद्यथा—ताम्रनखता । स्निग्धनखता । तुङ्गनखता । छत्राङ्गुलिता । चित्राङ्गुलिता । अनुपूर्वाङ्गुलिता । गूढशिरता । निर्ग्रन्थिशिरता । गूढगुल्फता । अविषमपादता । सिंहविक्रान्तगामिता । नागविक्रान्तगामिता । हंसविक्रान्तगामिता । वृषभविक्रान्तगामिता । प्रदक्षिणगामिता । चारुगामिता । अवक्रगामिता । वृत्तगात्रता । मृष्टगात्रता । अनुपूर्वगात्रता । शुचिगात्रता । मृदुगात्रता । विशुद्धगात्रता । परिपूर्णव्यञ्जनता । पृथुचारुमण्डलगात्रता । समक्रमता । विशुद्धनेत्रता । सुकुमारगात्रता । अदीनगात्रता । उत्साहगात्रता । गम्भीरकुक्षिता । प्रसन्नगात्रता । सुविभक्ताङ्गप्रत्यङ्गता । वितिमिरशुद्धालोकता । वृत्तकुक्षिता । मृष्टकुक्षिता । अभुग्नकुक्षिता । क्षामकुक्षिता ।

प्रदक्षिणावर्तनाभिता । समन्तप्रासादिकता । शुचिसमुदारता । व्यपगततिलकगात्रता । तूलसदृशसुकुमारपाणिता । स्निग्धपाणिलेखता । गम्भीरपाणिलेखता । आयतपाणिलेखता । नात्यायतवचनता । बिम्बप्रतिबिम्बोष्ठता । मृदुजिह्वता । तनुजिह्वता । रक्तजिह्वता । मेघगर्जितघोषता । मधुरचारुमञ्जुस्वरता । वृत्तदंष्ट्रता । तीक्ष्णदंष्ट्रता । शुक्लदंष्ट्रता । समदंष्ट्रता । अनुपूर्वदंष्ट्रता । तुङ्गनासता । शुचिनासता । विशालनयनता । चित्रपक्ष्मता । सितासितकमलदलनयनता । आयतभ्रूकता । शुक्लभ्रूकता । सुस्निग्धभ्रूकता । पीनायतभुजलता । समकर्णता । अनुपहतकर्णेन्द्रियता । अविम्लानललाटता । पृथुललाटता । सुपरिपूर्णोत्तमाङ्गता । भ्रमरसदृशकेशता । चित्रकेशता । गुडाकेशता । असंमुणितकेशता । अपरुषकेशता । सुरभिकेशता । श्रीवत्समुक्तिकनन्द्यावर्तलक्षितपाणिपादतलता चेति ॥

८५. चक्रवर्तिना सप्त रत्नानि । तद्यथा—चक्ररत्नम्, अश्वरत्नम्, हस्तिरत्नम्, मणिरत्नम्, स्त्रीरत्नम्, खड्गरत्नम्, परिणायकरत्न चेति ॥

८६. तत्र त्रयोऽध्वानः । तद्यथा—अतीतोऽध्वा, अनागतोऽध्वा, प्रत्युत्पन्नोऽध्वा चेति ॥

८७. चत्वारः कल्पाः । तद्यथा—अन्तरकल्पाः, महाकल्पाः, शून्यकल्पाः, सारकल्पाश्चेति ॥

८८ चत्वारि युगानि । तद्यथा—कृतयुगम्, त्रेतायुगम्, द्वापरम्, कलियुग चेति ॥

८९ लोकद्वयम् । तद्यथा—सत्त्वलोक', भाजनलोकश्चेति ॥

९० चत्वारो योनय. । तद्यथा—अण्डजः, संस्वेदजः, जरायुजः, उपपादुकश्चेति ॥

९१. पञ्च कषायाः । तद्यथा—क्लेशकषायः, दृष्टिकषायः, सत्त्वकषाय', आयुःकषायः, कल्पकषायश्चेति ॥

९२. त्रयः सत्त्वाध्याः । तद्यथा—पूर्वान्तकोटिपरिज्ञाया., अपरान्तकोटिपरिज्ञायाः, चतुर्मारकोटिपरिज्ञायाश्चेति ॥

९३ दश ज्ञानानि । तद्यथा—दुःखज्ञानम्, समुदयज्ञानम्, निरोधज्ञानम्, मार्गज्ञानम्, धर्मज्ञानम्, अन्वयज्ञानम्, संवृतिज्ञानम्, परचित्तज्ञानम्, क्षयज्ञानम्, अनुत्पादज्ञान चेति ॥

९४. पञ्च ज्ञानानि । तद्यथा—आदर्शनज्ञानम्, समताज्ञानम्, प्रत्यवेक्षणाज्ञानम्, कृत्यानुष्ठानज्ञानम्, सुविशुद्धधर्मधातुज्ञानं चेति ॥

९५. द्वे सत्ये । तद्यथा—संवृतिसत्यम्, परमार्थसत्यं चेति ॥

९६. चतुरार्यसत्येषु षोडश क्षान्तिज्ञानलक्षणाः । तद्यथा—दुःखे धर्मज्ञानक्षान्तिः, दुःखे धर्मज्ञानम्, दुःखेऽन्वयज्ञानक्षान्तिः, दुःखेऽन्वयज्ञानम् । समुदये धर्मज्ञानक्षान्तिः,

समुदये धर्मज्ञानम्, समुदयेऽन्वयज्ञानक्षान्ति, समुदयेऽन्वयज्ञानम्। निरोधे धर्मज्ञानक्षान्तिः, निरोधे धर्मज्ञानम्, निरोधेऽन्वयज्ञानक्षान्तिः, निरोधेऽन्वयज्ञानम्। मार्गे धर्मज्ञानक्षान्तिः, मार्गे धर्मज्ञानम्, मार्गेऽन्वयज्ञानक्षान्तिः, मार्गेऽन्वयज्ञान चेति ॥

९७. तत्र दुःखसत्ये चत्वार आकाराः। तद्यथा—अनित्यतः, दुःखतः, शून्यतः, अनात्मतश्चेति ॥

९८. समुदयसत्ये चत्वार आकाराः। तद्यथा—हेतुतः, समुदयतः, प्रभवतः, प्रत्ययतश्चेति ॥

९९. निरोधसत्ये चत्वार आकाराः। तद्यथा—निरोधतः, शान्ततः, प्रणीततः, निःसरणतश्चेति ॥

१००. मार्गसत्ये चत्वार आकाराः। तद्यथा—मार्गतः, न्यायतः, प्रतिपत्तितः, नैर्याणिक(त)श्चेति ॥

१०१. चत्वारः समाधयः। तद्यथा—आलोकसमाधिः, वृतासमाधिः, एकादशप्रतिष्ठ-समाधिः, आनन्तर्यसमाधिश्चेति ॥

१०२. तत्राष्टौ [पुरुष]-पुद्गलाः। तद्यथा—स्रोतआपन्नफलप्रतिपन्नकः, स्रोतआपन्नः, सकृदागामिफलप्रतिपन्नकः, सकृदागामी, अनागामिफलप्रतिपन्नकः, अनागामी, अर्हत्फल-प्रतिपन्नकः, अर्हँश्चेति ॥

१०३ तथाष्टौ प्रतिपुद्गलाः। तद्यथा—श्रद्धानुसारी, धर्मानुसारी, स्रोतआपन्नः, देवकुलकुलः, मनुष्यकुलकुल., सकृदागामिफलः, श्रद्धाविमुक्तिर्दृष्टिप्राप्त एकवीचिकोऽनागाम्यन्तरापरिनिर्वायी उपहत्यपरिनिर्वायी अभिसस्कारपरिनिर्वायी प्लुतोऽर्द्धप्लुतः सर्वास्तानप्लुतो दृष्टधर्मसमः कायसाक्षी खड्गश्चेति ॥

१०४. [ Ms 1—तदनु[1] द्वादशाकारधर्मचक्रप्रवर्तक(नं?) कतमत्? तद्यथा—इद दुःखमार्यसत्यमिति भिक्षवः पूर्वमनुश्रुत्य तेषु धर्मेषु योनिशो मनसिंगवतः(?) चक्षुरुदपादि। ज्ञानमुत्पादि चिन्तोत्पादि। चुत्रिरुदपादि। इत्येकपरिचतकः १ इदं दुःखमार्य स तत्र खल्वभिज्ञातं इति भिक्षवः। इत्यादि पूर्ववदितियः॥ इद दुःखसमुदयमार्यसत्वं तव खल्व-भिज्ञाय प्रहीणमिति हित्यादि तृतीयः। तथा इद दुःखनिरोध आर्यसत्यमिति हिप्रत्येकः॥ इद दुःखनिरोधआर्य्यसत्यं तत्र खल्वभिज्ञाय शाक्षात् कर्तव्यमिति हित्य द्वितीयः। इद दु.खनिरोधआर्यसत्य तत्र खलु भिज्ञाय शाक्षात् द्वितीय। तद्यथा इद दुःखमार्गगामिनि प्रतिपदार्यसत्येमिति त्येक॥ इदं दु.खमोक्षगामिनी प्रतिप इत्यार्य्यसत्य तत्र खलु भिज्ञाय भावयितव्यमिति हि भिक्षव इत्यादि तृतीयः। परिवर्त्त इत्येव द्वादशाकारधर्मचक्रप्रवर्त्तन-मिति ॥]

---

१ These two Mss present versions which are very corrupt and are given here as they appear in the printed text

**Ms C**

तदनु द्वादशाकारधर्मचक्रप्रवर्तक. । कतमत् । इद दुःखमार्यसत्यमिति भिक्षवः । पूर्वमनुश्रुत्य तेषु धर्मेषु योनिशो मनसिगवत. चक्षुरुदपादि । ज्ञानमुत्पादि चित्तोत्पादि । चुत्रिरुत्पादि ॥ इत्येकपरिवर्तक इद दुःखमार्यसत्य तत्र खल्वभिज्ञाय परिज्ञातमिति हि भिक्षव' । पूर्वमनुश्रुय तेषु योनिसो मनसिङ्कर्वुतः ॥ इति द्वितीय' ॥ इदमार्यसत्य तत्र खल्वभिज्ञात इति भिक्षव. । इत्यादि पूर्ववदिति यः ॥

इद दुःखसमुदयमार्यसत्य तव खल्वभिज्ञाय प्रहीणमिति हीत्यादि तृतीयम् ॥

तथा इद दु.खनिरोध आर्यसत्यमिति हि प्रत्येकः ॥ इदं दुःखनिरोध आर्यसत्य तत्र खल्वभिज्ञाय साक्षात् कर्तव्यमिति हीत्यादि । द्वितीयः । इद दु.खनिरोध आर्यसत्य तत्र खल्वभिज्ञाय साक्षात् कृतमिति द्वितीय. ।

तथा इद दुःखमार्गगामिनि प्रतिपदार्यसत्यमिति प्रत्येक । इद दुःखमोक्षगामिनी प्रतिपत् ॥ इत्यार्यसत्य तत्र खल्वभिज्ञाय भातव्यमिति हि भिक्षवः इत्यादि तृतीय' । परिवर्त्त इत्येव द्वादशाकारधर्मचक्रप्रवर्तनमिति ॥ ॥

**Restored Text**

तदत्र' द्वादशाकारधर्मचक्रप्रवर्तक (न?) कतमत्? इद दुःखमार्यसत्यमिति (मे) भिक्षवः पूर्वमननुश्रुतेषु धर्मेषु योनिशो मनसिकुर्वतः चक्षुरुदपादि ज्ञानमुदपादि विद्योदपादि भूरिरुदपादीत्येक परिवर्तकम् । इद दु'खमार्यसत्य तत्र खल्वभिज्ञाय परिज्ञातमिति हि (मे) भिक्षवः पूर्वमननुश्रुतेषु धर्मेषु योनिशो मनसिकुर्वत इति द्वितीयम् । इद दुःखमार्थसत्य तत्र खल्वभिज्ञाय परिज्ञातमिति भिक्षवः इत्यादि पूर्ववदिति तृतीयम् ॥

[ तथेद दु.खसमुदयमार्यसत्यमिति प्रत्येकम् । इद दुःखसमुदयमार्यसत्य तत्र खल्वभिज्ञाय प्रहातव्यमिति द्वितीयम् । ] इद दु.खसमुदयमार्यसत्य तत्र खल्वभिज्ञाय प्रहीणमिति हीत्यादि तृतीयम् ।

तथेद दुःखनिरोधमार्यसत्यमिति हि प्रत्येकम् । इद दुःखनिरोधमार्यसत्यं तत्र खल्वभिज्ञाय साक्षात्कर्तव्यमिति हीत्यादि द्वितीयम् । इद दुःखनिरोधमार्यसत्यं तत्र खल्वभिज्ञाय साक्षात्कृतमिति तृतीयम् ॥

तथेय दु.खमार्गगामिनी प्रतिपदित्यार्यसत्यमिति प्रत्येकम् । इय दु.खमोक्षगामिनी प्रतिपदित्यार्यसत्य तत्र खल्वभिविज्ञाय भावयितव्यमिति हि भिक्षव इत्यादि द्वितीयम् ।

[इद दु'खमोक्षगामिनी प्रतिपदित्यार्यसत्य तत्र खल्वभिज्ञाय भावितमिति तृतीयम् ॥ ]

१०५. तत्र दान त्रिविधम् । तद्यथा–धर्मदानम्, आमिषदानम्, मैत्रीदानं चेति ॥

१०६. शील त्रिविधम् । तद्यथा–सभारशीलम्, कुशलसग्राहशीलम्, सत्त्वार्थक्रियाशील चेति ॥

१०७ क्षान्तिस्त्रिविधा । तद्यथा–धर्मनिध्यानक्षान्तिः, दुःखाधिवासनाक्षान्तिः, परोपकारधर्मक्षान्तिश्चेति ॥

१०८. वीर्यं त्रिविधम्। तद्यथा–सनाहवीर्यम्, प्रयोगवीर्यम्, पर(रि)निष्ठावीर्यं चेति ॥

१०९. ध्यान त्रिविधम्। तद्यथा–सदोषापकर्षध्यानम्, सुखवैहारिकध्यानम्, अशेषवैभूषितध्यान चेति ॥

११०. प्रज्ञा त्रिविधा। तद्यथा–श्रुतमयी, चिन्तामयी, भावनामयी चेति ॥

१११. उपायस्त्रिविधः। तद्यथा–सर्वसत्त्वावबोधक, सत्त्वार्थभावक., क्षिप्रसुखाभिसबोधिश्चेति ॥

११२. प्रणिधान त्रिविधम्। तद्यथा–सुस्थानप्राबन्धिकम्, सत्त्वार्थप्राबन्धिकम्, बुद्धक्षेत्रपरिशोधक चेति ॥

११३. बल त्रिविधम्। तद्यथा–कर्मव्यावर्तकम्, क्लेशापकर्षकम्, मानप्रमादादिव्यावर्तक चेति ॥

११४. ज्ञानं त्रिविधम्। तद्यथा–अविकल्पकम्, विकल्पसमभावबोधकम्, सत्त्वार्थोपायपरोक्ष चेति ॥

११५ तत्रावरणे द्वे। तद्यथा–क्लेशावरणम्, ज्ञेयावरण चेति ॥

११६. नैरात्म्य द्विविधम्। तद्यथा–धर्मनैरात्म्यम्, पुद्गलनैरात्म्य चेति ॥

११७. सभारो द्विविधः। तद्यथा–पुण्यसंभारः, ज्ञानसभारश्चेति ॥

११८. तत्र षट् समाध्यावरणानि। तद्यथा–कौसीद्यम्, मानम्, शाठ्यम्, औद्धत्यम्, अनाभोगः, सत्याभोगश्चेति ॥

११९. तत्र प्रतिपत्त्याष्टौ प्रहाणसुस्कारा:। तद्यथा–श्रद्धा, बुद्धः(द्धिः), व्यायामः, प्रस्रब्धिः, स्मृतिः, सप्रजन्यम्, चेतना, उपेक्षा चेति ॥

१२०. तत्र चत्वारो द्वीपाः। तद्यथा–पूर्वविदेहः, जम्बुद्वीपः, अपरगोदानिः(नीयः), उत्तरकुरुद्वीपश्चेति ॥

१२१. अष्टावुष्णनरकाः। तद्यथा–संजीवः, कालसूत्रः, संघातः, रौरवः, महारौरवः, तपनः, प्रतापनः, अवीचिश्चेति ॥

१२२. अष्टौ शीतनरकाः। तद्यथा–अर्बुदः, निरर्बुदः, अटटः, अपपः, हाहाधरः, उत्पलः, पद्मः, महापद्मश्चेति ॥

१२३. सप्त पातालानि। तद्यथा–धरणीतलः, अचलः, महाचलः, आपः, काञ्चनः, संजीवः, नरकश्चेति ॥

१२४. द्वौ चक्रवालौ। तद्यथा–चक्रवालमहाचक्रवालौ चेति ॥

१२५. अष्टाङ्गपर्वताः। तद्यथा–युगधरः, ईशाधरः, खदिरकः, सुदर्शनः, विनतकः, अश्वकर्णः, नेमिंधरगिरिः, सुमेरुश्चेति ॥

१२६. सप्त सागराः। तद्यथा–क्षारः, क्षीरः, दधि, उदधिः, घृतम्, मधुः, सुरा चेति ॥

१२७. तत्र षट् कामावचरा देवा.। तद्यथा—चातुर्महाराजकायिकाः, त्रायस्त्रिंशाः, तुषिता., यामाः, निर्माणरतय॰, परनिर्मितवशवर्तिनश्चेति ॥

१२८. अष्टादश रूपावचरा देवाः । तद्यथा—ब्रह्मकायिकाः, ब्रह्मपुरोहिताः, ब्रह्म-पार्षद्याः, महाब्रह्माण॰, परीत्ताभाः, अप्रमाणाभाः, आभास्वरा., परीत्तशुभाः, शुभकृत्स्ना., अनभ्रकाः, पुण्यप्रसवाः, बृहत्फलाः, असञ्ज्ञिसत्त्वाः, अवृहाः, अतपा., सुदृशाः, सुदर्शनाः, अकनिष्ठाश्चेति ॥

१२९. चत्वारोऽरूपावचरा देवाः । आकाशानन्त्यायतनोपगा , विज्ञानानन्त्याय-तनोपगाः, आकिंचन्यायतनोपगाः, नैवसञ्ज्ञानासंज्ञायतनोपगाश्चेति ॥

१३०. त्रिविधा आलम्बनाः। तद्यथा—सत्त्वालम्बना, धर्मालम्बना, अनालम्बना चेति ॥

१३१ त्रिविधा महामैत्री । तद्यथा—सत्त्वालम्ब(म्ब)ना, धर्मलम्ब(र्मालम्ब)ना, अनालम्ब(म्ब)ना चेति ॥

१३२. त्रिविधं कर्म । तद्यथा—दृष्टधर्मवेदनीयम्, उत्पद्यवेदनीयम्, अपरवेदनीय चेति ॥

१३३. त्रिविधं प्रातिहार्यम् । तद्यथा—ऋद्धिप्रातिहार्यम्, आदेशनाप्रातिहार्यम्, अनुशासनीप्रातिहार्यं चेति ॥

१३४. अष्टावक्षणाः । तद्यथा—नरकोपपत्तिः, तिर्यगुपपत्तिः, यमलोकोपपत्ति., प्रत्यन्तजनपदोपपत्तिः, दीर्घायुषदेवोपपत्तिः, इन्द्रियविकलता, मिथ्यादृष्टिः, चित्तोत्पाद-विरागितता चेति ॥

१३५. त्रिविधा विकल्पाः । तद्यथा—अनुस्मरणविकल्पः, संतिरन(तीरण)विकल्पः, सहजविकल्पश्चेति ॥

१३६. चत्वारः समाधयः । तद्यथा—शूरगमः, गगनगञ्जः विमलप्रभः, सिंह-विक्रीडितश्चेति ॥

१३७. चतुर्दशाव्याकृतवस्तूनि । तद्यथा—शाश्वतो लोकः, अशाश्वतो लोकः, शाश्वतश्चाशाश्वतश्च, नैव शाश्वतो नाशाश्वतश्च । अन्तवाँल्लोकः, अनन्तवाँल्लोक॰, अन्तवा-श्चानन्तवाँल्लोकश्च, नैवान्तवान्नानन्तवाश्च । भवति तथागत. पर मरणात्, न भवति तथागतः पर मरणात्, भवति न च भवति च तथागतः पर मरणात्, नैव भवति न न भवति तथागतः परं मरणात् । स जीवस्तच्छरीरम्, अन्यो जीवोऽन्यच्छरीरं चेति ॥

१३८. त्रीणि कुशलमूलानि । तद्यथा—अद्वेषः, अलोभः, अमोहश्चेति ॥

१३९ एतद्विपर्ययात्त्रीण्यकुशलमूलानि । तद्यथा—लोभः, मोहः, द्वेषश्चेति ॥

१४०. तिस्रः शिक्षाः । तद्यथा—अधिचित्तशिक्षा, अधिशीलशिक्षा, अधिप्रज्ञाशिक्षा चेति ॥

इति नागार्जुनपादविरचितोऽय धर्मसग्रहः समाप्तः ॥

# २१ मञ्जुश्रीपरिवर्तापरपर्याया

## ' सप्तशतिका

प्रज्ञापारमिता ।

M 191 ॐ नमो भगवत्यै आर्यप्रज्ञापारमितायै ।

एव[1] मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्या विहरति स्म जेतवनेऽनाथ-
पिण्डदस्यारामे महता भिक्षुसघेन सार्ध परिपूर्णेन अर्हद्भिक्षुसहस्रेण, बोधिसत्त्वाना च
महासत्त्वाना महासर्नाहसनद्धाना परिपूर्णैर्दशभिर्बोधिसत्त्वशतसहस्रैः सार्धं सर्वैरविनिवर्तनीयै-
M 192 रनुत्तराया. सम्यक्सबोधेः । तद्यथा–मञ्जुश्रिया च कुमारभूतेन, मैत्रेयेण च, असङ्गप्रति-
भानेन च, अनिक्षिप्तधुरेण च, एवप्रमुखैर्दशभिर्बोधिसत्त्वशतसहस्रै· ॥

अथ खलु मञ्जुश्रीः कुमारभूतोऽरुणोद्गतकालसमये स्वकाद्विहारान्निष्क्रम्य येन तथागतविहारस्तेनोपसक्रामत् । उपसक्रम्य विहारस्य बहिर्द्वारे स्थितोऽभूत्तथागतस्य दर्शनाय वन्दनाय पर्युपासनाय । अथायुष्मानपि शारद्वतीपुत्रः स्वकाद्विहारान्निष्क्रम्य येन तथागतविहारस्तेनोपसक्रामद्भगवतो दर्शनाय वन्दनाय पर्युपासनाय । अथायुष्मानपि पूर्णो मैत्रायणीपुत्रः, आयुष्मानपि महामौद्गल्यायनः, आयुष्मानपि महाकाश्यपः, आयुष्मानपि महाकात्यायनः, आयुष्मानपि महाकौष्ठिलः, अन्ये च महाश्रावकाः स्वकस्वकेभ्यो विहारेभ्यो निष्क्रम्य येन भगवतो विहारस्तेनोपसंक्रान्ताः, उपसक्रम्य एकान्ते तस्थुः ॥

M 193 अथ खलु भगवानभिक्रान्ताभिक्रान्त महाश्रावकसनिपातं विदित्वा स्वकाद्विहारा-
न्निष्क्रम्य बहिर्द्वारस्यैकान्ते प्रज्ञप्त एवासने न्यषीदत् । निषद्य च भगवान् जानन्नेव
आयुष्मन्त शारद्वतीपुत्रमामन्त्रयते स्म–कुतस्त्व शारद्वतीपुत्र कल्यमेवागत्य तथागतविहारद्वारे
स्थितः ? एवमुक्ते आयुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्–सर्वप्रथमतर भगवन्
मञ्जुश्रीः कुमारभूतस्तथागतविहारद्वारे स्थित., पश्चादृय भगवन्तं द्रष्टुकामाः ॥

अथ खलु भगवान् जानन्नेव मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म–सत्यं किल त्व
मञ्जुश्रीः सर्वप्रथमतर तथागतविहारद्वारे स्थितस्तथागतस्य दर्शनाय वन्दनाय पर्युपासनाय
M 194 च ? एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्–एवमेतद्भगवन्, एवमेतत् सुगत,
प्रथमतरमस्म्यागतः स्वकाद्विहारान्निष्क्रम्य येन तथागतविहारस्तेनोपसक्रान्त·, उपसक्रम्य
एकान्ते स्थितो भगवतो दर्शनाय वन्दनाय पर्युपासनाय । तत्कस्य हेतोः ? तथा हि
भगवन् अतृप्तोऽहं तथागतस्य दर्शनेन वन्दनेन पर्युपासनेन च । यदप्यह भगवन् तथा-
गतमुपसंक्रमामि दर्शनाय वन्दनाय पर्युपासनाय, तत्सर्वसत्त्वानामर्थाय । सचेद्भगवन्

---

१ Text as fixed by J Masuda and published in the Journal of Taisho University, Vols VI–VII, Part II, Tokyo, 1930, with slight variations re punctuation.

तथागतो द्रष्टव्यो वन्दितव्य' पर्युपासितव्य', एव द्रष्टव्यः, एव वन्दितव्यः, एव पर्युपासितव्यः, यथाहं पश्यामि यथाह वन्दे यथाह पर्युपासे। एव तथागतो दृष्टो भवति वन्दितः पर्युपासितश्च। अह च भगवन् सर्वसत्त्वाना कृतशस्तथागत पश्यामि। भगवानाह—कथ M 195 मञ्जुश्रीस्तथागतो द्रष्टव्यो यावत् पर्युपासितव्य. ? मञ्जुश्रीराह—तथताकारेण तथागत पश्यामि अविकल्पाकारेण अनुपलम्भयोगेन, एवमनुत्पादाकारेण तथागत पश्यामि, यावद् अभावाकारेण तथागतं पश्यामि। न च तथता समुदागच्छति, एव तथागत पश्यामि। न तथता भवति न विभवति, एव तथागत पश्यामि। न तथता देशस्था न प्रदेशस्था, एव तथागत पश्यामि। न तथता अतीता न अनागता न प्रत्युत्पन्ना, एव तथागतं पश्यामि। न तथता द्वयप्रभाविता नाद्वयप्रभाविता, एव तथागत पश्यामि। न तथता सङ्क्लिश्यते न व्यवदायते, एव तथागतं पश्यामि। न तथता उत्पद्यते न निरुध्यते, एव तथागत पश्यामि। एव तथागतो दृष्टो भवति वन्दितः पर्युपासितश्च। एवमुक्ते भगवान् M 196 मञ्जुश्रियं कुमारभूतमेतदवोचत्—एव पश्यस्त्व मञ्जुश्री' किं पश्यसि ? मञ्जुश्रीराह—एवं पश्यन्नह भगवन् न किंचित्पश्यामि। एवमह पश्यन् न कस्यचिद्धर्मस्योत्पाद पश्यामि न निरोधं पश्यामि॥

अथायुष्मान् शारद्वतीपुत्रो मञ्जुश्रियं कुमारभूतमेतदवोचत्—दुष्करकारकस्त्वं मञ्जुश्रीः, यस्त्व तथागतमेव पश्यसि एव पर्युपास्से, यस्य च ते सर्वसत्त्वानामन्तिके महामैत्री प्रत्युपस्थिता। न च ते काचित्सत्त्वोपलब्धिः सत्त्वाभिनिवेशो वा। सर्वसत्त्वपरिनिर्वाणाय चासि प्रतिपन्नः। न च ते कश्चित्सत्त्वाभिनिवेशः प्रवर्तते। सर्वसत्त्वाना च ते कृतशः सनाह. सनद्धः। स चानुपलम्भयोगेन यावदभावयोगेन। एवमुक्ते मञ्जुश्रीः कुमारभूतः M 197 आयुष्मन्त शारद्वतीपुत्रमेतदवोचत्—एवमेतद् भदन्त शारद्वतीपुत्र यथा कथयसि। सर्वसत्त्वपरिनिर्वाणाय सनाहश्चैष सनद्धः। न च मे काचित् सत्त्वोपलब्धिर्वा सत्त्वाभिनिवेशो वा। नायं भदन्त शारद्वतीपुत्र संनाह एव सनद्धः—कथमह सत्त्वधातोरूनत्व वा कुर्यां पूर्णत्वं वा ? सचेद्भदन्त शारद्वतीपुत्र परिकल्पमुपादाय एकैकस्मिन् बुद्धक्षेत्रे गङ्गानदीवालुकोपमा बुद्धा भगवन्तो भवेयुः, एकैकश्च तथागतो गङ्गानदीवालुकोपमान् कल्पास्तिष्ठेत् सरात्रिंदिवं च धर्मं देशयमान., एकैकया धर्मदेशनया यावन्तो गङ्गानदीवालुकासमैर्बुद्धैर्भगवद्भि. सत्त्वा M 198 विनीताः, तावतः सत्त्वानेकैकस्तथागतः एकैकया धर्मदेशनया विनयेत्, एवमपि कृत्वा नैव सत्त्वधातोरूनत्व वा पूर्णत्व वा प्रज्ञायते। तत्कस्माद्धेतोः ? सत्त्वविविक्तत्वात् सत्त्वासत्त्वाद् भदन्त शारद्वतीपुत्र सत्त्वधातोर्न चोनत्व वा पूर्णत्व वा प्रज्ञायते॥

एवमुक्ते आयुष्मान् शारद्वतीपुत्रो मञ्जुश्रियं कुमारभूतमेतदवोचत्—यदि मञ्जुश्रीः सत्त्वविविक्तत्वात् सत्त्वासत्त्वात् सत्त्वधातोर्नैवोनत्व न पूर्णत्व वा प्रज्ञायते, तत्कस्येदानीं बोधिमभिसंबुध्य धर्मं देशयिष्यसि ? एवमुक्ते मञ्जुश्री. कुमारभूत आयुष्मन्त शारद्वतीपुत्रमेतदवोचत्—यदा तावद्भदन्त शारद्वतीपुत्र अत्यन्तया सत्त्वानुपलब्धिः, तत्कोऽत्राभि-

M 199 सभोत्स्यते? कस्य वा धर्मं देशयिष्यते? तत्कस्माद्धेतोः? तथा हि भदन्त शारद्वतीपुत्र अत्यन्ततया सर्वधर्मानुपलब्धिः ॥

अथ खलु भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—यदा तावन्मञ्जुश्रीः अत्यन्ततया सर्वधर्मानुपलब्धिः, तत्किमिदानी सत्त्वमपि प्रज्ञापयिष्यसि? अपि च । सचेन्मञ्जुश्रीः कश्चिदेव पृच्छेत्—कियन्तः सत्त्वा इति, किं तस्य त्व वदेः? मञ्जुश्रीराह—तस्याह भगवन् एव पृष्ट एव वदेयम्—यावन्त एव बुद्धधर्मा इति । सचेद् भगवन् पुनरपि पृच्छेत्—कियत्प्रमाणः सत्त्वधातुरिति, तस्याह भगवन् एवं पृष्ट एव वदेयम्—यत्प्रमाणो बुद्धविषयः [ इति ] ॥

M 200 भगवानाह—सचेत्पुनरपि ते मञ्जुश्रीः कश्चिदेव पृच्छेत्—किंपर्यापन्नः सत्त्वधातुरिति, किं तस्य त्व वदेः? मञ्जुश्रीराह—तस्याह भगवन् एव पृष्ट एव वदेयम्—यत्पर्यापन्नानुत्पादाचिन्त्यता [ इति ] ॥

भगवानाह—सचेत्पुनरपि ते मञ्जुश्रीः कश्चिदेव पृच्छेत्—किंप्रतिष्ठितः सत्त्वधातुरिति, किं तस्य त्व वदेः? मञ्जुश्रीराह—तस्याह भगवन् एवं पृष्ट एव वदेयम्—यत्प्रतिष्ठितोऽनुत्पादधातुः तत्प्रतिष्ठितः सत्त्वधातुरिति ॥

भगवानाह—यस्मिन् समये त्व मञ्जुश्रीः प्रज्ञापारमितां भावयसि, तदा कुत्र प्रतिष्ठिता प्रज्ञापारमितां भावयसि? मञ्जुश्रीराह—यस्मिन्नह भगवन् समये प्रज्ञापारमिता भावयामि, अप्रतिष्ठितोऽहं तस्मिन् समये प्रज्ञापारमिता भावयामि ॥

M 201 भगवानाह—अप्रतिष्ठितस्य ते मञ्जुश्रीः का प्रज्ञापारमिताभावना? मञ्जुश्रीराह—सैव भगवन् प्रज्ञापारमिताभावना यन्न क्वचित्प्रतिष्ठानम् ॥

भगवानाह—यस्मिन् समये त्वं मञ्जुश्रीः प्रज्ञापारमिता भावयसि, कतरत्ते कुशलमूलं तस्मिन् समये उपचय गच्छति अपचय वा? मञ्जुश्रीराह—न मे भगवन् तस्मिन् समये किंचित्कुशलमूलमुपचय गच्छति अपचय वा । नासौ प्रज्ञापारमिता भावयति यस्य कस्यचिद्धर्मस्य उपचयो वा अपचयो वा भवति । न सा भगवन् प्रज्ञापारमिताभावना वेदितव्या, या कस्यचिद्धर्मस्य उपचयाय वा अपचयाय वा प्रत्युपस्थिता । सा भगवन्
M 202 प्रज्ञापारमिताभावना या नैव पृथग्जनधर्मान् जहाति, नापि बुद्धधर्मानुपादत्ते । तत्कस्माद्धेतोः? तथा हि भगवन् प्रज्ञापारमिताभावना न कस्यचिद्धर्मस्योपलम्भेन प्रत्युपस्थिता य धर्मं प्रजह्यादुपाददीत वा । सा भगवन् प्रज्ञापारमिताभावना या नैव ससारदोषानुपयाति न निर्वाणगुणान् । तत्कस्माद्धेतोः? तथा हि भगवन् ससारमेव तावन्न समनुपश्यामि, कः पुनर्वादः ससारदोषान् । निर्वाणमेव तावन्नोपलभे, कः पुनर्वादो निर्वाणगुणान् द्रक्ष्यामि । सा भगवन् प्रज्ञापारमिताभावना यन्न कस्यचिद्धर्मस्यादान वा ग्रहण वा निःसरणं वा । सा भगवन् प्रज्ञापारमिताभावना या न कस्यचिद्धर्मस्य हानिर्वा वृद्धिर्वोपलभ्यते । तत्कस्माद्धेतोः? न हि भगवन् अनुत्पादो हीयते वा वर्धते वा ।

यैव भगवन् भावना, सा प्रज्ञापारमिताभावना । सा प्रज्ञापारमिताभावना या न M 203
कचिद्धर्ममुत्पादयति वा निरोधयति वा । सा भगवन् प्रज्ञापारमिताभावना या न कस्य-
चिद्धर्मस्योनत्वं वा पूर्णत्व वा करोति । या भगवन् एव भावना, सैव प्रज्ञापारमिताभावना ।
पुनरपर भगवन् सा प्रज्ञापारमिताभावना या नैवाचिन्त्यान् धर्मान् प्रार्थयते न प्रादेशिकान्।
अपि तु खलु पुनर्भगवन् तदपि न सविद्यते यत्प्रार्थयते, येन प्रार्थयते, यत्र प्रार्थयते । एवं
भावना भगवन् प्रज्ञापारमिताभावना । एवं प्रत्युपस्थिता इमे धर्मा अग्राः इमे धर्मा हीना M 204
इति । नापि तान् धर्मानुपलभते येषा धर्माणामग्रता वा हीनता वा स्यात् । एव प्रज्ञापार-
मिताभावनायोगमनुयुक्तः कुलपुत्रः सर्वधर्मान् नोपलभते । न भगवन् प्रज्ञापारमिताभावना
कचिद्धर्ममग्र वा हीन वा कल्पयति । तत्कस्माद्धेतोः ? न हि भगवन् अनुत्पादस्य
किंचिदग्र वा हीन वा, नापि तथताया भूतकोट्याः, यावत् सर्वधर्माणा किंचिदग्र वा
हीन वा । एव भावना भगवन् प्रज्ञापारमिताभावना ॥ •

एवमुक्ते भगवान् मञ्जुश्रिय कुमारभूतमामन्त्रयते स्म—न पुनर्मञ्जुश्रीः अग्रा बुद्धधर्माः ?
मञ्जुश्रीराह—अग्राह्यत्वाद्भगवन् अग्रा बुद्धधर्माः । तत्किं पुनर्भगवन् सर्वधर्माः शून्या इति
तथागतेनाभिसबुद्धा. ? भगवानाह—एवमेतन्मञ्जुश्रीः शून्याः सर्वधर्मास्तथागतेनाभिसबुद्धाः । M 205
मञ्जुश्रीराह—तत्किं पुनर्भगवन् शून्यताया अग्रता वा हीनता प्रज्ञायते ? भगवानाह—साधु साधु
मञ्जुश्रीः, एवमेतन्मञ्जुश्री. यथा कथयसि । न पुनर्मञ्जुश्री· अनुत्तरा बुद्धधर्माः ? मञ्जुश्रीराह—
एवमेतद्भगवन् अनुत्तरा बुद्धधर्माः । तत्कस्माद्धेतोः ? तथा हि भगवन् तेष्वणुरपि धर्मो न
सविद्यते नोपलभ्यते । न ते अनुत्तरा बुद्धधर्माः । पुनरपर भगवन् सा प्रज्ञापारमिताभावना
या न बुद्धधर्माणामाराधनाय सवर्तते न पृथग्जनधर्माणा प्रहाणाय सवर्तते । न बुद्धधर्माणा
विनयित्री, न सधारयित्री । एव भावना भगवन् प्रज्ञापारमिताभावना ॥ M 206

पुनरपर सा भगवन् प्रज्ञापारमिताभावना द्रष्टव्या या न कचिद्धर्मं चिन्तयति न
विजानीते । भगवानाह—न त्व मञ्जुश्रीः बुद्धधर्मांश्चिन्तयसि ? मञ्जुश्रीराह—नो भगवन् ।
चिन्तयेयमहं भगवन् बुद्धधर्मान्, सचेदहं बुद्धधर्माणा परिनिष्पत्तिं पश्येयम् । न भगवन्
प्रज्ञापारमिताभावना कस्यचिद्धर्मस्य विकल्पेन प्रत्युपस्थिता—इमे पृथग्जनधर्माः, इमे श्रावक-
धर्माः, इमे प्रत्येकबुद्धधर्माः, इमे सम्यक्सबुद्धधर्मा इति । तत्कस्माद्धेतोः ? तमेव भगवन्
धर्मं प्रज्ञापारमिताभावनायोगमनुयुक्तः कुलपुत्रो नोपलभते, यस्यैतान् धर्मान् पृथग्जनधर्मान्
वा निर्दिशेत्, शैक्षधर्मान् वा निर्दिशेत्, अशैक्षधर्मान् वा निर्दिशेत्, सम्यक्संबुद्धधर्मान्
वा निर्दिशेत् । तानत्यन्ततया धर्मान् न समनुपश्यामि । एव भावना भगवन् प्रज्ञापारमिता- M 207
भावना । न भगवन् प्रज्ञापारमिताभावनायोगमनुयुक्तस्य कुलपुत्रस्यैव भवति—अयं कामधातुः,
अय रूपधातुः, अयमारूप्यधातुः, यावद् अय निरोधधातुरिति । तत्कस्माद्धेतोः ? तथा
हि स भगवन् न कश्चिद्धर्मः, यो निरोधधर्मं समनुपश्यति । एव भावना भगवन् प्रज्ञापार-
मिताभावना वेदितव्या ॥

पुनरपर भगवन् एषा सा प्रज्ञापारमिताभावना या न कस्यचिद्धर्मस्योपकारं वा
अपकारं वा करोति । न हि भगवन् प्रज्ञापारमिताभावना बुद्धधर्माणा धात्री, न पृथग्जन-
M 208 धर्माणामाच्छेत्री । एषैव सा भगवन् प्रज्ञापारमिताभावना या नैव पृथग्जनधर्माणा निरोधः,
न बुद्धधर्माणां निरोधः, न बुद्धधर्माणा प्रतिलम्भः ॥

एवमुक्ते भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—साधु साधु मञ्जुश्रीः यस्त्वमिम-
मेवरूप गम्भीर धर्मं देशयसि । स्थापिता ते मञ्जुश्रीरिय मुद्रा बोधिसत्त्वाना महासत्त्वानाम्,
आभिमानिकाना च श्रावकाणाम्, औपलम्भिकाना च बोधिसत्त्वयानिकाना च यथाभूत
प्रतिबोधाय । न ते मञ्जुश्री. कुलपुत्रा वा कुलदुहितरो वा एकबुद्धपर्युपासिता भविष्यन्ति
M 209 नैकबुद्धावरोपितकुशलमूलाः, ये इम गम्भीर प्रज्ञापारमितानिर्देश श्रुत्वा नोत्रसिष्यन्ति न
सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते । अपि तु खलु पुनर्मञ्जुश्री. अतिक्रम्य ते बुद्धसहस्राव-
रोपितकुशलमूला भविष्यन्ति, ये इम गम्भीर प्रज्ञापारमितानिर्देश श्रुत्वा अधिमोक्ष्यन्ति,
नोत्रसिष्यन्ति न सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते ॥

एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्—प्रतिभाति मे भगवन् भूयस्या
मात्रया प्रज्ञापारमितानिर्देशः । प्रतिभातु ते मञ्जुश्री., इति भगवानस्यावोचत् । मञ्जुश्रीराह—
एषा सा भगवन् प्रज्ञापारमिताभावना या न कस्यचिद्धर्मस्य स्थितिमुपलभते नास्थितिम् ।
M 210 तत्कस्माद्धेतोः ? अस्थितत्वात्सर्वधर्माणा नोपलभते । एषैव सा भगवन् प्रज्ञापारमिता-
भावना वेदितव्या, या न कस्यचिद्धर्मस्याध्यालम्बनाय प्रत्युपस्थिता । तत्कस्य हेतोः ? तथा
हि भगवन् निरालम्बनाः सर्वधर्मा । एव भावना भगवन् प्रज्ञापारमिताभावना ॥

पुनरपर भगवन् सा प्रज्ञापारमिताभावना द्रष्टव्या यत्र बुद्धधर्मा अपि नाभिमुखी-
भवन्ति कुतः पुन प्रत्येकबुद्धधर्माः । नापि श्रावकधर्मा अभिमुखीभवन्ति, कः पुनर्वादः
पृथग्जनधर्माणाम् ॥

पुनरपरं भगवन् सा प्रज्ञापारमिताभावना या( या ? ) भावनामागम्य अचिन्त्यानपि
बुद्धधर्मानचिन्त्या बुद्धधर्मा इति न विकल्पमापद्यते । सेय भगवन् प्रज्ञापारमिताभावना
बोधिसत्त्वानां महासत्त्वाना सर्वधर्माविकल्पाय द्रष्टव्या ॥

M 211 पुनरपर भगवन् सा प्रज्ञापारमिताभावना या(या ?) भावनामागम्य सर्वधर्मान् बुद्ध-
धर्मान् पश्यति, सर्वधर्मानचिन्त्यधर्मान् पश्यत्यसमनुपश्यनतया । बहुबुद्धशतसहस्रपर्युपा-
सितास्ते भगवन् कुलपुत्रा. कुलदुहितरश्च भविष्यन्ति ये इम प्रज्ञापारमितानिर्देश श्रुत्वा
अधिमोक्ष्यन्ते नोत्रसिष्यन्ति न सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते ॥

पुनरपर भगवन् सा प्रज्ञापारमिताभावना या न कश्चिद्धर्मः सङ्क्लिश्यते वा व्यव-
दायते वा समनुपश्यति । एव भावना भगवन् प्रज्ञापारमिताभावना । सा चैषा भगवन्
प्रज्ञापारमिताभावना या नैव पृथग्जननानात्व करोति, न श्रावकनानात्वम्, न प्रत्येकबुद्ध-
M 212 नानात्वम्, यावत् सम्यक्सबुद्धनानात्व च करोति । एषा सा भगवन् प्रज्ञापारमिताभावना ॥

अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म–कियन्तस्त्वया मञ्जुश्रीः
तथागताः पर्युपासिताः? मञ्जुश्रीराह–यावन्तो भगवन्, मायापुरुषस्य चित्तचैतसिका
निरुद्धाः, इयन्तो मया भगवन् तथागताः पर्युपासिताः। भगवानाह–न त्वं मञ्जुश्रीः
बुद्धधर्मसंस्थितः? मञ्जुश्रीराह–कश्चित्पुनर्भगवन् स धर्म उपलभ्यते यो न बुद्धधर्मसंस्थितः?
भगवानाह–कस्य पुनर्मञ्जुश्रीः एते बुद्धधर्माः? मञ्जुश्रीराह–भगवन् तव तावदेते बुद्धधर्मा M 213
इति नाम न संविद्यते नोपलभ्यते, कुतः पुनरन्येषां भविष्यति?

भगवानाह–प्राप्ता ते मञ्जुश्रीरसङ्गता? मञ्जुश्रीराह–तद्यदा तावदहं भगवन् न
सङ्गतैव, तत्किं भूयोऽहमसङ्गतामनुप्राप्स्यामि?

भगवानाह–तत्किं निषण्णोऽसि मञ्जुश्रीर्बोधिमण्डे? मञ्जुश्रीराह–भगवानेव ताव-
द्बोधिमण्डे न निषण्णः, कथं पुनरहं निषत्स्यामि भूतकोटिं प्रमाणीकृत्य? भगवानाह–
भूतकोटिरिति मञ्जुश्रीः कस्यैतदधिवचनम्? मञ्जुश्रीराह–भूतकोटिरिति भगवन् सत्कायस्यैत-
दधिवचनम्। भगवानाह–किं संधाय मञ्जुश्रीरेवं वदसि? मञ्जुश्रीराह–असन्नेष भगवन् M 214
कायो न सत्कायः। नैष संक्रामति न विषंक्रामति। तेनैष कायोऽसत्कायः॥

अथ खल्वायुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्–नियतास्ते भगवन् बोधिसत्त्वा
महासत्त्वा भविष्यन्ति बोधये, ये इमं प्रज्ञापारमितानिर्देशं श्रुत्वा अधिमोक्ष्यन्ते नोत्रसि-
ष्यन्ति न संत्रसिष्यन्ति न संत्रासमापत्स्यन्ते॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–आसन्नीभूतास्ते भगवन्
बोधिसत्त्वा महासत्त्वा भविष्यन्ति बोधये, ये इमं प्रज्ञापारमितानिर्देशं श्रुत्वा अधिमोक्ष्यन्ते, M 215
नोत्रसिष्यन्ति न संत्रसिष्यन्ति न संत्रासमापत्स्यन्ते। तत्कस्माद्धेतोः? एषैव भगवन्
परमा बोधिः, यैषां धर्माणामनुबोधना॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्–बुद्धा एव ते भगवन् बोधिसत्त्वा
महासत्त्वा द्रष्टव्याः, ये इमं प्रज्ञापारमितानिर्देशं श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसिष्यन्ति न
संत्रसिष्यन्ति न संत्रासमापत्स्यन्ते। तत्कस्माद्धेतोः? बुद्ध इति परमार्थतोऽनुत्पादस्यैतदधि-
वचनम्॥

अथ खलु निरालम्बा भगिनी भगवन्तमेतदवोचत्–न ते भगवन् बोधिसत्त्वा
महासत्त्वाः पृथग्जनधर्मान् श्रावकधर्मान् प्रत्येकबुद्धधर्मान् सम्यक्संबुद्धधर्मानध्यालम्बिष्यन्ते,
ये इमं प्रज्ञापारमितानिर्देशं श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसिष्यन्ति न संत्रसिष्यन्ति न M 216
संत्रासमापत्स्यन्ते। तत्कस्माद्धेतोः? तथा हि भगवन् निरालम्बाः सर्वधर्मा असंविद्यमानत्वात्।
तेनैषामालम्बनं न संविद्यते॥

अथ खलु भगवानायुष्मन्तं शारद्वतीपुत्रमामन्त्रयते स्म–एवमेतच्छारद्वतीपुत्र, एव-
मेतत्। नियतास्ते कुलपुत्राः कुलदुहितरश्च भविष्यन्ति बोधये, ये इमं प्रज्ञापारमितानिर्देशं
श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसन्ति न संत्रसन्ति न संत्रासमापत्स्यन्ते। अविनिवर्तनीयभूमौ त्व

शारद्वतीपुत्र प्रतिष्ठितास्तान् कुलपुत्रान् कुलदुहितरश्च जानीष्व, ये इमं प्रज्ञापारमितानिर्देशं
M 217 श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसिष्यन्ति न सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते, मूर्ध्ना च
प्रतिग्रहीष्यन्ति । ते ते शारद्वतीपुत्र परमदानपतयो भविष्यन्ति महादानपतयो विशिष्टदान-
पतयः । ते ते शारद्वतीपुत्र शीलसपन्ना भविष्यन्ति परमशीलवन्त. परमविशिष्टशीलगुण-
पथप्राप्ताः, ये इम प्रज्ञापारमितानिर्देशं श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसिष्यन्ति न सत्रसिष्यन्ति
न सत्रासमापत्स्यन्ते । ते ते शारद्वतीपुत्र परमया क्षान्त्या, परमेण वीर्येण, परमैर्ध्यानैः,
परमया अप्रतिसमया प्रज्ञया समन्वागता भविष्यन्ति । ते ते शारद्वतीपुत्र बोधिसत्त्वा
महासत्त्वा यावत् सर्वाकारवरोपेतेन सर्वज्ञज्ञानेन समन्वागता भविष्यन्ति, ये इम प्रज्ञापार-
मितानिर्देश श्रुत्वा अधिमोक्ष्यन्ते, नोत्रसिष्यन्ति न सत्रसिष्यन्ति न सत्रासमापत्स्यन्ते ॥

M 218 पुनरपर भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—क पुनस्त्व मञ्जुश्री· अर्थवश
संपश्यन् इच्छस्यनुत्तरा सम्यक्सबोधिमभिसबोद्धुम् ? मञ्जुश्रीराह—सचेदहं भगवन् बोधये
सप्रतिष्ठेयम्, एवमहमिच्छेयमभिसबोद्धुम् । नाह भगवन् बोधिं प्रार्थयामि । तत्कस्माद्धेतोः ?
बोधिरेवैष योऽयं मञ्जुश्रीः कुमारभूतः ॥

एवमुक्ते भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—साधु साधु मञ्जुश्रीः, यस्त्वमिमा-
न्येवरूपाणि गम्भीराणि गम्भीराणि स्थानानि निर्दिशसि । यथापि त्व पूर्वजिनकृताधि-
M 219 कारोऽनुपलम्भचिरचरितब्रह्मचर्यः । मञ्जुश्रीराह—लब्ध एव भगवन् धर्मः स्यात्, यद्यह-
मनुपलम्भचारी स्याम् ॥

एवमुक्ते भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—पश्यसि त्वं मञ्जुश्रीरिमा मम
श्रावकसपदम् ? मञ्जुश्रीराह पश्यामि भगवन् । भगवानाह—कथ पश्यसि ? मञ्जुश्रीराह—तथाह
भगवन् पश्यामि यथा नैव पृथग्जनान् पश्यामि, नैव शैक्षान् पश्यामि, नैवाशैक्षान्
पश्यामि । नापि पश्यामि, नापि नैव पश्यामि, एव पश्यामि । यन्नैव बहून् पश्यामि,
नाप्यल्पकान् पश्यामि । यन्नैव विनीतान् पश्यामि, नाप्यविनीतान् पश्यामि ॥

M 220 अथ खल्वायुष्मान् शारद्वतीपुत्रो मञ्जुश्रिय कुमारभूतमेतदवोचत्—यस्त्व मञ्जुश्रीः
श्रावकयानिकानेव पश्यसि, सम्यक्संबुद्धयानिकान् पुनस्त्व कथ पश्यसि ? मञ्जुश्रीराह—
बोधिसत्त्व इति भदन्त शारद्वतीपुत्र नाम धर्मं न समनुपश्यामि, बोधाय सप्रस्थित इति
नाम धर्मं न समनुपश्यामि । बोधाय चरतीति नाम धर्मं न समनुपश्यामि । अभिसबुध्यत
इति नाम धर्मं न समनुपश्यामि । एव भदन्त शारद्वतीपुत्र सम्यक्संबुद्धयानिकान् पश्यामि ।
शारद्वतीपुत्र आह—तथागत पुनस्त्व मञ्जुश्रीः कथं पश्यसि ? मञ्जुश्रीराह—तिष्ठतु भदन्त
शारद्वतीपुत्र महानागः । मा महानाग घट्टय ॥

M 221 एवमुक्ते आयुष्मान् शारद्वतीपुत्रो मञ्जुश्रियं कुमारभूतमेतदवोचत्—बुद्ध इति मञ्जुश्रीः
कस्यैतदधिवचनम् ? मञ्जुश्रीराह—यत्पुनर्भदन्त शारद्वतीपुत्र उच्यते आत्मेति, कस्यैतदधि-
वचनम् ? शारद्वतीपुत्र आह—अनुत्पादस्यैतन्मञ्जुश्रीरधिवचन यदुत आत्मेति । मञ्जुश्रीराह—

एवमेतद्भदन्त शारद्वतीपुत्र यस्यैतदधिवचनमात्मेति, तस्यैतदधिवचनं बुद्ध इति । अपि तु भदन्त शारद्वतीपुत्र अपदाधिवचनमेतद् यदिदमुच्यते बुद्ध इति । न ह्येतद्भदन्त शारद्वतीपुत्र वाचाभिर्विज्ञापयितु बुद्ध इति । वागपि भदन्त शारद्वतीपुत्र न सुकरा निरूपयितुम्—इय वागिति, कुतः पुनर्बुद्ध इति । अपि तु भदन्त शारद्वतीपुत्र यदेव वदसि—कस्यैतदधिवचन बुद्ध इति, यो न समुदागतो नोत्पन्नो न निरोत्स्यते, यो न केनचिद्धर्मेण M 222 समन्वागतो नाप्यत्र किंचित्पदमभेदम्, अपदस्यैतद्भदन्त शारद्वतीपुत्र अधिवचन यदुत बुद्ध इति । तथागतं भदन्त शारद्वतीपुत्र पर्येषितुकामेन आत्मा पर्येषितव्यः । आत्मेति भदन्त शारद्वतीपुत्र बुद्धस्यैतदधिवचनम् । यथा आत्मा अत्यन्ततया न सविद्यते नोपलभ्यते, तथा बुद्धोऽप्यत्यन्ततया न सविद्यते नोपलभ्यते । यथा आत्मा न केनचिद्धर्मेण वचनीयः, तथा बुद्धोऽपि न केनचिद्धर्मेण वचनीय. । यत्र न काचित्सख्या, स उच्यते बुद्ध इति । न चैतद्भदन्त शारद्वतीपुत्र सुकरमाज्ञातुमात्मेति यदधिवचनम्, एवमेतद्भदन्त शारद्वतीपुत्र न सुकरमाज्ञातु बुद्ध इति यदधिवचनम् ॥ M 223

अथ खल्वायुष्मान् शारद्वतीपुत्रो भगवन्तमेतदवोचत्—नाय भगवन् मञ्जुश्रीः कुमारभूतस्तथा देशयति यथा आदिकर्मिका बोधिसत्त्वा आजानीयुः । एवमुक्ते मञ्जुश्रीः कुमारभूतः आयुष्मन्त शारद्वतीपुत्रमेतदवोचत्—नाह भदन्त शारद्वतीपुत्र तथा देशयामि यथा कृताविनोऽप्यर्हन्त आज्ञास्यन्ति । नाप्यह तथा देशयामि यथा कश्चिद्विज्ञास्यति । तत्कस्माद्धेतोः ? न बोधिः केनचिद्विज्ञाता, नापि सबुद्धा, न दृष्टा, न श्रुता, न स्मृता, नोत्पादिता, न निरोधिता, नोद्दिष्टा, नोपदेशिता । एतावदेव भदन्त शारद्वतीपुत्र यावता बोधिः । सा च बोधिर्न भावो नाप्यभावः । तत्कस्माद्धेतोः ? न बोध्या किंचिदभिसबोद्धव्यम्, नापि बोधिर्बोधिमभिसंबुध्यते ॥

शारद्वतीपुत्र आह—न मञ्जुश्रीर्भगवता धर्मधातुरभिसंबुद्धः ? मञ्जुश्रीराह—न भदन्त M 224 शारद्वतीपुत्र भगवता धर्मधातुरभिसबुद्धः । तत्कस्माद्धेतोः ? तथा हि भदन्त शारद्वतीपुत्र धर्मधातुरेव भगवान् । सचेद्भदन्त शारद्वतीपुत्र भगवता धर्मधातुरभिसबुद्धः स्यात्, तद्योऽसावनुत्पादधातुः स निरुध्यो भवेत् । अपि तु भदन्त शारद्वतीपुत्र स एव धर्मधातुर्बोधिः । तत्कस्माद्धेतोः ? निःसत्त्वो हि धर्मधातुः । अभावाः सर्वधर्मा इति बोधेरधिवचनमेतत्, योऽसौ धर्मधातुरिति सख्या गच्छति । तत्कस्माद्धेतोः ? सर्वधर्मा ह्यनानात्व बुद्धविषयत. । अनानात्वमिति भदन्त शारद्वतीपुत्र अविज्ञप्तिक पदमेतत् । अविज्ञप्तिकमिति M 225 भदन्त शारद्वतीपुत्र नैतच्छक्य विज्ञापयितु सस्कृतत्वेन वा यावद् असस्कृतत्वेन वा । न तत्र काचिद्विज्ञप्तिः, तेन तदविज्ञप्तिकम् । सर्वधर्मा हि भदन्त शारद्वतीपुत्र अविज्ञप्तिकाः । तत्कस्माद्धेतोः ? तथा हि सर्वधर्माणा प्रादुर्भावो नास्ति यस्मिन् स्थित्वा विज्ञप्येरन् । येऽप्यमी आनन्तर्यप्रसृता अचिन्त्यप्रसृताः, ते । ये च अचिन्त्यप्रसृता भूतप्रसृतास्ते । तत्कस्माद्धेतोः ? भूतमिति भदन्त शारद्वतीपुत्र अभेदपदमेतत् । येऽपि अचिन्त्यधर्म-

समन्वागताः, नैव ते स्वर्गगामिनः, न अपायगामिनः, न परिनिर्वाणगामिनः । तत्कस्माद्धेतोः? न हि अचिन्त्य गमनागमनेन प्रत्युपस्थितम्, यावत् न परिनिर्वाण गमनागमनेन
M 226 प्रत्युपस्थितम् । येऽपि भदन्त शारद्वतीपुत्र चतसृषु मूलापत्तिष्ववस्थिताः, अमूले तेऽवस्थिताः । तत्कस्माद्धेतोः? न हि भदन्त शारद्वतीपुत्र अनुत्पादस्य मूल वा अग्र वा इष्यते । अमूलो भिक्षुरिति अप्रतिष्ठितस्य भिक्षोरेतदधिवचनम् । उत्पन्नमधिकरणमिति अधिकसमारोपस्यैतदधिवचनम् । अधिकसमारोपे भदन्त शारद्वतीपुत्र चरन् लोके दक्षिणीयो भवति । तत्कस्माद्धेतोः? तथा हि समः सोऽधिकसमारोपः । श्राद्धो भदन्त शारद्वतीपुत्र भिक्षुर्नार्हति श्रद्धादेय परिभोक्तुम् । अश्राद्धो भदन्त शारद्वतीपुत्र भिक्षुरर्हति श्रद्धादेय
M 227 परिभोक्तुम् । कल्पिको भदन्त शारद्वतीपुत्र भिक्षुर्नार्हति श्रद्धादेय परिभोक्तुम् । अकल्पिको भदन्त शारद्वतीपुत्र भिक्षुरर्हति श्रद्धादेय परिभोक्तुम् । असमुपहतनेत्रीको भिक्षुरर्हन् क्षीणास्रव इत्युच्यते ॥

शारद्वतीपुत्र आह—किं सधाय मञ्जुश्रीरेवं वदसि? मञ्जुश्रीराह—न समता समुपहता, या समता सैव सा नेत्री । इद सधाय भदन्त शारद्वतीपुत्र एवं वदामि—असमुपहतनेत्रीको भिक्षुरर्हन् क्षीणास्रव इत्युच्यते । अनुत्तीर्णभय( भव? ) इति भदन्त शारद्वतीपुत्र अर्हत. क्षीणास्रवस्यैतदधिवचनम् । शारद्वतीपुत्र आह—किं सधाय मञ्जुश्रीरेवं वदसि? मञ्जुश्रीराह—
M 228 अणून्यपि तस्य भयानि न सविद्यन्ते । तत्किमुत्तरिष्यति? इद सधाय भदन्त शारद्वतीपुत्र एव वदामि—अनुत्तीर्णभय इति अर्हतः क्षीणास्रवस्यैतदधिवचनमिति ॥

शारद्वतीपुत्र आह—अनुत्पन्नक्षान्तिक इति मञ्जुश्रीः कस्यैतदधिवचनम्? मञ्जुश्रीराह—येन भदन्त शारद्वतीपुत्र अणुरपि धर्मो नोत्पादितः, स उच्यतेऽनुत्पन्नक्षान्तिक इति ॥

शारद्वतीपुत्र आह—अविनीतो भिक्षुरिति मञ्जुश्रीः कस्यैतदधिवचनम्? मञ्जुश्रीराह—अविनीतो भिक्षुरिति भदन्त शारद्वतीपुत्र अर्हतः क्षीणास्रवस्यैतदधिवचनम् । तत्कस्माद्धेतोः?
M 229 अविनयो हि विनीतः, न विनयो विनीतः । इद सधाय भदन्त शारद्वतीपुत्र एव वदामि—अविनीतो भिक्षुरिति अर्हतः क्षीणास्रवस्यैतदधिवचनम् ॥

शारद्वतीपुत्र आह—अधिचित्ते चरतीति मञ्जुश्रीः कस्यैतदधिवचनम्? मञ्जुश्रीराह—अधिचित्ते चरतीति भदन्त शारद्वतीपुत्र पृथग्जनस्यैतदधिवचनम् । शारद्वतीपुत्र आह—किं सधाय मञ्जुश्रीरेव वदसि? मञ्जुश्रीराह—तथा हि भदन्त शारद्वतीपुत्र सोऽधिकरोति ॥

M 230 एवमुक्ते आयुष्मान् शारद्वतीपुत्रो मञ्जुश्रियं कुमारभूतमेतदवोचत्—साधु साधु मञ्जुश्रीः, यथा अर्हन् क्षीणास्रवस्तथा कथयसि । मञ्जुश्रीराह—एवमेतद्भदन्त शारद्वतीपुत्र यथा वदसि । क्षीणास्रवोऽस्मि, न चार्हन् । तत्कस्माद्धेतोः? तथा हि भदन्त शारद्वतीपुत्र क्षीणा मे आस्रवाः श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा । अनेन भदन्त शारद्वतीपुत्र पर्यायेण क्षीणास्रवो न चार्हन् ॥

अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—स्यान्मञ्जुश्रीः पर्यायो यद्बोधिसत्त्वो महासत्त्वो बोधिमण्डे निषण्णोऽभव्योऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्? मञ्जुश्रीराह—स्याद्भगवन् पर्यायः यद्बोधिसत्त्वो महासत्त्वो बोधिमण्डे निषण्णः अभव्योऽनुत्तरां सम्यक्संबोधिमभिसबोद्धुम्। तत्कस्य हेतोः? तथा हि बोधावणुरपि धर्मो न संविद्यते नोपलभ्यते। M 231 तेनोच्यतेऽनुत्तरा सम्यक्संबोधिरिति। सा च बोधिरनुत्पन्ना। तत्र न कश्चिद्धर्मः संविद्यते नोपलभ्यते, यो बोधिमण्डे निषीदेत्, यो वा बोधिमभिसंबुध्येत्, येन वा बोधिरभिसंबुध्येत, यो वा बोधिमण्डादुत्तिष्ठेदिति। अनेन भगवन् पर्यायेण अभव्यो बोधिसत्त्वो महासत्त्वो बोधिमण्डे निषण्णोऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्॥

एवमुक्ते भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—बोधिरिति मञ्जुश्रीः कस्यैतदधिवचनम्? मञ्जुश्रीराह—बोधिरिति भगवन् पञ्चानामानन्तर्याणामेतदधिवचनम्। तत्कस्माद्धेतोः? तथा हि बोधिप्रकृतिकान्येव तानि पञ्चानन्तर्याणि अभावत्वात्। तेनैषा बोधिरानन्तर्यप्रकृतिका, अनन्तर्याणामभिसबुध्यना[1] बोधिः, न च प्रत्यक्षीभावना सर्वधर्मेषु बोधिः। M 232 तत्कस्माद्धेतोः? सर्वधर्मा हि अत्यन्ततया अप्रत्यक्षाः। ते न केनचिदभिसंबुद्धाः, न दृष्टाः, न ज्ञाताः, यावत् न विदिताः। एवमेषा बोधिः। अपि तु खलु पुनर्भगवन् अभिमानिकैः स्थापितान्येतानि अभिसंबुधानि(द्धा?), यावत् प्रत्यक्षीकृतानि॥

एवमुक्ते भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—किं ते मञ्जुश्रीः ममान्तिके एवं भवति—तथागतो मे तथागत इति? मञ्जुश्रीराह—नो हीदं भगवन्। तत्कस्माद्धेतोः? न मे भगवन् एवं भवेत्—तथागतो मे तथागत इति। तत्कस्माद्धेतोः? [तथा चैव तथता च][2] M 233 यथा च तथता, तथा चैष तथागतः। तथा हि भगवन् न तथता तथागतं विज्ञपयति, नापि तथागतस्तथता विज्ञपयति। तत्कस्माद्धेतोः? तथा हि भगवन् परमार्थतोऽभावा तथता। अभावस्तथागतः। तस्मात्तर्हि भगवन् न मे एवं भवति—तथागतो मे तथागत इति। अपि तु तथागत इति भगवन् नामधेयमात्रमेतत्। तत् कतरोऽसौ तथागतो यत्र मे एवं भविष्यति—तथागतो मे तथागत इति? भगवानाह—स (तत्?) संशयस्ते मञ्जुश्रीस्तथागते? मञ्जुश्रीराह—नो हीदं भगवन्। स्यादत्र मे भगवन् संशयः, सचेत् काचित्तथागतपरिनिष्पत्तिः स्यात्, तथागतोत्पत्तिर्वा तथागतपरिनिर्वाणं वा॥

एवमुक्ते भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—न तव मञ्जुश्रीरेवं भवति— M 234 उत्पन्नस्तथागत इति? मञ्जुश्रीराह—स्यान्मे भगवन् उत्पन्नस्तथागत इति, सचेद्धर्मधातोरुत्पत्तिः स्यात्॥

भगवानाह—नाधिमुच्यसे त्वं मञ्जुश्रीः गङ्गानदीवालुकोपमा बुद्धा भगवन्तः परिनिर्वृता इति? मञ्जुश्रीराह—कश्चित् पुनर्भगवन् एकविषया बुद्धा भगवन्तो यदिद-

१ M °संबुध्यमाना for °सबुध्यना २ The portion in brackets is an erroneous addition in Mss. T does not render the portion.

मचिन्त्यविषयाः? भगवानाह—एवमेतन्मञ्जुश्रीः, एकविषया बुद्धा भगवन्तो यदिदमचिन्त्यविषयाः। मञ्जुश्रीराह—कश्चित्पुनर्भगवन् एतर्हि तिष्ठति? भगवानाह—एवमेतन्मञ्जुश्रीः। M 235 मञ्जुश्रीराह—तेन हि भगवन् एते गङ्गानदीवालुकोपमा बुद्धा भगवन्तो न परिनिर्वृताः। तत्कस्माद्धेतोः? तथा हि भगवन् एकविषया बुद्धा भगवन्तो यदिदमचिन्त्यविषया.। न च अचिन्त्यता उत्पद्यते निरुध्यते वा। तस्माद्भगवन् भगवतो वा अभिसबुद्धेन(द्धस्य?) येऽपि ते अनागतेऽध्वनि तथागता अर्हन्तः सम्यक्सबुद्धा भविष्यन्ति, अभिसबुद्धा एव ते। तत्कस्माद्धेतोः? न हि अचिन्त्यता अतीता वा अनागता वा प्रत्युत्पन्ना वा। तस्माद्भगवन् विभ्रमस्तेषा लोकसनिवेशः। प्रपञ्चयन्ति ते भगवन् लोकसनिवेश येषामेव भवति—उत्पन्नस्तथागतो यावत् परिनिर्वास्यति वेति॥

M 236 एवमुक्ते भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—तेन हि त्व मञ्जुश्रीः इद तथागताचिन्त्यम्, अचिन्त्य निश्चिन्त्य. तथागतस्य वा अग्रत उदाहारैरुदाहरेः, अवैवर्तिकस्य बोधिसत्त्वस्य महासत्त्वस्य वा अर्हतो वा क्षीणास्रवस्य। तत्कस्माद्धेतो.? तथा हि ते श्रुत्वा नैवानुज्ञास्यन्ति, नैव प्रतिक्रोक्ष्यन्ति। तत्कस्माद्धेतोः? तथा हि तच्चिन्त्यमचिन्त्य निश्चिन्त्यम्। मञ्जुश्रीराह—अचिन्त्याना निश्चिन्त्याना भगवन् सर्वधर्माणा कोऽत्रानुज्ञास्यति वा प्रतिक्रोक्ष्यति वा? भगवानाह—यथैव मञ्जुश्रीः तथागतो निश्चिन्त्यः, तथैव पृथग्जना अपि निश्चिन्त्याः। मञ्जुश्रीराह—पृथग्जना अपि भगवन् तथैव निश्चिन्त्याः? भगवानाह—एवमेतन्मञ्जुश्रीः। M 237 तत्कस्माद्धेतो'? तथा हि सर्वाण्यचिन्त्यानि निश्चिन्त्यानि। मञ्जुश्रीराह—तत्कस्माद्भगवानेवमाह—यथैव तथागतो निश्चिन्त्यः, एव पृथग्जना अपि निश्चिन्त्या इति? ननु भगवन् पृथग्जनत्वमपि निश्चिन्त्यम्। तत्कस्माद्धेतोः? निश्चिन्त्या हि भगवन् सर्वधर्माः। ये केचिद्भगवन् परिनिर्वाणाय प्रस्थिताः, विहरिष्यन्ते ते भगवन्। तत्कस्माद्धेतोः? यैव निश्चिन्त्यता तदेव परिनिर्वाणम्। तस्मात्तर्हि भगवन् नास्ति निश्चिन्त्यताया नानात्वम्। येऽपि भगवन् एवमाहुः—इमे पृथग्जनधर्माः, इमे आर्यधर्मा इति, ते इदं वचनीयाः—कल्याणमित्राणि तावत्पर्युपासध्वम्, ततः पश्चाज्ज्ञास्यथ—इमे पृथग्जनधर्माः इमे आर्यधर्मा इति॥

M 238 एवमुक्ते भगवान् मञ्जुश्रिय कुमारभूतमेतदवोचत्—इच्छसि त्व मञ्जुश्रीः तथागत सर्वसत्त्वानामग्र्यम्? मञ्जुश्रीराह—इच्छेयमह भगवन् तथागत सर्वसत्त्वानामग्र्यम्, सचेदिह काचित्सत्त्वपरिनिष्पत्तिः स्यात्॥

भगवानाह—इच्छसि त्व मञ्जुश्रीः तथागतमचिन्त्यधर्मसमन्वागतम्? मञ्जुश्रीराह—इच्छेयमहं भगवन् तथागतमचिन्त्यधर्मसमन्वागतम्, सचेत्कश्चिदचिन्त्यधर्मसमन्वागतः स्यात्॥

भगवानाह—इच्छसि पुनस्त्व मञ्जुश्रीरेवम्—इमे श्रावकास्तथागतेन विनीता इति? मञ्जुश्रीराह—इच्छेयमह भगवन् एवम्—इमे श्रावकास्तथागतेन विनीता इति, सचेत् कश्चि-

दचिन्त्यधातुविनय गच्छेत् । न भगवन् बुद्धोत्पाद॰ कस्यचिदुपकारेण वा अपकारेण वा M 239
प्रत्युपस्थितः । तत्कस्माद्धेतोः ? तथा हि स्थित एष धातुः, असकीर्ण एष धातुः, यदुत अचिन्त्यधातुः । तस्मिंश्च धातौ न श्रावकनानात्वम्, यावत् न पृथग्जननानात्वमुपलभ्यते ॥

भगवानाह—न त्वं मञ्जुश्रीरेवमिच्छसि—अनुत्तरं पुण्यक्षेत्र तथागत इति ? मञ्जुश्रीराह—अभावत्वाद्भगवन् पुण्यक्षेत्र तथागतः, तेनैतदनुत्तर पुण्यक्षेत्रम् । येनैतत्पुण्यक्षेत्रं नापुण्यक्षेत्रम्, तेनैतदनुत्तर पुण्यक्षेत्रम् । अपि तु खलु पुनर्भगवन् नात्र कश्चिद्धर्मः
समुदागच्छति न क्षीयते । एव तत्पुण्यक्षेत्रम् । तत्र च बीज प्रक्षिप्त न विवर्धते न M 240
परिहीयते । भगवानाह-किं सधाय मञ्जुश्रीरेव वदसि-तत्र क्षेत्रे बीजमवरोपित न विवर्धते न परिहीयते इति ? मञ्जुश्रीराह—तथा हि भगवन् अचिन्त्य तत्क्षेत्रम्, एव तत्पुण्यक्षेत्रम् ॥

अथ खलु तस्यां वेलाया बुद्धानुभावेन षड्विकार महापृथिवीचालोऽभूत्, षोडशाना च भिक्षुसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि, सप्ताना भिक्षुणीशतानां त्रयाणा चोपासकशताना चत्वारिंशतश्चोपासिकासहस्राणा षष्टेश्च कामावचराणा देवकोटीनियुतशताना[1] विरजो विगतमल धर्मेषु धर्मचक्षुरुत्पन्नम् ॥

अथ खल्वायुष्मानानन्द उत्थायासनादेकासचीवर प्रावृत्य दक्षिण जानुमण्डल M 241
पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—को भगवन् हेतु॰, क॰ प्रत्ययोऽस्य महत पृथिवीचालस्य लोके प्रादुर्भावाय ? एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—अयमानन्द पुण्यक्षेत्रनिर्देशो नाम धर्मपर्याय॰ पूर्वकैरपि बुद्धैर्भगवद्भिरस्मिन्नेव पृथिवीप्रदेशे भाषितः । अयमानन्द हेतु॰, अय प्रत्ययोऽस्य महतः पृथिवीचालस्य लोके प्रादुर्भावाय ॥

सप्तशतिका प्रज्ञापारमिता समाप्ता ॥

——.○:——

१ M देवकोटिनियुतात्मविरजो for देवकोटीनियुतशताना विरजो

# २२ रत्नगुणसंचयगाथा ।

(1*b*) ॐ नमो भगवत्यै आर्यप्रज्ञापारमितारत्नगुणसचयगाथायै ।
नमो आर्यमञ्जुश्रिये ।

१

अथ खलु भगवास्तासा चतसृणा पर्षदा सप्रहर्षणार्थं पुनरपीमां प्रज्ञापारमितां परिदीपयमानस्तस्या वेलायामिमा गाथा अभाषत—

१. पर प्रेम गौरव प्रसाद उपस्थपित्वा
प्रजहित्व आवरण क्लेशमलातिक्रान्ताः ।
शृणुता जगार्थमभिप्रस्थित सुर(व्र?)ताना
प्रज्ञाय पारमित यत्र चरन्ति शूराः ॥ १ ॥

२. यावन्ति नद्य प्रवहन्तिह जम्बुद्वीपे
फल पुष्प औषधा(धि)वनस्पति रोहयन्ति ।
भूज(त)गजेन्द्रनागपतिनिश्रयनोवत(न)स्य(?)
तस्यानुभावश्रिय साभु जगाधिपस्य ॥ २ ॥

३. यावन्ति धर्म जिनश्रावक देशयन्ति
भाषन्ति युक्तिसहिताश्च उदीरयन्ति ।
परमार्थसौख्यक्रिय तत्फलप्राप्तिता च
सर्वो अयं पुरुषकारु तथागतस्य ॥ ३ ॥

४. किं कारण य जिन भाषति धर्मनेत्री
तत्राभिशिक्षित नरर्षभशिष्यभूताः ।
साक्षात्करित्व यथ शिक्षित देशयन्ति
बुद्धानुभाव पुन आत्मबलानुभावा ॥ ४ ॥

५. यस्मिन्न प्रज्ञवरपारमितोपलब्धिः
न च बोधिसत्त्वउपलब्धि न चित्तबोधे(:) ।
एव श्रुणित्व न च मुह्यति नास्ति त्रासो
सो बोधि(स)त्त्व चरते सुगतान प्रज्ञाम् ॥ ५ ॥

६. न च रूप वेदन न सञ्ज्ञ न चेतना च
विज्ञान स्थानु अणुमात्र न भोन्ति तस्य ।
सो सर्वधर्मअस्थितो(2*a*) अनिकेतचारी
अपरी(रि)गृहीत लभते सुगतान बोधिम् ॥ ६ ॥

७. अथ श्रेणिकस्य अभुती परिव्राजकस्य
ज्ञानोपलम्भु न हि स्कन्धविभावना च ।
यो बोधिसत्त्व परिजानति एव धर्मा[1]
न च निर्वृतिं स्पृशति सो विहराति प्रज्ञाम् ॥ ७ ॥

८. व्युपरीक्षते पुनरय कतरेषु प्रज्ञा
कस्मात्कुतो व इमि शून्यक सर्व धर्माः ।
व्युपरीक्षमाणु न च लीयति नास्ति त्रासो
आसन्नु सो भवति बोधयि बोधिसत्त्वो ॥ ८ ॥

९. सचि रूप सञ्ज्ञ अपि वेदन चेतना च
विज्ञान स्कन्ध चरती अप्रजानमानो ।
इमि स्कन्ध शून्य परिकल्पयि बोधिसत्त्वो
चरती निमित्तअनुपादपदे असक्तो ॥ ९ ॥

१०. न च रूप वेदन न संज्ञ न चेतनाया
विज्ञानि यो न चरती अनिकेतचारी ।
चरतीति सो न उपगच्छति प्रज्ञ[2]धारी
अनुपादधी स्पृशति शान्ति समाधि श्रेष्ठाम् ॥ १० ॥

११. एवात्मशा[3]न्ति विहरन्निह बोधिसत्त्वो -
सो व्याकृतो पुरमकेहि तथागतेहि ।
न च मन्यते अहु स[4]माधितु व्यु[5]त्थितो वा
कस्मार्थ धर्मप्रकृतिं परिजानयित्वा ॥ ११ ॥

१२. एवं चरन्तु चरती सुगतान प्रज्ञां
नो चापि सो लभति यत्र चराति ध[6]र्मम् ।
चरणं च सो अचरणं च प्रजानयित्वा
एषा स प्रज्ञवरपारमिताय चर्या ॥ १२ ॥

१३. योऽसौ न विद्यति स एष अविद्यमानो
तां बालु कल्पयि अविद्य करोति विद्याम् ।
विद्या अविद्य उभि एति असन्त धर्मा
निर्याति यो इति प्र(2b)जानति बोधिसत्त्वो ॥ १३ ॥

१४. मायोपमां य इह जानति पञ्च स्कन्धां
न च माय अन्य न च स्कन्ध करोति अन्यान् ।

१ O धर्म. २ O प्रज्ञधीरो ३ O °आत्मशान्त. ४ O समाहितु ५ O व्युस्थितो. ६ O धर्मा.

नानात्वसंज्ञविगतो उपशान्तचारी
एषा स[1] प्रज्ञवरपारमिताय चर्या ॥ १४ ॥

१५. कल्याणमित्रसहितस्य विपश्यकस्य
त्रासो न भेष्यति श्रुणित्व जिनान मात्रा[2]म्।
यो पापमित्रसहितो च परप्रणेयो
सो आमभाजन यथोदकस्पृष्ट भिन्नो ॥ १५ ॥

१६. किं कारणं अयु प्रवुच्यति बोधिसत्त्वो
सर्वत्र सङ्गक्रि[3]य इच्छति सङ्गछेदी।
बोधिं स्पृशिष्यति जिनान असङ्गभूता
तस्माद्धि नाम लभते अयु बोधिसत्त्वो ॥ १६ ॥

१७. महसत्त्व सोऽथ केनोच्यति कारणेन
महताय अत्र अयु भेष्यति सत्त्वराशेः।
दृष्टीगतां महति छिन्दति सत्त्वधातोः
महसत्त्व तेन हि प्रवुच्यति कारणेन ॥ १७ ॥

१८. महना[4]यको महतबुद्धि महानुभावो
महयान उत्तमजिनान स[5]माधिरूढो।
महता सनद्ध नमुचि शठ धर्पयिष्ये
महसत्त्व तेन हि प्रवुच्यति कारणेन ॥ १८ ॥

१९. मायाकरो यथ चतुष्पथि निर्मिणित्वा
महतो जनस्य बहु छिन्दति शीर्षकोटी।
यथ ते च माय तथ जानति सर्वसत्त्वा
निर्माणु सर्व जगतो न च तस्य त्रासो ॥ १९ ॥

२०. रूप च सञ्ज्ञ अपि वेदन चेतना च
विज्ञान बन्धु न च मुक्त असङ्गभूतो।
एव च बोधि क्रमते न च लीनचित्तो
सना( 3a )ह एष वरपुद्गलउत्तमानाम् ॥ २० ॥

२१. किं कारण अयु प्रवुच्यति बोधियानो
यत्रारुहित्व स निर्वापयि सर्वसत्त्वान्।
आकाशतुल्य अयु यान महाविमानो
सुखसौख्यक्षेममभिप्रापणु यानश्रेष्ठो ॥ २१ ॥

---

१ O न. २ O माता. ३ O सङ्गक्षय. ४ O °दायको. ५ O समाभिरूढो.

२२. न च लभ्यते य व्रजते दिश आरुहित्वा
निर्वाणओ[1]कगमन गति नोपलब्धिः।
यथ अग्नि निर्वृतु न तस्य गतिप्रचारो
सो तेन निर्वृति प्रवुच्यति कारणेन ॥ २२ ॥

२३ पूर्वान्ततो न उपलभ्यति बोधिसत्त्वो
अपरान्ततोऽपि प्रतिउपन्न त्रियध्वशुद्धो।
यो शुद्ध सो अनभिसस्कृतु निष्प्रपञ्चो
एषा स प्रज्ञवरपारमिताय चर्या ॥ २३ ॥

२४ यस्मिंश्च कालि समये विदु बोधिसत्त्वो
एव चरन्तु अनुपादु विचिन्तयित्वा।
महती ज[2]नेति करुणा न च सत्त्वसञ्ज्ञा
एषा स प्रज्ञवरपारमिताय चर्या ॥ २४ ॥

२५ सचि सत्त्वसञ्ज दुखसञ्ज उपादयाती
हरिष्यामि दुःख जगती करिष्यामि अर्थम्।
सो आत्मस( त्त्व )परिकल्पकु बोधिसत्त्वो
न च एष प्रज्ञवरपारमिताय चर्या ॥ २५ ॥

२६. यथ आत्मनं तथ प्रजानति सर्वसत्त्वा
यथ सर्वसत्त्व तथ प्रजानति सर्वधर्मान्।
अनुपादुपादु उभये अविकल्पमानो
एषा स प्रज्ञवरपारमिताय चर्या ॥ २६ ॥

२७. यावन्ति लोकि परिकीर्तित धर्मनाम
सर्वेषुपादसमतिक्रमु निर्गमित्वा।
अमृत ति ज्ञानु परमं न तु यो परेण
[3]एकार्थ प्रज्ञ अयु पारमितेति नामा ॥ २७ ॥

२८. एवं चरन्तु न च काङ्क्षति बोधिसत्त्वो
ज्ञातव्य यो विहर( 3b )ते स उपायप्रज्ञो।
प्रकृतीअसन्त परिजानयमान धर्मां
एषा स प्रज्ञवरपारमिताय चर्या ॥ २८ ॥

भगवत्यां रत्नगुणसचयगाथायां सर्वाकारज्ञताचर्यापरिवर्तो नाम प्रथमः ॥



१ O उक्तगमनं २ O जनेऽतिकरुणा ३ T एतार्थं

२

२९. रूपस्मि यो न स्थिहते न च वेदनायां
सञ्ज्ञाय यो न स्थिहते न च चेतनायाम् ।
विज्ञानि यो न स्थिहते स्थितु धर्मतायां
एषा स प्रज्ञवरपारमिताय चर्या ॥ १ ॥

३०. नित्यमनित्यसुखदु खशुभाशुभ ति
आत्मन्यनात्मि तथता त(थ) शून्यतायाम् ।
फलप्राप्तिताय अथितो अरहन्तभूमौ
प्रत्येकभूमिअथितो तथ बुद्धभूमौ ॥ २ ॥

३१. यथ नायकोऽस्थितकु धातुअसंस्कृताया
तथ संस्कृताय अथितो अनिकेतचारी ।
एव च स्थानु अथितो स्थित बोधिसत्त्वो
अस्थानु स्थानु अयु स्थानु जिनेन उक्तो ॥ ३ ॥

३२. यो इच्छती सुगतश्रावक हु भवेय
प्रत्येकबुद्ध भविया तथ धर्मराजो ।
इमु क्षान्त्यनागमि न शक्यति प्रापुणेतु
यथ आरपारगमनाय अतीतदर्शी ॥ ४ ॥

३३. यो धर्म भाष्यति य भाष्यति भाष्यमाणा
फलप्राप्त प्रत्ययजिनो तथ लोकनाथो ।
निर्वाणतो अधिगतो विदुपण्डितेहि
सर्वे त आत्मज निदृष्ट तथागतेन ॥ ५ ॥

३४. चत्वारि पुद्गल इमे न त्रसन्ति येऽस्मिँन्
जिनपुत्र सत्यकुशलो अविवर्तियश्च ।
अर्हं विधूतमलक्लेश प्रहीणकाङ्क्षो
कल्याणमित्रपरिपाचित यश्चतुर्थः ॥ ६ ॥

३५. ए( 4a )व चरन्तु विदु पण्डितु बोधिसत्त्वो
नार्हंमि शिक्षति न प्रत्ययबुद्धभूमौ ।
सर्वज्ञताय अनुशिक्षति बुद्धधर्मे
शिक्षाअशिक्ष न य शिक्षति एष शिक्षा ॥ ७ ॥

३६. न च रूपवृद्धिपरिहाणिपरिग्रहाये
न च शिक्षति विविधधर्मपरिग्रहाये ।

१ O अतीरदर्शी. २ T मायज ३ O तस्मि

सर्वज्ञतां च परिगृह्णति शिक्षमाणो
निर्यायती य इय शिक्ष गुणे रतानाम् ॥ ८ ॥

३७. रूपे न प्रज्ञ इति रूपि न अस्ति प्रज्ञा
विज्ञान संज्ञ अपि वेदन चेतना च।
न च एति प्रज्ञ इति तेष न अस्ति प्रज्ञा
आकाशधातुसम तस्य न चास्ति भेदः ॥ ९ ॥

३८. आरम्बणान प्रकृती स अ(न)न्तपारा
सत्त्वान या च प्रकृती स अनन्तपारा।
आकाशधातुप्रकृती स अनन्तपारा
प्रज्ञा पि लोकविदुना स अनन्तपारा ॥ १० ॥

३९. सञ्ज्ञेति नाम परिकीर्तितु नायकेन
संज्ञा विभाविय प्रहाण व्रजन्ति पारम्।
ये अत्र सञ्ज्ञविगम अनुप्रापुवन्ति
ते पारप्राप्त स्थित पारमिते हु भोन्ति ॥ ११ ॥

४०. सचि गङ्गवालुकसमानि स्थिहित्व कल्पां
सत्त्वेति शब्द परिकीर्तयि नायकोऽयम्।
सत्त्वस्युपादु कुतु भेष्यति आदिशुद्धो
एषा स प्रज्ञवरपारमिताय चर्या ॥ १२ ॥

४१. एव जिनो भणति अप्रतिकूलभाणी
यदहं इमाय वरपारमिताय आसी।
तद व्याकृतो अहु परापुरुषोत्तमेन
बुद्धो भविष्यसि अनागतअध्वनस्मिन् ॥ १३ ॥

भगवत्यां रत्नगुणसंचयगाथाया शक्रपरिवर्तो नाम द्वितीयः ॥



३

४२. ( 4*b* ) य इमा ग्रहीष्यति पर्यापुणती स नित्यं
प्रज्ञाय पारमित यत्र चरन्ति नाथाः।
विष वह्नि शस्त्र उदक न क्रमाति तस्यो
ओतारु मारु न च विन्दति मारपक्षो ॥ १ ॥

४३. परिनिर्वृतस्य सुगतस्य करेय्य स्तूपा
पूजेय सप्तरतनामयु कश्चिदेव।
तेहि प्रपूर्ण सिय क्षेत्रसहस्रकोट्यो
यथ गङ्गवालिकसमैः सुगतस्य स्तूपैः ॥ २ ॥

४४. यावन्त सत्त्व पुन त्रान्तक[1] क्षेत्रकोट्यो
ते सर्वि पूजन करेयुरनन्तकल्पान्[2]।
दिव्येहि पुष्पवरगन्धविलेपनेहि
कल्पांस्त्रियध्वपरिकल्प[3] ततोऽपि[4] भूयः ॥ ३ ॥

४५. यश्चो इमां सुगतमात लिखित्व पुस्ते
यत उत्पती दशबलान विनायकानाम्।
धारेयि सत्करयि पुष्पविलेपनेहि
कल पुण्य भोन्ति न स स्तूपि करित्व पूजाम् ॥ ४ ॥

४६. महविद्य प्रज्ञ अयु पारमिता जनाना
दुखधर्मशोकशमनी पृथुसत्त्वधातोः।
येऽतीत येऽपि च दशद्दिश लोकनाथा
इम विद्य शिक्षित अनुत्तरवैद्यराजाः ॥ ५ ॥

४७. ये वा चरन्ति चरिया हितसानुकम्पा-
मिह विद्यशिक्षित विदु स्पृशिष्यन्ति बोधिम्।
ये सौख्य सस्कृत असस्कृत ये च सौख्या
सर्वे च सौख्य प्रसुता इतु वेदितव्या ॥ ६ ॥

४८. बीजाः प्रकीर्ण पृथिवीस्थित सभवन्ति
सामग्रि लब्ध्वे[5] विरुहन्ति अनेकरूपाः।
यावन्ति बोधिगुण पारमिताश्च पञ्च
प्रज्ञाय पारमित ते विरुहन्ति सर्वे ॥ ७ ॥

---

१ O नान्तक. २ T अनन्यकर्मा. ३ O परिकल्प्य ४ O ततो च. ५ O लब्धु.

४९. येनैव राज व्रजते सं ह चक्रवर्ती
तेनैव सप्त रतना ब( 5b )लकाय सर्वे ।
येनैव प्रज्ञ इय पारमिता जिनाना
तेनैव सर्वगुणधर्म समागमन्ति ॥ ८ ॥

भगवत्या रत्नगुणसचयगाथायामप्रमेयगुणधारणपारमितास्तूपसत्कारपरिवर्तो नाम तृतीयः ॥

४

५०. शक्रो जिनेन परिपृच्छितु प्रश्नमाहु
सचि गङ्गवालिकसमा सिय बुद्धक्षेत्राः ।
जिनधातु सर्वि परिपूरित चूडिबद्धा
इममेव प्रज्ञवरपारमिताहु गृह्णे ॥ १ ॥

५१. किं कारण न मि शरीरि अगौरवत्व
अपि तू खु प्रज्ञपरिभावित पूजयन्ति ।
यथ राजनिश्रित नरो लभि सर्वि पूजा
तथ प्रज्ञपारमितनिश्रित बुद्धधातुः ॥ २ ॥

५२. मणिरत्न सर्वि गुणयुक्त अनर्घप्राप्तो
यस्मिं करण्डकि भवे स नमस्यनीयः ।
तस्यापि उद्धृत स्पृहन्ति करण्डकास्मिं
तस्यैव ते गुर्ण महारतनस्य भोन्ति ॥ ३ ॥

५३. एमेव प्रज्ञवरपारमितागुणानि
यन्निर्वृतेऽपि जिनधातु लभन्ति पूजाम् ।
तस्मा हु तान् जिनगुणा( न् ) परिघेत्तुकामो
सो प्रज्ञपारमित गृह्णतु एष मोक्षो ॥ ४ ॥

५४ पूर्वंगमा भवतु दानु ददन्तु प्रज्ञा
शीले च क्षान्ति तथ वीर्य तथैव ध्याने ।
परिग्राहिका कुशलधर्मअविप्रणाशे
एका च सा अपि निदर्शयि सर्वधर्मान् ॥ ५ ॥

१ O भट चक्रवर्ती २ O सर्व ३ O गुणमया.

५५. यथ जम्बुद्वीपि बहुवृक्षसहस्रकोटी
नानाप्रकार विविधाश्च अनेकरूपाः ।
न वि छायनानंतु भवेत विशेषतापि
अन्यत्र छायगतसख्य प्रभाषमा( 5a )णा ॥ ६ ॥

५६. एमेव पञ्च इमि पारमिता जिनाना
प्रज्ञाय पारमित नामतया भवन्ति ।
सर्वज्ञताय परिणामयमाण सर्वे
षडपीह एकनयमर्छति बोधिनामा ॥ ७ ॥

भगवत्यां रत्नगुणसंचयगाथाया गुणपरिकीर्तनपरिवर्तो नाम चतुर्थः ॥

## ५

५७. सचि रूप संज्ञ अपि वेदन चेतनाया
चित्त अनित्य परिणामयि[1] बोधिसत्त्वो
प्र(ति)वर्णिकाय चरते अप्रजानमानो
न हि धर्म पण्डित विनाश[2] करोति जातु ॥ १ ॥

५८. यस्मिन् न रूप अपि वेदन चापि सज्ञा
विज्ञान नैव न पि चेतनयोपलब्धिः ।
अनुपादु शून्य न य जानति सर्वधर्मान्
एषा स प्रज्ञवरपारमिताय चर्या ॥ २ ॥

५९. यावन्ति गङ्गनदिवालिकतुल्यक्षेत्रे
तावन्ति सत्त्व अरहन्ति विनेय कश्चित् ।
यश्चैव प्रज्ञ इम पारमिता लिखित्वा
परसत्त्वि पुस्तकु ददेय विशिष्टपुण्यः ॥ ३ ॥

६०. किं कारणं त इह शिक्षित वादिश्रेष्ठा
गमयन्ति धर्म निखिलानिह शून्यतायाम् ।
या श्रुत्व श्रावक स्पृशन्ति विमुक्ति शीघ्र
प्रत्येकबोधि स्पृशयन्ति च बुद्धबोधिम् ॥ ४ ॥

६१. असतोऽङ्कुरस्य द्रुमसंभवु नास्ति लोके
कुत शाखपत्रफलपुष्पउपादु तत्र ।

१ T परिवीपयि. २ B वनाय.

विन बोधिचित्त जिनसंभवु नास्ति लोके
कुत शक्रब्रह्मफल श्रावकप्रादुर्भावः ॥ ५ ॥

६२. आदित्यमण्डलु यदा प्रभजाल मुञ्ची
कर्मक्रियासु तद सत्त्व पराक्रमन्ति ।
तथ बोधि( 6a )चित्त सद लोकविदुस्य ज्ञातो
ज्ञानेन सर्वगुणधर्म समागमन्ति ॥ ६ ॥

६३. यथ नोपतप्त असतो भुजगाधिपस्य
कुत नद्यप्रस्रवु भवेदिह जम्बुद्वीपे ।
असता नदीय फलपुष्प न सभवेयुः
न च सागराण रतना भवि नैकरूपाः ॥ ७ ॥

६४. तथ बोधिचित्त असतीह तथागतस्य
कुत ज्ञानप्रस्रवु भवेदिह सर्वलोके ।
ज्ञानस्य चो असति नास्ति गुणान[1] वृद्धिः
न च बोधि सागरसमा न च बुद्धधर्माः ॥ ८ ॥

६५. यावन्ति लोकि क्वचि जोतिकप्राणभूता
ओभासनार्थ प्रभ ओसरयन्ति सर्वे ।
वैर[2]सूर्यमण्डलविनिःसृत एकरश्मी
न[3] कला पि ज्योतिकगणे सिय सर्वआभाः ॥ ९ ॥

भगवत्यां रत्नगुणसचयगाथाया पुण्यपर्यायपरिवर्तो नाम पञ्चमः ॥

---

## ६

६६. यावन्ति श्रावकगणाः प्रसवन्ति पुण्य
दान च शीलमपि भावनसप्रयुक्तम् ।
स हि बोधिसत्त्व अनुमोदन एकचित्ते
न च सर्वश्रावकगणे सिय पुण्यस्कन्धो ॥ १ ॥

६७. ये बुद्धकोटिनियुता पुरिमा[4] व्यतीता
ये वा अनन्तबहुक्षेत्रसहस्रकोट्यः ।
तिष्ठन्ति येऽपि परिनिर्वृत लोकनाथा
देशन्ति धर्मरतन दुखसक्षयाय ॥ २ ॥

---

१ O गुणानुवृद्धि.. २ O पर° ३ O om. न. ४ O पुरिमाधतीता.

६८. प्रथमं उपादु वरबोधयि चित्तु[1]पादो
यावत्[2] सु धर्मक्षयकालु विनायकानाम् ।
एकस्मि[3] तत्र चिय तेष जिनान पुण्यं
सह युक्त पारमित येऽपि च बुद्धधर्माः ॥ ३ ॥

६९. यश्चैव बुद्धतनयान ( च ) श्रावकाणां
शैक्ष अशैक्ष कुशलास्रव नास्रवाश्च ।
प(6b)रिपिण्डयित्व अनुमोदयि बोधिसत्त्वो
सर्वं च नामयि जगार्थनिदान बोधि ॥ ४ ॥

७०. परिणामयन्तु यदि वर्तति चित्तसञ्ज्ञा
तथ बोधिस[4]त्त्वपरिणामन सत्त्वसंज्ञा ।
संज्ञाय दृष्टिस्थितु चित्त त्रिसङ्गयुक्तो
परिणामित न भवती उपलभ्यमानम् ॥ ५ ॥

७१. सचि एव जानति निरुध्यति क्षीणधर्मा
तच्चैत क्षीण परिणामयिष्यन्ति यत्र ।
न च धर्म धर्मि परिणामयते कदाचित्
परिणामित भवति एव प्रजानमाने ॥ ६ ॥

७२. सचि सो निमित्त कुरुते न च मानयाति
अथ आनिमित्त परिणामित भोन्ति बोधौ ।
विषसृष्ट भोजनु यथैव क्रियाप्रणीतो
तथ शुक्लधर्मउपलम्भ जिनेन उक्तो ॥ ७ ॥

७३. तस्मा हु नामपरिणामन शिक्षितव्या
यथ ते जिना कुशल एव प्रजानयन्ति ।
यज्जातियोऽयं प्रभवो यदलक्षण च
अनुमोदमी तथ तथा परिणामयामि ॥ ८ ॥

७४. एव च पुण्य परिणामयमान बोधौ
न च सो हि बुद्ध क्षिपते जिन उक्तवादी ।
यावन्ति लोकि उपलम्भिकबोधिसत्त्वा
अभिभोन्ति सर्वि परिणामयमान शूरो ॥ ९ ॥

भगवत्यां रत्नगुणसचयगाथायामनुमोदनापरिवर्तो नाम षष्ठमः ॥

१ O चित्तपादो   २ O यावत्सधर्म°   ३ O एकस्मिनन्तरि   ४ T बोधिसज्ञ°.

७

७५. जात्यन्धकोटिनियुतान्यविनायकाना
मार्गे अकोविदु कुतो नगरप्रवेशे।
विन प्रज्ञ पञ्च इमि पारमिता अचक्षु.
अविनायका न प्रभवन्ति स्पृशेतु[1] बोधिम्॥ १॥

७६. यत्रान्तरस्मि भ(7a)वते प्रगृहीत प्रज्ञा
ततु लब्धचक्षु भवती इमु नामधेयम्।
यथ चित्रकर्मपरिनिष्ठित चक्षुहीनो
न च ताव पुण्यु लभते अकरित्व चक्षुः॥ २॥

७७. यद् धर्म सस्कृत असस्कृत कृष्णशुक्लो
अणुमात्रु नो लभति प्रज्ञ विभावमानः।
यद् प्रज्ञपारमित गच्छति सख्य लोके
आकाश यत्र न प्रतिष्ठितु किंचि तत्रे[2]॥ ३॥

७८. सचि[3] मन्यते अहु चरामि जिनान प्रज्ञा
मोचिष्य सत्त्वनियुता बहुरोगस्पृष्टान्।
अयु सत्त्वसज्ञपरिकल्पकु बोधिसत्त्वो
न च एष प्रज्ञवरपारमिताय चर्या॥ ४॥

७९. यो बोधिसत्त्व वरपारमितेति[4] चीर्णो
परिचारिका य न च काङ्क्षति पण्डितेहि।
सह श्रुत्व तस्य पुन भेष्यति शास्तृसज्ञा
सो वा लघू अनुबुधिष्यति बोधि शान्ताम्॥ ५॥

८०. सत्कृत्य बुद्धनियुता परिचारिकाया
न च प्रज्ञपारमित श्रद्दधिता जिनानाम्।
श्रुत्वा च सो इमु क्षिपिष्यति सोऽल्पबुद्धि.
स क्षिपित्व यास्यति अवीचिमत्राणभूतो॥ ६॥

८१. तस्मा हु श्रद्दधत एव जिनान माता
यदि इच्छथा स्पृशितु उत्तमबुद्धज्ञानम्।
सो वाणिजो यथ व्रजित्वन रत्नद्वीप
मूलातु छेदन करित्व पुन आगमेया॥ ७॥

भगवत्या रत्नगुणसचयगाथाया निरयपरिवर्तो नाम सप्तमः॥

---

१ O स्पशेतु  २ O तद्दत.  ३ O न चि.  ४ O °पारमितेह.

## ८

८२. रूपस्य शुद्धि फलशुद्धित वेदितव्या
फलरूपशुद्धित सर्वज्ञतशुद्धिमाहुः।
सर्वज्ञताय फलशुद्धित रूपशुद्धी
आकाशधातुसमताय अभिन्नछिन्नाः॥ १॥
८३. त्रैधातुक समतिक्रान्त न बोधिसत्त्वा
क्लेशापनीत उपपत्ति निदर्शयन्ति।
जरव्याधिमृत्युविगताश्च्युति दर्शयन्ति
प्रज्ञाय पारमित यत्र चरन्ति धीराः॥ २॥
८४. नामेव रूपि जगती अयु पङ्कसक्ता
ससारचक्रि भ्रमतेऽनिलचक्रतुल्ये।
जानित्व भ्रान्तु जगती मृगवागुरेव
आकाश पक्षिसदृशा विचरन्ति प्रज्ञाः॥ ३॥
८५ रूपस्मि यो न चरते परिशुद्धचारी
विज्ञान सज्ञ अपि वेदन चेतनायाम्।
एव चरन्तु परिवर्जयि सर्वसज्ञा
सज्ञाद्विमुं[1]च्य चरते सुगतान प्रज्ञाम्॥ ४॥
भगवत्या रत्नगुणसंचयगाथाया विशुद्धिपरिवर्तो नामाष्टमः॥

## ९

८६. एव चरन्तु विदु पण्डितु बोधिसत्त्वो
सज्ञा[2] उछिन्नु व्रजते जगती असक्तो।
[3]सूर्यो व राहुग्रहमुक्त विरोचमानो
अग्नीव युक्त तृणकाष्ठवन दहाति॥ १॥
८७. प्रकृतीय शुद्ध परिशुद्धिमि सर्वधर्मा
प्रज्ञाय पारमित पश्यति बोधिसत्त्वो।
न च पश्यक लभति नापि च सर्वधर्मान्
एषा स प्रज्ञवरपारमिताय चर्या॥ २॥
भगवत्या रत्नगुणसचयगाथाया स्तुतिपरिवर्तो नाम नवमः॥

---

१ O विमुक्त. २ O सज्ञात्र. ३ O सूर्योऽवि

१०

८८. शक्रो जिनस्य परिपृच्छति देवराजो
चरमाण प्रज्ञ कथ युज्यति बोधिसत्त्वो ।
अणुमात्र यो न खलु युज्यति स्कन्धधातौ
यो एव युज्यति ( स युज्यति ) बोधिसत्त्वः ॥ १ ॥

८९. चिरयानप्रस्थितु स वेदयितव्य (8a) सत्त्वो
बहुबुद्धकोटिनयुतेहि कृताधिकारो ।
यो श्रुत्व धर्मि इमि निर्मितमायकल्पा
न च काङ्क्षते अयु प्रयुज्यति शिक्षमाणः ॥ २ ॥

९०. कान्तारमार्गि पुरुषो बहु( भी ) जनेहि
गोपाल सीम वनसपद पश्यते यो ।
आश्वासप्राप्त भवती न च तस्य[1] त्रासो
अभ्याश ग्रामनगराणि[2] इमे निमित्ता. ॥ ३ ॥

९१. एमेव प्रज्ञवरपारमिता जिनाना
शृणु तात यो लभति बोधि गवेपमाणः ।
आश्वासप्राप्त भवती न च तस्य त्रासो
नार्हन्तभूमि न पि प्रत्ययबुद्धभूमी ॥ ४ ॥

९२. पुरुषो हि सागरजल व्रजि पश्यनाय
सचि पश्यते द्रुमवनस्पतिशैलराजम् ।
अथवा न पश्यति निमित्त निकाङ्क्ष भोति
अ( भ्याश )तो महसमुद्र न सोऽतिदूरे ॥ ५ ॥

९३. एमेव बोधिवरप्रस्थितु वेदितव्यो
श्रणमाण प्रज्ञ इमि पारमिता जिनानाम् ।
यद्यापि समुख न व्याकृतु नायकेनो
तथपि स्पृशिष्यति नचिरेण हु बुद्धबोधिम् ॥ ६ ॥

९४. सुवसन्ति कालि पतिते तृणपत्रशाखा
नचिरेण पत्रफलपुष्प समागमन्ति ।
प्रज्ञाय पारमित यस्यिमु हस्तप्राप्ता
नचिरेण बोधिवर प्राप्स्यति नायकानाम् ॥ ७ ॥

९५. यथ इस्त्रि गुर्विणि य चेष्टति वेदनाभि
ज्ञातव्यु कालु अयमस्य प्रजायनाय ।

१ T चौरत्रासो २ O °नगराणि

तथ बोधिसत्त्व श्रुणमाणु जिनान प्रज्ञा
रति छन्दु वीक्षति स्पृशिष्यति बोधि शीघ्रम् ॥ ८ ॥

९६. चरमाणु प्रज्ञवरपारमिताय योगी
न च रूपवृद्धि न च (*8b*) पश्यति पारिहाणिम् ।
धर्मा अधर्म इमु पश्यति धर्मधातु
न च निर्वृतिं स्पृशति सो विहराति प्रज्ञाम् ॥ ९ ॥

९७. चरमाणु यो न इह कल्पयि बुद्धधर्मां
बल ऋद्धिपाद न च कल्पयि बोधि शान्ताम् ।
अविकल्पकल्पविगतो अधिष्ठानचारी
एषा स प्रज्ञवरपारमिताय चर्या ॥ १० ॥

भगवत्यां रत्नगुणसचयगाथाया धारणीगुणपरिवर्तो नाम दशमः ॥



## ११

९८. बुद्ध सुभूति परिपृच्छति वादिचन्द्रं
क्यन्तन्तरायु[१] भविष्यन्ति गुणे रतानाम् ।
बहु अन्तरायु भविष्यन्ति भणाति शास्ता
ततु अल्पमात्र परिकीर्तयिष्यामि तावत् ॥ १ ॥

९९. प्रतिभान नेक विविधानि उपपद्यिष्यन्ति
लिखमान प्रज्ञ इमु पारमिता जिनानाम् ।
युत शीघ्र विद्युत यथा परिहायिष्यन्ति
अकरित्व[२] अर्थ जगती इमु मारकर्म ॥ २ ॥

१००. काङ्क्षा च केषचि भविष्यति भापमाणे
न ममात्र नाम परिकीर्तितु नायकेन ।
न च जाति भूमि परिकीर्तितु नापि गोत्र
न च सो श्रुणिष्यति क्षिपिष्यति मारकर्म ॥ ३ ॥

१०१. एवं त मूलमपहाय अजानमानो
शाखापलाश परिएषयिष्यन्ति मूढाः ।
हस्तिं लभित्व यथ हस्तिपद गवेषे
तथ प्रज्ञपारमित श्रुत्व सूत्रान्त एषेत् ॥ ४ ॥

---

१ O किं अन्तरायु. २ The Baroda Ms repeats wrongly from अकरित्व upto st, 105.

१०२. यथ भोजनं शतरसं लभियान कश्चित्
मार्गेषु षष्टिकु लभित्व स भोजनाग्र्यम्।
तथ बोधिसत्त्व इम पारमिता लभित्वा
(अ)र्हन्तभूमि(त) गवे(9a)षयिष्यन्ति बोधिम्॥ ५॥

१०३. सत्कारकाम भविष्यन्ति च लाभकामाः
सापेक्षचित्त कुल[1]संस्तवसंप्रयुक्ताः।
छोरित्व धर्म करिष्यन्ति अधर्मकार्यं
पथ हित्व उत्पथगता इम मारकर्म॥ ६॥

१०४. ये चापि तस्मि समये इमु धर्म श्रेष्ठ
श्रुणनाय छन्दिक उत्पादयिष्यन्ति श्रद्धाम्।
ते धर्मभाणक विदित्वन कार्ययुक्तं
प्रेमापनीत गमिष्यन्ति सुदुर्मनांश्च॥ ७॥

१०५. इमि मारकर्म भविष्यन्ति य तस्मि काले
अन्ये च नेक विविधा बहु अन्तराया।
येही समाकुलिकृता बहु भिक्षु तत्र
प्रज्ञाय पारमित एतु न धारयन्ति॥ ८॥

१०६. ये ते भवन्ति रतना यै[2] अनर्घप्राप्ता
ते[3] दुर्लभा बहुप्रत्यर्थिक नित्यकालम्।
एमेव प्रज्ञवरपारमिता जिनाना
दुर्लभु धर्मरतनं बहुपद्रवं च॥ ९॥

१०७. नवयानप्रस्थित स सत्त्व परीत्तबुद्धिः
य इमं दुर्लभु धर्मरतनं परापुणन्ति।
मारोऽत्र उत्सुकु भविष्यति अन्तराये
बुद्धा दशद्दिशि परिग्रहसप्रयुक्ताः॥ १०॥

भगवत्या रत्नगुणसचयगाथाया मारकर्मपरिवर्तो नामैकादशमः॥



१ B O कुलसभव॰ २ O हि ३ O दुर्लभ ते.

१२

१०८. मात्राय पुत्र बहु सन्ति गिलानि काये
ते सर्वि दुर्मनस तत्र प्रयुज्ययेयुः।
एमेव बुद्ध (पि) दशद्दिशि लोकधातौ
इम प्रज्ञपारमित मात्र समन्वाहरन्ति ॥ १ ॥
१०९. येऽतीत येऽपि च दशद्दिशि लोकनाथा
इतु ते प्रसूत भविष्यन्त्यनागताश्च।
लोकं(स्य) दर्शिक जनेत्रि जिनान माता
परसत्त्वचित्तचरितान निदर्शिता(का) च ॥ २ ॥
११०. लोकस्य या तथत या तथतार्हताना
प्रत्येकबुद्धतथता तथता जिनानाम्।
एकैव[1] भावविगता तथता अनन्या
प्रज्ञाय पारमित बुद्ध तथागतेन ॥ ३ ॥
१११. तिष्ठन्तु लोकविदुनां[2] परिनिर्वृतानां
[स्थितै[3] एष धर्मतनियाम शून्यधर्मा।
तां बोधिसत्त्व तथतामनुबुद्धयन्ति
तस्मा हु बुद्ध कृत नाम तथागतेभिः ॥ ४ ॥
११२. अयु गोचरो दशबलान विनायकाना]
प्रज्ञाय पारमित रम्यवनाश्रितानाम्।
दुखिताश्च सत्त्व त्रिअपाय (10a) समुद्धरन्ति
न पि सत्त्वसञ्ज्ञ अपि तेषु कदाचि भोति ॥ ५ ॥
११३. सिंहो यथैव गिरिकन्दरि निश्रयित्वा
नदते अछम्भि मृग क्षुद्रक त्रासयन्तो।
तथ प्रज्ञपारमितनिश्रय नराण सिंहो
नदते अछम्भि पृथुतीर्थिक त्रासयन्तो ॥ ६ ॥
११४. आकाशनिश्रित यथैव हि सूर्य[रश्मि]
तापेतिमा धरणि दर्शयते च रूपम्।
तथ प्रज्ञपारमितनिश्रित धर्मराजो
तापेति तृष्णनदि धर्म निदर्शयाति ॥ ७ ॥
११५. रूपस्य दर्शनु अदर्शनु वेदनाये
सञ्ज्ञाय दर्शनु अदर्शनु चेतनाये।

१ B एकैकभावविगता, O एकैकभावितथता. २ O लोकविदु वा परिनिर्वृत वा. ३ B reads 4 *b–d* and 5 *a* after 6 *a*.

विज्ञानचित्तमनुदर्शनु यत्र नास्ति
अय धर्मदर्शनु निदिष्टु तथागतेन ॥ ८ ॥

११६. आकाश दृष्टु इति सत्त्व प्रव्याहरन्ति
नभदर्शन कुतु विमृष्यथ एतमर्थम् ।
तथ धर्मदर्शनु निदिष्ट तथागतेन
न हि दर्शन भणितु शक्य निदर्शनेन ॥ ९ ॥

भगवत्यां रत्नगुणसचयगाथाया लोकसदर्शनपरिवर्तो नाम द्वादशमः ॥

## १३

११७. यो एव पश्यति स पश्यति सर्वधर्मान्
सर्वानमात्यकिरिया ति उपेक्ष्य राजा ।
यावन्ति बुद्धक्रिय धर्मत श्रावकाणां
प्रज्ञाय पारमित सर्व करोति तानि ॥ १ ॥

११८. न च राज ग्राम व्रजते न च राज्यराष्ट्रान्
सर्व च आददति सो विषयातु आयम् ।
न च बोधिसत्त्व च(10b)लते कचि धर्मतायां
सर्वाश्च आददति ये गुण बुद्धधर्मे ॥ २ ॥

भगवत्यां रत्नगुणसंचयगाथायामचिन्त्यपरिवर्तो नाम त्रयोदशमः ॥

## १४

११९. यस्यास्ति श्रद्ध सुगते दृढ बोधिसत्त्वो
वरप्रज्ञपारमितआशयसंप्रयोगो ।
अतिक्रम्य भूमिद्वय श्रावकप्रत्ययानां
लघु प्राप्स्यते अनभिभू(तु) जिनान बोधिम् ॥ १ ॥

१२०. सामुद्रियाय यथ नावि प्रलुप्तिकाये
भृतक मनुष्य तृणकाष्ठमगृह्णमानो ।
विलयं प्रयाति जलमध्य अप्राप्ततीरो
यो गृह्णते व्रजति पारस्थल प्रयाति ॥ २ ॥

१२१. एमेव श्रद्धसगतो य प्रसादप्राप्तो
प्रज्ञाय पारमित मात्र विवर्जयन्ति ।
संसारसागर तदा सद ससरन्ति
जातीजरामरणशोकतरंगभङ्गे ॥ ३ ॥

१२२. ये ते भवन्ति वरप्रज्ञपरिगृहीता
भावस्वभावकुशला परमार्थदर्शी ।
ते पुण्यज्ञानधनसंभृतयानपात्राः
परमाद्भुता सुगतबोधि स्पृशन्ति शीघ्रम् ॥ ४ ॥

१२३. घटके अपक्कि[1] यथ वारि वहेय काचित्
ज्ञातव्यु क्षिप्र अयु भेत्स्यति दुर्बलत्वात् ।
परिपक्कि वारि घटके वहमानु मार्गे
न च भेदनाद्भयमुपैति च स्वस्ति गेहम् ॥ ५ ॥

१२४. किंचापि श्रद्धबहुलो सिय बोधिसत्त्वो
प्रज्ञाविहीन विलयं लघु प्रापुणाति ।
तं चैव श्रद्ध परिगृह्यमान प्रज्ञा
अतिक्रम्य बोधिद्वये[2] प्राप्स्यति अग्रबोधिम् ॥ ६ ॥

१२५. नावा यथा अपरिकर्मकृता समुद्रे
विलयमुपैति सधना सह वाणिजेभिः ।
(11a) सा चैव नाव परिकर्मकृता सुयुक्ता
न च भिद्यते धनसमग्रमुपैति तीरम् ॥ ७ ॥

१२६. एमेव श्रद्धपरिभावितु बोधिसत्त्वो
प्रज्ञाविहीनु लघु बोधिमुपैति हानिम् ।
सो चैव प्रज्ञवरपारमिता[3]सुयुक्तो-
ऽक्षतोऽनुपाहतु स्पृशाति जिनान बोधिम् ॥ ८ ॥

१२७. पुरुषो हि जीर्ण दुखितो शतविंशवर्षो
किंचापि उत्थितु स्वयं न प्रभोति गन्तुम् ।
सो वामदक्षिणद्वये पुरुषे गृहीते
पतनाद्भय न भवते व्रजते सुखेन ॥ ९ ॥

१२८. एमेव प्रज्ञ इह दुर्बलु बोधिसत्त्वो
किंचापि प्रस्थिहति भज्यति अन्तरेण ।
सो वा उपायबलप्रज्ञपरिगृहीतो
न च भज्यते स्पृशति बोधि नरर्षभाणाम् ॥ १० ॥

भगवत्या रत्नगुणसचयगाथायामौपम्यपरिवर्तो नाम चतुर्दशमः ॥

---

१ BO अपक्षि. २ O भूमिद्वय. ३ T °वर°

१९

१२९. यो आदिकर्म स्थितु भूमिय बोधिसत्त्वो[1]
अध्याशयेन वर प्रस्थित बुद्धबोधिम्।
तेही सुशिष्यगुरुगौरवसप्रयुक्तो
कल्याणमित्र सद सेवयितव्य विज्ञैः ॥ १ ॥

१३० किं कारण ततु गुणागमु पण्डिताना
प्रज्ञाय पारमित ते अनुशासयन्ति।
एवं जिनो भणति सर्वगुणाग्रधारी
कल्याणमित्रमुपनिश्रित बुद्धधर्माः ॥ २ ॥

१३१. दानं च शीलमपि क्षान्ति तथैव वीर्य
ध्यानानि प्रज्ञ परिणामयितव्य बोधौ।
न च बोधिस्कन्ध विमृशित्व परामृशेया
ये आदिकर्मिक न देशयितव्य एवम्॥ ३ ॥

१३२. एव चरन्त गुणसागर वादिचन्द्राः
त्राणा भवन्ति जगती शरणा च लेना।
गति बुद्धि द्वीप (11*b*) परिणायक अर्थकामा.
प्रद्योत उल्क वरधर्मकथी अक्षोभ्याः ॥ ४ ॥

१३३ संनाह्य दुष्करु महायशु संनहन्ती
न च स्कन्धधातु न च आयतनै. सनद्धाः।
त्रिभि यानसज्ञविगता अपरिगृहीता
अविवर्तिका अचलिताश्च अकोप्यधर्माः ॥ ५ ॥

१३४. ते एव धर्मसमुदागत निष्प्रपञ्चा
काङ्क्षाविलेखविमतीविगतार्थयुक्ता[1]।
प्रज्ञाय पारमित श्रुत्व न सीदयन्ति
अपरप्रणेय अविवर्तिय वेदितव्या. ॥ ६ ॥

१३५. गम्भीर धर्म अयु दुर्दृशु नायकाना
न च केनचीदधिगतो न च प्रापुणन्ति।
एतार्थु बोधिमधिगम्य हितानुकम्पी
अल्पोत्सुको क इमु ज्ञास्यति सत्त्वकायो ॥ ७ ॥

---

१ T °समन्वागत

१३६. सत्त्वश्च आलयरतो विषयाभिलाषी
स्थित अग्रहे अबुध यो महअन्धभूतो ।
धर्मो अनालयु अनाग्रहु प्रापितव्यो
लोकेन सार्ध अयु विग्रहु प्रादुभूतो ॥ ८ ॥

भगवत्या रत्नगुणसचयगाथाया देवपरिवर्तो नाम पञ्चदशमः ॥



## १६

१३७. आकाशधातु पुरिमादिशि दक्षिणाया
तथ पश्चिमोत्तरदिशाय अनन्तपारा ।
उपराधराय दशद्दिशि यावदस्ति
नानात्वता न भवते न विशेषप्राप्ता ॥ १ ॥

१३८. अतिक्रान्त या तथत या तथना अप्राप्ता
प्रत्युत्पन्न या तथन या तथतार्हतानाम् ।
या सर्वधर्मतथता तथतार्हताना
सर्वेष धर्मतथता न विशेषप्राप्ता ॥ २ ॥

१३९ यो बोधिसत्त्व इमि इच्छति प्रापुणेतु
नानात्वधर्मविगता सुगतान बोधिम् ।
प्रज्ञाय पारमित युज्यतु[1] याय युक्तो
(12a) विन प्रज्ञ नास्त्यधिगमो नरनायकानाम् ॥ ३ ॥

१४०. पक्षिस्य योजनशत महतात्मभावो
पञ्चाशता पि अबलोभयक्षीणपक्षो ।
सो त्रायत्रिंशभवनादिषु जम्बुद्वीपे
आत्मानमोसरियि त विलेय व्रजेय्या ॥ ४ ॥

१४१. यद्यापि पञ्च इम पारमिता जिनाना
बहुकल्पकोटिनियुता समुदानयेय्या ।
प्रणिधीननन्तविपुला सद सेव्यै[3] लोके
अनुपाय प्रज्ञविकला पैरि श्रावकत्वे ॥ ५ ॥

१४२. निर्यायनाय य इच्छति बुद्धज्ञाने
समचित्त सर्वजगती पितृमातृसञ्ज्ञा ।

---

१ O पाययुक्तो २ O तद्विलय. ३ O सव्य. ४ O पति

हितचित्त मैत्रमन एव पराक्रमेय्या
अखिलार्जवो मृदुगिराय पराक्रमेय्या ॥ ६ ॥

भगवत्यां रत्नगुणसंचयगाथाया तथतापरिवर्तो नाम षोडशमः ॥



## १७

१४३. स्थविरो सुभूति परिपृच्छति लोकनाथ
अरणाय लिङ्ग भणही गुणसागराणाम्।
अविवर्तिया[1] यथ भवन्ति महानुभावा
ता व्याकुरुष्व जिनगुणान प्रदेशमात्रम् ॥ १ ॥

१४४. नानात्वसंज्ञविगता गिर युक्तभाणी
न च अन्य ते श्रमण ब्राह्मण आश्रयन्ति।
त्रियपायवर्जित विदू सदकालि भोन्ति
दशभिश्च ते कुशलकर्मपथेभि[2] युक्ता ॥ २ ॥

१४५. धर्मं निरामिषु जगस्यनुशासयन्ति
एकान्तधर्मनियता[3] सद स्निग्धवाक्याः।
स्थितिचंक्रम शयनिषद्य सुसप्रजाना
युगमात्रप्रेक्षिण व्रजन्त्यभ्रान्तचिन्ता ॥ ३ ॥

१४६. शुचिशौचअम्बरधरा त्रिवि(*12b*)वेकशुद्धा
न च लाभकाम वृषभा सद धर्मकामाः।
मारस्यतीतविषया अपरप्रणेया
चतुध्यानध्यायि न च निश्रित तत्र ध्याने ॥ ४ ॥

१४७. न च कीर्तिकाम न च क्रोधपरीतचित्ता
गृहिभूत नित्य अनध्योषित सर्व वस्तुं।
न च जीविकाविषय[4]भोग गवेषयन्ति
अभिचारमन्त्र न च इस्त्रिप्रयोगमन्त्राः ॥ ५ ॥

१४८. न च आदिशन्ति पुरुषै स्त्रिय इच्छकर्मां
प्रविविक्त प्रज्ञवरपारमिताभियुक्ता।
कलहाविवादविगता दृढमैत्रचित्ता
सर्वज्ञकाम सद शासनि निम्नचित्ताः ॥ ६ ॥

---

१ O अविवर्तियो. २ O °पथेऽभियुक्ता. ३ T °निरता. ४ T °विषम°

१४९. प्रत्यन्तम्लेच्छजनवर्जितअन्तदेशाः
खकभूमि काङ्क्षविगताः सद मेरुकल्पाः ।
धर्मार्थ जीवित त्यजन्ति प्रयुक्तयोगा
अविवर्तियान इमि लिङ्ग प्रजानितव्या ॥ ७ ॥

भगवत्यां रत्नगुणसचयगाथायामविनिवर्तनीयलिङ्गाकारपरिवर्तो नाम सप्तदशमः ॥

---

## १८

१५० गम्भीर रूप अपि वेदन चेतना च
विज्ञान सज्ञ प्रकृती अनिमित्तशान्ता ।
काण्डेन गाध यथ सागरि एषमाणो
प्रज्ञाय स्कन्ध विमृषित्व अलब्धगाधा ॥ १ ॥

१५१. यो बोधिसत्त्व इमु बुध्यति एव धर्मा
गम्भीरयानपरमार्थनिरूपलेपान् ।
यस्मिन् न स्कन्ध न पि आयतन न धातु
किं वा स्वपुण्यसमुदागमु किंचि तस्य ॥ २ ॥

१५२. यथ रागधर्मचरित' पुरुष. (138) स्त्रियाये
सकेत कृत्व अलभन्तु विवर्तयेया ।
यावन्ति चित्तचरिता दिवसेन तस्य
तावन्त कल्प अनुबुध्यति बोधिसत्त्वो ॥ ३ ॥

१५३. यो बोधिसत्त्व बहुकल्पसहस्रकोटयो
दान ददेयु विमल तथ शील रक्षे ।
यश्चैव प्रज्ञवरपारमिताप्रयुक्तो
धर्मं भणेय कल पुण्य न दानशीले ॥ ४ ॥

१५४ यो बोधिसत्त्व वरप्रज्ञ विभावयन्तो
तत उत्थितो कथयि धर्म निरूपलेपम् ।
त चापि नामयि जगार्थनिदान बोधौ
नास्ति त्रिलोक शुभ तेन सम भवेया ॥ ५ ॥

१५५. त चैव पुण्य पुन ख्यायति रिक्तमेव
तथ शून्य तुच्छ वशिकं च असारक च ।
एव चरन्तु चरती सुगतान प्रज्ञा
चरमाणु पुण्यु परिगृह्णति अप्रमेयम् ॥ ६ ॥

१५६. अभिलापमात्र इमं[1] जानति सर्वधर्मां
बुद्धेन देशित प्रयुक्त प्रकाशितांश्च ।
कल्पान कोटिनयुता बहु भाषमाणो[2]
न च क्षीयते न च विवर्धति धर्मधातुः ॥ ७ ॥

१५७. ये चापि पञ्च इमि पारमिता जिनाना-
मेतेऽपि धर्म परिकीर्तित नाममात्राः ।
परिणामयाति न च मन्यति बोधिसत्त्वो
न च हीयते स्पृशति उत्तमबुद्धबोधिम् ॥ ८ ॥

भगवत्या रत्नगुणसचयगाथाया शून्यतापरिवर्तो नामाष्टादशमः ॥



## १९

१५८. तैलस्य वर्ति ज्वलिता प्रथमे निपाते
न च दग्ध वर्ति असता न विना य दग्धा ।
न हि अर्चि पश्चिमनिपात स वर्ति दग्धा
असतां[3] पि पश्चिम न दह्यति दीपवर्ति ॥ १ ॥

१५९. प्रथमेव (*13b*) चित्त स्पृशती न च अग्रबोधि-
मसता न तस्य स्पृशतां पुन शक्य भोन्ति ।
न च चित्त पश्चिम शिवामनुप्रापुणाति
असता न तस्य पुन प्रापॅणनाय[4] शक्यम् ॥ २ ॥

१६०. बीजातु स्तम्ब फल पुष्प समागमन्ति
सो वा[5] निरुद्ध असतो न हि तस्य वृक्षो ।
एमेव चित्त प्रथम तु निदान बोधेः
सो वा निरुद्ध असतो न हि तस्य बोधि· ॥ ३ ॥

१६१. बीज प्रतीत्य च भवेद्यव[6]शालिकादे-
स्तत्फलं न च तदस्ति न चापि नास्ति ।
उत्पत्तितो भवति बोधिरियं जिनानां
भावस्वभावविगता भवतीह माया ॥ ४ ॥

१ O इमि   २ O भाष्यमाणु   ३ T असतार्चि   ४ O प्रापुणनाय   ५ O व निरुद्ध
६ B O यव for यव°.

१६२. उदकबिन्दु कुम्भ परिपूर्यति स्तोकस्तोक
प्रथमे निपाति अनुपूर्व स पश्चिमेन।
एमेव चित्त प्रथम वरबोधिहेतु-
रनुपूर्व शुक्लगुणपूर्ण भवन्ति बुद्धाः ॥ ५ ॥

१६३. शून्यानिमित्तप्रणिधिं चरमाणु धर्मा
न च निर्वृतिं स्पृशति नो च निमित्तचारी।
यथ नाविको कुशल गच्छति आरपार-
मुभयान्ति अस्थितु न तिष्ठति अर्णवेस्मिन् ॥ ६ ॥

१६४. एवं चरन्तु न च मन्यति बोधिसत्त्वो
अहु व्याकृतो दशबलेहि स्पृशेय बोधिम्।
न च त्रासु बोधि भवते न इहास्ति किंचि-
देव चरन्तु चरती सुगतान प्रज्ञाम् ॥ ७ ॥

१६५. कान्तारमार्गि दुरभिक्षि सव्याधि लोकां
पश्यित्व नास्ति भय उत्तरि सनहन्ते।
अपरान्तकोटि सद युक्त प्रजानमानो
अणुमात्र खेद मनसो न उपादियाति ॥ ८ ॥

भगवत्यां रत्नगुणसचयगाथाया ग(14a)ङ्गदेवाभगिनीपरिवर्तो नामैकूनविंशतिमः ॥



## २०

१६६. पुन बोधिसत्त्व चरमाणु जिनान प्रज्ञा
अनुपाद स्कन्ध इमि जानति आदिशून्यान्।
असमाहितो करुण प्रेक्षति सत्त्वधातु-
मत्रान्तरे न परिहायति बुद्धधर्मान् ॥ १ ॥

१६७. पुरुषो यथा कुशल सर्वगुणैरुपेतो
बलवान् दुधर्षु कृतयोग्य कलाविधिज्ञो।
ईष्वस्त्रपारमिगतो पृथुशिल्पयुक्तो
मायाविधिज्ञपरमो जगदर्थकामो ॥ २ ॥

१ O उपादयन्ति. २ O अत्रान्तरेण ३ O इष्वस्त्रपारमिगतो पृथुशिल्प°

१६८. माता पिता च परिगृह्य सपुत्रदारं
कान्तारमार्गि प्रतिपद्य बहूअमित्रो।
सो निर्मिणित्व पुरुषान् बहु शूरवीरान्
क्षेमेण गत्व पुन गेहमुपागमेय्या ॥ ३ ॥

१६९. एमेव यस्मि समये विदु बोधिसत्त्वो
महमैत्रि सर्वि उपबन्धति सत्त्वधातौ।
चतुरो स मार अतिक्रम्य द्वये च भूमि-
मस्मिन् समाधि स्थितु नो च स्पृशाति बोधिम् ॥ ४ ॥

१७०. आकाशनिश्रित समीरण आपस्कन्धो
तं[1] हि निश्रिता इह महापृथिवी जगच्च।
सत्त्वान कर्मउपभोगनिदानमेव
आकाशस्थानु कुतु चिन्तयि एतमर्थम् ॥ ५ ॥

१७१. एमेव शून्यतप्रतिष्ठितु एपं[2] सत्त्वो
जगति क्रिया विविध दर्शयते विचित्राम्।
सत्त्वान ज्ञानप्रणिधानअधिष्ठानमेव[3]
न च निर्वृतिं स्पृशति शून्यत नास्ति स्थानम् ॥ ६ ॥

१७२. यस्मिंश्च कालि विदु पण्डितु बोधिसत्त्वो
चरती[4] इमां प्रवर शून्य समाधि शान्ताम्।
अत्रान्तरे न च निमित्त प्रभावितव्यो
न च आनिमित्तस्थितु शान्त प्र (14b) शान्तचारी ॥ ७ ॥

१७३. पक्षिस्य नास्ति पदु गच्छत अन्तरीक्षे
नो चापि तत्र स्थितु नो च पताति भूमौ।
तथ बोधिसत्त्व चरमाणु विमोक्षद्वारे
न च निर्वृतिं स्पृशति नो च निमित्तचारी ॥ ८ ॥

१७४. इष्वस्त्रशिक्षित यथा पुरुषोध काण्ड
क्षेपित्व अन्य पुन काण्ड परस्परेण[5]।
पतनाय तस्य पुरिमस्य न देय भूमि-
माकाङ्क्षमाण पुरुषस्य पतेय काण्डम् ॥ ९ ॥

१७५. एमेव प्रज्ञवरपारमितां चरन्तो
प्रज्ञा उपाय बल ऋद्धि विचारमाणो।

---

१ B O न २ O बोधिमत्त्वो. ३ B O बलान सेवं ४ O चरतीति मा ५ O परपरेण.

तावन्न तां परमशून्यत प्रापुणोति
यावन्न ते कुशलमूल भवन्ति पूर्णा. ॥ १० ॥

१७६. भिक्षू[1] यथा परमऋद्धिबलेनुपेतो
गगने स्थितो यमक कुर्वति प्रातिहार्यां[2] ।
गतिचंक्रम शयनिपद्य निदर्शयाति
न[3] निवर्तते न पि च खिद्यति यात्र तत्र ॥ ११ ॥

१७७. एमेव शून्यतस्थितो विदु बोधिसत्त्वो
ज्ञानर्द्धिपारमिगतो अनिकेतचारी ।
विविधा क्रियां जगति दर्शयते अनन्ता
न च भज्यती न पि च खिद्यति कल्पकोटी ॥ १२ ॥

१७८. पुरुपा यथा महप्रपाति स्थिहित्व केचि-
दुभि पाणि छत्रद्वय गृह्य उपक्षयेय्या ।
ओकालि[4] वायुरवसृज्य महाप्रपाते
नो च प्रपात पतियाति[5] न याव तत्र ॥ १३ ॥

१७९. एमेव स्थित्व करुणां विदु बोधिसत्त्वो
प्रज्ञाउपायद्वयछत्रपरिगृहीतो ।
शून्यानिमित्तप्रणिधिं विमृषाति धर्मान्
न च निर्वृतिं स्पृशति पश्यति धर्मचारी ॥ १४ ॥

१८०. रतनार्थि(15a)को यथ व्रजित्वन रत्नद्वीपं
लब्ध्वान[6] रत्न पुन गेहमुपागमेय्या ।
किंचापि तत्र सुख जीवति सार्थवाहो
अपि दुःखितो मनसि भोति स जातिसंघो ॥ १५ ॥

१८१. एमेव शून्यत व्रजित्वन रत्नद्वीप
लब्ध्वान[6] ध्यान बल इन्द्रिय बोधिसत्त्वो ।
किंचापि निर्वृति स्पृशेदभिनन्दमानो
अपि सर्वसत्त्व दुखिता मनसी भवन्ति ॥ १६ ॥

१८२. अभ्यन्तरे य नगरे निगमे च ग्रामे
कामार्थ वाणिजु यथा गमि जाननाय ।
नो चापि तत्र स्थिहती न च रत्नद्वीपे
न च गेह मार्गि कुशलो पुन भोति विज्ञो ॥ १७ ॥

---

१ O भिक्षुर्यथा  २ O प्रातिहार्यं  ३ O om. न  ४ T आकाश  ५ O परियाति
६ O लब्धान

१८३. तथ ज्ञान श्रावकविमुक्तिसप्रत्ययाना
सर्वत्र भोति कुशलो विदु बोधिसत्त्वो।
नो चापि तत्र स्थिहते न च बुद्धज्ञाने
न च संस्कृते भवति मार्गविदू विधिज्ञो ॥ १८ ॥

१८४. य कालि मैत्रि जगती अनुबन्धयित्वा
शून्यानिमित्तप्रणिधी चरते समाधिम्।
अस्थानमेव यदि निर्वृति प्रापुणेया
अथवापि संस्कृत[1] स प्रज्ञपनाय शक्यः ॥ १९ ॥

१८५. यथ निर्मितो पुरुष नो वै[2] अदृश्यकायो
नामेन वा पुन स प्रज्ञपनाय शक्यः।
तथ बोधिसत्त्व चरमाणु विमोक्षद्वारं
नामेन वा पुन स प्रज्ञपनाय शक्यः ॥ २० ॥

१८६. यदि पृच्छमान चरि इन्द्रिय बोधिसत्त्वो
गम्भीरधर्मपरिदीपन नो करोति।
शून्यानिमित्त अविवर्तियबोधिधर्मा
न च शोचती[3] न च स व्याकृतु वेदितव्यो ॥ २१ ॥

१८७. अर्हन्तभूमिमपि प्रत्ययबुद्धभूमौ
त्रैधातुक न स्पृशते[4] (15b) सुपिनान्तरेऽपि।
बुद्धांश्च पश्यति कथेति जिनस्य[5] धर्मं
अविवर्तियेति[6] अयु व्याकृतु वेदितव्यो ॥ २२ ॥

१८८ त्रिअपायप्राप्तु सुपिनस्मि विदित्व सत्त्वान्
प्रणिधेति तत्क्षण अपाय उच्छोषयेयम्।
सत्याधिष्ठानि प्रशमेति स[7] चाग्निरकन्ध-
मविवर्तियेति अयु व्याकृतु वेदितव्यो ॥ २३ ॥

१८९. भूतग्रहा विविध व्याधय मर्त्यलोके
सत्याधिष्ठानि प्रशमेति हितानुकम्पी।
न च तेन मन्यनुपपद्यति नापि मान-
मविवर्तियेति अयु व्याकृतु वेदितव्यः ॥ २४ ॥

भगवत्या रत्नगुणसचयगाथायामुपायकौशल्यमीमासापरिवर्तो नाम विंशतितमः ॥



---

१ O सस्कृति २ O नैव ३ O सूचती ४ T स्पृहते ५ O जगस्य ६ O आविवर्तियेभि
७ O सत्त्व. ८ O च अग्नि°

२१

१९०. अथवास्य मन्यनुपपद्यति व्याकृतोऽस्मि
सत्याधिष्ठान विविधानि समृद्ध्ययन्ति ।
यदि अन्य व्याकृतकु मन्यति बोधिसत्त्वो
ज्ञातव्य मन्यनस्थितो अयु अल्पबुद्धि ॥ १ ॥

१९१. नामाधिष्ठान पुन मार उपागमित्वा
एव वदिष्यति[1] इद तव नामधेयम् ।
मातापिताय अनुसप्तमुपैति वशो
बुद्धो यदा भवि इद तव नामधेयम् ॥ २ ॥

१९२. धुतवृत्त यादृशु स गेष्णति युक्तयोगी
पूर्वं[2] पि तुभ्य इमि आसि गुणोवरूपा ।
यो एव श्रुत्व अभिमन्यति बोधिसत्त्वो
ज्ञातव्यु मारु पर्युत्थितु अल्पबुद्धि. ॥ ३ ॥

१९३. प्रविविक्त ग्रामनगरे गिरिकन्दराणि
रण्या विविक्त वनप्रस्थ निषेवमाणो ।
आत्मानुकर्षि पर पसयि बोधिसत्त्वो
ज्ञातव्यु मारु पर्युत्थि(160)तु अल्पबुद्धिः ॥ ४ ॥

१९४. ग्रामे च राष्ट्रि निगमे विहरन्ति नित्य
रहप्रत्ययानि स्पृहता जनयन्ति तत्र ।
अन्यत्र सत्त्वपरिपाचनबोधियुक्ता
एषो विवेकु कथितो सुगतात्मजानाम् ॥ ५ ॥

१९५. यो पञ्चयोजनशते गिरिकन्दरेषु
व्यालावकीर्णि निवसेद्बहुवर्षकोटी ।
नो चा विवेकु इमु जानति बोधिसत्त्वो
सकीर्ण सो विहरते अधिमानप्राप्तः ॥ ६ ॥

१९६. सो चंक्रमार्थ[3]मभियुक्तकबोधिसत्त्वान्
बलध्यानइन्द्रियविमोक्षसमाधिप्राप्तान् ।
अभिमन्यते न इमि रण्यविवेकचारी
नै[4] विवेकगोचरु अय हि जिनेन उक्तो ॥ ७ ॥

१ O विदिश्यति २ O पूर्वेऽपि ३ O सो च जगार्थं ४ T अयु मारगोचरु स्थितो ति.

१९७. ग्रामान्ति यो विहरते अथवा अरण्ये
द्वययानचित्तविगतो नियतोऽग्रबोधिम् ।
एषो विवेकु जगदर्थभिप्रस्थिताना
आत्मा क्षिणोति तुलयेय स बोधिसत्त्वो ॥ ८ ॥

भगवत्या रत्नगुणसचयगाथाया मारकर्मपरिवर्तो नामैकविंशतितमः ।

---

## २२

१९८. तस्मा हु मातु निहनित्वन पण्डितेन
गुरुआशयेन वरबोधि गवेषमाण.[1] ।
वैद्यो व आतुर[2] स्वरोगचिकित्सनार्थं
कल्याणमित्र भजितव्य अतन्द्रितेन ॥ १ ॥

१९९. बुद्धा य बोधिवरप्रस्थित बोधिसत्त्वा
कल्याणमित्र इमि पारमिता निदिष्टा' ।
ते चानुशासक इय प्रतिपत्तिभूमी
दुवि कारणेन अनुबुध्यति बुद्धबोधिम् ॥ २ ॥

२००. अतिक्रान्तनागत जिना स्थित ये दिशासु
सर्वेषु मा(16b)र्गु अयु पारमिता अनन्यो ।
ओभास उल्क वरबोधयि प्रस्थितानां-
मालोक शास्त्रि इमि पारमिता प्रदिष्टाः ॥ ३ ॥

२०१. यथ प्रज्ञपारमित शून्यत लक्षणेन
तथलक्षणा य इमि जानति सर्वधर्मान् ।
शून्यानलक्षण प्रजानयमान धर्मान्
एव चरन्तु चरती सुगतान प्रज्ञाम् ॥ ४ ॥

२०२. आहारकाम परिकल्पयमान सत्त्वाः
ससारि [3]युक्तमनसः सद संसरन्ति ।
अहु मह्य धर्म उभि एति अभूत शून्या
आकाशगण्ठि अयु आत्मन बद्ध बाले ॥ ५ ॥

२०३. यथ शङ्कितेन विषसञ्ज्ञत अभ्युपैति
नो चास्य कोष्टगतु सो[4] विषु पाल्यते च ।

---

१ O °माणा २ B आतुरखरोण, O आतुरस्वरोण ३ O सक्तमनस ४ O सो पि for सो विषु

एमेव [1]बालुपगतो अहु मह्य एषो
अहसञ्ज्ञि जायि म्रियते च सदा अभूतो ॥ ६ ॥
२०४. यथ उद्ग्रहो तथ प्रकाशितु संकिलेशो
व्योदान उक्त अहु मह्य अनोपलब्धि ।
न हि अत्र कश्चि यो क्लिश्यति शुध्यते वा
प्रज्ञाय पारमित बुध्यति बोधिसत्त्वे ॥ ७ ॥
२०५ यावन्त सत्त्व निखिले इह जम्बुद्वीपे
ते सर्वि बोधिवरचित्त उपादयित्वा ।
दानं ददित्व बहुवर्षसहस्रकोटी
सर्व च नामयि जगो[2]र्थनिदान बोधौ ॥ ८ ॥
२०६. यश्चैव प्रज्ञवरपारमिताभियुक्तो
दिवस पि अन्तमश एकनुवर्तयेया ।
कलपुण्य सो न भवती इह दानस्कन्धो
तद(17b)तन्द्रितेन सद ओसरितव्य प्रज्ञा ॥ ९ ॥
२०७. चरमाणु प्रज्ञवरपारमिताय योगी
महती जनेति करुणा न च सत्त्वसञ्ज्ञा ।
तद भोन्ति सर्वजगती त्रिर्दु दक्षिणीया
सतत अमोघु परिभुञ्जति राष्ट्रपिण्डम् ॥ १० ॥
२०८. चिरबुद्धदेवमनुजान् त्रिअपायि सत्त्वान्
परिमोचितु य इह इच्छति बोधिसत्त्वो ।
पृथुमार्गु तीरु उपदर्शयि सत्त्वधातौ
प्रज्ञाय पारमित युक्त दिवा च रात्रौ ॥ ११ ॥
२०९. पुरुषो य अग्रु रतनस्य अलब्धपूर्वो
अपरस्मि कालि पुन लब्ध्वै[3] भवेय तुष्टो ।
स ह लब्ध्वै[3] नाशयि पुनोऽपि प्रमादभूतो
नाशित्व[4] दुःखि सतत रतनाभिकाङ्क्षी ॥ १२ ॥

---

1 In B, portion from बालुपगतो upto रतन व in 13c is wrongly read after 13b, probably on account of interchange of folios
2 O जनार्थं, 3 O लब्ध 4 O नशित्व.

२१०. एमेव बोधिवरप्रस्थित रत्नतुल्यो
प्रज्ञाय पारमित योगु न रिञ्चितव्यो ।
रतन व लब्ध्व[1] गृह्णमाणु अभिन्नसत्त्वो[2]
अनुबुद्धयाति त्वरितो शिवमभ्युपैति ॥ १२ ॥

भगवत्या रत्नगुणसंचयगाथायां कल्याणमित्रपरिवर्तो नाम द्वाविंशतितमः ॥

## २३

२११. उदयाति सूर्यु विगतां[3]श्च मरीचिमाला
विधमित्व सर्व तमसाकुलमन्धकारम् ।
अविभोन्ति सर्व [4]क्रिमिजोतिकप्राणभूतां
सर्वांश्च तारकगणानपि चन्द्रआभाम् ॥ १ ॥

२१२. एमेव प्रज्ञवरपारमिता चरन्तो
विधमित्व दृष्टिगहन विदु बोधिसत्त्वो ।
अभिभोन्ति सर्वजगती रहप्रत्ययाश्च
शून्यानिमित्तचरितो पृथु बोधिसत्त्वो ॥ २ ॥

२१३. यथ राजपुत्र धनदायकु अर्थकामो
सर्वेषु श्रेष्ठ भवते अभिगा[5](17a)मिनीये ।
स ह्येष एतरहि सत्त्व प्रमो[6]चयाति
प्रागेव राज्यस्थितु भेष्यति पट्टधारी ॥ ३ ॥

२१४. एमेव प्रज्ञचरितो विदु बोधिसत्त्वो
अमृतस्य दायकु प्रियो[7] मरुमानुषाणाम् ।
अयु एष एर्षति[8] हि सत्त्वसुखाभियुक्तो
प्रागेव याव स्थितु भेष्यति धर्मराजो ॥ ४ ॥

भगवत्या रत्नगुणसचयगाथाया शक्रपरिवर्तो नाम [9]त्रयोविशतितम. ॥

---

१ O लब्ध   २ O प्रभिन्न   ३ O विगताश्रु   ४ O कमि   ५ O अभिगामिनीय.   ६ T प्रमोदयाति   ७ O प्रियोऽमरु°   ८ एते हि   ९ Ms. seems in *sec m* to suggest that this is 22nd

२४

२१५. मारोऽपि तस्मि समये भवते सशल्यो
शोकातु दुःखितु अनन्तमनोऽल्पस्थामो ।
दिशदाह उल्क क्षिपते भयदर्शनार्थं
कथमेष दीनमनसो भवि बोधिसत्त्वो ॥ १ ॥

२१६. [[1]यथ ते भवन्ति विदु आशयसप्रयुक्ता
दिवरात्रि प्रज्ञवरपारमितार्थदर्शी ।]
तद कायचित्त खगपक्षिसतुल्यभूता
अवतारु सो कुतु लभिष्यति कृष्णबन्धु ॥ २ ॥

२१७. कलहाविवादुपगता यद बोधिसत्त्वा
भोन्ति परस्परविरुद्धक रुष्टचित्ताः ।
तद मार तुष्टु भवती परम उदग्रो
उभि एति दूर भविष्यन्ति जिनान ज्ञाने ॥ ३ ॥

२१८. उभि एति दूरि भविष्यन्ति पिशाचतुल्या
उभि एति आत्म करिष्यन्ति प्रतिज्ञहानिम् ।
दुष्टान क्षान्तिविकलान कुतोऽस्ति बोधि
तद मारु तुष्टु भवती नमुचीसपक्षो ॥ ४ ॥

२१९. यो बोधिसत्त्व अयु[2] व्याकृतु व्याकृतस्मिं
चित्त प्रदूषयि विवादु समारभेय्या ।
यावन्ति चित्तक्षणिका खिलदोषयुक्ता-
स्तावन्त कल्प पुन सनहितव्य भोन्ति ॥ ५ ॥

२२०. अथ तस्युपद्यति मतीति (18a)अशोभना ति
क्षान्तीय पारमित बोधि स्पृशन्ति बुद्धाः ।
प्रतिद[3]र्शयाति पुन आयति सवराणि
अपयाति वा स इह शिक्षति बुद्धधर्मे ॥ ६ ॥

भगवत्या रत्नगुणसचयगाथायामभिमानपरिवर्तो नाम चतुर्विंशतितमः ॥

---

१ B om from यथ to °दर्शी which is supplied from O. २ T अव्याकृतु.
३ O प्रतिदेशयाति

२५

२२१. यो शिक्षमाणु न उपैति कहिंचि शिक्षा
न च शिक्षक लभति नापि च शिक्षधर्मान् ।
शिक्षा अशिक्ष उभयो अविकल्पमानो
यो शिक्षते स इह शिक्षति बुद्धधर्मे ॥ १ ॥

२२२. यो बोधिसत्त्व इमु जानति एव शिक्षां
न स जातु शिक्षविकलो भवते [1]दुशीलो ।
आराधितेषु इह शिक्षति बुद्धधर्मं
शिक्षातिशिक्षकुशलो ति निरूपलम्भो ॥ २ ॥

२२३. शिक्षन्तु एव विदु प्रज्ञ प्रभकराणा
नोत्पद्यते अकुशलमपि एकचित्तम् ।
सूर्ये[2] यथा गगनि गच्छति अन्तरीक्षे
रश्मीगते न स्थिहते पुरतोऽन्धकारम् ॥ ३ ॥

२२४. प्रज्ञाय पारमित शिक्षित सत्कृताना
सर्वेष पारमित भोन्तिह संगृहीता ।
सत्कायदृष्टि यथ षष्टि दुवे च दृष्टी
अन्तर्गतास्तथमि पारमिता भवन्ति ॥ ४ ॥

२२५. यथ जीवितेन्द्रिय निरुद्धि य केचिदन्ये
भोन्ती निरुद्ध पृथु इन्द्रिय यावदस्ति ।
एमेव प्रज्ञचरिते विदु उत्तमाना
सर्वेत पारमित उक्त[3] य संगृहीता ॥ ५ ॥

२२६. ये चापि श्रावकगुणा तथ प्रत्ययाना
सर्वेषु भोन्ति विदु शिक्षितु बोधि[4]सत्त्वा ।
नो चापि तत्र स्थिह(18b)तान स्पृहेति तेषा-
मयु शिक्षितव्यमति शिक्षति एतमर्थम् ॥ ६ ॥

भगवत्या रत्नगुणसंचयगाथायां शिक्षापरिवर्तो नाम पञ्चविंशतिमः ॥

---

१ O दुशील्ये २ O सूर्यो वा गनि निगच्छति अन्तरीक्षे ३ O उक्तात्र ४ O °सत्त्वा

२६

२२७. अविवर्तियस्य वरबोधयि प्रस्थितस्य
यो चित्तुपादु अनुमोदितु आशयेन ।
त्रिसहस्र मेरु तुलयित्व सियाप्रमाणो
न त्वेव तस्य कुशलस्यनुमोदनाये ॥ १ ॥

२२८. यावन्त सत्त्व कुशलार्थिक मोक्षकामा
सर्वेष भोन्ति अनुमोदितु पुण्यराशि ।
सत्त्वर्थि ते जिनगुण अनन्त प्रापुणित्वा
दास्यन्ति धर्म जगती दुखसक्षयाये ॥ २ ॥

२२९. यो बोधिसत्त्व अविकल्पकु सर्वधर्मान्
शून्यानिमित्त परिजानति निष्प्रपञ्चान् ।
न च प्रज्ञ बोधि परिएषति आशयेन
सो युक्त प्रज्ञवरपारमिताय योगी ॥ ३ ॥

२३० आकाशधातु गगनस्य सिया विरोधो
न हि तेन तस्य कुतु केनचिदेप प्राप्ता ।
एमेव प्रज्ञचरितो विदु बोधिसत्त्वो
अभ्योवकाशसदृशो उपशान्तचारी ॥ ४ ॥

२३१. यथ मायकारपुरुषस्य न एव भोति
ते शिष्य मा जनत सो च करोति कार्यम् ।
पश्यन्ति तं विविध कायु निदर्शयन्त
न च तस्य कायु न पि चित्त न नामधेयम् ॥ ५ ॥

२३२. एमेव प्रज्ञचरिते न कदाचि भोति
बुद्धित्व बोधि जगती परिमोचयित्वा ।
आत्मोपपत्ति विविधा क्रियसप्रयोगा
दर्शेति मायसदृशो न विकल्पचारी ॥ ६ ॥

२३३. यथ बुद्ध निर्मित क(19a)रोति च बुद्धकार्यं
न च तस्युपद्यति मदो करमाणु किंचित् ।
एमेव प्रज्ञचरितो विदु बोधिसत्त्वो
दर्शेति सर्व क्रिय निर्मितमायतुल्यम् ॥ ७ ॥

२३४. पलगण्ड दक्ष विदुना कृतु दारुयन्त्रो
पुरुषे स्त्रितुल्य स करोति इह सर्वकार्यम्।
एमेव प्रज्ञचरितो विदु बोधिसत्त्वो
ज्ञानेन सर्व क्रिय कुर्वति निर्विकल्पो ॥ ८ ॥

भगवत्या रत्नगुणसचयगाथाया मायोपमपरिवर्तो नाम षड्विंशतिमः ॥

---

## २७

२३५. एवं चरन्तु विदु ना पृथुदेवसंघाः
कृतअञ्जलीपुट प्रणम्य नमस्ययन्ति।
बुद्धा पि यावत दशद्दिशि लोकधातौ
गुणवर्णमालपरिकीर्तन कुर्वयन्ति ॥ १ ॥

२३६. यावन्ति गङ्गनदिवालिसमे हि क्षेत्रे
सत्त्वा त सर्वि परिकल्प भवेयु माराः।
एकैक रोम पुन तान्तक निर्मिणेय्या
सर्वे न शक्य करणे विदु अन्तरायम् ॥ २ ॥

२३७. चतुकारणेहि बलवा विदु बोधिसत्त्वो
भवते दुधर्षु चतुमारअसप्रकम्प्यो।
शून्याविहारि भवते न च सत्त्वत्यागी
यथवादि सत्त्वकरुणागतावस्थान[1] ॥ ३ ॥

२३८. यो बोधिसत्त्व अधिमुच्यति भाष्यमाणा-
मिम प्रज्ञपारमित मात तथागतानाम्।
प्रतिपत्तिया च अभियुज्यति आशयेन
सर्वज्ञताय अभिप्रस्थितु वेदितव्यो ॥ ४ ॥

२३९. न च धर्मधातुतथताय उपैति स्थान
भवती अथानस्थित सो लघु अन्तरीक्षे।
विद्याधरो व अभिलम्भु[2] वनाभिप्राया
खगु कालहीन द्रुम मन्त्र(19b)बलाधिष्ठानो ॥ ५ ॥

२४०. एवं चरन्तु विदु पण्डितु बोधिसत्त्वो
न च बुध्यक लभति नापि च बुद्धधर्मान्।
न च देशिक न पि च पश्यक धर्मताया
शान्तैषिणामयु विहार गुणे रतानाम् ॥ ६ ॥

---

१ O °गताविष्ठान  २ O अपुलं भुवना°

२४१. यावन्त श्रावकविहार सप्रत्ययानां
शान्ता समाविप्रशमे सुखसप्रयुक्ता ।
अर्हन्विमोक्ष स्थपयित्व तथागताना
सर्वेषु अग्र अयु विहारु निरुत्तरश्च ॥ ७ ॥

२४२. आकाशि पक्षि विहराति न चो पताति
दकमध्यि मत्स्य विहराति न चो मराति ।
एमेव ध्यानबलपारगु बोधिसत्त्वो
शून्याविहारि न च निर्वृति प्रापुणाति ॥ ८ ॥

२४३. यो सर्वसत्त्वगुणअग्रतु गन्तुकामो
अग्र स्पृशेय परमाद्भुत बुद्धज्ञानम् ।
अग्र ददेय वर उत्तमधर्मदान-
मिमु अग्र सेवतु विहारु हितंकराणाम् ॥ ९ ॥

भगवत्या रत्नगुणसचयगाथाया सारपरिवर्तो नाम सप्तविंशतिम ॥

## २८

२४४ यावन्ति शिक्ष परिदीपित नायकेन
सर्वेष शिक्ष अयु अग्र निरुत्तरा च ।
यः सर्वशिक्षविदु इच्छति पार गन्तु-
मिमु प्रज्ञपारमित शिक्षति बुद्धशिक्षाम् ॥ १ ॥

२४५ अग्र निधान अयु उत्तमधर्मकोश
बुद्धान गोत्रजनन सुखसौख्यगञ्जो ।
अतिक्रान्तनागत दशद्दिशि लोकनाथा
इतु ते प्रसूत न च क्षीयति धर्मधातुः ॥ २ ॥

२४६. यावन्ति वृक्ष फलपुष्पवनस्पती (20a) या
सर्वे च मेदिनिसमुद्गत प्रादुभूताः ।
न च मेदिनी क्षयमुपैति न चापि वृद्धिं
न च खिद्यती न परिहायति निर्विकल्पा ॥ ३ ॥

२४७. यावन्त बुद्धसम श्रावकप्रत्ययाश्च
मरुतश्च सर्वजगती सुखसौख्यधर्माः ।
सर्वे ति प्रज्ञवरपारमिताप्रसूता
न च क्षीयते न च विवर्धति जातु प्रज्ञा ॥ ४ ॥

२४८. यावन्त सत्त्व मृदुमध्यमुत्कृष्ट लोके
सर्वे अविद्यप्रभवा सुगतेन उक्ताः।
सामग्रिप्रत्ययु प्रवर्तति दुःखयन्त्रो
न च यन्त्र क्षीयति अविद्य न चापि वृद्धि' ॥ ५ ॥
२४९. यावन्ति ज्ञान नयद्वार उपायमूला'
सर्वे ति प्रज्ञवरपारमिताप्रसूताः।
सामग्रिप्रत्यय प्रवर्तति ज्ञानयन्त्रो
न च प्रज्ञपारमित वर्धति हीयते वा ॥ ६ ॥
२५०. यो तु प्रतीत्यसमुत्पादु अनुद्भवाये
इमु प्रज्ञ अक्षयत बुध्यति बोधिसत्त्वो।
सो सूर्य अभ्रपटले यथ मुक्तरश्मी
विधमित्वविद्यपटल भवते स्वयंभू' ॥ ७ ॥

भगवत्या रत्नगुणसंचयगाथायामवकीर्णकुसुमपरिवर्तो नामाष्टाविंशतिमः ॥



## २९

२५१. चतुर्भी च ध्यान विहरन्ति महानुभावा
न च आलयो न पि च निश्रयु कुर्वयाति।
अपि खो पुनाश्रयु इमे चतुध्यान साङ्गा
भेष्यन्ति बोधिवरउत्तमप्रापणाय ॥ १ ॥
२५२. ध्याने स्थितोऽत्र भवती वरप्रज्ञलाभी
आरूप्यरूपि च समाधि चतस्र श्रेष्ठा।
उप(20b)कारिभूत इमि ध्यान वराग्रबोधौ
न पुनास्रवक्षयि स शिक्षति बोधिसत्त्वो ॥ २ ॥
२५३. आश्चर्यमद्भुतमिद गुणसचयाना
ध्याने समाधि विहरन्ति निमित्त नास्ति।
तत्र स्थितान यदि भज्यति आत्मभावो
पुन कामधातु उपपद्यति यथाभिप्राया ॥ ३ ॥
२५४. यथ जम्बुद्वीपक मनुष्य अलब्धपूर्वा
दिवि देवउत्तमपुरा अनुप्रापुणेया।
पश्यित्व ते विषय तत्र परिगृहीता
पुनरागमेय न च निश्रयु तत्र कुर्यात् ॥ ४ ॥

२५५. ऍमेव[1] ते गुणधरा वरबोधिसत्त्वा
ध्याने समाधि विहरित्व प्रयुक्तयोगी ।
पुन कामधातुस्थित भोन्ति अनोपलिप्ता
पद्मेव वारिणि अनिश्रित बालधर्मे ॥ ५ ॥

२५६. अन्यत्र सत्त्वपरिपाचन क्षेत्रशोधी
परिपूरणार्थ इमि पारमिता महात्मा ।
आरूप्यधातुउपपत्ति न प्रार्थयन्ती
यत्रेह बोधिगुणपारमितान हानि ॥ ६ ॥

२५७. यथ कश्चिदेव पुरुषो रतन निधान
लब्ध्वो[2] तु तत्र स्पृहबुद्धि न संजनेय्या ।
एकाकि सो पुन गृहीत्व परस्मि काले
गृह्णित्व गेह प्रविशित्व न भोति लुब्धो ॥ ७ ॥

२५८. एमेव ध्यान चतुरेव समाधि शान्ता
लब्ध्वान[3] प्रीति[4] सुखदा विदु बोधिसत्त्वाः ।
अवसृज्य ध्यानसुखप्रीतिसमाधिलाभ
पुन कामधातु प्रविशन्ति जगानुकम्पी ॥ ८ ॥

२५९. यदि बोधिसत्त्व विहराति समाधिध्याने
रहप्रत्ययानि स्पृहबुद्धि न सजनेय्या ।
असमाहितो भवति उद्धतक्षिप्तचित्तो
परिहीनबुद्धिगुण ना(21a)विक भिन्न[5]नावो ॥ ९ ॥

२६०. किंचापि रूपमपि शब्द तथैव गन्धो
रस स्पर्श कामगुण पञ्चभि[6] युक्त भोगी ।
रहप्रत्ययान विगतोऽनन्त[7]बोधिसत्त्वो
सततं समाहितु प्रजानयितव्य[8] शूरो ॥ १० ॥

२६१. परसत्त्वपुद्गलनिदान विशुद्धसत्त्वा
विचरन्ति वीर्यबल[9]पारमिताभियुक्ताः ।
यथ कुम्भदासि अवशावश भर्तिकस्य[10]
तथ सर्वसत्त्व[11]वशतामुपयान्ति धीराः ॥ ११ ॥

१ O एवमेते. २ O लब्धा. ३ O लब्धान ४ O प्रेति. ५ O भिन्नभावो ६ O पञ्चभियुक्त भोती ७ O °नन्द° ८ O प्रजायितव्य ९ O °वर° १० O भर्तृकस्य ११ O om. सत्त्व.

२६२. न च स्वामिकस्य प्रतिवाक्यु ददाति दासी
आक्रुष्ट चापि अथवा सद[1] ताडिता वा।
एकान्तत्रस्तमनसा स भयाभिभूता
मामेव सो अनु वैधिष्यति कारणेन ॥ १२ ॥

२६३. एमेव बोधिवरप्रस्थितु बोधिसत्त्वो
तिष्ठेय सर्वजगती यथ प्रेष्यभूतो।
अनु बोधिआगमु गुणान च पारिपूरी
तृण अग्नि काष्ठप्रभवो दहते तमेव ॥ १३ ॥

२६४. अवसृज्य आत्म सुगता परसत्त्वकार्ये
अभियुक्त रात्रिदिव निष्प्रतिकाङ्क्षचित्तो।
मातेव एकसुतके परिचार्यमाणो
अध्याशये न परिखिन्न उपस्थिहेति ॥ १४ ॥

भगवत्या रत्नगुणसचयगाथायामनुगमपरिवर्तो नामैकूनत्रिंशतिमः ॥



## ३०

२६५. यो बोधिसत्त्व चिरससरणाभिप्रायो
सत्त्वार्थ क्षेत्रपरिशोधनयुक्तयोगी।
न च खेदबुद्धि अणुमात्र उपादियिष्यति
सो वीर्यपारमितयुक्त अतन्द्रितश्च ॥ १ ॥

२६६. संचि[3] कल्पकोटि गणये विदु बोधिसत्त्वो
चिरसञ्ज बोधि समुदानिय ते( 21b )न दुःखे।
चिरदुःख भेष्यति समाचरमाणु धर्मं
तर्तुं वीर्यपारमितहीन कुसीदरूपो ॥ २ ॥

२६७. प्रथम उपादु वरबोधयि चित्तुपादो
सो वा अनुत्तरशिवामनुप्रापुणेया।
रात्रिंदिवैकमनसा तमधिष्ठिहेया
आरम्भवीर्य विदु पण्डितु वेदितव्यो ॥ ३ ॥

२६८. सचि कश्चिदेव वदयेय सुमेरुशैल
भिन्दित्व पश्च अधिगम्यसि अग्रबोधिम्।

---

१ O स तडाति तावा  २ O अनुपधि°  ३ O अविकल्पकोटि°  ४ O न वीर्य°.

सचि खेदबुद्धि कुरुते च [1]प्रमाणबुद्धिं
कौसीद्यप्राप्त भवते तद बोधिसत्त्वो ॥ ४ ॥

२६९. अथ तस्युपद्यति मती किमुताल्पमात्र
क्षणमात्र भस्म नयती विलय सुमेरुम् ।
आरम्भवीर्य भवते विदु बोधिसत्त्वो
नचिरेण बोधिवर लप्स्यति नायकानाम् ॥ ५ ॥

२७०. सचि कायचित्तव[2]चसा च पराक्रमेय्या
परिपाचयित्व जगती करिष्यामि अर्थम् ।
कौसीद्यप्राप्त भवती स्थितु आत्मसञ्ज्ञैः
नैरात्म्यभावनविदूरि नभ व भूमेः ॥ ६ ॥

२७१. यस्मिन्न कायु न पि चित्त न सत्त्वसञ्ज्ञा
सञ्ज्ञाविवर्ति स्थितु अद्वयधर्मचारी ।
अयु वीर्यपारमित उक्त हितकरेण
आकाङ्क्षमाणु शिवमच्युतमग्रबोधिम् ॥ ७ ॥

२७२. [3]पैरुषं श्रुणित्व वचन परतो दुरुक्त
परितोषयाति सुसुख विदु बोधिसत्त्वो ।
को भाषते क शृणुते कुतु कस्य केन
सो युक्त क्षान्तिवरपारमिताय विज्ञो ॥ ८ ॥

२७३. सो बोधिसत्त्व क्षमते गुणधर्मयुक्तो
यश्चैव रत्नभरित त्रिसहस्र दद्यात् ।
बुद्धान लोकविदुनार्हतप्रत्यया( 22a )ना
कलपुण्य सो न भवते इह दानस्कन्धे ॥ ९ ॥

२७४. क्षान्तीस्थितस्य परिशुध्यति आत्मभावो
द्वात्रिंशलक्षणप्रभाव अनन्तपारो ।
[स[4]त्त्वान शून्यवरधर्म निशामयाती
प्रियु भोति सर्वजगती क्षममाणु विज्ञो ॥ १० ॥

२७५. सचि कश्चि चन्दनपुट ग्रहियान सत्त्वो
अभ्योकिरेय गुरुप्रेमत बोधिसत्त्वम् ।
द्वितीयोऽपि] अग्नि सकलं शिरसि क्षिपेया
उभयत्र तुल्यु मनु तेन उपादितव्यो ॥ ११ ॥

१ O °प्रमादबद्धो   २ O °मनसा   ३ O पुरुष   ४ B damaged for portion in [ ] which is supplied from O

२७६. एव क्षमित्व विदु पण्डितु बोधिसत्त्वो
त चित्तुपादु परिणामयि अग्रबोधौ।
यावन्ति क्षान्ति रहप्रत्ययसत्त्वधातोः
अभिभोति सर्वजगती क्षममाणु शूरः॥ १२॥

२७७. क्षममाणु एव पुन चित्त उपादितव्यो
नरकेषु तिर्यमलोकि अनेक दुःखा।
अनुभूय कामगुणहेतु अकामकारा
कस्मा हु अद्य न क्षमेय निदान बोधौ॥ १३॥

२७८. कशदण्डशस्त्रवधबन्धनताडनाश्च
शिरछेदकर्णचरणाकरनासछेदाः।
यावन्ति दु.ख जगती अहु तत्सहामि
क्षान्तीय पारमित तिष्ठति बोधिसत्त्वो॥ १४॥

भगवत्यां रत्नगुणसंचयगाथाया सदाप्ररुदितपरिवर्तो नाम त्रिंशतिम.॥



## ३१

२७९. शीलेन उद्गत भवन्ति समाधिकाङ्क्षी[1]
स्थित गोचरे दशबलान अखण्डशीला.।
यावन्ति सवरक्रिय अनुवर्तयन्ति
ता सर्वसत्त्वहित बोधयि नामयन्ति॥ १॥

२८०. सचि प्रत्ययानरहबोधि स्पृहा जनेति
[ दु[2]ःशील भोति ] विदुषा तथ छिद्रचारी।
अथ बोधि उत्तमशिवा परिणामयन्ति
स्थितु शीलपा( 22b )रमित कामगुणेभि युक्तो॥ २॥

२८१ यो धर्म बोधिगुणआगमु सूरताना
सो शीलअर्थु गुणधर्मसमन्वितानाम्।
यो धर्म बोधिगुणहानि हितकराणा
दुःशीलता अयु प्रकाशितु नायकेन॥ ३॥

२८२. यदि पञ्च कामगुण भुञ्जति बोधिसत्त्वो
बुद्ध च धर्म शरणागतु आर्यसघम्।

१ O शमाभि° २ B om the portion in [ ], which is supplied from O

सर्वज्ञता च मनसी भविष्यामि बुद्धो
स्थितु शीलपारमित वेदयितव्य विज्ञो ॥ ४ ॥

२८३. यदि कल्पकोटि दशभी कुशलैः पथेभि-
श्चरमाणु प्रत्ययरहत्वस्पृहा जनेति ।
तद खण्डशीलु भवते अपि छिद्रशीलो
पाराजिको गुरुतरो अयु चित्तुपादो ॥ ५ ॥

२८४. रक्षन्तु शील परिणामयि अग्रबोधिं
न च तेन मन्यति न आत्मन कर्षयेथा ।
अहुसज्ञता च परिवर्जित सत्त्वसज्ञा
स्थितु शीलपारमिति वुच्यति बोधिसत्त्वो ॥ ६ ॥

२८५. यदि बोधिसत्त्व चरमाणु जिनान मार्गे
इमि शीलवाँनिमि दुशील करोति सत्त्वान् ।
नानात्वसज्ञप्रसृतो परम दुशीलो
अपि छिद्रशीलु न तु सो परिशुद्धशीलो ॥ ७ ॥

२८६ यस्यो न[1] अस्ति अहसज्ञ न सत्त्वसज्ञा
संज्ञाविरागु कुतु तस्य असवरोऽस्ति ।
यस्यो न सवरि असवरि मन्यनास्ति
अयु शीलसवरु प्रकाशितु नायकेन ॥ ८ ॥

२८७ यो एवशीलसमन्वागतु निष्प्रपञ्चो
अनपेक्षको भवति सर्वप्रियाप्रियेषु ।
शिरहस्तपाद त्यजमा( 23a )न अदीनचित्तो
सर्वास्तित्यागि भवते सतत अलीनो ॥ ९ ॥

२८८. ज्ञात्वा च धर्मप्रकृतीं वशिका निरात्म्यं
आत्मान मास त्यजमानु अदीनचित्तो ।
प्रागेव वस्तु तद[2] बाहिर नात्यजेया
अस्थानमेत यदि मत्सरि सो करेया ॥ १० ॥

२८९. अहसज्ञतैस्तु[3] ममता भवते च रागो
कुतु त्यागबुद्धि भविष्यति सा मुहानाम् ।
मात्सर्य प्रेत भवते उपपद्ययाती
अथवा मनुष्य तद भोति दरिद्ररूपो ॥ ११ ॥

---

१ O om. न. २ O यदि वा हिरणा ३ O अहसज्ञवस्तु

२९०. तद बोधिसत्त्व इमि ज्ञात्व दरिद्रसत्त्वान्
दानाधिमुक्त भवती सद मुक्तत्यागी।
चत्वारि द्वीपि समलङ्कृतु खेटतुल्यं
दत्वा उदग्र भवते न हि द्वीपलब्धो ॥ १२ ॥

२९१. दान ददित्व विदु पण्डितु बोधिसत्त्वो
यावन्ति सत्त्व त्रिभवे समन्वाहरित्वा।
सर्वेषु तेषु भवते अयु दत्तदान
तं चाग्रबोधि परिणामयते जगार्थम् ॥ १३ ॥

२९२. न च वस्तुनिश्रयु करोति ददित्व दान
विदु पाकु नैव प्रतिकाङ्क्षति सो कदाचित्।
एव त्यजित्व भवते विदु सर्वत्यागी
अल्पं त्यजित्व लभते[1] बहु अप्रमेयम् ॥ १४ ॥

२९३. यावन्त सत्त्व त्रिभवे निखिलेन अस्ति
ते सर्वि दान ददयन्ति अनन्तकल्पान्।
बुद्धानुलोकि विदु नार्हतिप्रत्ययानां
यावन्ति श्रावकगुणान् परिकल्प स्थाने ॥ १५ ॥

२९४. यश्चो उपायकुशलो विदु बोधिसत्त्वो
तेषा स पुण्यक्रियवस्त्वनुमोदयित्वा।
सत्त्वार्थ अग्रवरबोधयि नामयेया
अभिभोति स(23b)र्वजगती परिणामयुक्तो ॥ १६ ॥

२९५. काचस्य वा मणिन राशि सिया महन्तो
वैडूर्यरत्न अभिभोति स सर्व एको।
एमेव सर्वजगती पृथु दानस्कन्धो
अभिभोति सर्वपरिणामिकु[2] बोधिसत्त्वो ॥ १७ ॥

२९६. यदि बोधिसत्त्व ददमान जगस्य दान
ममता न तत्र करयेन्न च वस्तुप्रेम।
ततु वर्धते कुशलमूल महानुभावो
चन्द्रो व तत्र[3] प्रभमण्डलु शुक्लपक्षे ॥ १८ ॥

भगवत्या रत्नगुणसचयगाथाया धर्मोद्गतपरिवर्तो नामैकत्रिंशतिमः ॥



---

१ O भवते  २ T °अनुमोदकु  ३ O नभ्रप्रभ°.

## ३२

२९७. दानेन प्रेतगति छिन्दति बोधिसत्त्वो
दारिद्रक[1] च छिनती तथ सर्वक्लेशान् ।
भोगाश्चनन्तविपुला लभते चरन्तो
दानेन सत्त्व परिपाचयि कृच्छ्रप्राप्तान् ॥ १ ॥

२९८. शीलेन तीर्यगति वर्जयि नेकरूपा-
मष्टौ च अक्षण क्षणा लभते स नित्यम् ।
क्षान्तीय रूप लभते परम उदार
सुवर्णच्छवि प्रियु जगस्य उदीक्षणीयो ॥ २ ॥

२९९. वीर्येण शुक्लगुण हानि न अभ्युपैति
ज्ञान अनन्तं लभते जिनकोशगञ्जम् ।
ध्यानेन कामगुण उत्सृजते जुगुप्स्यान्
विद्या अभिज्ञ अभिनिर्हरते समाधिम् ॥ ३ ॥

३०० प्रज्ञाय धर्मप्रकृती परिजानयित्वा
त्रैधातुकान्त समतिक्रमते अपायान् ।
वर्तित्व चक्ररतन पुरुषर्षभाणा
देशेति धर्म जगती दुखसक्षयाये ॥ ४ ॥

३०१. परिपूरयित्व इमि धर्म स बोधिसत्त्वो
अ(24a)पि क्षेत्रशुद्धि परिगृह्णति सत्त्वशुद्धिम् ।
अपि बुद्धवश परिगृह्णति धर्मवश
तथ संघवश परिगृह्णति सर्वधर्मान् ॥ ५ ॥

३०२. वैद्योत्तमो जगति रोगचिकित्सकारी
प्रज्ञोपदेश कथितो अयु बोधिमार्गो ।
नामेन रत्नगुणसंचय बोधिमार्गं
त सर्वसत्त्व इतुं[2] मार्गतु प्राप्नुवन्ति ॥ ६ ॥

भगवत्या रत्नगुणसंचयगाथाया परीन्दनापरिवर्तो नाम द्वात्रिंशतिमः ॥

* * * * * *

---

१ O दारिद्र्यं. २ O इमु मार्गतु प्राप्नु°

[आचार्यहरिभद्रकृता प्रशस्तिः।]

लोकं प्रापयितुं सुखेन पदवीं संपद्द्वयावाहिनीं
कारुण्याहितचेतसा भगवता बुद्धेन संदीपितम्।
श्रुत्वा तेऽखिलधर्मतत्त्वनिलयं सूत्रं समादानतो
गत्वा स्थानमहर्निशं निजमलं ध्मायन्तु येऽभ्यागताः॥ १॥

कालेऽस्मिन् बहुदृष्टिसंकुलकलौ पाठेऽपि दूरं गते
गाथाभेदमनेकपुस्तकगतं दृष्ट्वाधुना न्यायतः।
कूपं वादिगजेन्द्रकुम्भदरणे **भद्रेण** या शोधिता
लोकार्थं **हरिणा** मया सुविहिता [1]सेयं बुधैर्गृह्यताम्॥ २॥

आर्याष्टसाहस्रिकाया भगवत्याः प्रज्ञापारमितायाः परिवर्तानुसारेण भगवती रत्नगुणसंचयगाथा समाप्ता॥

* * * * * *

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवं वादी महाश्रमणः॥

* * * * * *

[लेखकप्रशस्तिः।]

योऽसौ धर्मं सुगतगदितं पठते भक्तिभावा-
न्मात्राहीनं कथमपि पदं पादगाथाक्षरं वा।
(24b) जिह्वादोषैः पवनचरितैः श्लेष्मदोषप्रचारै-
र्यूयं बुद्धाः सुभवनगता बोधिसत्त्वाः क्षमध्वम्॥

समाप्तम्। शुभम्॥



१ O सेयं.

## Critical Notes

[The *Ratnagunasamcaya* is a collection of gem-like passages from the Astasāhasrikā Prajñāpāramitā in a versified form Almost all the verses have their corresponding portions in the text of Asta The following notes give references to such passages from that work. The text of Asta referred to by pages and lines is our text printed in BST No 4 Those who possess Rajendralal Mitra's or Wogihara's editions will not find it difficult to trace the passages as our edition in the margin supplies references to both the earlier editions The references in the notes are to stanzas in consecutive order ]

1. O reads सूरताना, my emendation सुव्रताना is superfluous
2. O reads भुजगेन्द्रनागपतिनिश्रय नोपतप्ते तस्यानुभाव् श्रियँ सा भुजगाधिपस्य
3. The source of this stanza will be found in the passage 2 8–10 यत्किंचिदायुष्मन पुरुषकारो वेदितव्य
4. O reads यज्जिनु for य जिनु, nd न पुनात्म° for पुन आत्म° The contents of this stanza correspond to passage 2 10 – 3 2 तत्कस्य हेतो ? धर्मतया न विरोधयन्ति
5. The stanza is based on the passage 3 3–15 यद्भगवानेवमाह एषोऽववाद प्रज्ञापारमितायाम्
6. O लभोन्ति for न भोन्ति = 4 25 – 5 5 पुनरपर भगवन् प्रज्ञापारमिताया चरितव्यम्
7. = 5 7–21 सचेन्निमित्ततो प्रज्ञापारमिता वेदितव्या
8. = 5 22–6 14 पुनरपर भगवन् आसन्नीभवति
9. = 6 15–27 सचेद्रूपे चरति नुपायकुशलो वेदितव्य
10. = 6 28–7 13 अथ खल्वायुष्मान् सम्यक्सबोधिमभिसबुध्यते
11 = 7 14–18 = व्याकृतोऽयं सर्वं न सविद्यते
12 = 7 19–8 22 कतमेनायुष्मन् सुभूते सर्वज्ञताया निर्यास्यति
13. = 8 3–17 एव शिक्षमाणो कच्चिद्धर्ममभिनिविशन्ते
14. = 8 23–9 2 किमय मायापुरुष मायैव विज्ञानम्
15. = 9 15–22 कानि पुनर्भगवन् कल्याणमित्राणि वेदितव्यानि
16. = 9 24–29 अपदार्थ सुभूते महासत्त्व इत्युच्यते
17. = 9 31–10 9 अथ खल्वायुष्मान् शारिपुत्रो · महासत्त्व इत्युच्यते
18. = 10 10–19 ममापि भगवन् प्रतिभाति निर्दिशसि
19. = 10 29–11.4 . दक्षो मायाकारो महासनाहसनद्धो वेदितव्य.
20. = 11 10–30 एवमुक्ते पूर्णो मैत्रायणीपुत्रस्तूष्णीमभूत्
21. = 11 31–12 14 · एवं भगवन् महायानसमारूढो भवति
23. = 12 19–24 नैवास्यागमो दृश्यते अनुप्राप्यते च
24. = 13.20 ff यस्मिन् हि समये · अद्वयस्यैषा गणना कृता
25. = 14 13–22 एव च सर्वसत्त्वेषु न दुष्करसज्ञी विहरिष्यति
26. = 14 24–28 सर्वेण सर्वं ·अनुत्पादो बोधिसत्त्वं

